श्रीजयतीर्थश्रीचरणानां षट्शतमानोत्सवाङ्कतया प्रकाशितायाः ग्रन्थमालायाः

प्रथमं पुष्पम्

जगद्गुरु श्रीमदुत्तरादिमठाधीश-पञ्चाभिनवकार-प्रातःस्मरणीय-

श्रीश्रीसत्यनाथतीर्थश्रीचरणविरचितम्

# अभिनवताण्डवम्



श्रीसत्यनाथतीर्थार्यपादयुग्मनिषेविणः ।
श्रीसत्प्रमोदतीर्थार्यान् गुरून्वन्दे निरन्तरम् ॥

श्रीजयतीर्थश्रीचरणानां षट्शतमानोत्सवाङ्गतया प्रकाशितायाः ग्रन्थमालायाः

प्रथमं पुष्पम्

जगद्गुरु श्रीमदुत्तरादिमठाधीश-पञ्चाभिनवकार-प्रातःस्मरणीय-

श्रीश्रीसत्यनाथतीर्थश्रीचरणविरचितम्

# अभिनवताण्डवम्


संपादकः

पं. केशवाचार्य श्रीनिवासाचार्य कट्टि



प्रकाशकः

सत्यध्यान रामाचार्य कट्टि

उत्तरादिमठ, बेंगळूरु-४

१९८८

॥ श्रीदिग्विजयरामो विजयते ॥

# भूमिका

सुविदितमेवैतद्विदुषां यत् तर्कशास्त्रं मीमांसाङ्गमिति । मीमांसाशास्त्रं खलु परापरप्रमेयस्य आरोपितान्यथाकारनिराकरणेन स्वरूपनिरूपणे व्याप्रियते । एतच्च मीमांसासाधनानां प्रत्यक्षादीनां प्रमाणानां संख्यालक्षणविभागपरीक्षादिरूपस्वरूपनिरूपणं विना न संजाघटीतीति तत्परं तर्कशास्त्रं स्थाने मीमांसायाः अङ्गत्वं समश्नुते ।

तदुक्तं भगवत्पादैः— प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ।

मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥ इति ।

तर्कशास्त्रं च 'ब्रह्मतर्कः तर्कशास्त्रं विष्णुना यत् समीरितं' इति स्मृत्युक्तः बादरायणप्रणीतो ब्रह्मतर्क एव, न त्वेव पुनः समयपादे महद्दीर्घवद्वा इत्यादिना निराकृतं वैशेषिकशास्त्रं इति अतिरोहितम् ।

सुविस्तरस्यास्य ब्रह्मतर्कस्यार्थः श्रीभगवत्पादैः प्रमाणलक्षणप्रकरणे निरूपितोऽपि गभीरतया न मन्दानां सुबोध इति विज्ञाय श्रीजयतीर्थश्रीचरणैः प्रमाणपद्धत्याख्यप्रबन्धनिर्माणेन स एव पुनर्विशदीकृतः । एवमपि आकूतगर्भितायाः पद्धतेर्निगूढोऽभिप्रायो दुर्बोध एवेति मत्वा श्रीवेदेशतीर्थपूज्यैः स व्याख्याय प्रकटीकारि । श्रीव्यासतीर्थैः तर्कताण्डवाभिधापूर्वग्रन्थनिर्माणेन पद्धत्यर्थः संस्थापितः । तत्र च उदयनमणिकारप्रभृतीनां आक्षेपाभासाः सुनिपुणं समाहिताः ।

इदानीं प्रकाश्यमानोऽयं अभिनवताण्डवनामा प्रबन्धमणिरपि प्रमाणपद्धत्युपजीवी प्राधान्येन प्रमाणविचारपर एव । अस्य च प्रणेतारः विद्वत्कुलसार्वभौमाः तपस्विवरेण्याः उत्तरगुरुभक्ति-निरन्तरप्रवणान्तराः श्रीमदुत्तरादिमठाधीशाः श्रीसत्यनाथश्रीचरणाः । इमे च पूज्यचरणाः पञ्चाभिनव-कारा इति पृथिव्यां सुप्रथिताः ।

एतेषां महिमप्रकर्षे,

सत्यनाथगुरुः पातु यो धीरो नवचन्द्रिकाम् ।

नवामृतगदातीर्थताण्डवानि व्यचीक्लृपत् ॥

इति स्तुतिपरः श्लोको वरीवर्ति । एतेषां संस्मरणमात्रेण दुरितदूरीकरणक्षमतां मङ्गलतरङ्ग-प्रदानशीलतां च तच्छिष्याः श्रीसत्याभिनवतीर्थाः तद्विजयचरित्रे प्रतिपदं स्वानुभवकीर्तनमुखेन सुबहुधा संवर्णयन्ति ।

अभिनवताण्डवे कयाऽपि विद्वन्मनोज्ञया नित्याभिनवया शैल्या सिद्धान्तप्रमेयाः सुस्थिरं संस्थाप्यन्ते । न केवलं चिरन्तनैः किं नाम अर्वाचीनैः पक्षधररुचिदत्तशिरोमणिप्रभृतिभिः उपक्षिप्ता

दूषणाभासा अपि निर्दयं खण्डयन्ते । क्वचित्प्रौढिवादेनापि परवादिमुखमुद्रणकौशलं शिष्यशिक्षार्थं प्रकाश्यते ।

अत्रानुरुध्यमानः क्रम इत्थम् । आदौ सिद्धान्ताप्रेतं तत्तद्विषये मूलग्रन्थोक्तं लक्षणविभागादिकं संवर्ण्यते । ततस्तद्विषये परवादिभिरुच्यमानं लक्षणादिकं यथावत्तया कृत्स्नशोऽनूद्य तस्यार्थः पद-कृत्यादिकं च तदीयतन्त्रानुरोधेन परिष्कृत्यानूद्यते दूषणसौकर्याय । अथ परेषां स्थूलदृश्वतां प्रतिज्ञाय निरवकाशतया शब्दतोऽर्थतस्तद्दूषणमुखेन प्रतिज्ञातः सिद्धान्तार्थः समर्थ्यते इति ।

वैशेषिकं खलु कुशास्त्रं आशीविषवदनर्थकरं दुरधिगमशब्दजालजटिलतया अकृतमतीनां मोहोत्पादकं भयावहम् च । तस्यैतस्य भीषणस्याशीविषस्य मूर्धनि निर्भयतया ताण्डवकौशलं न्यायसुधापानमन्तरा दुरधिगमम् । तन्महिम्नैव केवलं स्वेनापि समासादितमिति ग्रन्थकृत एवं वर्णयन्ति—

सुधापानाद्भयातीतः तर्काशीविषमूर्धनि ।
करोति केकिवत्सत्यनाथोऽभिनवताण्डवम् ॥ इति ।

अभिनवताण्डवस्य अमृतरसः न कथमपि वर्णनमात्रेण सुज्ञानः । किन्तु रसज्ञैरास्वादनेनैव । इमं समास्वाद्य सुधियः संमोदं संप्राप्नुयुरित्याशास्महे । दुर्दर्शनाभ्यासविषजनितकालुष्यापनोदनाय एतद्ग्रन्थामृतसंसेवनं अतीवावश्यकमिति चावेदयामः ।

इदं पुनरत्रावश्यं सुधीभिरवधेयम् । सर्वेष्वाकरग्रन्थेषु परमतपराकरणप्रस्तावेन कतिचन विषयाः सिद्धान्ताननुगुणा अपि प्रौढिवादेन वर्ण्यमाना दरीदृश्यन्ते । तथाऽस्मिन्नपि प्रबन्धे 'प्रामाणिकप्रतियोगिकोऽत्यन्ताभावः' इत्यादयः केचन विषयाः प्रौढिवादेनैव निरूपिताः । अयं च विवेकः श्री सत्यधर्मतीर्थीयतत्त्वसंख्यानटिप्पण्यादिना अवसेयः । अत एव जागर्त्ययं अनूचानः सत्संप्रदायो यच्छास्त्राध्ययनं सांप्रदायिकगुरुमुखेनैव विधेयं नान्यथेति । अयं च नियम एतद्ग्रन्था-ध्ययनविषयेऽपि सुधीभिरवश्यं समनुरोद्धव्यः । तेन ते आपातार्थं प्रतीत्य न प्रत्यवेयुः ।

यत्सत्यं महानद्य नः प्रमोदः, अस्य, इयन्तं कालं निगूढस्य ग्रन्थरत्नस्य प्रकाशने । अनेन बुधजनानां मनसि सुचिरं स्थितवती समीहा सफलतामियादिति विश्वसिमः ।

संप्रार्थयामहे चास्मदुपास्यं श्रीमूलरामं सुजनानेतद्ग्रन्थाध्ययने संप्रेर्य तन्मनस्सु प्रमाणप्रमेय-परिशुद्धिं समुत्पाद्य भक्तिज्ञानादिकं तेषु समनुगृह्य तान् संसारसन्तापात्समुद्धृत्य परमपुरुषार्थभाजः संतनुयादिति ।

श्रीमदुत्तरादिमठाधीशाः
श्री श्री १००८ श्रीसत्यप्रमोदतीर्थश्रीचरणाः ।

# विषयानुक्रमणिका

## प्रत्यक्षखण्डः

शब्दखण्डः

## अनुमानखण्डः

### मङ्गलाचरणम्



### अनुमानवादः



### व्याप्तिवादः



### सहचारवादः



### उपाधिवादः

॥ श्रीदिग्विजयरामो विजयते ॥

श्रीमत्सत्यनाथतीर्थश्रीमत्पूज्यचरणविरचितम्

# अभिनवताण्डवम्

## प्रत्यक्षखण्डः

॥ श्रीवेदव्यासाय नमः ॥ श्रीमन्नृसिंहाय नमः ॥ हरिः ॐ ॥

यदीयचरणस्पर्शाच्छिलाऽभूद्वनितोत्तमा ।
अहल्या ज्ञानसिद्ध्यर्थं रामचन्द्रं तमाश्रये ॥ १ ॥

ज्ञानं यः स्थापयामास देवमानवपक्षिषु ।
ज्ञानविज्ञानसिद्ध्यर्थं वेदव्यासमहं भजे ॥ २ ॥

अनुव्याख्याऽमृताम्भोधिर्यदास्यान्निःसृतोऽमरान् ।
नरान् करोति तं वन्दे पूर्णबोधं जगद्गुरुम् ॥ ३ ॥

सुधा यदीया विबुधान् तोषयत्यमरानिव ।
नमामि विबुधैर्वन्द्यं जयतीर्थं सुधाकरम् ॥ ४ ॥

व्यासराजमहं वन्दे यदीयं तर्कताण्डवम् ।
मूकोऽप्यधीत्य वाग्मीशः भवेदज्ञोऽपि बुद्धिमान् ॥ ५ ॥

वादिनो नरशब्देन जगुः संसदि वादिनाम् ।
बुधा येन पराभूतान् तं सत्यनिधिमाश्रये ॥ ६ ॥

नरेषु हरिरेवायमिति यं विबुधा जगुः ।
वादिनिर्जयकौशल्यं दृष्ट्वाऽऽचार्यं तमाश्रये ॥ ७ ॥

सुधापानाद्भयातीतः तर्काशीविषमूर्धनि ।
करोति केकिवत्सत्यनाथोऽभिनवताण्डवम् ॥ ८ ॥

नमामि जानकीजानिं विशिष्टग्रन्थसिद्धये ।
वन्दनं मङ्गलं यस्य शिष्टाः कुर्वन्ति सन्ततम् ॥ ९ ॥

ननु अयुक्तं प्रारिप्सितनिष्पत्त्यर्थं मङ्गलानुष्ठानम् । मङ्गलस्य प्रमाणाभावेन तदसाधनत्वात् । किञ्च कृतमङ्गलानामपि प्रारिप्सितानिष्पत्तिर्दृश्यते । अकृतमङ्गलानामपि कार्यनिष्पत्तिर्दृश्यते । न च अन्वयव्यतिरेकाभ्यां व्यभिचार्यपि मङ्गलं तत्साधनमिति युक्तम्। अतिप्रसङ्गात् इति चेत्। न। 'आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै सकामः समृध्येत यत्कामः स्तुवीते'त्यादिश्रुत्या । 'अपि धर्मसहस्राणि तथा क्रतुशतानि च । विष्णोर्दण्डप्रणामस्य कलां नार्हन्ति षोडशीम्' इति स्मृतेः । 'आराध्यैव नरो विष्णुं मनसा यद्यदिच्छति । फलं प्राप्नोत्यविकलं भूरि स्वल्पमथाऽपि वे'ति स्मृतेः । प्रारब्धनिष्पत्तिकामशिष्टप्रवृत्त्यन्यथाऽनुपपत्त्या च नतिस्तुतिफलपुष्पनैवेद्य-समर्पणादिरूपविष्ण्वाराधनरूपमङ्गलस्य कामिताशेषसाधनत्वावगमात् । न च, भवति कामिताशेषसाधनं न भवति च कामितग्रन्थकारणमिति च संभवति । व्याहतेः ।

ननु मङ्गलेन विघ्नध्वंसे जाते क्लृप्तकारणादेव कार्यनिष्पत्तिः स्यात् । किं मङ्गलस्य कार्य-साधनत्वाङ्गीकारेणेति चेत् । न॥ पुत्रेष्ट्यादेरपि विघ्ननिवारकत्वमेव न पुत्रजन्महेतुत्वमित्यापातात्। अथ श्रौतत्वात् पुत्रेष्टिपुत्रजन्मनोः कार्यकारणभावः तर्हि मङ्गलस्यापि श्रौतत्वात्तथाऽस्तु ।

ननु मङ्गलं स्वातन्त्र्येण कामिताशेषसाधनं उत तत्तत्क्लृप्तसाधनसहकारेण । नाद्यः । ज्योतिष्टोमादिवत् स्वसिद्ध्युत्तरकालभाविपुरुषार्थोपयोगिपुरुषव्यापारमनपेक्ष्य जनकत्वादर्शनात् । न द्वितीयः । क्लृप्तकारणेनैव कार्यसिद्धौ मङ्गलस्य कारणत्वस्याकारायोगात् । न चोदाहृतश्रुतिस्मृत्याचार-बलात् कारणत्वमभ्युपेयं इति वाच्यम् । तेन विनाऽपि क्लृप्तकारणैर्जायमानकार्यं प्रति कारणत्वबोधक-श्रुतिस्मृत्योरप्रामाण्यप्रसङ्गेन तयोर्मङ्गलप्राशस्त्यमात्रे तात्पर्यं न तु कारणमित्यङ्गाकार्यत्वात् । आचारस्यापि श्रुत्यर्थापरिज्ञानमूलकत्वसंभवेन तदन्यथानुपपत्तेरपि कारणत्वासाधकत्वात् इति चेत् । उच्यते । न मङ्गलं यावत्कार्यकारणं अपि तु अतिशयविशिष्टकार्यं प्रति । तदुक्तम् । मङ्गलाचरणपुरःसराणि कार्याणि भवन्त्याशुष्मत्पुरुषकाणि चेति । न चातिशयविशिष्टं कार्यं मङ्गलं विना लोकावगतकारणेन भवति येन मङ्गलं तत्कारणं न स्यात् । येन च श्रुतिस्मृत्योर्मङ्गलकारणतायां तात्पर्यं न स्यात् । येन च शिष्टाचारः श्रुत्यर्थापरिज्ञानमूलकः स्यात् । न च मङ्गलस्यारब्धकार्यकारणत्वे कार्य-निष्पत्त्यनन्तरं मङ्गलानुष्ठानं न स्यादिति वाच्यम् । तस्य प्रचयादिकार्यान्तरनिष्पत्त्यर्थत्वात् । न च चिरविनष्टस्य प्रचयादिहेतुत्वासंभवः । यागवदपूर्वद्वारा तद्धेतुत्वोपपत्तेः । अत एव मङ्गलं विनाऽपि विशिष्टकार्यदर्शनात् न मङ्गलं तद्धेतुरिति परास्तम् । श्रुतिबलेन जन्मान्तरीयमङ्गलस्य तत्र कारणत्वाङ्गी-

कारात् । न चान्वयव्यभिचारः । क्लृप्तसकलकारणसहितस्यैव मङ्गलस्य तत्कारणत्वाङ्गीकारेण तद्विरहप्रयुक्तकार्याभावस्यादोषत्वात् । अन्यथा स्त्रीपुरुषसंप्रयोगादिरूपसहकारिविरहेण कार्यमजनयतः पुत्रेष्ट्यादेरपि पुत्रादिहेतुत्वं न स्यात् ।

ननु जन्मान्तरीयं मङ्गलं जन्मान्तरीयकार्यं प्रति कारणमित्ययुक्तम् । तस्यैतत्कार्यकामनया अननुष्ठितत्वात् इति चेत् । न । कारणतासद्भावे कामनाया अप्रयोजकत्वात् । अन्यथा मोक्षकामनया संपादितस्य भगवदपरोक्षस्य स्वर्गादिपुरुषार्थहेतुत्वं न स्यात् । न चेष्टापत्तिः । 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग' इति श्रुतिविरोधात् । कार्यारंभसमये नियतानुष्ठानं च तत्साधनं सर्वं संपादनीयमिति नियमादुपपद्यते । न च जन्मान्तरानुष्ठितमङ्गलाद्यत्र कार्यनिष्पत्तिः तत्र कार्यारंभसमये कृतस्य मङ्गलस्य नैष्फल्यम् । तस्य कार्यान्तरोपयोगित्वसंभवात् । मङ्गलत्वं च लोकावगतकारणाज्जायमाने अतिशयविशेषाधायकत्वम् । अत एव गुरुदेवताब्राह्मणादिनमस्कारादिकं स्वस्तिवाचनं दध्यादर्शदर्शनादिकं सर्वं मङ्गलम् । सर्वज्ञेन गुरुणा वेदानुसारेणानुशिष्टः शिष्टः । न चाधुनातनानां शिष्टत्वाभावप्रसङ्गः । महाशिष्टत्वाभावस्येष्टत्वात् । परंपरया सर्वज्ञगुर्वनुशिष्टत्वेन शिष्टव्यवहारार्हत्वाच्च । तदाचारश्च पूर्वोक्तगुरूपदेशमूलकः । न तु शिष्टानुष्ठितसर्वोऽपि शिष्टाचारः । तेन न शिष्टकृतजलताडनादौ शिष्टाचारव्यवहारः **॥ इति मङ्गलस्य विशिष्टकार्यहेतुत्वसमर्थनम् ॥**

संप्रदायकारस्तु मन्यते । यद्यपि मङ्गलस्य समाप्तिसाधनता नान्वयव्यतिरेकसध्रीचीनप्रत्यक्षगम्या नियतान्वयव्यतिरेकयोरभावात् । नापि मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वादिति सफलत्वे सिद्धे ग्रन्थारंभे समाप्तिकामनाया एव सद्भावेन अन्यस्य फलत्वकल्पने गौरवात् परिशेषेण समाप्तिफलकत्वसिद्धिः । व्यभिचारेण कारणत्वाभावनिश्चयेनोपायसहस्रेणापि कारणत्वस्य गृहीतुमशक्यत्वात् । तथाऽपि शिष्टाचारानुमिता श्रुतिरेव मङ्गलस्य समाप्तिसाधनत्वे मानम् । न च व्यभिचारः । निष्प्रत्यूहपरिसमाप्तिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि तथैव लिङ्गेन जन्मान्तरीयतदनुमानात् । तच्चेदमारब्धकर्माङ्गम् । कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात् । फलान्तराभावे सति फलवत्कर्माऽऽरिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च दर्शे प्रयाजवत् ॥ आचारमूलश्रुत्यनुमानाभ्यां तदर्थितया तत्कर्तव्यत्वबोधनात् तत्फलकत्वबोधनाच्चेति । तदयुक्तम् । कामनाविषयग्रन्थार्थं क्रियमाणस्य मङ्गलस्य तदविषयसमाप्तिहेतुत्वाभिधानायोगात् । समाप्तिशब्दस्य प्रारिप्सितकर्महेतुव्यापारविरामवाचित्वात् । अस्तु वा समाप्तिशब्दस्य निष्पत्तिवाचित्वम् । तथाऽपि मङ्गलस्य समाप्तिसाधनत्वं नेति वदन्तं प्रति अनुमितश्रुत्या तत्समर्थनमनुपपन्नम् । वाक्यस्य अनुसन्धीयमानानुपूर्वीकस्यैव बोधकत्वात् । न चानुपूर्वीविशेषावच्छिन्नतयाऽनुमातुं शक्यते ।

आनुपूर्वीविशेषव्याप्तलिङ्गादर्शनात् । ननु न ब्रूमो वयं अनुमिता श्रुतिरिदानीं बोधिकेति ॥ किं नाम प्रत्यक्षतादशायां सा श्रुतिर्बोधिका इदानीमनुमीयते ॥ समाप्तिसाधनबोधस्तु विशिष्टशिष्टाचारविषयत्वरूप-लिङ्गात् । प्रयोगस्तु । मङ्गलं समाप्तिसाधनम् समाप्तिकामविशिष्टशिष्टाचारविषयत्वात् यो यत्कामशिष्टा-चारविषयः स तत्साधनम् । यथा ज्योतिष्टोमादीति । श्रुत्यनुमानं तु अन्धपरम्पराशङ्कानिरासायेति चेत् । न । अन्धपरम्पराशङ्कानिवृत्तौ आचारस्य श्रुत्यनुमापकत्वं श्रुत्या चान्धपरम्पराशङ्कानिवृत्तिरित्यन्योन्या-श्रयात् । यदपि समाप्तिकामशिष्टाचारविषयत्वानुमानं तदपि जन्मान्तरीयमङ्गले व्यभिचारादयुक्तम् । तस्यैतज्जन्मस्थसमाप्तिसाधनत्वेऽपि कामनाऽविषयजन्मान्तरीयसमाप्तिसाधनत्वाभावात् । न हि मङ्गला-नुष्ठाता समाप्तिसामान्यं कामयेत किन्तु समाप्तिविशेषम् । येन व्यभिचारो न स्यात् । यदपि न व्यभिचारः । निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि समास्त्याख्यलिङ्गेनैव जन्मान्तरीयतदनुमानादिति । तदप्यत एव पराहतम् । अनुमितश्रुतेरप्रमाणकत्वात् । समास्त्यन्तर-कामनयाऽनुष्ठितस्य जन्मान्तरीयमङ्गलस्य तदनुष्ठानसमयाकामितजन्मान्तरीयसमाप्तिसाधनत्वायोगाच्च ॥ अन्यथा ग्रन्थारम्भसमये क्रियमाणस्यापि मङ्गले कालान्तरीयसमाप्तिशङ्कया निष्कम्पा प्रवृत्तिर्नस्यात् । यदपि तच्चेदमारब्धकर्माङ्गम् । कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात्। फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च दर्शे प्रयाजवत् । आचारमूलकश्रुत्यनुमानाभ्यां तदर्थितया तत्कर्तव्यत्व-बोधनात् तत्फलकत्वबोधनाच्चेति । तदपि न । प्रधानफलजनकस्यैवाङ्गत्वनियमेन ग्रन्थफलमोक्षाजनकस्य मङ्गलस्य ग्रन्थाङ्गत्वायोगात् । न च न मया मङ्गलस्य ग्रन्थाङ्गत्वमुच्यते । किन्तु ग्रन्थसमाप्ति-रूपफलजनकावान्तरवाक्यरचनारूपकर्माङ्गत्वम् । तथा चावान्तरवाक्यरचनारूपकर्मफलसमाप्तिहेतुत्वात् मङ्गलस्य तदङ्गत्वं नानुपपन्नं इति वाच्यम् । अवान्तरवाक्यानां प्रमेयप्रतिपादनद्वारा मोक्षार्थत्वेन समास्त्यर्थत्वाभावात् अवान्तरवाक्यरचनायाश्च तन्निष्पत्त्यर्थत्वेन ग्रन्थसमाप्त्यर्थत्वाभावात् । कर्मार्थितया शिष्टैः क्रियमाणत्वहेतोर्दृष्टान्तेऽभावेन व्याप्त्यसिद्धेश्च । न हि प्रयाजादिकं आरब्धकर्मार्थं क्रियते । किं नाम आरब्धकर्मजन्यफलार्थं । त्वन्मते मङ्गलस्यारब्धकर्मफलमोक्षाद्यतिरिक्तग्रन्थसमाप्तिरूपफलजनकत्वेन फलान्तराभावे नास्तीति विशेषणाभावेन द्वितीयहेतोरप्यसिद्धेश्च । यदपि प्रथमद्वितीयहेत्वोः प्रथमविशेषणा-सिद्धिपरिहाराय आचारमूलकश्रुत्यनुमानाभ्यां तदर्थितया तत्कर्तव्यत्वबोधनात् तत्फलकत्वबोधनात् इति उक्तम् । तदपि न । आचारमूलश्रुतेः क्रमविशेषावच्छिन्नतयाऽननुसंहितत्वेनाबोधकत्वात् । कर्मार्थि-तया क्रियमाणत्वस्य, व्यवहारेण चेष्टया वा ज्ञातुं शक्यत्वेन श्रुत्याऽबोधनीयत्वात् । कर्मार्थितया शिष्टाः कुर्वन्तीति सिद्धौ श्रुतिसिद्धिः तत्सिद्धौ च शिष्टाः कर्मार्थितया कुर्वन्तीति तत्साधकलिङ्गसिद्धिरित्य-न्योन्याश्रयाच्च । अनुमितश्रुतेर्मङ्गलस्य समाप्तिफलजनकत्वबोधकत्वेऽपि फलान्तराभावाबोधकत्वेन द्वितीय-

हेतौ फलान्तराभावे सतीति विशेषणासिद्ध्यपरिहाराच्च । न च शिष्टाचारविषयत्वानुमानेन फलान्तराभावसिद्धिः । स्वर्गकामनया विहितस्यापि ज्योतिष्टोमादेर्निष्कामेनानुष्ठाने परोक्षज्ञानहेतुत्ववत् समाप्तिकामनया शिष्टाचारविषयस्यापि फलान्तरजनकत्वसंभवात् ॥ **इति मङ्गलस्य सम्प्रदायकारोक्तप्रारब्धकर्माङ्गत्वभङ्गः ॥**

मणिकारस्तु । आरब्धकर्मसमाप्तौ मङ्गलं नाङ्गं न वा प्रधानमहेतुत्वात् । किन्तु प्रायश्चित्तवत् प्रधानं विघ्नध्वंसः फलम् । आरब्धनिर्वाहे विघ्नो मा भूदिति कामनया तदनुष्ठानात् । विघ्नसंशये वा निश्चये वा शिष्टानां तदाचारात् विघ्नाभावस्याऽऽकांक्षितत्वात् । यदि च निर्विघ्नं समाप्यतामिति कामना तदापि नागृहीतविशेषणान्यायेनाहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभाव एव फलम् । न समाप्तिरुभयतो व्यभिचारात् । समाप्तिस्तु विघ्नरूपप्रतिबन्धकाभावे सति लोकावगतकारणादेव । प्रचिताप्रचितदेवतास्तुत्यादिसाङ्गमङ्गलात्प्रत्येकं विघ्नध्वंसो भवत्येव । अतो वैदिके फलनिश्चयात् मङ्गले प्रवृत्तिः । न च वेदाप्रामाण्यम् । समाप्त्यभावश्च क्वचित्प्राचीनविघ्नभूयस्त्वात् क्वचिन्मङ्गलानन्तरोत्पन्नविघ्नात्क्वचिल्लोकावगतकारणाभावात् । प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विना । न च प्रायश्चितेन शङ्कितविघ्ननाशः । विघ्नसंशये तदनुल्लेखात् । न च कामनोपाधिकर्तव्यत्वे नियतमनुष्ठानं न स्यादिति वाच्यम् । आरब्धकर्मकारणप्रतिबन्धकाभावोपायत्वेनावश्यं तदनुष्ठानात् । तेन विना तत्प्रतिबन्धकाभावे सति कर्मानुत्पत्तेः । न च प्रधानत्वेऽन्यदाऽपि तत्करणम् । नियतसमयशिष्टाचारानुमितश्रुत्या कर्मारम्भे तत्कर्तव्यत्वबोधनात् । दर्शारम्भसमये आरम्भणीयावत् । विघ्नसंसर्गाभावश्च समाप्तिहेतुः । स च क्वचित्सिद्धोऽन्यत्र मङ्गलसाध्यः । अत एव मङ्गलं विनाऽपि जन्मान्तरादनुवर्तमानविघ्नात्यन्ताभावात् प्रमत्तनास्तिकानुष्ठितसमाप्तिः इत्याह ॥ छ ॥ तत् स्थूलदृश्वा । मङ्गलस्य विघ्नध्वंसः फलमिति प्रतिजानता विघ्ननाशोऽस्त्विति कामनया तदनुष्ठानादिति वक्तव्ये तद्विहाय विघ्नो मा भूदिति कामनया तदनुष्ठानादिति हेतोरुपन्यासात् । यच्चोक्तं रुचिदत्तेन मा भूदित्यस्य मा वर्ततामित्यर्थ इति । तन्न । वर्तमानविघ्नानामिव आगामिविघ्नानामपि समाप्तिविरोधित्वेन तदनुत्पादस्यापि काम्यत्वेन कामनासङ्कोचाङ्गीकारायोगात् । न च विघ्नानुत्पादस्यासाध्यत्वान्न तत्र कामनेति वाच्यम् । दुःखानुत्पादेपि कामनाऽभावप्रसङ्गात् । न च विघ्नानुत्पादकामनया न मङ्गले प्रवृत्तिः अनुत्पादलक्षणप्रागभावस्य प्रायश्चित्तपरिपाल्यत्वेन तत्साध्यत्ववत् विघ्नप्रागभावस्यापि मङ्गलसाध्यत्वोपपत्तेः । अन्यथा दुःखप्रागभावविनाशस्य दुःखत्वेन प्रायश्चित्तवैयर्थ्यं स्यात् । यदपि आरब्धसमाप्तौ मङ्गलं नाङ्गं न वा प्रधानमहेतुत्वादिति । तदपि न । अहेतुत्वस्यासिद्धेः । न हि मङ्गलं न समाप्तिहेतुरित्यत्र प्रमाण-

मस्ति येन मङ्गलस्य समाप्तिहेतुत्वं न स्यात् । 'आत्मानमन्तत उपसृत्य स्तुवीते'ति श्रुत्या स्तुतिरूपमङ्गलस्य समाप्तिशब्दाभिधेयग्रन्थनिष्पत्त्यादिसकलेष्टसाधनत्वावगमाच्च । यदपि यदि च निर्विघ्नं समाप्यतामिति कामना तदापि नागृहीतविशेषणान्यायेनाहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभाव एव फलं न समाप्तिरुभयतो व्यभिचारात् । समाप्तिस्तु विघ्नरूपप्रतिबन्धकाभावे सति लौकिकावगतकारणादेवेति । तदपि न । विघ्नाभावविशिष्टसमाप्तिसाधनत्वे प्रमाणमुपन्यस्य तस्यैव विषयसङ्कोचाय न्यायस्य वक्तव्यत्वेन अप्रमाणीभूतां कामनामुपन्यस्य तस्याः विषयसङ्कोचाय न्यायोपन्यासायोगात् । मङ्गलस्य विशिष्टसर्वकार्यनिष्पत्तौ कारणताग्राहकप्रमाणसद्भावेन कामनामुल्लङ्घ्य विघ्नध्वंसमात्रफलकत्वाङ्गीकारायोगाच्च ।

**रुचिदत्तस्तु** । यद्यप्ययं लाघवमूलको न्याय इह तु समाप्तौ व्यभिचारेण विशेष्यबाधो मूलमिति सविशेषणे हीति वक्तुमुचितम् । अत एव द्रव्यप्रकाशादौ तथैव लिखितम् । तथाऽपि विघ्नध्वंसविशिष्टसमाप्तौ फलत्वे गौरवाल्लाघवमप्यस्त्येवेति उभयन्यायावतारसंभव इति भाव इत्याह । स प्रष्टव्यः । किं शिष्टाचारेण लिङ्गेन, 'निर्विघ्नं समाप्तिकामो मङ्गलमाचरेदि'त्याचारमूलभूता श्रुतिः कल्प्यते । उत 'विघ्नोपशमकामो मङ्गलमाचरेदि'त्याकारा । नाद्यः । विघ्नध्वंसः फलमिति वदता विघ्नध्वंसकामो मङ्गलमाचरेदिति श्रुतेः कल्पनीयत्वेन समाप्तिकामो मङ्गलमाचरेदिति श्रुतिं कल्पयित्वा तस्याः विषयसङ्कोचाय सविशेषणे हीति न्यायस्य वक्तव्यत्वाभिधानायोगात् । नापि द्वितीयः । सविशेषणे हीति न्यायानवकाशात् । विघ्नाभावविशिष्टफलाभिधायकविध्यभावात् । निर्विघ्नं समाप्तिकामो देवतास्तुतिमाचरेदित्यादिप्रत्येकमेव विधिरिति उत्तरग्रन्थविरोधाच्च । स्तुत्यादिरूपमङ्गलस्य अन्तत 'आत्मानमुपसृत्य स्तुवीते'तिश्रुत्या सर्वविशिष्टसाधनत्वस्य सिद्धत्वात् । अन्वयव्यतिरेकव्यभिचारेण समाप्तिसाधनत्वाभावोक्त्ययोगाच्च । मङ्गलस्य आयुष्मत्पुरुषविशिष्टसमाप्तिविशेषं प्रत्येव हेतुत्वेन व्यतिरेकव्यभिचाराभावाच्च । सत्यपि मङ्गले कदाचित्कार्यानुत्पादस्तु मङ्गलस्य कारणत्वेऽपि कारणान्तराभावादुपपन्नः । अन्यथा दण्डादेरपि कारणत्वं न स्यात् । सत्यपि मङ्गले विघ्नानां दृष्टत्वेन विघ्नध्वंसकारणत्वाभावापाताच्च । यदि मङ्गलस्य प्रायश्चित्ताद्यजन्यविघ्नध्वंसविशेषं प्रति कारणता कल्प्यते । तर्हि समाप्तावपि तथास्तु । **रुचिदत्तस्तु** ।

ननु न मङ्गलत्वेन समाप्तित्वेन कार्यकारणभावः । किन्तु मङ्गलसमसंख्यविघ्नस्थलीयसमाप्तित्वेन कार्यता समाप्तिस्थलीयविघ्नसमसंख्यमङ्गलत्वेन कारणता । बहुविघ्नशङ्कया बहुमङ्गलस्य अल्पतच्छङ्कया अल्पमङ्गलस्य शिष्टैरनुष्ठानेन तदनुमितश्रुत्या तथैव बोधनात् । ततश्च नान्वयव्यतिरेकव्यभिचारौ इति । तन्न । विघ्नध्वंसविशिष्टसमाप्तेः फलत्वे विशेषणीभूतविघ्नध्वंसफलत्वस्यावश्यकत्वात् ।

लाघवाच्च विघ्नध्वंस एव फलं न समाप्तिरपि गौरवात्। न चैवं यागादेरपि अपूर्वमेव फलं स्यादिति वाच्यम्। तस्य प्रथममनुपस्थितत्वात्। प्रतीतस्वर्गसाधनताऽनुपपत्या च तत्कल्पना-दशायामुपजीव्यविरोधेन स्वर्गफलत्वानपवादकत्वात्। इह तु विघ्नसंशये तन्निश्चये वा शिष्टानां मङ्गलाचरणात् विघ्नाभावस्यावश्यं कामनाविषयत्वेनोपस्थितत्वात्। उक्तलाघवावतारात्। यत्रापीदं समाप्यतामिति कामना तत्रापि विघ्नध्वंसो हृदि चेष्टते। अन्यथा विघ्नज्ञानशून्यस्यापि मङ्गलाचरणप्रसङ्गात्। किञ्च विघ्नध्वंसस्य समाप्तिपूर्ववर्तित्वग्रहानन्तरं मङ्गलस्य तत्पूर्ववर्तित्व-ग्रहात् कुलालपितृवत्तस्यान्यथासिद्धत्वम्। अन्यथा मणिध्वंसजन्यवह्निदाहादौ मण्यवयव-विभागस्यापि हेतुताऽऽपत्तिः। अत एव कारीरीतः प्रत्यग्रावग्रहनिवृत्तिमात्रम्। वृष्टिस्तु स्वकारणा-देवेति सिद्धान्तः। अन्यथा तत्राप्युक्तरीत्यापातः। न चैवं समाप्तेः कामनाविषयत्वानुपपत्तिरिति वाच्यम्। इष्टसाधनताज्ञानस्य कामनाहेतोरुभयत्र सत्त्वेनोभयत्र तदविरोधात्। न हि पाकवृत्ति-काले तृप्तिकामनाऽस्तीति तस्य तृप्तिजनकत्वमपि। किञ्च प्रमत्तानुष्ठितसमाप्तौ मङ्गलं विनैव विघ्नसंसर्गा-भावो हेतुस्तथा च कल्पनाविर्बर्तिन एवान्यत्रापि संभवे तत्सहभूतस्यान्यथासिद्धिनिश्चये वेदेनापि कारणताबोधनमशक्यम्। तस्मात् विघ्नध्वंस एव फलं न समाप्तिरित्याह। स स्थूलदृश्वा। परेण विघ्नध्वंसविशिष्टस्य फलत्वमुक्तमिति भ्रान्त्या विघ्नध्वंसविशिष्टसमाप्तेः फलत्वेन विशेषणीभूतविघ्नध्वंस-फलत्वस्यावश्यकत्वादित्यभिधानात्। न हि समाप्तिविशेषो मङ्गलफलमिति वदता पूर्वपक्षिणा विघ्नध्वंसवैशिष्ट्येन समाप्तेर्मङ्गलफलत्वमुक्तम्। येन भ्रान्तो न स्यात्॥ किन्तु विघ्नध्वंसजन्या समाप्तिः मङ्गलफलमित्येवोक्तम्॥ न चैवं सति विघ्नध्वंसस्य फलीभूतसमाप्तिविशेषणत्वमुक्तं भवति॥ नापि विघ्नध्वंसद्वारा मङ्गलं समाप्तिहेतुरिति परेणोक्त्यापि विघ्नध्वंसो विशेषणमिति लभ्यते। ज्योतिष्टो-मस्यापूर्वद्वारा स्वर्गसाधनत्वेऽपि अपूर्वस्य फलीभूतस्वर्गविशेषणत्वादर्शनात्। विघ्नध्वंस एव फलमिति प्रतिज्ञातसाध्ये आवश्यकत्वलाघवयोरसाधकयोरुपन्यासाच्च। न हि आवश्यकत्वं मङ्गलजन्यत्वेन व्याप्तम्। नापि यदनुष्ठातुर्यदावश्यकं तत्तत्क्रियाफलमिति व्याप्तिरस्ति। नापि लाघवं मङ्गलजन्यत्वेन व्याप्तम्। न चावश्यकत्वं लाघवं च विघ्नध्वंसस्य मङ्गलफलत्वसिद्धये नोपन्यस्तम्। किन्तु समाप्तेर्मङ्गल-फलत्वाभावसिद्धये उपन्यस्तमिति युक्तम्। अन्यगतावश्यकत्वलाघवयोरन्यनिष्ठत्वफलत्वानिवारकत्वात्। समाप्तेः फलत्वपरित्यागे हेतुतया गौरवस्य त्वयैवाभिधानात्। यदपि न चैवं यागादेरपि अपूर्वमेव फलं स्यादित्याशङ्क्य तस्य प्रथममनुपस्थितत्वात्। प्रतीतस्वर्गसाधनताऽनुपपत्या च तत्कल्पना-दशायामुपजीव्यविरोधेन स्वर्गफलत्वानपवादकत्वात् इह तु विघ्नसंशये तन्निश्चये वा शिष्टानां मङ्गलाचरणात् विघ्नाभावस्यावश्यं कामनाविषयत्वेनोपस्थितत्वादुक्तलाघवावतारात् इति समाधानं तदपि

न । ज्योतिष्टोमः स्वर्गसाधनमित्यर्थस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुतिसिद्धत्ववत् मङ्गलस्यापि समाप्तिफलकत्वस्य निर्विघ्नपरिसमाप्तिकामो मङ्गलमाचरेदिति अनुमितश्रुतिसिद्धत्वस्य त्वयाङ्गीकृतत्वात् । स्वर्गस्य फलत्वपरित्यागे उपजीव्यविरोधवत् मङ्गलस्य समाप्तिफलत्वपरित्यागे उपजीव्यागमविरोधसद्भावेन वैषम्याभिधानायोगात् । किञ्च विघ्नध्वंसमात्रफलकत्वे समाप्त्युत्तरकाले मङ्गलानुष्ठानं न स्यात् तदा विघ्नध्वंसस्याकाम्यत्वात् । ननु विघ्नध्वंसार्थमननुष्ठेयत्वेऽपि प्रचयहेतोर्मङ्गलस्य प्रचयार्थमनुष्ठानं नानुपपन्नमिति चेत् । तर्हि किमपराद्धं समाप्त्या येन प्रमाणसिद्धमपि तत्फलत्वं परित्यज्य विघ्नध्वंसमात्रस्य फलत्वमङ्गीकार्यं स्यात् । यदपि विघ्नसंशये तन्निश्चये वा शिष्टानां मङ्गलाचरणादित्यादि तत्र वक्तव्यम् । कथमवगतं लोकोत्तरप्रज्ञेन शिष्टाः विघ्ननिश्चये विघ्नसंशये वा मङ्गलमनुतिष्ठन्तीति । तद्वचनादिति चेत् । तर्हि किं शिष्टाः मङ्गलस्य विघ्नध्वंसः फलमिति नोपदिशन्ति । नोपदिशन्तीति चेत् न । अनुपदेशेनैव तदभावसिद्धिप्रसङ्गात् । न हि अवश्यवक्तव्यस्यानुक्तौ कारणमस्ति । येनानुपदिष्टमपि विघ्नध्वंसफलकत्वं वास्तवं प्रतीमः । उपदेशसद्भावे तु विघ्नज्ञानपूर्वकतदाचरणानुसरणवैय्यर्थ्यम् ।

यदपि यत्रापीदं समाप्यतामिति कामना तत्रापि विघ्नध्वंसो हृदि चेष्टते । अन्यथा विघ्नज्ञानशून्यस्यापि मङ्गलाचरणप्रसङ्गादिति तत्र वक्तव्यम् । विघ्नध्वंसो हृदि चेष्टत इत्यनेन विघ्नध्वंसकामना हृदि वर्तत इत्युच्यते । आहोस्वित् । विघ्नध्वंसज्ञानम् । उतान्यत् । नाद्यः । निर्विघ्नं समाप्यतामिति कामनापक्षात् भेदाभावप्रसङ्गात् । न द्वितीयतृतीयौ । अनुपयुक्तत्वात् ।

यदपि विघ्नध्वंसस्य समाप्तिपूर्ववर्तित्वग्रहानन्तरं मङ्गलस्य तत्पूर्ववर्तित्वग्रहात् कुलालपितृवत्तस्यान्यथासिद्धत्वमिति । तदपि न । शिष्टाचारानुमितश्रुत्या विघ्नध्वंसविशिष्टसमाप्तिं प्रति प्रथममेव कारणताग्रहेण तद्ग्रहानन्तरं तत्पूर्ववर्तित्वग्रहाभावात् । किं च अनन्यथासिद्धनियतपूर्ववर्तित्वं हि कारणत्वम् । तत्र पूर्ववर्तित्वस्योभयवादिसिद्धत्वात् । अनन्यथासिद्धत्वाभाव एव त्वया साधनीयः । न च तत्संभवति । मङ्गलमनन्यथासिद्धं न, अन्यथासिद्धत्वादिति साधने साध्यावैशिष्ट्यात् ।

यदपि अन्यथा मणिध्वंसजन्यवह्निदाहादौ मण्ववयवविभागस्यापि हेतुतापत्तिः । अत एव कारीरीतः प्रत्यग्रावग्रहनिवृत्तिमात्रं वृष्टिस्तु स्वकारणादेवेति सिद्धान्त इति । तदपि न । मङ्गलस्य समाप्तिसाधनताग्राहकप्रमाणबलेन समाप्तिसाधनत्वाङ्गीकारे मण्ववयवविभागस्य दाहहेतुत्वापादनायोगात् । न ह्यस्माभिः मङ्गलस्य समाप्तिसाधनत्वे तत्साधनीभूतविघ्नध्वंसहेतुत्वं नियामकमुक्तम् । येन मण्ववयवविभागस्य दाहहेतुत्वापादनं युक्तं स्यात् । वृष्टिकामः कारीर्या यजेतेतिश्रुतिबलेन

कारीरीयागस्य वृष्टिहेतुत्वस्यैवोचितत्वेनावग्रहनिवृत्तिमात्रफलकत्वमितिसिद्धान्तस्याप्ययुक्तत्वात् । अन्यथा ज्योतिष्टोमादेरपि अपूर्वहेतुत्वमेव स्यात् न तु स्वर्गहेतुत्वम् । ज्योतिष्टोमस्यापूर्वहेतुत्वस्येव कारीरीयागस्य अवग्रहनिवृत्तिहेतुत्वस्याप्यश्रुतत्वात् ।

यदपि न चैवं समाप्तेः कामनाविषयत्वानुपपत्तिरित्याशङ्क्य इष्टसाधनताज्ञानस्य कामनाहेतोरुभयत्र सत्त्वेनोभयत्र तदविरोधात् । न हि पाकप्रवृत्तिकाले तृप्तिकामनाऽस्तीति तस्य तृप्तिजनकत्वमपीति समाधानं तदप्यज्ञानमूलकम् । समाप्तेर्मङ्गलफलत्वाभावे मङ्गलविषयकप्रवृत्तिजनककामनाविषयत्वं न स्यात् इत्यभिप्रायेण शङ्किते समाप्तेः साक्षान्मङ्गलफलत्वाभावेऽपि परम्परया मङ्गलफलत्वात्समाप्ति-कामनाया प्रवृत्तिप्रयोजकत्वमुपपन्नमिति समाधानं परित्यज्य इष्टसाधनताज्ञानस्य कामनाहेतोरुभयत्र सत्त्वेनोभयत्र तदविरोधादित्यनुत्तरस्यैवाभिधानात् । तृप्तिकामनयाऽनुष्ठीयमानस्य पाकस्य तृप्तिहेतुत्वाच्च । अत एव विशिष्टगृहीतो ब्रवीति । न मया तृप्तिकामनया पच्यते । अपि तु प्रभोराज्ञया पच्यते । अत एव च स्वयं तृप्ताः परार्थं पचमानाः वदन्ति । न मयाऽऽत्मतृप्त्यर्थं पच्यते । किन्तु ब्राह्मणानां तृप्त्यर्थमिति । कथमन्यथा आत्मतृप्तिकामेनेदं पच्यते इदं तु परतृप्तिकामेन पच्यत इत्यादिविशेषः स्यात् ।

यदपि प्रमत्तानुष्ठितसमाप्तौ मङ्गलं विनैव विघ्नसंसर्गाभावो हेतुः तथा च क्लृप्तपूर्ववर्तिन एवान्यत्रापि संभवे तत्सहभूतस्यान्यथासिद्धिनिश्चये वेदेनापि कारणताबोधनमशक्यमिति । तदपि न । प्रमत्तनास्तिकादिपुत्राणां जातेष्ट्यादिकं विनैव लोकावगतकारणादेवाभ्युदयो दृष्ट इति वेदेनापि जातेष्ट्यादिकं अभ्युदयसाधनमिति बोधयितुमशक्यमित्यापातात् ।

यदपि प्रचिताप्रचितदेवतास्तुत्यादिमाङ्गमङ्गलात् प्रत्येकं विघ्नध्वंसो भवत्येवेति तदपि न । विघ्नात्यन्ताभावस्थले कृतेऽपि मङ्गले विघ्नध्वंसाभावात् । अत एव वैदिके फलनिश्चयान्मङ्गले प्रवृत्ति-रित्यप्ययुक्तम् । विघ्नात्यन्ताभावस्थले फलाभावदर्शनेन तन्निश्चयायोगात् । न च सत्सु विघ्नेषु मङ्गलेन तद्ध्वंसो भवत्येवेति निश्चयः संभवत्येवेति वाच्यम् । विघ्नसंशयदशायां फलसन्देहानिवारणात् सत्सु समाप्तिकारणेषु मङ्गले सति समाप्तिर्भवत्येवेति निश्चयस्य वक्तुं शक्यत्वाच्च ।

यदपि प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विनेति । तदपि न । प्रमत्तनास्तिकादिप्रारिप्सित-समाप्तिप्रतिबन्धकस्य शत्रोः मङ्गलं विना खड्गेन विनाशदर्शनात् । न च प्रायश्चित्ताद्यजन्यविघ्नध्वंसं प्रति मङ्गलस्य कारणत्वमित्यत्र तात्पर्यमिति वाच्यम् । समाप्तिविशेषं प्रत्येव मङ्गलस्य कारणत्वमित्येव वक्तुं शक्यत्वात् ।

यदपि न च प्रायश्चित्तेन शङ्कितविघ्ननाशः । विघ्नसंशये तदनुल्लेखात् इति । तदपि न । विघ्नसंशये प्रायश्चित्तानुपदेशेऽपि प्रायश्चित्तानुष्ठाने शङ्कितस्यापि विघ्नस्य नाशोपपत्तेः । अन्यथा निश्चितविघ्ननाशोऽपि प्रायश्चित्तेन न स्यात् । शङ्किते कदाचिन्निश्चयस्य निश्चिते कदाचित्संदेहस्य दर्शनेन शङ्कितनिश्चितविघ्नयोरभिन्नत्वात् । अन्यथा मङ्गलादपि शङ्कितविघ्ननाशो न स्यात् । विघ्न-संशये मङ्गलानुपदेशात् । पापसंदेहेऽपि सर्वप्रायश्चित्तविधानाच्च । अन्यथा सर्वपापनिश्चयाभावेन तदुपदेशवैय्यर्थ्यं स्यात् । पापानामपि विघ्नत्वात् ।

यदपि प्रधानत्वेऽन्यदाऽपि तत्करणमित्याशङ्कय नियतसमयशिष्टाचारानुमितश्रुत्या कर्मारम्भे तत्कर्तव्यत्वबोधनात् दर्शारम्भसमये आरम्भणीयावत् इति समाधानं तदपि न । अत एव तच्छङ्कया मध्येऽपि तदाचरन्तीत्युत्तरग्रन्थविरोधात् ॥ छ ॥ **इति मङ्गलस्य मण्युक्तविघ्नध्वंसमात्रफलकत्व-भङ्गः ॥ श्रीरामार्पणमस्तु ॥**

**पक्षधरस्तु** । विघ्नध्वंसोऽपि न फलम् । अपि तु विघ्नानुत्पादः । विघ्नो मा भूदित्युद्दिश्य प्रवृत्तेः । न तु विघ्नो निवर्ततामिति । अत एव दुःखं मा भूदिति कामनया क्रियमाणस्य प्रायश्चित्तस्य दुःखानुत्पाद एव फलम् । न तु दुःखसाधनध्वंसः । अत एव च कृतेऽपि मङ्गले समाप्त्यभावस्तदा प्रतिबन्धजनकाधर्मध्वंसद्वारा प्रतिबन्धानुत्पादेऽप्यग्रेतनदुरितेन प्रतिबन्धसंभवात् । तथा च यथा दुःखानुत्पादानुगुणतया पापनाशकत्वं प्रायश्चित्तस्य । तथा दुरितनिवर्तकत्वं मङ्गलस्य । न च कर्मारम्भसमये दुरितहेतुक्रियाया एवासंभावितत्वेन कथं तदनुत्पादाय प्रवृत्तिरिति वाच्यम् । विघ्नो मा भूदिति कामनायां हि अभवनप्रतियोगितयोल्लिख्यमानविघ्नो न दुरितं अपि तु प्रतिबन्धः । प्रतिबन्धश्च विसामग्री । तदनुत्पादः सामग्रीसम्पदेव । विसामग्र्यां सत्यां कार्याभावस्य ब्रह्मणाऽपि दुरपवादत्वात् । न च सामग्र्याः फलत्वे मङ्गलस्य समाप्त्येव व्यतिरेकव्यभिचारः । तवापि विना-यकस्तवपाठादिना विघ्ननाशेन व्यभिचारात् । विशेषे तद्धेतुत्वं यदि तदा ममापि अविलम्बेन कार्य-जनकसामग्रीविशेषे मङ्गलस्य हेतुत्वं इत्याहुः ॥ तन्न । संभूतसामग्रीकस्य विघ्नो मा भूदिति काम-नाऽभावप्रसङ्गात् । विघ्नानुत्पादात्मकसामग्रीसंपद एव त्वया फलत्वेनाभिधानात् । तस्य च सिद्धत्वात् सिद्धे च कामनाविरहात् । न चेष्टापत्तिः । संपन्नसामग्रीकस्यापि विघ्नो मा भूदिति कामनया मङ्गलानुष्ठाने प्रवृत्तिदर्शनात् । किं च विघ्नानुत्पादस्य सामग्रीसम्पद्रूपत्वे विघ्नानां विघ्नत्वं न स्यात् । कारणाभावात्मकत्वात् । सामग्र्यभावप्रयुक्तकार्याभावस्थले विघ्नानङ्गीकारात् । सति पुष्कलकारणे कार्योत्पत्तिविघटकस्यैव विघ्नशब्दार्थत्वात् ॥ छ ॥ **इति मङ्गलस्य पक्षधरोक्तविघ्नानुत्पादफलकत्वभङ्गः ।**

श्रीगुरुभ्यो नमः । अथ संसारकान्तारे निपतितान् मोक्षयोग्यान् कृपयोद्दिधीर्षुः भगवान्नारायणः प्रमाणतत्त्वज्ञानस्य प्रमेयतत्त्वावधारणस्येव मोक्षहेतुत्वात् प्रमाणतत्त्वनिर्णयाय ब्रह्मतर्कशास्त्रमचीक्लृपत । तस्य शास्त्रस्येदानींतनैरध्येतुमशक्यत्वेन श्रीमदाचार्यप्रणीतग्रन्थानुसारेण मन्दबोधाय प्रमाणतत्त्वमत्र विचार्यते ।

यथावस्थितज्ञेयविषयीकारि प्रमाणम् । यथावस्थितज्ञेयविषयीकारिसाधनं प्रमाणम् । तद्द्विविधम् । केवलमनुप्रमाणं चेति । तत्राद्यं लक्षणं केवलप्रमाणवृत्ति, द्वितीयं तु अनुप्रमाणवृत्ति इति विवेकः । एतदेव लक्षणद्वयं प्रमाणशब्दव्यवहारहेतुत्वात्सामान्यलक्षणम् । केवलप्रमाणमनुप्रमाणमिति शब्दविशेषव्यवहारहेतुत्वात् विशेषलक्षणं च भवति । तत्राद्यस्यानुप्रमाणेषु द्वितीयस्य केवलप्रमाणेऽव्याप्तिरिति नेदं लक्षणद्वयं युक्तमिति वाच्यम् । अव्याप्तेरदोषत्वात् । तथा हि । असाधारणधर्मो हि लक्षणम् । तच्च लिङ्गतयोपयुज्यते । न च व्यापकता लिङ्गत्वोपयोगिनी व्याप्यत्वेनैव तदुपपत्तेः । इतरथा धूमादीनामलिङ्गतापातः । किं नाम पक्षमात्रवृत्तित्वं अपेक्षितमेव । उपायत्वेनोपन्यस्तस्याभावे तदुपेयप्राप्तेरसंभवात् । तथा च तदानीं लिलक्षयिषितमात्रव्यापित्वं लक्षणस्यापेक्षितम् । अस्माकं तु आद्यलक्षणवत्तया दर्शयितुमिष्टं केवलप्रमाणम् । द्वितीयलक्षणवत्तया दर्शयितुमिष्टमनुप्रमाणमिति नाव्याप्तिदोषः । अत एव कणादः क्रियावद्गुणवत्समवायिकारणमिति गुणवत्त्वमिव अव्यापकमपि क्रियावत्त्वं द्रव्यलक्षणत्वेनाह । अत एव च सुप्तिङन्तं पदमिति सुबन्तत्वं तिङन्तत्वं च पदलक्षणत्वेन पाणिनिरभाणीत् । उक्तं च सुधायां 'वस्तुतस्त्वेकमिवानेकमपि स्वस्वाश्रये व्यावृत्त्यादिकं कुर्वद्भवन्त्येव लक्षणमि'ति ।

न चाद्यलक्षणस्य गमनेऽतिव्याप्तिः गमनस्यापि ग्रामरूपज्ञेयविषयीकारित्वात् इति वाच्यम् । ज्ञेयविषयीकारित्वमित्यनेन स्वोपाधिकज्ञेयविषयीकारित्वस्य विवक्षितत्वात् । न च ग्रामः गमनेनोपाधिना ज्ञेयः । येन तत्रातिव्याप्तिः स्यात् । ज्ञानस्य ज्ञेयतोपाधित्वं च ज्ञेय इति ज्ञानप्रयोजकीभूतज्ञानमिति ज्ञानविषयत्वमेव नान्यदिति ।

यथार्थज्ञानं केवलम् । यद्यस्य यथार्थज्ञानं तत्तस्य केवलमिति यावत् । यत् यस्य ज्ञानं तत्तस्य केवलमित्येवोक्ते शुक्तौ रजतत्ववैशिष्ट्यविषयके इदं रजतमिति विज्ञाने अतिव्याप्तिः । तस्य रजतत्ववैशिष्ट्यविषये केवलत्वाभावेनालक्ष्यत्वात् । अतो यद्यस्य यथार्थज्ञानमित्युक्तम् । तदपि इदंत्ववैशिष्ट्ये यथार्थज्ञानमेवेत्यतिव्याप्तिरवर्जनीयेति चेत् न तस्येदंत्ववैशिष्ट्ये केवलप्रमाणत्वेन लक्ष्यत्वात् । न चैकस्यैव ज्ञानस्य लक्ष्यत्वमलक्ष्यत्वं चेति व्याहतमिति वाच्यम् । इदंत्ववैशिष्ट्ये

प्रामाण्यं रजतत्ववैशिष्ट्ये अप्रामाण्यमिति विषयभेदेन लक्ष्यत्वालक्ष्यत्वयोः समावेशसंभवात् । अत एव इदं रजतमितिविज्ञानस्य इदंत्वांशे याथार्थ्येन लक्ष्यभिन्नत्वाभावात् न तत्रातिव्याप्तिरिति तत्परिहाराय यथार्थपदं नोपादेयमिति वदन्तः परास्ता वेदितव्याः । रजतत्ववैशिष्ट्यांशे यथार्थज्ञानलक्षणावसरे पूर्वोक्तज्ञानस्य लक्ष्यभिन्नत्वस्य सुप्रसिद्धत्वात् ।

तत्साधनमनुप्रमाणम् । तत्र प्रत्यक्षानुमानागमजन्यज्ञानानां याथार्थ्यलक्षणं प्रामाण्यं तदुत्पत्तौ स्वतः । इदमेव हि ज्ञानप्रामाण्यस्योत्पत्तौ स्वतस्त्वं यत् ज्ञानजनकमात्राधीनजन्मवत्वम् । एवं ज्ञप्तावपि ज्ञानप्रामाण्यस्य ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वम् । तेषां विज्ञानानां अप्रामाण्यं तु उत्पत्तौ ज्ञप्तावपि परत एव । अप्रामाण्यस्य ज्ञानजनकातिरिक्तदोषजन्यत्वात् । ज्ञानग्राहकातिरिक्तविसंवादादिगम्यत्वात् । इन्द्रियलिङ्गशब्दरूपप्रमाणानां तु यया शक्त्या ज्ञानजनकत्वं तयैव शक्त्या तत्प्रामाण्यजनकत्वरूपं प्रामाण्यस्योत्पत्तौ स्वतस्त्वम् । इन्द्रियलिङ्गशब्दानां यथायथं प्रत्यक्षादिवेद्यत्वात् यथार्थज्ञानजनकत्व-रूपप्रामाण्यस्यानुमानवेद्यत्वात् ज्ञप्तौ परतः प्रामाण्यम् । तेषामेव अयथार्थज्ञानजनकत्वरूपमप्रामाण्यं उत्पत्तौ ज्ञप्तावपि परत एव । यत इदमेव हि अप्रामाण्यस्योत्पत्तौ परतस्त्वम् । यत् प्रमाणानां अप्रामाण्यजनने ज्ञानजनकातिरिक्तदोषरूपसहकार्यन्तरसापेक्षत्वम् । ज्ञप्तौ परतस्त्वं तु अनुभव-सिद्धमेव ।

एवमप्रमाणानां यथार्थज्ञानजनकत्वलक्षणं प्रामाण्यं अप्रामाण्यं चेति द्वयमपि परतः । एतज्जन्यज्ञानानां उत्पत्तौ प्रामाण्यं परतः अप्रमाणातिरिक्तेश्वरेच्छात्मरूपगुणसापेक्षत्वात् । अप्रामाण्यं तु स्वतः । ज्ञानकारणीभूतदुष्टकारणातिरिक्तानपेक्षत्वात् । ज्ञप्तौ तु अप्रामाण्यं एव परतः ज्ञान-ग्राहकमात्रग्राह्यत्वाभावात् ।

ननु ज्ञानप्रामाण्यस्योक्तं ज्ञानग्राहकग्राह्यत्वं रूपं स्वतस्त्वमयुक्तम् । इदं ज्ञानमितिशब्दजन्यज्ञानस्य प्रामाण्याग्राहकत्वात् इति चेत् । न । ज्ञानग्राहकशब्देन साक्षिणो विवक्षितत्वात् । ज्ञानं गृह्णन् साक्षी सहकार्यन्तरमनपेक्ष्य स्वमहिम्नैव प्रामाण्यं गृह्णातीति ज्ञेयम् । ननु साक्षिणः स्वमहिम्नैव प्रामाण्य-ग्राहकत्वमित्ययुक्तम् । अनभ्यासदशापन्नज्ञानस्यापि प्रामाण्यग्रहणप्रसङ्गात् । स्वभावस्यानपायात् । न चेष्टापत्तिः । संशयाभावप्रसङ्गादिति चेन् । न ब्रूमो वयं साक्षी प्रामाण्यं गृह्णात्येवेति नियम इति किं नाम बाधकाभावे ज्ञानं गृह्णन् साक्षी प्रामाण्यं गृह्णात्येवेति नियम इति । ततश्चानभ्यासदशापन्नस्थले दूरस्थत्वादिदोषवशात् प्रामाण्याग्रहणे न साक्षिणः प्रामाण्यग्राहकत्वस्वभावहानिः । न हि भवति गोक्षुरकादिना प्रतिबद्धो गजो न गच्छतीति गन्तृत्वं न तस्य स्वाभाविकमिति ।

ननु यथावस्थितार्थविषयकत्वं प्रामाण्यम् । अर्थस्य यथावस्थितत्वं च ज्ञानेन यद्देशकालयोः यस्य यादृशं स्वरूपं गृह्यते तस्य तद्देशकालयोस्तथात्वम् । तस्य च बाह्यार्थत्वात् कथं तद्घटितप्रामाण्यग्राहकत्वं साक्षिण इति चेन् । उच्यते । यद्यपि साक्षी घटत्वादिवैशिष्ट्यग्रहणे न समर्थः । तथाऽपि व्यवसायेनोपनयानन्तरं वैशिष्ट्यादीनां सत्त्वं गृह्णाति । प्रामाण्यग्रहणस्वभावत्वात् । अन्यथा प्रामाण्यग्रहणस्वभावहानिः स्यात् । वैशिष्ट्यादीनां सत्त्वावगाहनमन्तरा प्रामाण्यविषयीकरणायोगात् । प्रामाण्यस्यार्थतथात्वघटितत्वात् । न च भ्रमविषयस्य भ्रमेणोपनयानन्तरं तत्रापि सत्त्वग्रहणप्रसङ्गः । निर्दोषतया सन्मात्रग्रहणस्वभावत्वात् । तस्य चासत्त्वात् । न चेदं रजतमित्यादिविभ्रमे निष्कम्पप्रवृत्त्यन्यथाऽनुपपत्त्या प्रामाण्यग्रहोऽवश्यंवाच्यः । स च साक्षिरूपश्चेत् साक्षिणोऽयाथार्थ्यप्रसङ्ग इति वाच्यम् । तद्विज्ञानं न साक्षिजन्यं अपि तु मनोजन्यमित्यङ्गीकारात् । तदुक्तम् । 'यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'ति । न चानुमानेनैव प्रामाण्यग्रहः । न ज्ञानग्राहकेण साक्षिणेति युक्तम् । जलादिविज्ञाननिष्कम्पप्रवृत्त्यभावप्रसङ्गात् । न च प्रवृत्तेः पुरा प्रामाण्यसाधकलिङ्गानुसंधानमस्ति । येन प्रामाण्यनिश्चयात् निष्कम्पा प्रवृत्तिः स्यात् । नापि प्रवृत्त्युत्तरकालं प्रामाण्यनिश्चयस्य प्रयोजनमस्ति । नापि प्रवृत्त्युत्तरकालं समर्थप्रवृत्तिजनकत्वलिङ्गेन प्रामाण्यावधारणं युज्यते । पक्षहेतुव्याप्तिज्ञानानां प्रामाण्यावधारणाभावेन संदिग्धासिद्धत्वात् । तत्प्रामाण्यावधारणार्थं लिङ्गान्तरान्वेषणे अनवस्थानात् । कस्यचित्स्वतस्त्वे आदावेव तदस्तु । ननु न भवत्येव जलादिज्ञाने प्रामाण्यनिश्चयः । आवश्यकार्थनिश्चयादेव निष्कम्पप्रवृत्त्युपपत्तेरिति चेन् । न । अगृहीतप्रामाण्यकस्य ज्ञानस्य एककोटिकसंशयत्वेन निश्चयत्वाभावात् । निश्चयस्य च नियमेन प्रामाण्यग्रहविषयत्वात् । तथा हि । जलादिविज्ञानानन्तरं तद्ज्ञानं ज्ञायत एवेति वक्तव्यम् । सुखदुःखेच्छाबुद्धीनां ज्ञातैकसत्त्वात् ज्ञाने ज्ञाते प्रामाण्याप्रामाण्ययोरन्यतरस्याग्रहे ज्ञानत्वरूपसाधारणधर्मं जानतः विशेषादर्शने च किमिदं प्रमाणं न वेति संशयोऽप्यवर्जनीय एव । सत्यां सामग्र्यां तदनुत्पादे कारणाभावात् । न च प्रामाण्यसंशयास्पदं विज्ञानं निश्चय इति वक्तुं युक्तम् । अर्थनिश्चयस्य प्रामाण्यसंशयविरोधित्वेन प्रामाण्यसंशयोच्छेदप्रसङ्गात् । कथमर्थनिश्चयः प्रामाण्यसंशयविरोधीति चेत् । इत्थम् । प्रामाण्यमर्थसत्त्वघटितम् । अप्रामाण्यं चार्थासत्त्वघटितम् । अर्थसत्त्वनिश्चयस्य च तदभावघटिताप्रामाण्यकोटिकसंशयविरोधित्वं स्फुटमिति । किं च अभ्यासदशापन्ने इदं जलमिति ज्ञाने न भवति प्रामाण्यसन्देहः । भवति चानभ्यासदशापन्ने इदं जलमिति विज्ञाने । न चेदं वैषम्यं व्यवसायगतवैषम्यमन्तरा भवतीति अकामेनाप्याद्यं विज्ञानमवधारणात्मकं द्वितीयमनवधारणात्मकमित्यभ्युपगन्तव्यम् ।

अत एव अनभ्यासदशायां अत्रास्ति जलमिति ज्ञात्वा स्वस्वामिनं ब्रवीति अत्रास्ति जलमिति। किं तथ्यमिति पृष्टो निश्चयाभावात्तटाकं धावति पुनर्निश्चित्य ब्रवीति तथ्यमिति न पुनः प्राक्। उक्तं च भगवत्पादैः। 'चन्द्रप्रादेशत्वादिविषयं तु दूरस्थत्वादिदोषयुक्तत्वादपटुविति। उक्तं च टीकाकारैः। 'द्विविधं ज्ञानं एकाकारनियतं डोलायमानं च। तत्र द्वितीयं सन्देहसंज्ञां लभते। आद्यमपि द्विविधम्। किञ्चित्स्वार्थस्य निश्चायकम्। यथा स्तम्भोऽयं भवत्येवेति। किञ्चित्स्वार्थमुल्लिखदपि न तस्य निश्चायकम्। यथा सवितृसुषिरविषयमिति। एकाकारविषयतया जायमानमपि अनिश्चाययदेव बाधितप्रायं जायत इति च। उक्तं च तत्त्वविवेके नरसिंहाश्रमेण। 'यद्यपि निर्विशेषब्रह्मसाक्षात्कारः शब्दान्निष्पन्नः। तथापि सोऽनवधारण एव। अग्रे संशयादिदर्शनादि'ति। तस्माद्यज्ज्ञानं यत्संशयनिवृत्त्यनुकूलस्वरूपविशेषवत् तत्तन्निश्चय इति इतरत्र तथेत्येककोटिकमपि किञ्चित्पुरुषदोषादनवधारणं किञ्चित्तर्कादिकारणमहिम्ना तदनतिरिक्तविषयमपि निश्चय इत्यनवद्यमिति च। ननु यदि प्रामाण्यसंशयविषयीभूतं विज्ञानं नावश्यकार्थनिश्चयः। तर्हि न निष्कम्पप्रवृत्तिहेतुः स्यात्। यदि च न निष्कम्पप्रवृत्तिहेतुः तर्हि स्वर्गसाधनं याग इत्यादिविज्ञानेषु प्रामाण्यावधारणप्रयासो न स्यात्। निष्कम्पप्रवृत्त्यहेतुज्ञाने प्रामाण्यावधारणकृत्याभावात्। न च स्वर्गसाधनं याग इति एककोटिकज्ञानसमानविषयके निश्चये प्रामाण्यसंशयनिवृत्तयेऽत्र प्रामाण्यावधारणमिति युक्तम्। अन्यत्र प्रामाण्यनिश्चयस्यान्यधर्मिकप्रामाण्यसंशयानिवर्तकत्वात्। त्वन्मते निश्चयस्य प्रामाण्यग्रहविषयत्वनियमेन तत्र संशयस्यैवाभावाच्च। आद्यज्ञानस्यैककोटिकसंशयत्वे तत्प्रामाण्यावधारणस्य बाधितविषयत्वप्रसङ्गाच्च। न हि भवति संशयश्च प्रमा चेति। संशयस्याप्रमाप्रभेदत्वात्। इति चेदुच्यते। सत्यं प्रामाण्यसंशयविषयीभूतं ज्ञानं न निश्चय अत एव निष्कंपप्रवृत्त्यहेतुश्च। न चैतावता तत्र प्रामाण्यावधारणवैयर्थ्यम्। निष्कम्पप्रवृत्त्यहेतुभूते एककोटिकसंशये तद्धेतुताशक्त्याधानार्थत्वात्। दृश्यते हि स्वाभाविकशक्तिविधुरमपि वेत्रबीजं दावदहनलक्षणसहकार्याहितशक्त्या कदलीकाण्डजनकम्। न च प्रामाण्यसंशयनिश्चयादिना स्वर्गसाधनं याग इति ज्ञानस्य विनष्टत्वात् तत्र शक्त्याधानमेव न संभवतीति युक्तम्। सत्यपि संशयादौ स्वकार्यपर्यन्तं ज्ञानस्यावस्थाने बाधकाभावात्।

न हि ज्ञानं त्रिक्षणावस्थाय्येवेत्यत्र किञ्चिन्मानम्। नित्यस्यापीश्वरादिज्ञानस्य प्रमाणसिद्धत्वात्। तत्किं लौकिकं सर्वमपि विज्ञानं नित्यमेव। नेति ब्रूमः। यत्खलु अजन्यं जीवादिस्वरूपभूतं तन्नित्यमेव। यच्च प्रत्यक्षानुमानागमतदाभासजन्यं तदनित्यमेव। एवमपि विज्ञानं न सर्वमपि त्रिक्षणावस्थायीति नियमः। किं तु आशुतरविनाशील्येव। तद्यथा मनुष्येषु कश्चन

शतवर्षं जीवति । कश्चन पञ्चदिनानि कश्चनाहर्मात्रमिति यावदायुर्जीवति । यथा वा कश्चन घटो बहुकालावस्थायी अन्यस्त्वल्पकालावस्थायी । एवमेव विज्ञानं बहुक्षणेषु तिष्ठति ।

तत्र जाग्रदवस्थाप्रयोजकं स्वप्नाद्यवस्थोत्पत्तिपर्यन्तरमवतिष्ठते । अन्यत्तु यथायोगम् । न च जाग्रदवस्थायां न ज्ञानं प्रयोजकं किन्त्वन्यदेवेति युक्तम् । ममेदं शरीरमिति देहविषयकममता-बुद्धेर्जाग्रदवस्थाप्रयोजकतयाऽनुभवसिद्धत्वात् । अत एव'प्रसुप्तस्यानहंमानात्र घोरा भाति संसृतिरि'ति देहाभिमानरूपजाग्रदवस्थाप्रयोजकाभावप्रयुक्त एव वैषयिकदुःखानुभवाभाव उक्तः । अत एव च 'बुद्धि-विनाशो हि विषयान्तरसंचारनिमित्तो वा स्यात् । विस्मरणनिमित्तो वे'ति तत्वनिर्णयटीकायां विस्मरण-शब्दाभिधेयदेहाभिमानविनाशप्रयुक्तो बुद्धिविनाश उक्तः । तार्किकाभिमतपूर्वापरकलाविकलकालात्मक-क्षणस्यैवाप्रामाणिकत्वेन तदभिमतत्रिक्षणावस्थायित्वस्याप्रामाणिकत्वात् ।

एवं च स्वर्गसाधनं याग इति प्रथमोत्पन्नज्ञानस्य क्षिप्रप्रवृत्तौ यावत्प्रवृत्तिभावित्वेन घटिकादिविलम्बेन प्रवृत्तौ संस्कारात्मना सत्त्वेन साक्षाद्वा संस्कारद्वारा वा प्रवृत्तिजननशक्त्याधानाय तत्र प्रामाण्या-वधारणमावश्यकम् । न च तत्र प्रामाण्यावधारणोपायाभावः । तज्जनकागमेषु क्वचिदपौरुषेयत्व-निश्चयस्य क्वचिदाप्तमूलत्वनिश्चयस्यैव तदुपायत्वात् । अनभ्यासदशापन्नचक्षुरादिजन्यदूरस्थविज्ञाने तु न प्रवृत्तेः पुरा प्रामाण्यावधारणम् । तदुपायाभावात् । अत एव तद्विज्ञानं सकम्पप्रवृत्तिजनकम् । बहुकालविलम्बे तु एतज्ज्ञानसमानविषयकं निश्चयान्तरं प्रवर्तकम् । तदाऽप्याद्यज्ञानप्रामाण्यावधारण-मावश्यकम् । आद्यज्ञानप्रामाण्यावधारणेन तज्जनकस्य स्वर्गसाधनं याग इति वाक्यस्य बुद्धिदोषसंवलित-त्वशङ्कानिवारणे सति तज्जनितद्वितीयविज्ञानस्य ज्ञानग्राहकेणैव साक्षिणा प्रामाण्यग्रहणसिद्ध्यर्थत्वात् । यदपि चोक्तं स्वर्गसाधनं याग इति प्राथमिकज्ञानस्यानवधारणत्वे तत्र प्रामाण्यावधारणं वाधितविषयं स्यात् । अप्रमाविभागरूपस्य संशयस्य प्रमात्वायोगात् इति । तदपि न । संशयमात्रस्याप्रमाविभागत्वा-नङ्गीकारात् ।

ननु प्रामाण्यं न साक्षिवेद्यम् । साक्षिविषयत्वाविषयत्वाभ्यां विवादविषयत्वात् । न हि भवति चक्षुर्वेद्ये घटे नायं चाक्षुष इति कस्यचिद्विवादः । कथमेतद्विजानीमो . साक्षिवेद्यमिति विवादविषयोऽपि प्रामाण्यं साक्षिवेद्यमिति । अन्यथा ज्ञानेऽपि साक्षिवेद्यत्वविवादविषयत्वं स्यादिति चेत् । न । दुश्शास्त्राभ्यासकलुषितमनसां पारमार्थिकतया सर्वदा अनुभूयमाने जगति नेदं पारमार्थिकं अपि तु व्यावहारिकमिति विवादवत् स्थायित्वादिना प्रमिते क्षणिकत्वादिविवादवच्च साक्षिवेद्येऽपि प्रामाण्ये न साक्षिवेद्यमिति विवादविषयत्वसंभवात् ।

ननु प्रामाण्यं ज्ञानग्राहकसाक्षिग्राह्यमित्ययुक्तम् । घटमहं जानामीति अनुव्यवसाये प्रामाण्यानुल्लेखात् । न हि ज्ञानानुल्लिखितमपि ज्ञानस्य विषय इति युक्तम् । अतिप्रसङ्गात् । इति चेत् । इदं तावदयं प्रष्टव्यः । इक्षुक्षीरगुडमाधुर्यानुभववेलायां 'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्हारीत्यभिधीयत' इति सूदशास्त्रोक्तविशदादिशब्दाभिधेया विशेषाः विज्ञायन्ते न वा । नेति वदन् श्लाघनीयप्रज्ञो देवानां प्रियः । आद्ये विशदादिविशेषानुभवेऽपि क्षीरादिमाधुर्यं अनुभवामीत्येवाकारवत् प्रामाण्यविषयीकरणसद्भावेऽपि घटमहं जानामीत्येवानुव्यवसायाकारः प्रदृश्यते लोकैः । न तु प्रामाण्यविषयीकरणाभावादिति समाधानमवधेयम् ॥ छ ॥

**इति स्वमते ज्ञानप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वनिरूपणम् ।**

मणिकारस्तु । ननु स्वत एवास्तु प्रामाण्यनिरूपणं इति पूर्वपक्षं प्रतिज्ञाय । तथा हि तत्र विप्रतिपत्तयः । ज्ञानप्रामाण्यं तदप्रामाण्यग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा । तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वा । स्वाश्रयग्राहकेण गृह्यत एव न वा । स्वाश्रयेण गृह्यते न वेति विप्रतिपत्तीराह । अत्राद्यं विप्रतिपत्तित्रयं भाट्टप्राभाकरमिश्रमतसाधारणं अन्त्या तु प्राभाकरमतमात्रसाधारणी । अस्यार्थः । **तदप्रामाण्येति** । तत्र ग्राह्यप्रामाण्याश्रयीभूते अप्रामाण्याग्राहिका यावती तद्ज्ञानग्राहिका सामग्री तावद्ग्राह्यम् तत्प्रामाण्यं इति मीमांसकत्रितयसाधारणविधिकोट्यर्थः । अत्र पक्षीभूतज्ञाने याऽप्रामाण्यग्राहिका काचित्सामग्री प्रामाण्यस्य तद्ग्राह्यत्वाभावाद्वक्ष्यमाणानुमानस्य बाधो मा भूदिति अप्रामाण्याग्राहकेति विशेषणम् । प्रामाण्यस्य प्रामाण्यानुमितिग्राह्यत्वेन सिद्धसाधनता मा भूदिति यावदिति विशेषणम् । **तज्ज्ञानविषयकेति** । अत्र गुरुमते ज्ञानस्य स्वप्रकाशत्वात्तज्ज्ञानविषयकं ज्ञानं तदेव । भट्टमते ज्ञानस्य ज्ञाततालिङ्गानुमेयत्वात् । तज्ज्ञानविषयकं ज्ञानमनुमितिः । मिश्रमते अनुव्यवसायः तज्ज्ञानविषयकं ज्ञानं तत्तन्मते तदजन्यानि ज्ञानानि तान्येव । तत्तद्ग्राह्यत्वं तेषां तेषां मते स्वतस्त्वमित्यर्थः । ज्ञानाजन्यज्ञानग्राह्यमित्येवोक्तौ वक्ष्यमाणस्वतस्त्वानुमानमाध्ये मिश्रभट्टमतयोर्बाधः अनुव्यवसायस्य प्रामाण्यग्राहकस्य व्यवसायजन्यत्वात् । ज्ञाततालिङ्गानुमितेश्च लिङ्गज्ञानजन्यत्वात् । गुरुमतेऽपि वह्न्याद्यनुमितिप्रामाण्यांशे बाधः । वह्न्याद्यनुमितेर्लिङ्गज्ञानजन्यत्वात् इत्यत उक्तं **ज्ञानविषयकेति** । एवमपि गुरुमते न बाधपरिहारः । लिङ्गज्ञानस्य स्वप्रकाशत्वेन ज्ञानविषयत्वात् अत उक्तं **तदिति** । लिङ्गज्ञानस्य लिङ्गज्ञानविषयत्वेऽपि पक्षीभूतप्रामाण्याश्रयज्ञानविषयत्वाभावान्न बाध इत्यूह्यम् ।

स स्थूलदृश्वा । विप्रतिपत्तिं प्रदर्श्य ननु स्वत एवास्तु तन्निरूपणमिति पूर्वपक्षस्य प्रदर्शनीयत्वेन प्रथमतः पूर्वपक्षं प्रतिज्ञाय तथा हीति तदुपपादनं प्रतिज्ञाय हेतुमनुक्त्वा अनवसरप्राप्तस्य

विप्रतिपत्तिवाक्यस्य दर्शनात् । ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकग्राह्यमित्येके नेत्यपरे इत्येवंरूपेण विप्रतिपत्तीनां प्रदर्शनीयत्वेन न वेति संशयाकारप्रदर्शनायोगाच्च । प्राभाकरमते इदं ज्ञानमप्रमाणमिति ग्रहणस्मरणात्मकज्ञानद्वयान्तर्गतेदंज्ञानमिति ज्ञानानुभवस्य तत्राप्रामाण्याग्राहकस्य प्रामाण्यग्राहकत्वाभावेन अस्य वाक्यस्य तन्मतसंग्राहकत्वाभावाच्च । इदं ज्ञानमिति शब्दजन्यज्ञानेन पक्षीभूतप्रामाण्याश्रयेऽप्रामाण्यग्राहकेण ज्ञानप्रामाण्याग्रहाभावात् तत्साधनवेलायां मीमांसकमतत्रयेऽपि बाधाच्च । न च सविषयकज्ञानग्राहकसामग्रीग्राह्यत्वं विवक्षितमिति वाच्यम् । घटज्ञानमिति शब्दजन्यज्ञानेनापि तदग्रहात् ।

अत्र वदन्ति । तज्ज्ञानप्रकारप्रकारकतया तज्ज्ञानविशेष्यकतया च या ज्ञानग्राहिका तद्ग्राह्यत्वं विवक्षितं अतो नोक्तदोष इति । तन्न । शुक्तिविशेष्यकं रजतत्वप्रकारकमिदं ज्ञानमिति भ्रमगोचरशब्दज्ञानस्य पुरोवर्तिनि रजतत्वाभावानवगाहितयाऽप्रामाण्याग्राहकस्य प्रामाण्याग्राहकत्वेन बाधतादवस्थ्यात् । न च तज्ज्ञानप्रकारविशिष्टविशेष्यकतया तज्ज्ञानप्रकारकतया च ज्ञानग्राहकसामग्रीग्राह्यत्वं विवक्षितम् । प्रागुक्तज्ञानं तु तज्ज्ञानप्रकारविशिष्टविशेष्यकतया तज्ज्ञानग्राहकं नेति तदग्राह्यत्वेऽपि नोक्तदोष इति वाच्यम् । तज्ज्ञानप्रकारविशिष्टविशेष्यकतया ज्ञानग्राहकग्राह्यत्वमित्येतावतैव पूर्णत्वेन तज्ज्ञानप्रकारप्रकारकतयेति विशेषणवैयर्थ्यात् । तदप्रामाण्याग्राहकेति विशेषणवैयर्थ्याच्च ।

**पक्षधरस्तु** । या सामग्री विषयाङ्कितमेव ज्ञानं गृह्णाति विषयमविषयीकुर्वती ज्ञानग्रहे न समर्था ज्ञानग्राहकत्वप्रयुक्तमेव यस्या विषयग्राहकत्वमिति यावत् तद्ग्राह्यत्वं साध्यम् । घटज्ञानमित्यादिशब्दात्मिकायाः सामग्र्या न तथात्वम् । तत्र विषयग्राहकत्वस्य घटपदसमभिव्याहारप्रयुक्तत्वात् । ज्ञानग्राहकत्वप्रयुक्तत्वे तु केवलज्ञानपदस्यापि विषयग्राहकत्वापत्तेः । अनुव्यवसायस्वप्रकाशरूपा सामग्री तथैव । यद्धि येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमात् । तथा च यस्य विषयग्रहार्थमन्यापेक्षा नास्ति तादृशसामग्रीग्राह्यत्वं पर्यवस्यतीत्याह । स स्थूलदृश्वा । घटज्ञानमिति शब्दात्मिकायाः सामग्र्याः घटपदसमभिव्याहाराभावेन विषयग्राहकत्वस्याविद्यमानसमभिव्याहारप्रयुक्तत्वाभिधानात् । न हि दण्डी दण्डसहितः । येनेयं सामग्री घटपदसमभिव्याहृता स्यात् । घटज्ञानमितिशब्दजन्यज्ञानग्राह्यत्वाभावेन बाधापरिहाराच्च । ज्ञानमितिपदस्य घटपदसमभिव्याहारप्रयुक्तसविषयकज्ञानग्राहकज्ञानजनकत्वेऽपि तज्जन्ये घटज्ञानमिति ज्ञाने विषयग्राहकत्वस्य ज्ञानग्राहकत्वप्रयुक्तत्वात् ।

यदपि अनुव्यवसायस्वप्रकाशादिरूपा सामग्री तथैव । यद्धि येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमादिति । तदपि न । ज्ञाने विषयेण विना अभासमानत्वस्याभावेन उदाहृतव्याप्तिबलेन अनुव्यवसायादिरूपसामग्र्याः ज्ञानग्राहकत्वप्रयुक्तविषयग्राहकत्वमिति साधना-योगात् । अनुव्यवसायादिरूपसामग्रीगतविषयग्राहकत्वस्य व्यवसायात्मकप्रत्यासत्तिप्रयुक्तत्वेन ज्ञान-ग्राहकत्वप्रयुक्तत्वाभावात् । अन्यथा ज्ञानपदजन्यविज्ञानेऽपि ज्ञानग्राहकत्वप्रयुक्तं विषयग्राहकत्व-मवर्जनीयं स्यात् ।

**अपरे तु ।** पक्षीभूतप्रामाण्याश्रये ज्ञाने प्रामाण्याग्राहकत्वेन उभयवादिसिद्धा या सामग्री तद्भिन्ना या ज्ञानग्राहिका सामग्री तद्ग्राह्यत्वं विवक्षितमित्याहुः । तन्न । ज्ञानग्राहकसामग्रीति विशेषणवैयर्थ्यात् । घटज्ञानस्य पटज्ञानप्रामाण्याग्राहकत्वेनोभयवादिसिद्धत्वात् तद्भिन्नत्वाभावेन तदग्राह्यत्वेऽपि बाधाभावात् । प्रामाण्यस्वतस्त्वस्य पारिभाषिकत्वापाताच्च । घटाग्राहकत्वेनोभयवा-दिसिद्धसामग्रीभिन्नसामग्रीग्राह्यत्वेन घटादीनां स्वतस्त्वमिति वक्तुं शक्यत्वेन अतिप्रसङ्गाच्च । प्रामाण्य-ग्राहकत्वेन वादिप्रतिवादिविप्रतिपत्तिविषयज्ञानग्राह्यत्वस्यैव साध्यत्वेन यावज्ज्ञानग्राहकसामग्रीग्राह्यत्व-स्यासाध्यत्वाच्च ।

यदपि तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वेति विप्रतिपत्तिप्रदर्शनं तदपि न । त्वन्मतेऽपि सुखादिज्ञानप्रामाण्यस्य तज्ज्ञानविषयकज्ञानाजन्यानुव्यवसायग्राह्यत्वस्य भावेन नेतिकोटेस्त्वया स्वीकर्तुम-शक्यत्वात् । अन्यथा जलादिज्ञान इव सुखादिज्ञानेऽपि कदाचित्प्रामाण्यसन्देहः स्यात् ।

यदपि स्वाश्रयग्राहकेण गृह्यत एव न वेति विप्रतिपत्तिप्रदर्शनं तदपि न । ज्ञानमिति पदजन्यस्य यावत्प्रामाण्याश्रययावज्ज्ञानग्राहकस्य विज्ञानस्य प्रामाण्याग्राहकत्वेन तत्साधने बाधप्रसङ्गात् ।

**रुचिदत्तस्तु ॥** स्वाश्रयग्राहकं च पूर्ववदेव तज्ज्ञानप्रकारीभूतप्रकारत्वादिना विशेषणीयम् । तेन घटज्ञानमित्यादिना शब्देन प्रामाण्याग्रहेऽपि न बाधः । एवकारो यावदर्थकः । तेन यावत्स्वाश्रयग्राहकग्राह्यत्वमित्यर्थो लभ्यते । अन्यथा क्रियासङ्गतस्यैवकारस्यात्यन्तायोगव्यवच्छेदार्थ-कतया सिद्धसाधनं स्यादित्याह । स स्थूलदृष्टिः । तज्ज्ञानप्रकारप्रकारकतया तद्वद्विशेष्यविशेष्यतया च यावज्ज्ञानग्राहकग्राह्यत्वस्य तार्किकेणाप्यङ्गीकृतत्वेन सिद्धसाधनताप्रसङ्गेन तार्किकनिषेध्यकोटेः पूर्वोक्तप्रकारेण विवक्षाऽयोगात् । न हि प्रामाण्यस्य परतस्त्वं वदन्नपि तार्किकः घटत्ववद्विशेष्यकं घटत्वप्रकारकं ज्ञानमिति सामग्रीग्राह्यत्वं प्रामाण्यस्य नेति निषेधति । तस्यैव प्रामाण्यरूपत्वेन व्याहति-प्रसङ्गात् ।

यदपि स्वाश्रयेण गृह्यत एव न वेति विप्रतिपत्तिप्रदर्शनम् । तदपि न । योगिज्ञानस्य सर्वविषयकस्य सर्वप्रकारकस्य सर्वप्रामाण्याश्रयतया तद्ग्राह्यत्वेन सिद्धसाधनात् ।

यदत्रोक्तं रुचिदत्तेन । यावत्स्वाश्रयग्राह्यत्वं विधिकोटयर्थः । तथा च न योगिज्ञानमादाय सिद्धसाधनतेति । तन्न । घटज्ञानपदजन्यज्ञानप्रामाण्यस्य स्वाश्रयज्ञानग्राह्यत्वाभावेन बाधात् । एतज्ज्ञानजनकीभूतशब्दस्य प्रामाण्याविषयकत्वेन तज्जन्यज्ञाने तदधिकविषयकत्वस्य वक्तुमशक्यत्वात् । अन्यथा घटज्ञानमिति पदजन्यज्ञानस्य पटज्ञानमपि विषयः स्यात् ॥ छ ॥ **इति मण्युक्तविप्रतिपत्तिखण्डनम् ॥**

**मणिकारस्तु** । प्रामाण्यस्य स्वतो ग्रहेऽनभ्यासदशोत्पन्ने ज्ञाने तत्संशयो न स्यात् । ज्ञानग्रहे प्रामाण्यनिश्चयात् । अनिश्चये वा न स्वतःप्रामाण्यग्रहः । ज्ञानाग्रहे धर्मिज्ञानाभावान्न संशयः । तस्मात् अनभ्यासदशोत्पन्नज्ञानप्रामाण्यं परतो ज्ञायते । सांशयिकत्वादप्रामाण्यवत् । अनभ्यासदशापन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यम् । स्वाश्रयातिरिक्तग्राह्यं वा । स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवर्तिसंशयविषयत्वात् । अप्रामाण्यसंशयाजन्यसंशयविषयत्वाद्वा । अप्रामाण्यवत् । विवादपदं न यावत्स्वाश्रयग्राहकग्राह्यं स्वाश्रयनिश्चये तदुत्तरतृतीयक्षणे प्रामाण्यसंशयं विना वा संदिह्यमानत्वात् । अप्रामाण्यवत् । यद्वा अनभ्यासदशापन्नैतज्ज्ञानप्रामाण्यम् । एतत्प्रामाण्यसंशयपूर्वकालीनैतज्ज्ञाननिश्चयाविषयः । एतज्ज्ञाननिश्चयानन्तरं संदिह्यमानत्वात् । अप्रामाण्यवदित्याह । तन्न । पुरुषत्वादेर्धर्मिग्राहकचक्षुरादिग्राह्यत्वेऽपि दोषवशात्तदपहाय चक्षुरादिना धर्मिमात्रग्रहे तत्संशयवत् । प्रामाण्यस्य स्वतस्त्वेऽपि दोषवशात् प्रामाण्यं विना ज्ञानमात्रग्रहेण संशयोपपत्तेः । न च प्रामाण्यग्रहणशक्तेः स्वाभाविकत्वे दोषवशादपि प्रतिबन्धो न युक्त इति युक्तम् । स्वाभाविक्या अपि गजगतिशक्तेर्गोक्षुरकादिना प्रतिबन्धदर्शनात् ।

यदपि अनभ्यासदशोत्पन्नज्ञानप्रामाण्यं परतो ज्ञायते । सांशयिकत्वादप्रामाण्यवदित्यनुमानाभिधानम् । तदपि न । सिद्धसाधनात् । स्वतस्त्ववादिनापि अनभ्यासदशाऽऽपन्नस्थले दोषवशात् साक्षिणा प्रामाण्यं परित्यज्य ज्ञानमात्रग्रहे संवादादिलिङ्गेन प्रामाण्यग्रहाङ्गीकारात् । ज्ञानप्रामाण्यं स्वतः परत इति विप्रतिपत्त्यानुगुण्याय प्रामाण्यमात्रे परतस्त्वस्य साधनीयत्वेन प्रामाण्यविशेषे तत्साधनस्य विप्रतिपत्त्यनानुगुण्याच्च । स्वतो निश्चयस्येव परतो निश्चयस्यापि तत्संशयविरोधित्वेन संशयविषयत्वेन परतो ग्राह्यत्वसाधनायोगाच्च ।

न च, न संशयविषयत्वेन संशयात्पूर्वं परतो ग्राह्यत्वं साध्यते किं तु संशयानन्तरं परतो ग्राह्यत्वं साध्यते इति नोक्तदोष इति वाच्यम्। कालान्तरे स्वत एव प्रामाण्यग्रहे बाधकाभावात्। कालान्तरभाविनः परतस्तन्निश्चयस्येव स्वतस्तन्निश्चयस्यापि पूर्वकालिकसंशयाविरोधित्वात्। न हि प्रतिबन्धकवेलायां ज्ञानग्राहकः साक्षी तत्प्रामाण्यं न गृह्णातीति अन्यदाऽपि तेन तन्न ग्राह्यमित्यत्र नियामकमस्ति। प्रामाण्यसंशयविषयेऽपि विज्ञाने व्यासङ्गवशात् स्वतः परतो वा प्रामाण्यग्रहाभाव-दर्शनेन तस्य परतो ग्राह्यत्वसाधने बाधाच्च। तस्य पक्षबहिर्भावे तत्रैव व्यभिचारात्। अनभ्यास-दशाऽऽपन्नज्ञानप्रामाण्यमात्रे संशयाभावेन भागासिद्धेश्च।

यानि तु अनभ्यासदशाऽऽपन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यम्। स्वाश्रयातिरिक्तग्राह्यं वा। स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवर्तिसंशयविषयत्वात्। अप्रामाण्यसंशयाजन्यसंशयविषयत्वाद्वा अप्रामाण्यवत्। विवादपदं न यावत्स्वाश्रयग्राहकग्राह्यम्। स्वाश्रयनिश्चये तदुत्तरतृतीयक्षणे प्रामाण्यसंशयं विना वा संदिह्यमानत्वात्। अप्रामाण्यवत्। यद्वा अनभ्यासदशापन्नैतज्ज्ञानप्रामाण्यम्। एतत्प्रामाण्यसंशयपूर्वकालीनैतज्ज्ञाननिश्चयाविषयः। एतज्ज्ञाननिश्चयानन्तरं सन्दिह्यमानत्वात्। अप्रामाण्यवत् इति अनुमानानि तान्यप्ययुक्तानि। प्रामाण्यमात्रे विप्रतिपत्तिसद्भावात् तेषां प्रामाण्य-विशेषविषयकत्वेन विप्रतिपत्यनानुगुण्यात्। चरमानुमानव्यतिरिक्तानां अनभ्यासदशापन्नज्ञानप्रामाण्य-मात्रे संशयविषयत्वाभावेन भागासिद्धत्वाच्च।

यदत्रोक्तं केनचित् कर्तव्यहेतुर्यावति विश्राम्यते तावत एव पक्षत्वान्न भागासिद्धिरिति। तदपि न। कर्तव्यहेत्वभाववति अयं घट इत्यादिज्ञानप्रामाण्ये परतस्त्वसिद्ध्यभावप्रसङ्गात्। प्रामाण्यस्य स्वतस्त्वाभावे प्रामाण्यानुमितिहेतुपक्षलिङ्गव्याप्तिज्ञानानां प्रामाण्यसिद्धये प्रमाणान्तरस्यानुसर्तव्यत्वादनवस्था स्यादिति तर्कपराहतत्वाच्च। प्रामाण्यस्यानुमेयत्वपक्षे व्याप्तिज्ञानाभावेन बालस्य प्राथमिकप्रामाण्यानु-मितिर्न स्यात्। ततश्च उत्तरत्रापि प्रामाण्यानुमितिर्न स्यात्।

अत्राहुः संप्रदायविदः। प्रथमं प्रामाण्यज्ञानं व्यतिरेकिणा। न चसाध्याप्रसिद्धिः। प्राग्भवीयसंस्कारवशात् विशेष्यावृत्त्यप्रकारकत्वरूपस्य वा तद्वति तत्प्रकारकज्ञानत्वरूपस्य वा प्रामाण्य-मात्रस्य स्मृतिसंभवात्। न चैवमपि वह्नित्ववति वह्नित्वप्रकारकत्वरूपप्रामाण्याप्रसिद्धिः। स्मृतस्य तद्वतितत्प्रकारकज्ञानत्वस्य वह्निज्ञाने साध्यमानस्य पक्षधर्मताबलात् वह्नित्ववति वह्नित्वप्रकारकज्ञानत्व-लक्षणप्रामाण्यरूपतया पर्यवसानात्। न च प्राग्भवीयसंस्कारजन्यस्मृतिकल्पकाभावः। स्वतः प्रामाण्यग्रहस्य दूषितत्वात्। प्राथमिकप्रामाण्यज्ञानस्यान्यथोपपादयितुमशक्यत्वस्यैव कल्पकत्वादिति।

तत्र । निष्कम्पप्रवृत्त्यन्यथानुपपत्त्या प्रामाण्यस्यतस्त्वस्यैव सिद्धत्वेन जन्मान्तरीयसंस्कारोद्बोधस्य अकल्प्यत्वात् । प्रागुक्तानवस्थापरिहाराभावाच्च । जन्मान्तरानुभूतप्रामाण्यस्मरणकल्पनवत् पूर्वानुभूतदृष्टान्तस्मरणस्यापि कल्पयितुं शक्यत्वेन व्यतिरेक्यनुमानानुसरणायोगाच्च । बालस्य जातमात्रस्य व्यतिरेकव्याप्तिग्रहस्याप्यसंभवेन व्यतिरेक्यनुमानप्रवृत्त्ययोगाच्च ।

**मणिकारस्तु** । प्रथमं अप्रामाण्याभावरूपमेव प्रामाण्यं व्यतिरेकिणा साध्यम् । तत एव निष्कंपप्रवृत्तेरुपपत्तेः । तदेव वा सिध्यत्पक्षधर्मताबलेन तद्वति तत्प्रकारकत्वादिकमादाय सिध्यति । तदनन्तरं अर्थाद्वा सिध्यति । तथा हि । अयं वह्नित्वेनानुभवः वह्नित्वाभाववति वह्नित्वप्रकारको न । विशेष्यावृत्तिप्रकारको न । दाहसमर्थविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वात् । दाहसमर्थविशेष्यकवह्नित्वप्रकारकनिश्चयत्वाद्वा । यन्नैवं तन्नैवम् । यथा वह्न्यप्रमा । तत्र बाधावतारानन्तरं स्मृत्युपनीते भ्रमे वह्नित्वाभाववति वह्नित्वेन मम ज्ञानं वृत्तमित्यप्रामाण्यं मनसैव परिच्छिद्यते मानान्तरेण वेति सर्वसिद्धम् । एवं वाह्यप्रमायां वह्नित्वाभाववति वह्नित्वप्रकारकत्वादिसमर्थप्रवृत्तिजनकत्वाभावयोर्व्याप्तिग्रहे अप्रामाण्यव्यापकसमर्थप्रवृत्तिजनकत्वाभावाभावरूपाद्धेतोरप्रामाण्याभावरूपं साध्यं सिध्यति । यद्व्यापकतया हेत्वभावो गृहीतः तदभाव एव हेतुना साध्यते । यत्र त्वभावव्यापकता हेत्वभावस्य ज्ञायेत तत्र साध्यप्रसिद्धिरङ्गम् । तां विना तदभावात् । यत्र च भावव्यापकता हेत्वभावस्य तत्र न तदङ्गम् । तेन विनाऽपि व्यतिरेकव्याप्तेर्ग्रहात् । अत एवेतरव्यापकता आकाशत्वाभावस्य गृहीतेत्याकाशत्वेन प्रसिद्ध एवेतरान्योन्याभावः सिध्यति । विशेषणाज्ञानात् कथं प्रामाण्यविशिष्टानुमितिरिति चेत् । प्रथमं न कथञ्चित् । ज्ञाने प्रामाण्यमित्यनुमित्यनन्तरं तेनैव हेतुना तत्रैव प्रामाण्यविशिष्टानुमितिः । अभावविशेष्यकप्रतीत्यनन्तरं अभाववद्भूतलमितिज्ञानवत् । एवं च इदं वह्नित्वप्रकारकं ज्ञानं तद्वति तदभाववति वेति संशयानन्तरं तदभाववति तत्प्रकारकत्वव्यतिरेकः सिध्यन् तद्वति तत्प्रकारकतामादाय सिध्यति । तृतीयप्रकाराभावेन तेन विना तस्योपसंहर्तुमशक्यत्वात् । ईश्वरज्ञानसिद्धिदशाय ज्ञाननित्यत्ववत् ।

यद्वा इदं वह्नित्वप्रकारकज्ञानं वह्नित्ववद्विषयकम् । वह्नित्वाभाववदविषयत्वे सति सविषयत्वात् । यन्नैवं तन्नैवम् । यथा वह्न्यप्रमेति व्यतिरेक्यन्तरात्तत्सिद्धिरित्याह ॥

स स्थूलदृश्वा । निष्कम्पप्रवृत्त्यर्थं अप्रामाण्याभावरूपमेव प्रामाण्यमनुमेयमिति प्रतिज्ञाय प्रवृत्त्युत्तरकालावधेयस्य दाहसमर्थविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वस्य हेतूकरणात् । न हि प्रवृत्तेः पुरा दाहसमर्थविषयप्रवृत्तिजनकत्वं निश्चेतुं शक्यम् । येन प्रवृत्त्युपयोगिप्रामाण्यानुमित्यर्थं

तदुपन्यासो युक्तः स्यात् । यदपि अयं वह्नित्वेनानुभवः वह्नित्वाभाववति वह्नित्वप्रकारको न । विशेष्यावृत्तिप्रकारको न । दाहसमर्थविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वात् । दाहसमर्थविशेष्यकवह्नित्वप्रकारकनिश्चयत्वाद्वेत्यनुमानं तदपि न । आद्यानुमानस्य वह्निप्रभायां वह्निभ्रमे व्यभिचारात् । न च तत्र दाहसमर्थविषयकप्रयत्नजनकत्वमेव न । किं तर्हि दाहासमर्थप्रभागोचरप्रवृत्तिजनकत्वमेवेति न व्यभिचार इति वाच्यम् । वह्निवत् वह्निप्रभाया अपि दाहसमर्थत्वस्य सर्वानुभवसिद्धत्वात् । वह्नित्वप्रकारकनिश्चयस्य वह्नित्ववति वह्नित्वप्रकारकत्वरूपप्रामाण्यग्रहं विना प्रवृत्तेः पुरा दाहसमर्थविषयकप्रयत्नजनकत्वरूपहेतुग्रहासंभवेनासिद्धेश्च ।

द्वितीयानुमानस्यापि वह्निप्रभायां वह्निभ्रमे व्यभिचारात् । तस्यापि दाहसमर्थप्रभाविशेष्यकत्वात् । अनुमानद्वयस्यापि पक्षलिङ्गव्याप्तिज्ञानानां प्रामाण्यनिश्चयं विना साध्यासाधकत्वात् । तन्निश्चयायानुमानान्तरान्वेषणेऽनवस्थानात् । किं च दाहसमर्थविशेष्यकत्वस्य वह्निज्ञाने ज्ञातुमशक्यत्वात् विशेषणासिद्धो हेतुः । न च स्मृत्युपनीते वह्निव्यवसाये ज्ञानान्तरोपनीतदाहसामर्थ्यवद्विशेष्यकत्वं मनसैव परिच्छिद्यत इति न विशेषणासिद्धिरिति वक्तुं युक्तम् । प्रवृत्तेः पूर्वं वह्नित्वप्रकारकज्ञानविषयनिष्ठदाहसामर्थ्यस्य सर्वथा ज्ञातुमशक्यत्वेन ज्ञानान्तरेणोपनयासंभवात् । प्रवृत्त्युत्तरकाले च प्रामाण्यानुमानवैयर्थ्यात् ।

यदपि यत्राभावव्यापकता हेत्वभावस्य ज्ञायेत तत्र साध्यप्रसिद्धिरङ्गम् । तां विना तदभावात् । यत्र च भावव्यापकता हेत्वभावस्य तत्र न तदङ्गम् । तेन विनाऽपि व्यतिरेकव्याप्तेर्ग्रहात् । अत एवेतरव्यापकता आकाशत्वाभावस्य गृहीतेत्याकाशत्वेनाप्रसिद्ध एवेतरान्योन्याभावः सिध्यतीति । तदपि न । सर्वथाऽप्रसिद्धस्य साध्यतयाऽनुसंधानाभावेन स्वार्थानुमानोदयाभावप्रसङ्गात् । न हि यः सर्वथा वह्निमेव न जानाति स धूमं पश्यन्नपि वह्निमान् पर्वत इति जानातीति संभवति । किं च यद्व्यापकता हेत्वभावस्य गृह्यते तस्य साध्याभावत्वमवश्यं प्रतिपत्तव्यम् । अन्यथाऽतिप्रसङ्गात् । न च तस्य साध्याभावत्वबुद्धिः साध्यप्रसिद्धिमन्तरा भवतीति साध्याप्रसिद्धिरभावसाध्यकेऽपि व्यतिरेकिणि दोषः ।

स्वार्थानुमानाभावे च परार्थानुमानस्याप्यनुदय एव । स्वयमज्ञात्वा परबोधनाय प्रयोगासंभवात् । अत एव आकाशत्वेन हेतुनाऽप्रसिद्ध एवेतरान्योन्याभावः सिध्यतीत्यप्ययुक्तम् । त्रयोदशान्योन्याभावानामेकत्राप्रसिद्धावपि विशिष्य पृथिव्याद्यधिकरणेषु प्रसिद्धत्वात् । अत एव ज्ञाने प्रामाण्य-

मित्यनुमित्यनन्तरं तेनैव तत्रैव प्रामाण्यविशिष्टानुमितिरिति प्रामाण्यविशेषणकानुमितिन्युत्पादनं परास्तम् । सर्वथा प्रामाण्यमजाननः ज्ञाने प्रामाण्यमिति प्राथमिकानुमितिरेवायोगात् ।

यदपि इदं वह्नित्वप्रकारकं ज्ञानं तद्वति तदभाववति वेति संशयानन्तरं तदभाववति तत्प्रकारकत्व-व्यतिरेकः सिध्यन् तद्वति तत्प्रकारकतामादाय सिध्यतीति तदपि न । अप्रसिद्धमेव साध्यं व्यतिरेकिणा साध्यत इति पक्षे तद्वति तत्प्रकारकत्वरूपकोटेरप्रसिद्धत्वेन सन्देहायोगात् । त्वयैव तदभाववति तत्प्रकारकत्वरूपाप्रामाण्याभावनिश्चयादेव निष्कम्पप्रवृत्त्युपपत्तेः अप्रामाण्याभावरूपमेव प्रामाण्यं प्रथममनुमेयमित्युक्तत्वेन उक्तसाध्यस्य तद्वति तत्प्रकारकतामादाय पर्यवस्यतीति पर्यवसानाभिधान-वैय्यर्थ्याच्च । बुध्यनारूढं तद्वति तत्प्रकारकत्वमादाय पर्यवसानासंभवाच्च ।

यदपि इदं वह्नित्वप्रकारकं ज्ञानं वह्नित्ववद्विषयकं वह्नित्वाभाववद्विषयत्वे सति सविषयत्वात् । यन्नैवं तन्नैवं यथा वह्न्यप्रमेति व्यतिरेक्यन्तरात्तत्सिद्धिरिति तदपि न । अप्रसिद्धविशेषणत्वात् । अत एव व्यतिरेक-ग्रहासंभवेन व्याप्यत्वासिद्धत्वाच्च । अप्रामाण्याभावानुमानेनैव निष्कम्पप्रवृत्त्युपपत्तेरनुमानवैय्यर्थ्याच्च । प्रथममप्रामाण्याभावानुमानाभावे तु विशेषणासिद्धो हेतुः स्यात् ।

किं च हेतुज्ञानप्रामाण्यनिश्चयाभावे हेतुसन्देहापत्त्या सन्दिग्धासिद्धो हेतुः स्यात् । तन्निश्चयायानुमानान्तरगन्वेषणे तु तत्राप्येवमिति कारणमुखी तत्राप्येवं अनवस्था स्यात् ।

**अत्रोक्तं मणिकृता ।** अप्रामाण्यशङ्काकलङ्काभावेन लिङ्गज्ञानस्यैव लिङ्गनिश्चयरूपत्वेन लिङ्गसन्देहानुदयात् नासिद्धिः । अप्रामाण्यशङ्कायां तु तत्प्रामाण्यनिश्चयायानुमानान्तरं गवेषणीयमेव । न चैवमनवस्था । तल्लिङ्गज्ञानज्ञानाभावेन कोट्यस्मरणेन वा तज्ज्ञाने प्रामाण्यसंशयानुदयादिति । तन्न । हेतुज्ञानोपलब्धौ तत्र च प्रामाण्योपलम्भाभावे आवश्यकार्थनिश्चयाय प्रामाण्यजिज्ञासावतः तत्र प्रामाण्यसन्देहाभावे कारणाभावात् । हेतुज्ञानज्ञानाभावात्तत्र च प्रामाण्यसंशयानुदय इति तु साधनमयुक्तमेव । ज्ञानेच्छादीनां ज्ञातैकसत्त्वात् अज्ञायमानज्ञानसद्भावे प्रमाणाभावेन हेतुज्ञानस्या-सत्त्वापाताच्च ।

किं च प्रामाण्यस्य परतस्त्वपक्षे प्रामाण्यनिश्चयप्रयासो व्यर्थः प्रामाण्यनिश्चये प्रयोजनाभावात् । न च निष्कम्पप्रवृत्त्यर्थं प्रामाण्यनिश्चयः । प्रवृत्तिसमानविषयकस्याऽऽवश्यकार्थनिश्चयस्यैव प्रवृत्ति-हेतुत्वेन प्रामाण्यनिश्चयस्याप्रवर्तकत्वात् । न चार्थनिश्चयस्य प्रवर्तकत्वेऽपि प्रामाण्यसंशयस्यार्थ-संशयाधानद्वारा प्रतिबन्धकस्य निवृत्तये प्रामाण्यनिश्चयोपयोग इति युक्तम् । प्रामाण्यसंशयाहितार्थ-सन्देहेन प्राथमिकार्थनिश्चयस्य नाशादप्रवर्तकत्वेन तन्निष्ठप्रामाण्यनिश्चयस्य वैय्यर्थ्यापरिहारात् ।

**अत्रोक्तं मणिकृता** । स्वर्गसाधनं याग इति ज्ञानस्य प्रामाण्ये निश्चिते तत्समानविषयकज्ञानान्तरेऽप्रामाण्यशङ्का न भवतीति ज्ञानान्तरमगृहीतप्रामाण्यमपि स्वार्थे निश्चयरूपं निष्कम्पप्रवृत्तिं जनयतीत्यप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कंपप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानमिति न निष्फलमिति । तन्न । ज्ञानान्तरीयप्रामाण्यनिश्चयस्य भिन्नविषयतया ज्ञानान्तरे प्रामाण्यसंशयप्रतिबन्धकत्वायोगात् । अन्यथा रजतज्ञाने प्रामाण्यनिश्चयात् शुक्तिविशेष्यकरजतत्वप्रकारकविज्ञानेऽपि प्रामाण्यसंशयो न स्यात् ।

अत्र वदन्ति । पूर्वज्ञाने गृहीतस्य प्रामाण्यस्य उत्तरज्ञाने उपनीतस्य भानात् न तत्र संशयः । न च तद्गतत्वेन पूर्वमज्ञानान्न तत्रोपनय इति वाच्यम् । यदवच्छेदेन हि यद्गृहीतं तद्ग्रहस्यैव उपनीतभानसामग्रीत्वात् । तथा च यागविशेष्यकस्वर्गसाधनत्वप्रकारकज्ञानत्वावच्छेदेन पूर्वज्ञाने प्रामाण्यग्रहात् पुरोवर्तिविषयकत्वेन ज्ञाते द्वितीये ज्ञाने तदुपनये बाधकाभाव एवेति । तन्न । एवं सति द्वितीयज्ञाने प्रामाण्यग्रहस्यैव तद्गतप्रामाण्यसंशयविरोधित्वापत्त्या ज्ञानान्तरमगृहीतप्रामाण्यमपि स्वार्थे निश्चयरूपं निष्कंपप्रवृत्तिं जनयतीत्यप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कंपप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानमिति मण्युक्तार्थस्यासाधनात् ।

अन्ये तु अन्यत्र समानविषयकस्य विरोधिज्ञानस्य प्रतिबन्धकत्वेऽपि प्रकृतेऽनन्यगत्या भिन्नविषयकस्यापि तथात्वं कल्प्यत इत्याहुः । तदपि न अप्रामाण्यस्य स्वतस्त्वेन स्वप्रामाण्यनिश्चयादेव प्रामाण्यसंशयनिवृत्त्यङ्गीकारसंभवे ज्ञानान्तरप्रामाण्यनिश्चयेन ज्ञानान्तरप्रामाण्यसंशयनिवृत्त्यङ्गीकारायोगात्॥
**इति ज्ञानप्रामाण्यस्य ज्ञप्तौ मण्युक्तपरतस्त्वभङ्गः ॥**

**श्रीगुरुभ्यो नमः** ॥ एवं उत्पत्तावपि ज्ञानप्रामाण्यं स्वतः । अनुप्रमाणानां स्वाभाविकशक्त्यैव प्रामाण्यविशिष्टज्ञानजनकत्वात् । न ह्यनुप्रमाणानि ज्ञानं जनयित्वा तत्प्रामाण्यजननाय सामग्र्यन्तरमपेक्षन्ते । येन ज्ञानप्रामाण्यं परत इति प्रतीमः । ज्ञानत्वप्रयोजकस्वाभाविकशक्तिप्रयोज्यत्वस्यैव स्वतस्त्वरूपत्वात् । प्रत्यक्षादीनि । प्रमाजननस्वभावानि । प्रमाणत्वात् । यन्नैवं तन्नैवं यथा प्रत्यक्षाभासादीत्यनुमानात् अनुप्रमाणानां ज्ञानजननशक्त्यैव प्रामाण्यजनकत्वसिद्धिः । न च प्रमाणत्वेऽपि प्रमाजनकत्वं न स्वभाव इति वक्तुं युक्तम् । प्रमाणतदाभासविवेकाभावप्रसङ्गात् । न ह्युभयोरपि प्रमात्वप्रयोजकस्वाभाविकशक्तिवैधुर्ये समाने इदं प्रमाणमिति विवेके कारणमस्ति । न च प्रमाजनकत्वेन प्रामाण्यं अप्रमाजनकत्वेनाप्रामाण्यमिति व्यवस्था संभवति । यादृच्छिकसंवादिन्याऽपि प्रमाजनकत्वस्य वेदेऽप्यप्रमाजनकत्वस्य दर्शनात् । ततः प्रमाणाप्रमाणविवेकमभ्युपगच्छता यस्य यथार्थज्ञानजनकत्वं स्वभावः तत्प्रमाणम् । यस्य चायथार्थज्ञानजनकत्वं स्वभावः तदप्रमाणमित्यभ्युपगन्तव्यम् ।

न चायथार्थज्ञानजनकत्वलक्षणाप्रामाण्यस्य परतस्त्वेन अप्रमाणानां अप्रामाण्यं **न स्वभाव इति** वाच्यम् । प्रमाणाप्रामाण्यस्य परतस्त्वेऽप्यप्रमाणाप्रामाण्यस्य स्वतस्त्वात् । अन्यथा उन्मत्तवाक्य-वेदवाक्योत्पन्नज्ञानयोर्बाधे प्राप्ते वेदवाक्यस्यार्थान्तरे योजना उन्मत्तवाक्यस्य परित्याग इति वैषम्यं न स्यात् । वेदवाक्याप्रामाण्यस्य तत्स्वभावत्वाभाववत् उन्मत्तवाक्याप्रामाण्यस्यापि तत्स्वभावत्वा-भावात् ।

ननु यदि प्रमाणानामेव प्रमाजनकत्वं स्वभावः नाप्रमाणानां कथं तर्हि उन्मत्तवाक्यादुत्पन्नं ज्ञानं धर्म्यंशे प्रमा । तत्कारणस्याप्रमाणत्वेन प्रमाजननस्वाभाव्याभावादिति चेत् । न ब्रूमो वयं अप्रमाणानां प्रमाजनकत्वं सर्वथा न स्वभाव इति येनोक्तदोषः स्यात् किं नाम अप्रमात्वानधिकरण-प्रमाजनकत्वं न स्वभाव इति । अत एव प्रमाणजन्यं विज्ञानं शुद्धप्रमा । अप्रमाणजन्यं विज्ञानं अप्रमा प्रमा च ॥ छ ॥ **इति स्वमते ज्ञानप्रामाण्यस्योत्पत्तौ स्वतस्त्वनिरूपणम् ॥**

**मणिकारस्तु मन्यते** । प्रमा न ज्ञानसामग्रीमात्रादुत्पद्यते । किं तु सामग्र्यन्तरसहितया ज्ञान-सामग्र्या । यदि च प्रमा ज्ञानसामग्रीमात्रजन्या स्यात् । तर्ह्यप्रमापि प्रमा स्यात् । अन्यथा ज्ञानमपि सा न स्यात् । ज्ञानसामग्र्यां दोषानुप्रवेशादप्रमेति चेत् । तर्ह्यप्रमा ज्ञानविशेषवत् प्रमाविशेषः स्यात् । ज्ञानसामग्रीजन्यत्वात् । तस्मात्प्रमाऽप्रमयोर्वैचित्र्यात् गुणदोषजन्यत्वम् । यदि च प्रमायाः अप्रमावैचित्र्येपि न गुणजन्यत्वम् । तर्ह्यप्रमाऽपि स्वत एव स्यात् । न परतः । प्रमावत् ज्ञानजनकव्यक्तिविशेषा-देवाप्रमोत्पद्यते न दोषादिति वक्तुं शक्यत्वात् । अथ ज्ञानसामग्रीसत्त्वेऽपि विशेषादर्शनपित्तादेरनु-विधानादप्रमायां दोषो हेतुरिति चेत् । तर्हि विशेषदर्शनपित्ताद्यभावादितरत्रैव विषये प्रमा तदभावान्नेति प्रमायामागन्तुककारणापेक्षेति कथं न परतस्त्वम् । किं च यत्कार्यं यत्कार्यविजातीयं तत्तत्कारणविजातीयकारणजन्यं यथा घटविजातीयः पटः । अन्यथा कार्यवैजात्यस्याकस्मिकतापत्तेः । एवं च । अनित्यप्रमा अप्रमाकारणविजातीयकारणजन्या अप्रमाविजातीयकार्यत्वात् । घटवत् । किं च । अनित्यप्रमात्वं कार्यताऽवच्छेदकम् । बाधकं विना कार्यमात्रवृत्तिधर्मत्वादप्रमात्ववत् । न च नीलघटत्वादौ व्यभिचारः । प्रत्येकानुगतप्रयोजकद्वयादेव विशिष्टसिद्धेर्बाधकत्वात् । नापि घटानित्यज्ञानत्वे व्यभिचारः स्वावच्छिन्नकार्यताप्रतियोगिककारणत्वासंभवरूपबाधकसद्भावात् । अस्तु वा अनुगतभोजकादृष्टकार्यताऽवच्छेदकत्वं घटज्ञानत्वस्य । अन्यथा कार्यमात्रे नादृष्टं हेतुः स्यात् । ततश्चानित्यघटज्ञानत्वादौ साध्यस्यैव सत्त्वान्न व्यभिचारः ।

एवमनित्यप्रमात्वं अनित्यज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यताऽवच्छेदकम्। अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वात्। अप्रमात्ववदिति अनित्यप्रमायामप्रमाव्यावृत्तानुगतहेतुसिद्धिः। अन्यथाऽनुगतकार्यानुत्पत्तेः। तथाऽनित्यप्रमात्वमप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्। अप्रमावृत्तिकार्यतावच्छेदकत्वात्। घटत्ववत्। एवं चाक्षुषप्रमात्वं चाक्षुषाप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यताऽवच्छेदकम्। चाक्षुषअप्रमावृत्तिकार्यतावच्छेदकत्वात्। घटत्ववत्। अन्यथा नियामकं विना चाक्षुषादिरजतज्ञानं किञ्चिद्रजतवृत्तिप्रकारकं किञ्चिद्रजतावृत्तिप्रकारकमिति नियमो न स्यात्। ज्ञानसामग्र्यास्तुल्यत्वादिति।

अत्र वक्तव्यम्। किं प्रमात्वस्य ज्ञानसामग्र्यतिरिक्तसामग्रीसहकृतज्ञानसामग्रीजन्यत्वादेवमुच्यते उत। ज्ञानस्य। उत। तदुभयसंबन्धस्य। नाद्यः। प्रमात्वस्य ज्ञानसामग्रीजन्यत्वाभावात्। न हि संभवति। ज्ञानभिन्नं ज्ञानसामग्रीजन्यं चेति। प्रमापरतस्त्वस्यौपचारिकतापाताच्च। न द्वितीयः। ज्ञानोत्पत्त्यर्थं ज्ञानसामग्रीव्यतिरिक्तसामग्र्यनपेक्षणात्। न च प्रमायाः ज्ञानविशेषत्वात् तदुत्पत्तये सामान्यसामग्रीव्यतिरिक्तसामग्र्यपेक्षा युक्तेति वाच्यम्। प्रमात्वरूपधर्मावच्छिन्नत्वातिरिक्तस्य ज्ञानविशेषत्वस्य प्रमायामदर्शनात्। न च प्रमात्वाधिकरणतासिद्ध्यर्थमेव विशेषसामग्रीजन्यत्वमावश्यकमिति वाच्यम्। पटस्य नीलरूपाधिकरणतासिध्यर्थं सामान्यसामग्रीव्यतिरिक्तसामग्रीजन्यताऽऽपातात्। अथ सामान्यसामग्र्या पटोत्पत्तौ नैल्यसामग्र्या तत्र नैल्यमुत्पद्यत इति मन्यसे हन्त तर्हि ज्ञानसामग्र्यैव ज्ञानमुत्पद्यताम् प्रमात्वसामग्रीतः प्रमात्वं तत्रास्तु। नित्येश्वरज्ञानस्य प्रमात्वानधिकरणतापातश्च। अप्रमादीनां धर्म्यंशे प्रमात्वानधिकरणत्वापातश्च।

नापि तृतीयः। प्रमात्वसम्बन्धस्य स्वरूपसम्बन्धत्वेन ज्ञानस्वरूपस्य ज्ञानसामग्र्यतिरिक्तसामग्रीजन्यत्वायोगात्। प्रमात्वस्वरूपस्यातिरिक्तसामग्रीजन्यत्वसंभवेऽपि प्रमा परत इति प्रतिज्ञाया औपचारिकत्वापरिहारात्।

न चाप्रमा परत इति वादिमतेऽप्ययं दोषः समानः। किं ज्ञानस्य ज्ञानसामग्र्यतिरिक्तसामग्रीजन्यत्वादेवमुच्यते। उताप्रमात्वस्योतत्संबन्धस्येत्यादेर्वक्तुं शक्यत्वादिति वाच्यम्। यथा चाक्षुषार्थज्ञानसमर्थस्य चक्षुरिन्द्रियस्य सुरभि चन्दनमिति अचाक्षुषसौरभ्यावगाहिज्ञानजननाय चाक्षुषसामान्यसामग्र्यतिरिक्तोपनायकापेक्षा। यथा वा वेत्राङ्कुरजननस्वभावस्य वेत्रबीजस्य स्वभावोपमर्देन कदलीकाण्डजनकत्वसिद्धये दावदहनापेक्षा तथा प्रमाणानां सदर्थमात्रावगाहिज्ञानजननस्वभावानां स्वभावोपमर्देनासदर्थावगाहिज्ञानजनकत्वसिद्धये दोषापेक्षेति अप्रमारूपज्ञानस्यैव ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीजन्यत्वाङ्गीकारात्।

नन्वेवं सति उन्मत्तादिवाक्यजनिताप्रमायाः परतस्त्वं न लभ्यते उन्मत्तादिवाक्यानां प्रमाजनन-स्वाभाव्याभावेन तदुपमर्दाय दोषानपेक्षणात् इति चेत् । मा लाभि । प्रमाणजन्याप्रमाया एव परतस्त्वाङ्गीकारेणाप्रमाणजन्यायास्तस्याः परतस्त्वानङ्गीकारात् । न चैवं परेण वक्तुं शक्यम् । तन्मात्रविषयकज्ञानजननस्वभावानां प्रमाणानां प्रमाजननाय सामग्र्यन्तरानपेक्षणात् ।

यदपि । यदि प्रमा ज्ञानसामग्रीमात्रजन्या स्यात् तर्ह्यप्रमाऽपि प्रमा स्यात् । अन्यथा ज्ञानमपि सा न स्यात् इति । तदपि न । प्रमायाः ज्ञानसामग्रीमात्रजन्यत्वाभावेनापादकासिद्धेः । नहि प्रमाणं ज्ञानसामान्यसामग्री । किं तु प्रमासामग्री । एवमप्रमाणं अप्रमासामग्री । ज्ञानसामग्रीत्वं तु प्रमाऽप्रमासाधारणकारणात्मादिनिष्ठम् । तथा च प्रमायाः प्रमासामग्रीजन्यत्वेन सामान्यसामग्री-मात्रजन्यत्वमसिद्धमेव । अप्रमायाः प्रमात्वापादनं त्वयुक्तमेव । प्रमात्वप्रयोजकस्य प्रमाणस्वाभाविक-शक्तिजन्यत्वस्य तत्राभावात् । न हि दावदहनदग्धवेत्रबीजजन्यांकुरो वेत्रांकुरो भवति । येनाहित-शक्तिजन्याऽप्रमा प्रमा स्यात् । अन्यथा ज्ञानमपि सा न स्यादित्यप्ययुक्तम् । शुद्धप्रमात्वप्रयोजकसामग्री-जन्यत्वाभावेन प्रमात्वानङ्गीकारे ज्ञानत्वप्रयोजकसामग्रीजन्याया अप्रमाया ज्ञानत्वाभावापादनायोगात् । दोषेण प्रमाणानां यथार्थज्ञानजननशक्तिं प्रतिबध्य अयथार्थज्ञानजननशक्त्याहितत्वेन तत्सामग्र्याः ज्ञानत्वप्रयोजकसामग्रीत्वात् ।

यदपि । ज्ञानसामग्र्यां दोषानुप्रवेशादप्रमेति चेत् । तर्ह्यप्रमा ज्ञानविशेषवत् प्रमाविशेषः स्यात् । ज्ञानसामग्रीजन्यत्वात् तस्मात्प्रमाऽप्रमयोर्वैचित्र्याद्गुणदोषजन्यत्वमिति । तदपि न । अप्रमायाः प्रमाजनक-प्रमाणजन्यत्वेऽपि तज्जनकस्वाभाविकशक्त्यजन्यत्वेन प्रमाविशेषत्वाभावस्यैवोचितत्वात् । अन्यथा वेत्र-बीजोत्पन्नकदल्यंकुरः वेत्रांकुरविशेषः स्यात् । प्रमाऽप्रमयोर्वैचित्र्यापादकविचित्रशक्तिजन्यत्वेन प्रमायां गुणजन्यत्वस्यावक्तव्यत्वाच्च ।

यदपि । यदि च प्रमायाः अप्रमावैचित्र्येऽपि न गुणजन्यत्वं तर्ह्यप्रमापि स्वत एव स्यान्न परतः । प्रमावत् ज्ञानजनकव्यक्तिविशेषादेवाऽप्रमोत्पद्यते न दोषादिति वक्तुं शक्यत्वात् । इति । अत्र वक्तव्यम् । किमप्रमायाः प्रमाणजन्यायाः स्वतस्त्वं आपाद्यते उताप्रमाणजन्यायाः । नाद्यः । प्रमा-ऽप्रमाजनकप्रमाणव्यक्तेरेकत्वेन विपरीतशक्त्याधायकदोषमन्तरा प्रमाजननस्वभावस्याप्रमाजनकत्वायोगात् । न द्वितीयः । इष्टत्वात् । अप्रमाणाप्रामाण्यस्य स्वतस्त्वाङ्गीकारात् । यदपि विशेषदर्शनपिचाद्य-भावादितः प्रमा तदभावान्नेति प्रमायामागन्तुककारणापेक्षेति परतस्त्वमिति । तदपि न । स्वाभाविकया

शक्त्या प्रमाणेन प्रमोत्पादे पित्ताद्यभावादीनां सहकारितयानुपादानेन दोषाभावान्वयव्यतिरेकयो-रप्रयोजकत्वात्। अन्यथा गोक्षुरकाद्यभावे गजगतिरन्यथा नेति नियमात् गजगतिरपि परत एव स्यात् न तु स्वतः।

यदपि। अनित्यप्रमा। अप्रमाकारणविजातीयकारणजन्या। अप्रमाविजातीयकार्यत्वात्। घटवदिति अनुमानं तदपि न। प्रमायाः अप्रमाकारणात् अप्रमाणात् विजातीयप्रमाणजन्यत्वेन सिद्धसाधनात्।

यदपि। अनित्यप्रमात्वं कार्यताऽवच्छेदकम्। बाधकं विना कार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववत् इति अनुमानम्। तदपि न। अनित्यप्रमात्वं प्रमाणजन्यताऽवच्छेदकमित्यस्माभिरप्यङ्गीकृतत्वेन सिद्धसाधनत्वात्। कार्यतावच्छेदकत्वे बाधकशून्यत्वादित्येतावतैव पूर्णत्वेन व्यर्थविशेष्यत्वाच्च।

**अत्राह पक्षधरः।** अत्र बाधकपदेन अवच्छेदकान्तरोपपन्नकार्यत्वाधिकरणत्वम् स्वावच्छिन्न-कार्यत्वप्रतियोगिकैककारणासंभवः एकव्यक्तिकत्वं चेति बाधकत्रयं विवक्षितम्। एवं सति बाधक-पदस्य सङ्कोचवृत्तित्वेनाकार्यवृत्तित्वरूपबाधकासंग्रहेण तद्रूपमात्रबाधकवति ज्ञानत्वादौ व्यभिचारवारणाय कार्यमात्रवृत्तित्वमिति। स स्थूलदृश्वा। ज्ञानत्वे स्वावच्छिन्नकार्यत्वप्रतियोगिककारणासंभवरूपबाधकस्य तथा अवच्छेदकान्तरोपपन्नकार्यत्वाधिकरणवृत्तित्वरूपबाधकस्य च सत्त्वेन तद्रूपमात्रबाधकवति ज्ञानत्वा-दावित्युक्त्ययोगात्।

**यज्ञपतिस्तु।** यद्यपि अनित्यप्रमात्वं न कार्यताऽवच्छेदकम्। अनित्यप्रमामात्रेऽनुगतगुणस्य कारणस्याभावात्। तथाऽपि अनित्यप्रमात्वं कार्यतावच्छेदकमिति मूलोक्तानुमानस्य न बाधः। अनित्यप्रमात्वं स्वाधिकरणमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्ति स्वाधिकरणमात्रावृत्तिधर्मावच्छिन्नकार्य-ताप्रतियोगिककारणताश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववदित्यत्र तात्पर्यात्। न चैवमपि बाध इति वक्तुं युक्तम्। अनित्यप्रमामात्रेऽनुगतगुणाभावेऽपि चाक्षुषाद्यनित्यप्रमासु भूयोवयवेन्द्रिय-संन्निकर्षादिरूपाननुगतगुणसद्भावात् स्वाधिकरणमात्रवृत्तिचाक्षुषप्रमात्वादिरूपधर्मावच्छिन्नकार्यताश्रयानित्य-प्रमामात्रवृत्तित्वस्य वक्तुं शक्यत्वात्। नाप्यसिद्धिर्वक्तुं शक्या। स्वाधिकरणमात्रावृत्त्यनित्यज्ञानत्व-रूपधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयात्ममनःसंयोगादिरूपज्ञानसामान्यसामग्रीमात्राजन्यानित्य-प्रमारूपकार्यमात्रवृत्तिधर्मत्वस्यानुभवसिद्धत्वात्।

अत्र साध्ये जन्यप्रमात्वस्य स्वतस्त्ववादिमतेऽपि कार्यताश्रयमात्रवृत्तित्वस्य सत्त्वेन सिद्धसाधनतां वारयितुं स्वाधिकरणमात्रवृत्तिधर्मावच्छिन्नेति कार्यताविशेषणम् । अनित्यज्ञानत्वावच्छिन्नकार्यताश्रयमात्रवृत्तित्वेन सिद्धसाधनतां वारयितुं आद्यं मात्रपदम् । द्वितीयं तु स्वाधिकरणमात्रवृत्त्यनुमितिप्रमात्वावच्छिन्नकार्यताश्रयवृत्तित्वेन सिद्धसाधनतावारणाय । प्रमामात्रस्य गुणजन्यत्वमनङ्गीकुर्वताऽपि प्रमाऽनुमित्यर्थं सल्लिङ्गपरामर्शाङ्गीकारात् ।

हेतौ तु एतद्घटत्वे स्वाधिकरणावृत्तिपटत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयतन्त्वादिमात्राजन्यकार्यमात्रवृत्तित्वरूपहेतुसत्त्वेऽपि स्वाधिकरणमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्तित्वाभावात् व्यभिचारवारणाय आद्यमात्रपदम् । न च दत्तेऽपि मात्रपदे व्यभिचारापरिहारः । स्वाधिकरणमात्रावृत्तीत्यनेन स्वाधिकरणमात्रावृत्तयो यावन्तो धर्माः तेषु मध्ये येन केनापि अवच्छिन्ना या कार्यता तन्निरूपितकारणताऽऽश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तित्वस्य विवक्षितत्वात् । न चैतद्घटत्वे स्वाधिकरणमात्रावृत्तिघटत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयमात्रानुत्पाद्यपटादिकार्यमात्रवृत्तित्वमस्ति । येनैतद्घटत्वे व्यभिचारः स्यात् । द्वितीयं मात्रपदं अनित्यप्रमायाः ज्ञानसामान्यसामग्रीजन्यत्वेनासिद्धिवारणाय । तृतीयं तु कार्याकार्यवृत्तिज्ञानत्वे व्यभिचारवारणायेत्याहुः ।

स स्थूलदृश्वा । प्रामाण्यस्य गुणजन्यत्वमनङ्गीकुर्वता अनित्यप्रमात्वस्य स्वाधिकरणमात्रावृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तित्वस्यानङ्गीकृतत्वेनासिद्धस्य तस्य हेतूकरणात् । सिद्धौ चानुमानवैयर्थ्यम् । न हि प्रामाण्यस्य ज्ञानसामान्यसामग्रीमात्रजन्यत्वाभावातिरिक्तं प्रसाध्यमस्ति येनेदमनुमानमर्थवत्स्यात् । तत्तत्प्रमां प्रति तत्तत्प्रमाणव्यक्तीनां कारणत्वस्याङ्गीकृतत्वेनैव हेतोरुपपत्त्या चाक्षुषादिप्रमामात्रानुगतगुणासिद्धेरर्थान्तरत्वाच्च ।

यदपि मणौ, अस्तु वा अनुगतभोजकादृष्टकार्यतावच्छेदकत्वं घटज्ञानत्वस्य । अन्यथा कार्यमात्रे नादृष्टं हेतुः स्यात् । ततश्चानित्यघटज्ञानत्वादौ साध्यस्यैव सत्त्वान्न व्यभिचार इति । तदपि न । तथा सति अनित्यप्रमात्वस्यापि भोजकादृष्टजन्यतावच्छेदकत्वसंभवेनार्थान्तरत्वप्रसङ्गात् ।

यदपि, अनित्यप्रमात्वम् । अनित्यज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकम् । अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वात् अप्रमात्ववदिति अनित्यप्रमायामप्रमात्व्यावृत्तानुगतहेतुसिद्धिः । अन्यथाऽनुगतकार्यानुपपत्तेः इति तदपि न । प्रमाणनिष्ठ-

कारणताप्रतियोगिककार्यताऽवच्छेदकत्वेन हेतोरुपपत्त्या अर्थान्तरत्वात् । अत एवानित्यप्रमात्वं अप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यताऽवच्छेदकम् । अप्रमावृत्तिकार्यतावच्छेदकधर्मत्वादित्यनुमानं निरस्तम् ।

यदपि, चाक्षुषप्रमात्वम् । चाक्षुषाप्रमाकारणताऽनवच्छेदकरूपावच्छिन्नकारणताप्रयोगिकार्यतावच्छेदकम् । चाक्षुषप्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववदिति । तदपि न । चाक्षुषत्वप्रमात्वसमाजस्यार्थिकत्वेन चाक्षुषप्रमात्वस्य कार्यतानवच्छेदकत्वेनासिद्धत्वात् ।

यदपि, अन्यथा नियामकं विना चाक्षुषादिरजतज्ञानं किञ्चिद्रजतवृत्तिप्रकारकं किञ्चिद्रजतावृत्तिप्रकारकमिति नियमो न स्यात् । ज्ञानसामग्र्यास्तुल्यत्वादिति । तदपि न । यत्र चक्षुरादीनां सहजशक्त्या ज्ञानजनकत्वं तत्र रजतवृत्तिप्रकारकत्वं ज्ञानस्य, यत्र दोषाहितशक्त्या ज्ञानजनकत्वं तत्र रजतावृत्तिप्रकारकत्वं ज्ञानस्येति संभवात् ।

यदत्रोक्तं मणिकृता । प्रमामात्रे च नानुगतो गुणः किं तु तत्तत्प्रमायां भूयोऽवयवेन्द्रियसन्निकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वं अन्वयव्यतिरेकात् । तत्तदप्रमायां पित्तादिलिङ्गभ्रमादीनां दोषत्ववत् । प्रत्यक्षे विशेषदर्शनमपि गुणः । तदनुविधानात् । एवं लिङ्गसादृश्यवाक्यार्थभ्रमरूपदोषाभावेऽपि प्रमाऽनुमित्याद्यदर्शनात् यथार्थलिङ्गज्ञानादीनां गुणत्वसिद्धिः । एवं प्रमायाः गुणजन्यत्वेन वेदेऽपि प्रमा वाक्यार्थयथार्थज्ञानगुणजन्येति तदाश्रयेश्वरसिद्धिरिति संप्रदायविदः ।

वस्तुतस्तु । शाब्दप्रमायां लोके वक्तृयथार्थज्ञानं न गुणः । किं तु योग्यताऽऽदिकम् । यथार्थतज्ज्ञानं वा । लाघवादावश्यकत्वाच्चेति ।

अत्रोच्यते । भूयोवयवेन्द्रियसन्निकर्षस्तावन्न प्रत्यक्षप्रमायां गुणः । तथा हि । इन्द्रियसंनिकर्षस्तावदप्रमाहेतुरित्यविवादम् । असन्निकृष्टेनेन्द्रियेण क्वापि भ्रमानुदयात् । भूयोऽवयवेन्द्रियसंनिकर्षोऽपि इन्द्रियसंनिकर्षविशेष एव । तथाचाऽप्रमासामग्रीवैशेष्यात् भूयोऽवयवेन्द्रियसंनिकर्षजं विज्ञानं अप्रमाविशेष एव स्यात् न तु प्रमा ।

नन्विन्द्रियसन्निकर्षः अप्रमासाधारणहेतुरेव । न त्वसाधारणकारणम् । ततश्च भूयोवयवेन्द्रियसंनिकर्षरूपेन्द्रियसन्निकर्षोत्कर्षः नाप्रमोत्कृष्टत्वापादक इति चेत् । हन्त तर्हि अप्रमासाधारणसामग्र्युत्कर्षत्वादेव भूयोऽवयवेन्द्रियसन्निकर्षो न प्रमात्वप्रयोजको गुणः । अथ अवयवीन्द्रियसंनिकर्ष एवाप्रमासाधारणो हेतुः नावयवेन्द्रियसंनिकर्ष इति चेत् । प्राप्यप्रकाशकस्येन्द्रियस्यावयविसन्निकर्ष एव

प्रमाहेतुः स्यात् तन्त्ववयवसन्निकर्षः प्रमाहेतुः स्यात् । अन्यज्ञानजनने अन्यप्राप्तेरुपयोगादर्शनात् । अवयवसन्निकर्षोऽपि अवयविसन्निकर्षोपयोगित्वेनोपयुज्यते इति चेत् । हन्त तर्हि तत एवा-प्रमासाधारणसामान्यसामग्रीकोटिनिविष्टत्वमवर्जनीयमिति कथं भूयोवयवेन्द्रियसंनिकर्षो गुणः ।

यदपि प्रमानुमितौ यथार्थलिङ्गज्ञानं गुण इति तदप्ययुक्तम् । लिङ्गज्ञानस्यानुमितिसामान्य-सामग्रीत्वेन सामान्यसामग्रीव्यतिरिक्तगुणानिरूपणात् । अप्रमायां लिङ्गज्ञानव्यक्तिविशेषः प्रमायां लिङ्गज्ञानव्यक्तिविशेषः कारणमित्यस्यार्थस्य परेणाप्यङ्गीकृतत्वेन तदभिधानवैयर्थ्याच्च । किं चेदं तावदयं प्रष्टव्यः । किं लिङ्गज्ञानमेव गुण इत्युच्यते उत लिङ्गज्ञानं सामान्यसामग्री तन्निष्ठ याथार्थ्यमेव गुण इत्युच्यते । नाद्यः । प्रमाऽप्रमासाधारणस्य गुणत्वायोगात् । न द्वितीयः । प्रमात्वस्याजनकत्वेन गुणत्वायोगात् । अत एव प्रमात्वविशिष्टलिङ्गज्ञानं गुण इत्यपि परास्तम् । लिङ्गज्ञानमेव गुणः प्रमात्वं तु तदवच्छेदकमित्येव वक्तव्यत्वात् । प्रमात्वस्य कारणकोटिप्रवेशाभावात् । न च तथैवास्त्विति वक्तुं युक्तम् । लिङ्गज्ञानगुणत्वस्य प्रागेव दूषितत्वात् । गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यत्र लिङ्गप्रमासद्भावेऽपि प्रमाऽनुदयाच्च । अत एव बाधाविषयपक्षनिष्ठलिङ्गज्ञानं गुण इति परास्तम् । लिङ्गज्ञानमेव हेतुः बाधाविषयपक्षनिष्ठलिङ्गज्ञानत्वं तु हेतुतावच्छेदकमित्यापातात् । तस्य च दूषितत्वात् । सादृश्ययथार्थज्ञानमुपमितिप्रमायां गुण इत्यप्ययुक्तम् । गवादिवद् द्विशफो न भवत्यश्व इति वैधर्म्योपमाने तदभावात् । एवं यथार्थवाक्यार्थज्ञानं शाब्दप्रमायां गुण इत्यप्ययुक्तम् । वाक्यार्थज्ञानस्य वक्तृगतस्य वाक्यरचनोपक्षीणत्वेन वाक्यार्थप्रमां प्रत्यहेतुत्वात् । नापि चिरविनष्टस्य वक्तृयथार्थज्ञानस्य कालान्तरभाविवाक्यार्थप्रमायां कारणत्वं संभावितम् ।

**पक्षधरस्तु** ॥ उपन्यस्तगुणानां यदि प्रत्येकप्रत्यक्षादिप्रमितावपि नानुगमः किमनेन । यावत्येवानुगमस्तावत्येव गुणत्वसंभवात् । तथा हि । स्थूलावयविप्रत्यक्षप्रमितौ भूयोऽवयवेन्द्रिय-सन्निकर्षः पक्षतावच्छेदकाविरोधिसाध्यकानुमितिप्रमायां यथार्थपरामर्शः । सादृश्यगर्भातिदेशवाक्यार्थधी-पूर्वकप्रमोपमितौ सादृश्ययथार्थज्ञानं गुणः । प्रमासामान्ये तु यथार्थग्राह्यज्ञानं गुणः । ईश्वरज्ञानस्य सर्वविषयकस्य तद्धेतुत्वेनाव्यभिचारात् इत्याह । तन्न । ईश्वरग्राह्यप्रमायाः प्रमामात्रे गुणत्वपक्षे तयैव स्थूलावयविप्रत्यक्षे प्रमात्वसंभवेन भूयोऽवयवेन्द्रियसन्निकर्षादीनां गुणत्वानुसरणवैयर्थ्यापातात् । अथ भूयोऽवयवेन्द्रियसन्निकर्षादिकमन्तरा ईश्वरप्रमामात्रेण स्थूलावयविप्रत्यक्षे प्रमात्वं न निर्वहतीति तदनु-सरणमिति चेत् तर्हि प्रमामात्रे ग्राह्यप्रमा गुण इति रिक्तं वचः स्यात् ।

यदपि मणौ प्रत्यक्षे विशेषदर्शनं गुण इति । तदपि न । विशेषदर्शनस्य संशयोत्तरभ्रमप्रमारूपप्रत्यक्षमात्रे कारणत्वेन गुणत्वाभिधानायोगात् । यथार्थविशेषदर्शनं गुण इत्यपि न । तस्यापि याथार्थ्याय यथार्थविशेषदर्शनान्तरापेक्षायां अनवस्थानात् । भूयोवयवेन्द्रियसन्निकर्षस्य तत्र गुणत्वाङ्गीकारेणानवस्थापरिहारे संशयोत्तरप्रत्यक्षेऽपि स एवास्त्वावश्यकत्वात् किं विशेषदर्शनस्य गुणत्वाङ्गीकारेणेति ।

यदपि, एवं लिङ्गसादृश्यवाक्यार्थभ्रमरूपदोषाभावेऽपि प्रमानुमित्याद्यदर्शनात् यथार्थलिङ्गज्ञानादीनां गुणत्वसिद्धिरिति । तदपि न । ज्ञानकारणाभावादेव लिङ्गसादृश्यवाक्यार्थभ्रमरूपदोषाभावदशायामनुमित्याद्यभावेन तेषां कारणत्वेनावश्यकत्वसिद्धावपि गुणत्वेनासिद्धेः । ज्ञानसामग्र्या प्रमात्वे जनयितव्ये सहकारिविशेषस्यैव गुणत्वात् ।

यदपि शाब्दप्रमायां योग्यताऽऽदिकं वा । यथार्थतज्ज्ञानं वा गुणः लाघवादावश्यकत्वाच्चेति । तदपि न । प्रमाणशब्दः प्रमाप्रयोजक इत्यापातेन प्रामाण्यस्य परतस्त्वासाधनात् । अयोग्यताज्ञाने विद्यमानेऽपि वादिवाक्यात् वाक्यार्थबोधदर्शनाद्योग्यताज्ञानस्य शाब्दबोधहेतुत्वाभावेन योग्यताप्रमायाः गुणत्वासंभवात् । वाक्यार्थज्ञानात्पुरा योग्यताप्रमाऽसंभवाच्चेति ॥ छ ॥ **इति ज्ञानप्रामाण्यस्योत्पत्तौ-मप्युक्तपरतस्त्वभङ्गः ॥**

प्राभाकरास्तु । प्रामाण्यं स्वत उत्पद्यते ज्ञायते च । तथा हि निष्कम्पप्रवृत्त्यङ्गं स्मृत्यनुभवसाधारणं यथार्थत्वमेव प्रामाण्यम् । तच्च ज्ञानसामग्रीमात्रजन्यम् । न तु गुणं दोषाभावं वाऽपेक्षते । सर्वज्ञानानां यथार्थत्वेन सत्यां ज्ञानसामग्र्यां सामग्र्यन्तरविरहप्रयुक्तयाथार्थ्यानुत्पादाभावात् । व्यवहार एवायथार्थस्तस्यैव बाध्यत्वात् । ज्ञानं तु न बाध्यते । बाधकत्वाभिमतज्ञानतुल्यत्वात् । ज्ञाने चायथार्थत्वव्यपदेशः विपरीतव्यवहारजनकत्वप्रयुक्तः । केषांचित् विज्ञानानां अप्रामाण्यं परत एवोत्पद्यते । अप्रामाण्यं च नायथार्थत्वम् । सर्वधियां यथार्थत्वात् । किं तु विपरीतव्यवहारजनकताऽवच्छेदकरूपवत्त्वम् । तच्च रूपं ज्ञानयोरेकत्वासंसर्गाग्रहसहितः धर्मधर्मिणोरसंसर्गाग्रहः । स च ज्ञानसामग्र्यां अधिकदोषानुप्रवेशात् । न तु ज्ञानसामान्यसामग्रीतः । ज्ञानमात्रे प्रसङ्गात् । उन्नीयते च विपरीतव्यवहारजनकत्वं बाधकात् । यथार्थत्वं च ज्ञानोल्लिखितप्रकारकत्वमर्थस्य । यद्धर्मवत्त्वमर्थस्य तत्प्रकारकज्ञानत्वं वा । ज्ञानस्य स्वप्रकाशत्वात्स्वेनैव परिच्छिद्यते । अथ स्वतः प्रामाण्यग्रहे अनभ्यासदशापन्ने इदं ज्ञानं प्रमाणमप्रमाणं वेति संशयो न स्यात् । निश्चिते तदभावात् । अत एवाप्रमाणत्वशङ्कयाऽर्थेपि किमेवमनेवं वेति संशयात्र ज्ञानमात्रादर्थे समाश्वासो व्यभिचारादिति चेत् । न ह्यत्र ज्ञाने

यथार्थत्वायथार्थत्वसंशयः सर्वज्ञानानां यथार्थत्वात् । किं तु अगृहीतभेदं ज्ञानद्वयमुत एकमेव ज्ञानमित्याकारः प्रमाऽप्रमा वेति संशयः । संशयोऽपि नैकं ज्ञानं किं तु स्वरूपतो विद्यमानभेदाग्रहसहितं ज्ञानद्वयम् । इयांस्तु विशेषः । इदं रजतमित्याद्ययथार्थव्यवहारप्रवर्तके विज्ञाने भासमानकोट्योर्विरोधो न भासते । इह तु भासमानकोट्योर्विरोधो भासत इति । अत एवेदं ज्ञानद्वयं संशय इति गीयते इत्याहुः ।

तन्न । इदं रजतमित्यादिविज्ञानानामयथार्थत्वस्य साक्ष्यनुभवसिद्धत्वेन सर्वधियां याथार्थ्याभावात् । रजतमितिविज्ञाने शुक्तिविशेष्यकत्वस्य एतावन्तं कालं शुक्तिकामेव रजतत्वेन प्रतिपन्नोऽस्मीति परामर्शसिद्धत्वाच्च । बाधकं विनानुभूयमानज्ञानैक्यपरित्यागायोगाच्च । घटादिज्ञानानां अयं घट- इत्याद्याकारत्वात् स्वप्रकाशत्वाभावेन प्रामाण्यस्य ज्ञानेनैव परिच्छेदाङ्गीकारायोगाच्च ॥ छ ॥ **इति प्राभाकरोक्तप्रामाण्यस्वतस्त्वभङ्गः ॥**

श्रीरस्तु । अथ किं तत्प्रमात्वं यज्ज्ञानेषु स्वत एवोत्पद्यते ज्ञायते च । न तावत्तद्वतितत्प्रकारकत्वम् । निर्विकल्पकेऽव्याप्तेः । नापि विशेष्यावृत्त्यप्रकारकत्वम् । धर्म्यंशप्रमाऽव्याप्तेः । न हि इदं रजतमिति धर्म्यंशप्रमायां विशेष्यावृत्त्यप्रकारकत्वमस्ति । अन्यथा नेदं रजतमिति बाधो न स्यात् । घटपटाविति समूहालम्बनाव्याप्तेश्च । घटावृत्तिपटत्वप्रकारकत्वस्य पटावृत्तिघटत्वप्रकारकत्वस्य च सत्वात् । नापि यस्मिन् विशेष्ये यन्नास्ति तत्र तदप्रकारकत्वं विवक्षितम् । संयोगसंबन्धेन घटवति समवायसंबन्धेन घटावगाहिविभ्रमेऽतिव्याप्तेः । नापि येन संबन्धेन यत्र यन्नास्ति तत्र तदप्रकारकत्वम् । कालान्तरे घटाभाववति भूतले घटदशायां घटवद्भूतलमिति प्रमायामव्याप्तेः । नापि यदा येन संबन्धेन यत्र यन्नास्ति तत्र तदप्रकारकत्वं अग्रावच्छेदेन संयोगाभावदशायामेव जातायां वृक्षः कपिसंयोगीति प्रमायामव्याप्तेः । नापि यदा यद्देशावच्छेदेन यत्र यन्नास्ति तत्र तदा तदवच्छेदेन तदप्रकारकत्वम् । धर्म्यंशप्रमायामव्याप्त्यनिस्तारात् । एवं च प्रमात्वं दुर्निरूपं इति चेत् ।

अत्रोच्यते । यथार्थज्ञानं प्रमा । याथार्थ्यमात्रं करणेषु गतम् । अतो ज्ञानपदम् । ज्ञानत्वमात्रं विपर्ययादिष्वतिव्याप्तम् । अतो यथार्थपदम् । ननु ज्ञानत्वमात्रं भ्रमेऽतिव्याप्तं इत्ययुक्तम् । भ्रमस्य धर्म्यंशे प्रमात्वेन लक्ष्यभिन्नत्वरूपालक्ष्यत्वाभावात् । अन्योन्याभावस्य व्याप्यवृत्तित्वात् । न चात्यन्ताभावविशेषस्याव्याप्यवृत्तित्ववत् अन्योन्याभावविशेषस्याप्यव्याप्यवृत्तित्वं वक्तुं युक्तम् । एवं भेदाभेदस्य कथञ्चिदुपपादनेऽपि अतिव्याप्त्युपपादनोपयोगिनो लक्ष्यादत्यन्तभेदस्यानुपपादनादिति चेत् । स्यादयं

दोषः । यदीदं सामान्यलक्षणमिति ब्रूमः । न चैवम् । किं नाम यत्तच्छब्दप्रवेशेन यद्यस्य यथार्थज्ञानं तत्तत्प्रमेति तत्तत्प्रमालक्षणमिति ब्रूमः । एवं चेदं रजतमिति भ्रमस्य इदंत्वावच्छिन्नप्रमात्वेऽपि रजतप्रमात्वाभावात् । तल्लक्षणालक्ष्यत्वेनातिव्याप्तिपरिहाराय यथार्थपदमावश्यकम् ।

ननु इदं रजतमितिविभ्रमस्य रजतप्रमात्वाभाववत् रजतज्ञानत्वमपि नास्त्येव । भवन्मते आपणस्थरजतस्य भ्रमाविषयत्वात् । अन्यथा असदेवं रजतं प्रत्यभादित्यनुभवविरोधः स्यात् । एवं च लक्षणस्यैवानागमनात् नातिव्याप्तिरिति नोपादेयं यथार्थपदमिति चेत् । भ्रान्तोऽसि । न ह्यस्माभिरापणस्थरजतप्रमालक्षणस्यातिव्याप्तिरुक्ता । येनास्य ज्ञानस्य आपणस्थरजतविषयकत्वाभावव्युत्पादनमर्थवत्स्यात् । न चैवम् । किं नाम । रजतमित्याकारकसदसद्रजतसाधारणरजतप्रमामात्रलक्षणस्यातिव्याप्तिरुक्ता । न च इदं रजतमितिभ्रमस्य रजतमित्याकारकप्रमाविषयाविषयकत्वम् । येनातिव्याप्तिर्न स्यात् । अन्यथा रजतं प्रत्यभादित्यनुभवविरोधः स्यात् ।

ननु रजतमितिज्ञानं सत्यरजतांशे प्रमा विद्यमानरजतत्ववैशिष्ट्यविषयकत्वात् । असद्रजतविषये त्वप्रमैव । अविद्यमानरजतत्ववैशिष्ट्यविषयकत्वात् । ततश्च रजतमितिविज्ञानं सदसद्रजतप्रमेत्ययुक्तमिति चेत् । न । सत्यरजते तद्योग्यरजतत्ववैशिष्ट्यवत् असद्रजतेऽपि रजतशब्दविषयत्वरूपतद्योग्यरजतत्ववैशिष्ट्यस्य सत्त्वात् । एकविधमेव वैशिष्ट्यमिति नियमस्यानादरणीयत्वात् । अन्यथा घटोऽत्यन्ताभावप्रतियोगी शशविषाणमत्यन्ताभावप्रतियोगीति ज्ञानविषययोः सदसतोः एकविधमेव प्रतियोगित्वरूपधर्मवैशिष्ट्यं स्यात् । नन्वेवमपि विधिनिषेधाववबुध्य प्रत्ययाभावेन रजतशब्दविषयस्य सत्त्वावगाहिनो रजतमितिज्ञानस्य तदंशभ्रमत्वमवर्जनीयम् । अविद्यमानसत्तावैशिष्ट्यावगाहित्वात् इति चेत् । न । सत्यरजते तद्योग्यसत्तावैशिष्ट्यवत् असत्यपि तद्योग्यसत्तावैशिष्ट्यसद्भावेन तदवगाहिनो ज्ञानस्य भ्रमत्वे कारणाभावात् । यत्तु सत्यरजतयोग्यं सत्तावैशिष्ट्यं असति गृह्णाति तज्ज्ञानं विभ्रम एव । एवमपि आपणस्थरजतव्यक्तिप्रमालक्षणे यथार्थपदमनुपादेयमेव व्यावर्त्याभावात् इति चेत् । न । यद्यद्रूपावच्छिन्नतया यस्य यथार्थज्ञानं तत् तद्रूपावच्छिन्नत्वेन तद्रूपावच्छिन्नस्य प्रमेत्येवंरूपेण तत्तत्प्रमालक्षणानां विवक्षितत्वात् । एवं च रजतव्यक्तिविशेषस्य रजतत्वप्रकारकप्रमालक्षणे तद्व्यक्तिविषयकवङ्गस्वगोचरभ्रमे तद्व्यक्तिज्ञानत्वस्य सत्त्वेनातिव्याप्तिवारणाय यथार्थपदमावश्यकमिति ।

याथार्थ्यं च यत् यद्देशकालयोर्यादृशस्वरूपविशिष्टं तदनतिक्रमः । न चासद्गोचरयथार्थज्ञान उक्तलक्षणासंभवः । असत्त्वानुपमर्देन प्रतियोगित्वप्रमेयत्ववैशिष्ट्यवत् असत्त्वाविरोधिकालदेशवैशिष्ट्य-

सद्भावात् । कालादिसंबन्धविशेषस्यैव सत्त्वापादकत्वात् । न च निर्विकल्पकाव्याप्तिः । **निर्विकल्पक-ज्ञानस्याप्रामाणिकत्वात्** ॥ छ ॥ **इति स्वमते प्रमात्वनिरूपणम्** ॥

**मणिकारस्तु** । यत्र यदस्ति तत्र तस्यानुभवः प्रमा । तद्वति तत्प्रकारकानुभवो वा । यत्र यन्नास्ति तत्र तस्य ज्ञानम्, तदभाववति तत्प्रकारकं वा ज्ञानमप्रमा । तदन्यत्वे सत्यनुभवत्वमेव वा प्रामाण्यम् । निर्विकल्पकं च प्रमाऽप्रमाबहिर्भूतमेव । व्यवहारानङ्गत्वात् । यद्वा विषयताऽऽश्रयावृत्त्यप्रकारकोऽनुभवः प्रमा । केवलान्वयिनि विषयताऽऽश्रयावृत्तिरवृत्तिरेव प्रसिद्धः । यद्वा यत्प्रकारका विषयता तत्प्रकारसमानाधिकरणविषयताकोऽनुभवः । स्वप्रकारसमानाधिकरणविषयताकोऽनुभवः प्रमा । यद्वा विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयता-प्रतियोगी । विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयत्वप्रतियोगी वा । विषयतासमानाधि-करणात्यन्ताभावप्रतियोगिप्रकारकविषयताप्रतियोगी । विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारा-नवच्छिन्नविषयताप्रतियोगी वाऽनुभवः प्रमेत्याह । तन्न । अनुभवपदघटितानामेषां सर्वेषां लक्षणानां स्मृतावव्याप्तेः । न च स्मृतिर्न प्रमा । तद्व्यतिरिक्तमेव ज्ञानं प्रमेत्यत्र मानमस्ति । येन तत्राव्याप्तिर्न स्यात् ।

यत्तु यत्र यदस्ति तत्र तस्यानुभवः प्रमेति । तन्न । आसीद्घटः भविष्यति घट इत्याप्त-वाक्यजन्यज्ञानयोरव्याप्तेः । न हीदं ज्ञानद्वयं यत्र यदस्ति तत्र तस्यानुभवः किं तु यत्र यदासीत् यत्र यद्भविष्यति, क्रमेण तत्र तदनुभवः ।

**रुचिदत्तस्तु** । अवृत्तिपदार्थविशेष्यकप्रमायां विशेष्यांशेऽव्याप्तिमाशङ्क्य । यत्र विशेष्ये यस्य प्रकारस्य यः संबन्धो वर्तते । तद्विशेष्यकः तत्प्रकारकस्तत्संबन्धावगाही अनुभवः स्वविषये सर्वत्र विशेष्यादौ प्रमेतिलक्षणार्थः । ततश्च गगनादिविशेष्यकप्रमायां नाव्याप्तिरित्याह । स स्थूलदृश्वा । गगनविशेष्यके विज्ञाने यत्र गगने यत् शब्दादिकमस्ति तत्र तदनुभवत्वरूपलक्षणसद्भावाद-व्याप्तेरेवाभावेन अविद्यमानाव्याप्तिपरिहाराय लक्षणार्थकथनात् । न हि लक्षणस्य लक्ष्यव्यक्तौ सर्व-प्रदेशेषु स्थितिरपेक्षिता । येनाव्याप्तिः स्यात् । अन्यथा सास्नादिमत्त्वं पुच्छाद्यवच्छेदेनाभावादव्याप्तं स्यात् । यद्यव्याप्तिर्दुराग्रहेणाङ्गीक्रियते । तथाऽपि लक्षणार्थकथनमयुक्तमेव । विशेष्यांशे लक्षण-स्यानुपपादनेन विशेष्यांशप्रमायामव्याप्त्यपरिहारात् । न हि विशेष्यांशप्रमायां तत्प्रकारकत्वं तत्संबन्धा-वगाहित्वं वाऽस्ति । येनाव्याप्तिपरिहारः स्यात् ।

यत्तु तद्वति तत्प्रकारकत्वमिति लक्षणम् । तदपि न । भ्रमेऽतिव्याप्तेः । तस्यापीदन्त्ववतीदन्त्व-प्रकारकत्वात् । यत्तु तदन्यत्वे सत्यनुभवत्वमेव वा प्रामाण्यं इति । तदपि न । अनुभवत्वस्य भ्रमवृत्तित्वेन अन्यत्वस्य चान्योन्याभावत्वेन नित्यतया गुणाप्रयोज्यत्वेन प्रामाण्यस्य त्वदुक्तपरतस्त्वा-भावाऽऽपातात् ।

**अत्र पक्षधररुचिदत्तावाहतुः ।** तदन्यत्वे सतीतिलक्षणस्य तदभाववति तत्प्रकारकत्वात्यन्ता-भावाधिकरणत्वे सति अनुभवत्वमित्यर्थः । तेनान्योन्याभावस्य व्याप्यवृत्तित्वनियमेन न भ्रमांशप्रमायाम-व्याप्तिरिति ध्येयमिति । तावुभावपि स्थूलदृश्वानौ । भ्रमेऽतिव्याप्तिप्रसङ्गात् । उभाभ्यां धर्म्यंश-प्रमायामव्याप्तिमाशङ्क्य तदभाववति तत्प्रकारकत्वात्यन्ताभावाधिकरणत्वस्य व्युत्पादितत्वात् । अवच्छेदकभेदेन तदुपपादितमिति चेत् । सत्यम् । तथाऽपि भ्रमे लक्षणापरिहारः । अन्यथा अग्रावच्छेदेन विद्यमानः संयोगः वृक्षे न स्यात् । एवमन्यान्यलक्षणान्ययुक्तानि । स्मृतावव्याप्तेरुक्तत्वात् । दूषणान्तरस्य च पूर्वोक्तदिशा स्फुटत्वात् ॥ छ ॥ **इति मण्युक्तप्रमालक्षणभङ्गः ॥**

श्रीरामाय नमः ॥ वस्तुस्वरूपमतिक्रम्य विषयीकारि ज्ञानमयथार्थज्ञानम् । तत् द्विविधम् । संशयो विपर्ययश्च । यद्यदवधारणभिन्नत्वे सति यस्य ज्ञानं स तत्संशयः । स चतुर्विधः । एकधर्मिकोऽनेककोटिकः । तद्यथा स्थाणुर्वा पुरुषो वेति । अनेकधर्मिकोऽनेककोटिकः । तद्यथा देवदत्तः यज्ञदत्तपुत्रः उत यज्ञदत्तो देवदत्तपुत्र इति । अनेकधर्मिक एककोटिकः । तद्यथा । किमयं ब्राह्मण उत स ब्राह्मण इति । एकधर्मिक एककोटिकः । तद्यथा । प्रादेशपरिमितश्चन्द्रमा इति । तत्राद्यः संशयः अप्रमाविभाग एव । नियमेन वस्तुस्वरूपमतिक्रम्य तद्विषयत्वात् । ननु नायमस्ति नियमः । यत् एकधर्मिकः अनेककोटिकः संशयस्तत्स्वरूपमतिक्रम्यैव वस्तु विषयीकारोतीति । वृक्षत्वशिंशुपात्वयोर्विरोधं जानतः किमयं वृक्षः शिंशुपा वेति संशयदर्शनात् । न च वृक्षत्वं शिंशुपात्वं वा न वस्तुस्वरूपम् । येनेदं विज्ञानं वस्तुस्वरूपमतिक्रम्य विषयीकारित्वादयथार्थं स्यात् । इति चेत् । न । भासमान-कोटिविरोधांशे वस्तुस्वरूपातिक्रमसद्भावात् । अन्ये तु संशयाः न केवलमप्रमाविभागा एव । अपि तु प्रमाविभागा अपि भवन्ति । तथाहि । अनभ्यासदशायामुत्पन्ने घटपटाविति समूहालम्बनात्मके अनेकधर्मिकानेककोटिकसंशये । तथा द्वयोर्ब्राह्मणयोरागतयोः इमौ ब्राह्मणाविति अनभ्यासदशाया-मुत्पन्ने अनेकधर्मिक एककोटिकसंशये । तथा अनभ्यासदशायां उत्पन्ने इदं जलमित्येककोटिके संशये च विषयबाधाभावेन प्रमात्वनिश्चयात् । न च घटपटावित्यादिविज्ञानं न संशयः । एकाकारनियतत्वा-दिति वाच्यम् । स्तम्भोऽयं भवत्येवेत्यादिवत् अवधारणात्मकत्वाभावेन संशयत्वस्यावर्जनीयत्वात् ।

एतदनन्तरमपि किमिमौ घटपटौ उत नेति द्विकोटिकसंशयदर्शनाच्च । निश्चिते तदयोगात् । विषयस्वरूपमतिक्रम्य विषयावगाही निश्चयो विपर्ययः । तद्यथा शुक्तिकायामिदं रजतं भवत्येवेति ।

**प्राभाकरस्तु** । सर्वं ज्ञानं यथार्थमेवेति मन्यमानाः नान्यथाख्यातिं सहन्ते । तथा हि केयमन्यथाख्यातिर्नाम । न तावदन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिः । तथा सति घटादिप्रत्ययाः सर्वेऽप्यन्यथाख्यातित्वाद्विभ्रमाः प्रसज्येरन् । किं च शुक्तिकायाः रजताकारपरिणामः सकारण उताकारणः । न तावदकारणः कादाचित्कत्वानुपपत्तेः । आद्ये कारणं वाच्यम् । करणदोष इति चेन्न । तस्य करणसंबन्धिनः शुक्तिपरिणामहेत्वनुपपत्तेः । अन्यथा तदैव सकलार्थानां रजतरूपेण परिणामप्रसङ्गः । दुष्टकरणसंसर्गो हेतुरिति चेत्तथाऽपि किं शुक्तित्वापगमेन रजतरूपपरिणामः । किं वा तदनपगमेन । आद्ये पुरुषान्तरेणापि तदा शुक्तित्वं न प्रत्येतव्यम् । द्वितीये भ्रान्तेनापि तत्प्रत्येतव्यम् । अपि चैतत्समस्तप्रतिपत्तृसाधारणं किं न स्यात् । यत्करणपरिणतं तेनैव गृह्यत इति चेत् । न । घटादेरपि कुलालादिमात्रवेद्यत्वापातात् । किञ्चोत्पन्नं चेद्रजतं विनष्टं तदा तथैव प्रतीतिः स्यान्न तु नेदं रजतमिति बाधबुद्धिः ॥ का चैवं सति दोषवाचो युक्तिः । न हि मृदो घटाकारपरिणामस्य निमित्तं दण्डचक्रादिकं दोषत्वेन मान्या मन्यन्ते । तदेवं भ्रान्तिबाधयोरनुपपत्तेर्न परिणामपक्षो युक्तः ।

नापि वस्तुनो वस्त्वंतरात्मनाऽवभासोऽन्यथाख्यातिरिति युक्तम् । तथा हि । किं वस्तुनो वस्त्वंतरात्मता सती उतासती । नाद्यः । भ्रान्तेरभ्रान्तित्वप्रसङ्गात् । बाधस्य भ्रमत्वप्रसङ्गाच्च । विद्यमानशुक्तिरजततादात्म्यनिषेधविषयत्वात् । न द्वितीयः । असतः प्रतीत्यनुपपत्तेः । उपपत्तौ वा किं रजतस्यापि वस्तुत्वाग्रहेण । अत एवासंबद्धविशेषणविशिष्टप्रतीतिरन्यथाख्यातिरिति परास्तम् । असतो विशेषणसंबन्धस्य प्रतीत्यनुपपत्तेः । उपपत्तौ वा किमसत्ख्यातिवादिभिरपराद्धम् ।

नाप्यन्यथाख्यातिजनने कारणं पश्यामः । न च चक्षुरादिकमेव कारणम् । तस्य समीचीनज्ञानकारणताऽवधारणात् । न खलु जरामरणविध्वंसहेतुर्जातु सुधा तद्धेतुरपि भवति । नापि दोषसहकृतादिन्द्रियादेरेवान्यथाज्ञानजननमिति युक्तम् । दोषा हि कारणानां औत्सर्गिककार्यजननसामर्थ्यं निघ्नन्ति न तु विपरीतकार्यजननसामर्थ्यमप्यादधति । न खलु दुष्टं कुटजबीजं वटं जनयति । किं नाम न जनयत्येव कुटजांकुरम् । न च वक्तव्यम् दावदहनदग्धवेत्रबीजानां कदलीकाण्डजननं प्रति सामर्थ्यमुपलब्धमिति । पाकेन द्रव्यान्तरोत्पत्तेस्तस्यापामबीजत्वात् । किं च

प्रदर्शिताकारव्यभिचारे प्रत्ययस्य सर्वत्र व्यभिचारशङ्का दुर्वारा स्यात् । तथा च निष्कम्पा प्रवृत्तिः क्वापि न स्यात् ।

ननु तर्हीदं रजतमित्यादिप्रत्ययानां का गतिरिति चेत् । उच्यते । रजतमिदमिति द्वे विज्ञाने । स्मृत्यनुभवरूपे ॥ तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात्तद्गतस्य शुक्तित्वसामान्यविशेषस्याग्रहणात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयति । सा च गृहीतग्रहणस्वभावाऽपि दोषवशात् गृहीततत्तांशप्रमोषेण गृहीतिस्वरूपाऽवतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहणात् सन्निहितरजतज्ञानसारूप्येणेदंरजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः इति कान्यथाख्यातिरिति ॥

अत्रोच्यते । यत्तावदन्यथाख्यातिलक्षणं निराकृतं तदनुमतमेवास्माकम् । अन्यदन्यात्मना विषयीकुर्वज्ज्ञानमन्यथाख्यातिरित्यङ्गीकारात् । यथोक्तम् । असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादिति । नन्वन्यस्यान्यात्मता सती असती वा । असतीति ब्रूमः । न च प्रतीयमानस्यासत्त्वायोगः । असतः प्रतीत्यभावादिति वाच्यम् । असतः प्रतीत्यभावादिति वदतैव असतः प्रतीत्यङ्गीकारात् । न हि असन्न जानाति । असतः प्रतीत्यविषयत्वं च जानातीति संभवति । देवदत्तो न श्याम इति जानन्नपि देवदत्तं न जानातीत्यापातात् । न चासतः परोक्षप्रतीतिसंभवेऽपि अपरोक्षप्रतीत्यसंभवः । परोक्षत्वापरोक्षत्वयोर्ज्ञानधर्मयोः कारणप्रयोज्यत्वेन विषयप्रयोज्यत्वाभावात् । इन्द्रियजन्यज्ञानस्यापरोक्षत्वात् । कारणान्तरजन्यस्य परोक्षत्वात् । न चासतः सन्निकर्षासंभवात् असज्ज्ञानस्येन्द्रियजन्यत्वासंभवः । सोऽयमिति प्रत्यभिज्ञाप्रत्यक्षजननवेलायां तत्तांशेन संस्कारस्येव, योगीन्द्रियाणां योगजधर्मस्येव, दोषस्यैवासत्प्रत्यासत्तित्वात् । न च कालान्तरे विषयसद्भावात् तयोः प्रत्यासत्तित्वमुपपन्नम् । असतस्तु तदभावान्न दोषस्य प्रत्यासत्तित्वमुपपन्नमिति युक्तम् । कालान्तरसत्त्वस्येदानीं प्रत्यासत्तित्वेऽनुपयोगात् ।

एतेन, नाप्यन्यथाख्यातिजनने कारणं पश्याम इति यत्प्रागुक्तं तदपि परास्तम् । प्रमाणानां यथार्थज्ञानजननस्वभावत्वेऽपि दोषलक्षणसहकारिवशात् प्रमाणानां स्वत एवान्यथाख्यातिकरणत्वात् । न चैवं दुष्टकुटजबीजस्य वटांकुरजनकत्वापातः । दोषविशेषाणामेव विपरीतकार्यविशेषजननशक्त्याधायकत्वस्वभावाङ्गीकारेण दोषमात्रस्य तदनङ्गीकारात् । यदपि प्रतीताकारव्यभिचारे प्रत्ययस्य सर्वत्र व्यभिचारशङ्का दुर्वारा स्यात् । ततश्च निष्कंपा प्रवृत्तिः क्वापि न स्यादिति । तदपि न । विशिष्टज्ञानत्वेन

प्रतीयमानस्य ग्रहणस्मरणात्मकत्वेन विशिष्टज्ञानत्वाभावे प्रत्ययमात्रे तथात्वशङ्काऽऽपातेन निष्कंपप्रवृत्ति-विलोपसाम्यात् । प्रमाणेन विशिष्टप्रतीतिनिश्चयानन्तरं प्रवृत्तिरिति चेत् न । हेत्वादिज्ञानस्य तच्छङ्का-कलङ्कितस्य विशिष्टप्रत्ययत्वनिश्चायकत्वायोगात् । तस्यापि विशिष्टज्ञानत्वनिश्चयाय प्रमाणान्तरानु-सरणेऽनवस्थानात् ।

यदपि चोक्तम् । गृहीतं वस्तुस्वरूपमात्रं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयतीति तदयुक्तम् ॥ कालभेदेनोत्पन्नयोर्विज्ञानयोः स्वरूपभेदग्रहस्यावर्जनीयत्वेन त्वदुक्तभेदाग्रहविलोपप्रसङ्गात् । न च दोषवशात्कालभेदेनोत्पन्नयोरपि भेदाग्रह इति वाच्यम् । धारावाहिकविभ्रमाणां स्वरूपतो भेदा-ग्रहप्रसङ्गात् दोषस्य तत्रापि सद्भावात् ।

यच्चोक्तम् । रजतस्मृतेः पुरोवर्तिग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहणात् सन्निहित-रजतज्ञानसारूप्येणेदं रजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयत इति । तदपि न । गुञ्जापुञ्जस्य दाहकत्वप्रसङ्गेन कारणसारूप्यसद्भावमात्रेण कारणस्य कार्यजनकत्वा-योगात् । ज्ञानभेदे रजतमित्यंशस्य स्मृतित्वे मानाभावाच्च । त्वया यत्राधिष्ठानमारोप्यमन्निहितं तत्र अगृहीतविवेके एव ग्रहणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च जनयत इत्यङ्गीकारात् । एतावन्तं कालं शुक्तिकामेव रजतत्वेनानुभूतवानस्मीति ज्ञानैक्यानुभवत्वावगाह्यनुभवविरोधाच्च ॥ **इति प्राभा-करोक्तज्ञानभेदभङ्गः ॥**

रामानुजाः मन्यन्ते ॥ तासां त्रिवृतं त्रिवृतं एकैकामकरोदित्यादिश्रुतेः ॥ समेत्यान्योन्यसंयोग-मित्यादिपुराणात् त्र्यात्मकत्वादित्यादिसूत्राच्च सर्वस्य सर्वात्मकत्वं प्रतीयते ॥ किं च सोमाभावे पूतीक-ग्रहणं व्रीह्यभावे नीवारग्रहणं अन्यथाऽनुपपद्यमानं पूतीकनीवारयोः सोमव्रीह्यवयवसद्भावं गमयति । अपि च वस्तुनो वस्त्वन्तरसादृश्यं प्रत्यक्षत एव प्रतीयते । न च तद्द्रव्यावयवसंयोगादन्यत्सादृश्यं नामास्ति । अतः शुक्तिकादिषु रजतादेः सद्भावात् यथार्थ एवायं रजतप्रत्ययः । निर्देशव्यवस्थाऽर्थ-क्रियाव्यवस्था च भूयस्त्वादुपपद्यते । दोषवशादिन्द्रियं भूयांसमप्यंशं परित्यज्याल्पीयांसं प्रकाशयतीति रजतार्थिनः प्रवृत्तिरपि तत्र युज्यते । अपगते तु दोषे भूयस एवांशस्योपलम्भे निवर्तते । बाध्यबाधक-भावोऽपि ज्ञानयोरत एवोपपद्यते । एवं स्वप्नस्फटिकलौहित्यमरीचिकाजलालातचक्रदर्पणमुखदिगन्तर-द्विचन्द्रादिप्रत्ययाः सर्वेऽपि यथार्था बोद्धव्या इति ।

तन्न । उदाहृतश्रुतिपुराणसूत्राणां तेजोऽबन्नादिमिश्रताप्रतिपादकत्वेन सर्वस्य सर्वात्मकत्वाप्रति-पादकत्वात् । तथात्वे च बाधितविषयत्वेनाप्रामाण्यप्रसङ्गो दुर्वारः । यदपि पूतीकनीवारयोः सोमव्रीह्यव-

यवसद्भावप्रतिपादनं तदपि न। सोमारम्भकाणामेव सोमावयवत्वेन तेषां पूतीकप्रवेशे सोममात्र-विलोपापातात्। अवयवापगमस्यैव नाशहेतुत्वात्। पूतीकारम्भकाणां पूतीकावयवत्वेन सोमावयवत्वा-भावाच्च। न हि सोमान्तरारम्भकाः सोमान्तरावयवाः भवन्ति। येन पूतीकारम्भकाः सोमावयवाः भवेयुः। किं च यथा सोमावयवाः पूतीके तिष्ठन्ति एवं व्रीह्यवयवास्तिष्ठन्ति न वा। नाद्यः। व्रीह्यभावे नीवारग्रहणवत् पूतीकग्रहणप्रसङ्गात्। विधिवशान्नीवारग्रहणनियम इति चेत्। तर्हि नीवारादिषु व्रीह्याद्यवयवकल्पनवैयर्थ्यम्। द्वितीये पूतीकखण्डे व्रीहिप्रत्ययस्य भ्रमत्वप्रसङ्गो दुर्वारः। पूतीकस्य व्रीह्यवयवजन्यत्वाभावेन व्रीह्यात्मकत्वाभावात्।

यदपि वस्तुनो वस्त्वन्तरसादृश्यं प्रत्यक्षत एव प्रतीयते। न च तद्द्रव्यावयवसंयोगादन्यन्ना-मास्ति। अतः शुक्तिकादिषु रजतादेः सद्भावात् यथार्थ एवायं रजतप्रत्यय इति। तत्तुच्छम्। सादृश्यप्रत्ययेनान्योन्यावयवसंयोगं प्रसाध्य शुक्तिकादिषु रजतसद्भावोपसंहारात्। न हि रजतसादृश्यं नाम रजतसद्भावः येन सादृश्यप्रत्ययेन रजतं सिद्ध्येत्। नापि रजतावयवा एव रजतम्। घटावयवानां घटत्वापातात्। निरवयवयोः ककारखकारयोरपि सादृश्यसद्भावेन अन्योन्यावयवसंयोगस्य सादृश्यशब्दार्थत्वाभावाच्च। शुक्तिकादिषु रजतसद्भावस्य, अत्र रजतमितिप्रत्ययस्य याथार्थ्यं प्रति प्रयोजकत्वेऽपि, इदं रजतमिति प्रत्ययस्य याथार्थ्यं प्रत्यप्रयोजकत्वात्।

यदपि निर्देशक्रियाऽर्थव्यवस्था च भूयस्त्वादुपपद्यते इति। तत्र वक्तव्यम्। कस्य भूयस्त्वात् निर्देशव्यवस्थोच्यते, किं रजतभूयस्त्वात् उत रजतावयवभूयस्त्वात्। नाद्यः। अल्परजते रजतमिति निर्देशस्य अर्थक्रियायाश्चाभावापातात्। न द्वितीयः। रजतमात्रे शुक्तिमात्रे च कारणानां अवयवानां एते रजतावयवा एते शुक्तिकावयवा इति विभागायोगेन तद्भूयस्त्वाल्पीयस्त्वनिर्णया-योगात्।

यदपि दोषवशादिन्द्रियं भूयांसमप्यंशं परित्यज्याल्पीयांसं प्रकाशयतीति रजतार्थिनः प्रवृत्तिरपि तत्र युज्यत इति। तन्न। रजतावयवप्रतीतेः रजतार्थिप्रवृत्त्यहेतुत्वात्। यदप्यपगते दोषे भूयस एवांशस्योपलम्भे निवर्तते इति। तदपि न। दोषापगमस्य विद्यमानांशोपलम्भहेतुत्वेन भूयस एवोपलम्भाभिधानायोगात्।

यदप्यत एव ज्ञानयोर्बाध्यबाधकभावोऽप्युपपद्यत इति। तदपि न। विषयबाधाभावेना-ल्पावयवविषयकस्य पूर्वज्ञानस्य बाध्यत्वायोगात्। भूयोवयवविषयकस्य तदभावविषयकत्वाभावेन

पूर्वज्ञानबाधकत्वायोगाच्च । यद्यल्पांशविषयकत्वेन इदं रजतमिति ज्ञानं भ्रमः स्यात् । तर्हि ब्रह्मज्ञानमप्यत्यल्पांशाविषयकत्वान्महाभ्रान्तिः स्यात् । ततश्च ब्रह्मप्रमाकार्यस्य मोक्षस्यानुत्पादः स्यात् । यदपि सर्वमपि ज्ञानं यथार्थमिति । तदपि न । नेदं रजतमिति ज्ञानस्य त्वन्मते याथार्थ्यासंभवात् । सर्वं सर्वात्मकमिति वदता त्वया शुक्तिकाया रजतानात्मकत्वानङ्गीकारात् ॥ **इति रामानुजोक्तसर्वप्रत्यययाथार्थ्यभङ्गः ॥**

**मायावादिनो वदन्ति ।** शुक्तिकादौ प्रतीयमानं रजतं न तावत्सत् । बाध्यत्वात् । अर्थक्रियाकारित्वाभावाच्च । नाप्यसत् । प्रतीयमानत्वात् । नापि सदसत् । तस्यैव तत्रैव सत्त्वासत्त्वयोर्विरुद्धत्वात् । किंत्वनिर्वचनीयम् । न च तत्र मानाभावः । सत्त्वासत्त्वानुपपत्तेरेव मानत्वात् । सत्त्वानुपपत्तौ असत्त्वस्य, असत्त्वानुपपत्तौ सत्त्वस्यैव तदुभयानुपपत्तौ तदुभयविलक्षणत्वरूपानिर्वचनीयत्वस्यावर्जनीयत्वात् इति ।

ते स्थूलदृश्रान्तः । तन्मते अनिर्वचनीयस्यापि घटादेः प्रतीयमानदेशकालादिषु सत्त्वेन प्रतीयमानदेशादिष्वसत्त्वमभिधाय अनिर्वचनीयत्वाभिधानायोगात् । प्रतीयमानदेशकालादिसत्त्वरूपव्यापकाभाववति व्याप्यस्यानिर्वचनीयत्वस्यायोगात् । न च तत्र व्यापकम् । देशकालसंबन्धिनोः सत्त्वनियमात् । न मया, प्रतीयमानं रजतं न सदिति तस्याधिष्ठानगतत्वं निषिध्यते । प्रातिभासिकत्वाङ्गीकारात् । अपि तु पारमार्थिकसद्वैलक्षण्यमुच्यते । ततश्चानिर्वचनीयत्वं नानुपपन्नमिति चेन्न । पारमार्थिकवैलक्षण्यस्य शुक्तिरजतगतब्रह्मज्ञानेतरबाध्यत्वानुपपादकत्वेनावक्तव्यत्वात् । प्रतीयमानस्य पुरोवर्तिनि विद्यमानत्वाविद्यमानत्वयोरेव प्रसक्तत्वात् देशकालसंबन्धित्वातिरिक्तस्य पारिभाषिकस्य पारमार्थिकसत्त्वस्याप्रसक्तत्वेन रजतं न सदिति तन्निषेधायोगाच्च ।

यदपि नासत् प्रतीयमानत्वादिति । तदपि न । असद्वैलक्षण्यज्ञानान्यथानुपपत्त्या असतोऽपि ज्ञायमानत्वात् प्रतीयमानत्वासत्त्वाभावयोः सहचाराभावेनाविरुद्धत्वात् । असतः प्रतीयमानत्वेऽपि अपरोक्षप्रतीत्यभावात् तेनासत्त्वाभावः साध्यत इति चेत् । न । शाब्दभ्रमविषयस्य प्रमाणाभावेनानिर्वचनीयत्वाभावापातात् । असतः सत्त्वेन प्रतीत्ययोगात् तयाऽसत्त्वं निषिध्यत इति चेत् । अत्र वक्तव्यम् । असतः सत्त्वेन प्रतीत्यभावे किं कारणमिति । सत्त्वाभाव इति वदन् श्लाघनीयप्रज्ञः । शुक्तिकाया रजतात्मकत्वाभावेऽपि तदात्मकतया प्रतीयमानत्वदर्शनात् । एतेन सत्त्वासत्त्वानुपपत्तिरेवानिर्वचनीयत्वे मानमिति परोक्तं निरस्तम् । असत्त्वानुपपत्तेरसिद्धत्वात् ।

6

किं च प्रतीयमानस्य रजतस्यासत्त्वाभावे इदं रजतमिति ज्ञानं विभ्रमो न स्यात्। प्रमा च स्यात्। घटादिप्रत्ययवत् अनिर्वचनीयार्थविषयकत्वात्। न हि संभवति ज्ञानेन विषयीकृतार्थस्य न बाधोस्ति। भवति च ज्ञानमप्रमा। न तु प्रमेति। नास्त्यत्र रजतमिति बाधो दृश्यत इति चेत्। अत्र वक्तव्यम्। यदा यत्र रजतं गृहीतं तदैव तत्र रजताभावो विषयीक्रियते। उत कालान्तरे। नाद्यः। तस्य तदा प्रातिभासिकसत्त्वाङ्गीकारेण बाधबुद्धरेव घटवति घटाभावबुद्धेरिवाप्रमात्वप्रसङ्गात्। न द्वितीयः। कालान्तरे विषयाभाववेदनस्याबाधत्वात्।

यदपि रजतस्य प्रातिभासिकसत्त्वाभिधानम् तदपि न। अनित्यनिष्ठसत्त्वस्य सकारणकत्वव्याप्तत्वेन प्रकृते च कारणाभावेन सत्त्वायोगात्। अविद्यैवोपादानमिति चेत्। न। आरोपितस्य सर्वस्याप्य-विद्यैवोपादानमिति आरोप्याणां रजतघटादीनां वैरूप्याभावप्रसङ्गात्। अदृष्टादिकारणान्तरवैरूप्या-द्वैरूप्यमिति चेत्। न। तस्य सत्त्वसिध्युत्तरकालं कल्प्यत्वात्। कुतः प्रमाणादस्य प्रातिभासिकत्वं सिद्धम्। किमिदं रजतमिति विज्ञानात्। उत विज्ञानान्तरात्। नाद्यः। भ्रमस्यार्थव्यवस्थापकत्वा-भावात्। प्रातिभासिकसत्त्वाविषयत्वाच्च। विषयत्वे च प्रवृत्त्यभावापातः। प्रातिभासिकं नार्थक्रिया-सूपयुज्यत इति निश्चयात्। न द्वितीयः। ज्ञानान्तरस्य तदविषयत्वात्।

किं च सदसद्विलक्षणत्वमनिर्वचनीयस्य लक्षणमिति, सास्नादिमति पिण्डे गोशब्दव्यवहारदर्शनात् सास्नादिमत्त्वस्य गोलक्षणत्ववत्, व्यवहारदर्शनात् कल्प्यते। आहोस्वित् पुरन्दरादिदेवानां वज्रहस्त-त्वादिवत्, श्रुतिबलात् कल्प्यते। नाद्यः। घटादिष्वनिर्वचनीयमिति व्यवहारस्य लोकवेदयोरभावात्। अत एव न द्वितीयः। तथा श्रुतेरनुपलम्भात्।

किं चेदं रजतस्य बाध्यत्वम्। यद्बलात् सत्त्वं निषिध्यते। ज्ञाननिवर्त्यत्वमिति चेत्। किं ज्ञानेन ध्वंसो निवृत्तिरित्युच्यते। उतासत्त्वावेदनम्। नाद्यः। सत एव ध्वंसनियमेन ध्वंसेन सत्त्वाभावसाधनस्य विरुद्धत्वात्। ध्वंसस्य पारमार्थिकसत्त्वातिरिक्तसत्त्वव्याप्तत्वेऽपि पारमार्थिकत्वेन व्याप्त्यभावात् ध्वंसेनापारमार्थिकत्वसाधनं न विरुद्धमिति चेत्। न। सत्त्वेषु पारमार्थिकव्यावहारिकत्व-प्रातिभासिकत्वविभागस्याप्रामाणिकत्वात्। न द्वितीयः। अनिर्वचनीयत्वाभावापातात् ॥ छ ॥

इति **मायावाद्युक्तानिर्वचनीयख्यातिभङ्गः** ॥

**मणिकारस्तु**। इदं रजतमिति विज्ञानं सन्मात्रविषयकम्। रजतशुक्तिरजततादात्म्यानां शुक्ति-रजतत्वसंसर्गाणां च सत्यत्वात्। न च सन्मात्रविषयकत्वे भ्रमत्वानुपपत्तिः। तदभाववति तत्प्रकारक-त्वस्यैव भ्रमत्वरूपत्वात्। तस्य च सन्मात्रविषयत्वाविघातकत्वादित्याह।

स स्थूलदृश्या । तादात्म्यारोपपक्षे भासमानस्य शुक्तिरजतप्रतियोगिकतादात्म्यस्यासत्त्वेन भ्रमस्य सन्मात्रविषयकत्वाभावात् । न च रजतनिष्ठरजततादात्म्यमेव भासते न तु शुक्तिरजतप्रतियोगिकमिति वाच्यम् । शुक्तिकायां रजतार्थिनः प्रवृत्त्यभावप्राप्तेः । रजतनिष्ठप्रामाणिकरजततादात्म्यस्य शुक्तौ प्रतीयमानत्वात्प्रवृत्तिरुपपन्नेति चेन्न तर्हि तादात्म्यं संसर्गः शुक्तौ भासते । अद्धेति चेत् । स किं सन्वाऽसन्वा । आद्ये शुक्तिकायाः रजतत्वापत्तिः । द्वितीये कथं सन्मात्रविषयता । किं च रजत-निष्ठमेव रजततादात्म्यं शुक्तौ प्रतीयत इति किं प्रतीतिबलादङ्गीक्रियते उतैवमेव वा । न द्वितीयोऽति-प्रसङ्गात् । आद्येऽपि किमेतत्प्रतीतिबलात् अङ्गीक्रियते । उत प्रतीत्यन्तरबलात् । नाद्यः । भ्रान्तेर-व्यवस्थापकत्वात् । देशान्तरसत्त्वावगाहित्वाच्च । तथात्वे वा देशान्तर एव प्रवृत्तिः स्यात् न स्याच्च शुक्तिकायां प्रवृत्तिः । न द्वितीयः । तदभावात् । मानाभावादेव प्रतीयमानरजतत्वस्य तत्संबन्धस्य वा देशान्तरे सत्त्वं परास्तं वेदितव्यम् । किं च सन्मात्रविषयकत्वे भ्रम एव न स्यात् । विषयबाधा-भावात् ।

यदत्रोक्तं तदभाववति तत्प्रकारकत्वे भ्रमत्वमुपपन्नं इति । तन्न । बाधाभावे प्रमात्वस्यावर्जनीयत्वेन भ्रमत्वस्य पारिभाषिकत्वापातात् । नेदं रजतमितिविज्ञानस्य निर्विषयत्वापाताच्च । शुक्तिरजत-रजतत्व-रजतत्वसंसर्गाणां सत्त्वेन तन्निषेधस्य विषयत्वायोगात् । अन्यस्याप्रसङ्गात् । किं चास्य विज्ञानस्य कथं तदभाववति तत्प्रकारकत्वरूपं भ्रमत्वम् । घटपटाविति समूहालम्बनवत् इदंत्वरजतत्ववतोरिदंरजतयोरेव इदंत्वरजत्वप्रकारकत्वात् । न च तादात्म्यं प्रकार इति वाच्यम् । भासमानवैशिष्ट्यप्रतियोगिनस्तस्या-प्रकारत्वात् । किं च संबन्धिनावविषयीकृत्य संबन्धग्रहस्य क्वाप्यदर्शनेन इदं रजतमिति विज्ञानस्य रजतरजतत्वसंसर्गाविषयकत्वासंभवान्न परोक्तसंसर्गारोपपक्षो युक्तः । नेदं रजतमिति प्रतीतेर्निर्विषयत्वा-पाताच्च । विषयाणां इदंरजतत्वसंसर्गाणां सत्त्वेन निषेधायोगात् । शुक्तिरजतत्ववैशिष्ट्यस्यासत्त्वात् भानं न । अपि तु रजतनिष्ठस्य सत्यसंसर्गस्यैव भानमिति पक्षे इदं रजतमिति विज्ञानं तदभाववति तत्प्रकारकं च न स्यात् । शुक्तिकारजतत्ववैशिष्ट्यस्याभासमानत्वात् । भासमानान्यनिष्ठवैशिष्ट्यप्रति-योगित्वेन तदन्यप्रकारकत्वायोगात् । अन्यथैमौ घटपटाविति समूहालम्बने प्रतीयमानयोर्घटत्वपटत्वयोः पटघटप्रकारत्वापातो दुर्वारः ॥ छ ॥ **इत्यन्यथाख्यातेः मण्युक्तसन्मात्रविषयत्वभङ्गः ॥**

ननु यदि प्रतीयमानं रजतं तत्तादात्म्यं च रजतत्वं तद्वैशिष्ट्यं च प्रमाणाभावान्न देशान्तरे सत् । तर्हि पुरोवर्तिप्रदेशेऽप्यसत्त्वादत्यन्तासदेव स्यात् । न च तद्युक्तम् । इदं रजतमिति प्रत्ययानु-

त्वादप्रसङ्गात् । कारणाभावात् । आरोप्यमाणाधिष्ठानयोः सादृश्यं हि भ्रमकारणम् । अन्यथा शुक्तिकायां रजताद्यारोपः वल्मीके घटाद्यारोप इत्यादिनियमो न स्यात् । शुक्तिकायां घटारोपः वल्मीके च रजतारोपः स्यात् । न चासत्त्वेऽपि सादृश्यमुपपन्नम् । शुक्तिसादृश्यस्य चाकचिक्यरूपधर्मस्य धर्मिसत्तासापेक्षत्वेन असद्धर्मत्वासंभवात् इति चेदुच्यते । चाकचिक्यस्यारोप्यनिष्ठत्वाभावेऽपि आरोप्यरजतप्रतियोगिकसादृश्यस्याधिष्ठाने सत्त्वेन शुक्तिकायां रजताद्यारोपो नान्यस्येत्युपपन्नो नियमः । इदमेव हि सादृश्यप्रतियोगित्वं यत्तेनायं सदृश इति ज्ञानजनकीभूतज्ञानोल्लिख्यमानशब्दविषयत्वम् । तादृशं च ज्ञानं रजतमित्यादि ज्ञानम् । तेनोल्लिख्यमानः शब्दो रजतादिशब्दः । तद्विषयत्वं च सत्यरजतादाविव असत्यरजतादावप्यस्ति । विषयत्वस्य धर्मिसत्तानिरपेक्षधर्मत्वात् । न तद्घटादाविति न शुक्त्यादौ घटाद्यारोपः । एवं रजतं रजतान्तरेण सदृशमिति ज्ञानजनकीभूतज्ञानोल्लिख्यमानशब्दविषयत्वस्य सद्भावात् । प्रधाननिष्ठसादृश्यप्रतियोगित्वमप्यारोप्यस्येत्थम् । नन्वसच्चेदारोप्यं किं प्रधानेन किमधिष्ठानप्रधानयोः सादृश्येन वा कृत्यं इति चेत् । उच्यते । इदं रजतमित्यादिविभ्रमः रजतादिशब्दोल्लेखीति तावदविवादः । अज्ञातरजतशब्दवाच्यस्य पुरुषस्य इदं रजतमिति रजतशब्दव्युत्पत्तिग्राहकाभावदशायां रजतशब्दोल्लेखिज्ञानादर्शनेन तच्छब्दोल्लेखिभ्रमसिद्धये रजतशब्दवाच्यतया प्रागनुभूतपदार्थस्मरणमावश्यकम् । तच्चाधिष्ठानप्रधानसादृश्यमन्तराऽनुपपन्नमिति तदप्यावश्यकमिति । न च प्रधानस्यैवारोपः न तु तच्छब्दवाच्यस्यासत इति वाच्यम् । रजतान्तरमजानतः स्वगेहगतरजतमात्रं जानतः शुक्तिकाशकले रजतारोपाभावप्रसङ्गात् । प्रधानाधिष्ठानयोर्भेदग्रहस्य जागरूकत्वात् । प्रधानस्य प्राप्तत्वेन प्रवृत्त्यनुपपत्तेश्च । तत्किं आरोप्यमाणं सर्वत्रात्यन्तासदेव । उच्यते । यत्रारोप्यमधिष्ठानसन्निहितं तत्र सदप्यारोप्यं भवति । यथा दूरस्थयोश्चूतपनसयोः एक एवायं चूत इति । अत्र दूरस्थयोश्चूतपनसयोः एकत्वं च तत्त्वं च विपर्यीक्रियते । तत्र चूतत्वं पनसे आरोप्यमाणमपि सदेव । नात्यन्तासत् । अयं चूत इति प्रत्ययस्य चूतांशेऽपि प्रमात्वाभावापातात् । न च तदिष्टं बाधाभावात् । एवं रङ्गरजतयोः इमे रजते इति समूहालम्बनज्ञाने आरोप्यमपि रजतत्वं सदेवेत्यूह्यम् । न चारोप्यस्य सत्यत्वे भ्रमत्वाभावापातः । अत्यन्तासतः संसर्गस्य विपर्यीकरणेन भ्रमत्वसंभवात् ॥ **इत्यभिनवान्यथाख्यातिनिरूपणम् ॥ श्रीरस्तु ॥**

प्रमा द्विविधा । अपरोक्षा परोक्षा चेति । अपरोक्षा पुनर्द्विविधा । नित्यानित्यभेदात् । नित्या ईश्वरादीनां स्वरूपात्मिका । सा च स्वरूपेन्द्रियैरभिव्यज्यते । यद्यपि सा शब्दादिभिरप्यभिव्यज्यते । अन्यथा ईश्वरं प्रति मुक्तान् प्रति च शब्दव्यवहारवैफल्यं स्यात् । तथाऽपि न तेषां स्वातन्त्र्येण

तदभिव्यञ्जकता । किं तु स्वरूपज्ञानाभिव्यञ्जकस्वरूपेन्द्रियसहकारितैव । न च शब्देन विनाऽपि स्वरूपज्ञानाभिव्यञ्जकस्य स्वरूपेन्द्रियस्य न तदपेक्षेति वाच्यम् । स्वरूपेन्द्रियस्य तदपेक्षावैधुर्येऽपि तत्साध्याभिव्यक्तिं प्रति प्रयोजकस्य शब्दादेः सहकारिताऽनपायात् । तद्यथा गुरुतरभारोद्वहनादौ स्वत एव समर्थं प्रति साचिव्यमाचरतः सहकारित्वम् । न च स्वरूपेन्द्रियमात्रसाध्यस्वरूपज्ञानाभिव्यक्तौ शब्दादीनां प्रयोजकत्वमेव नेति वाच्यम् । एकेनैव चक्षुषा जायमाने घटज्ञाने चक्षुरन्तरस्यापि हेतुत्वदर्शनात् । न च परोक्षज्ञानहेतोः शब्दादेः अपरोक्षज्ञानाप्रयोजकता ॥ अत्र घट इति वाक्यप्रयोगवेलायां इन्द्रियसंप्रयोगे उभाभ्यां मिलित्वा अपरोक्षज्ञानजननदर्शनात् । न च तत्र शब्दस्याजनकता । शब्दप्रयोक्तारं प्रति प्रत्युत्तराभावप्रसङ्गात् । न हि परोक्तशब्दः न बोधकः, प्रत्युत्तरं च ददातीति संभवति । अतिप्रसङ्गात् । न चैवं सति संशयोत्तरप्रत्यक्षेऽपि व्याप्यदर्शनप्रत्यक्षयोर्मिलितयोर्जनकत्वसंभवात् अनुमितिसामग्रीतः प्रत्यक्षसामग्र्याः बलवत्त्वाभिधानं न स्यादिति वाच्यम् । यत्रोभयोरपि कारणत्वं, प्रत्यक्षसामग्री बलवत्वादपरोक्षज्ञानं जनयति, अनुमितिसामग्री दुर्बलत्वात् अनुमितिमजनयित्वा प्रत्यक्षजन्ये विज्ञाने हेतुर्भवतीत्यङ्गीकारात् । अनित्या चतुर्मुखादीनाम् । मनोवृत्तिरूपा परोक्षाऽपि द्विविधा । अनुमितिः शाब्दी चेति । तदेवमनित्यप्रमायास्त्रिविधत्वात् । तत्करणमनुप्रमाणं त्रिविधम् । प्रत्यक्षमनुमानमागमश्चेति । उपमानादीनां यथायथमत्रैवान्तर्भावात् । अदुष्टमिन्द्रियं प्रत्यक्षम् । तामसानां स्वरूपेन्द्रियव्यावृत्त्यर्थमदुष्टग्रहणम् । तद् द्विविधम् । स्वरूपं प्राकृतं चेति । स्वरूपेन्द्रियं साक्षीत्युच्यते । प्राकृतमपि षड्विधम् । घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोभेदात् । आत्मस्वरूपं तद्धर्माः अविद्या मनस्तद्वृत्तयश्च ज्ञानसुखाद्याः कालोऽव्याकृताकाशश्चेत्याद्याः साक्षिणो विषयाः । गन्धः तद्विशेषाः घ्राणस्य । रसस्तद्विशेषाश्च रसनस्य । महान्ति रूपवन्ति द्रव्याणि केचिद्गुणाः कर्माणि जातयश्चक्षुस्त्वचोः । वायुस्पर्शोऽपि त्वचो विषयः । शब्दः श्रोत्रस्य । एतेषां पञ्चानां मनोऽनधिष्ठितत्वं काचकामलादयश्च दोषाः । मनसस्तु बाह्येन्द्रियाधिष्ठानेनैते सर्वे विषयाः । स्वातन्त्र्येण स्मरणसाधनं मनः । तस्य रागादयो दोषाः । एतेषामिन्द्रियाणां स्वस्वविषयप्रतियोगिकाभावोऽपि विषयः । सर्वेषामेषां स्वस्वविषयैर्भावाभावैर्मुख्य एव संबन्धः सन्निकर्षः । साक्षात्कारत्वावच्छिन्ना प्रमा प्रत्यक्षप्रमा । साक्षात्कारत्वं प्रति इन्द्रियजन्यत्वमिव इन्द्रियाभिव्यक्तत्वमपि प्रयोजकमिति नेश्वरप्रत्यक्षाव्याप्तिः ॥ **इति स्वमते प्रत्यक्षप्रमानिरूपणम् ॥**

**श्रीरस्तु ॥** ननु शब्दः श्रोत्रस्य विषय इति यदुक्तं तदयुक्तम् । सन्निकर्षासंभवात् । तथा हि । न तावच्छ्रोत्रस्य गमनेन संभवति । तस्यामूर्तस्य गत्यभवात् । नापि शब्दस्यागमनेन । स हि न तावच्छंखादिकमाश्रयं परित्यज्याऽऽगन्तुमलम् । गुणत्वात् । नापि शङ्खाद्यागमनेन श्रोत्रस्य प्रत्यासत्तिः ।

तदनुपलम्भात् । न च शब्दान्तरोत्पादपरंपरया । गुणस्य स्वाश्रयसमवेतस्थिते स्वाश्रयस्थिते वा गुणेऽसमवायिकारणत्वात् । न च शब्दस्याकाश एव समवायिकारणम् । शङ्खादीनि तु निमित्तमात्रम् । ततश्चाकाशसमवेतः शब्दः वीचीतरङ्गन्यायेन शब्दान्तरमारभते । सोऽप्येवं सोऽप्येवमिति कर्णशष्कुलीप्रदेशे शब्दो जायते । स सन्निकृष्टत्वात् श्रोत्रेण गृह्यत इति वाच्यम् । वीचीतरङ्गन्यायेन अनेकशब्दोत्पत्तरप्रामाणिकत्वात् । एवमपि सन्निकर्षानुपपादनेन शङ्खादिशब्दग्रहानुपपादकत्वाच्च । शङ्खादीनां शब्दसमवायिकारणत्वेन निमित्तत्वाभिधानायोगाच्च । न च शब्दस्य शङ्खादिगुणत्वे मानाभावः । शङ्खे शब्दः, वीणायां शब्दः, इति शङ्खाद्याश्रिततया शब्दस्य प्रतीतेः । "शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः । एते गुणाः पञ्च भूमेः सर्वेभ्यो गुणवत्तराः । शब्दः स्पर्शश्च रूपं च रसश्चापि द्विजोत्तम । अपामेते गुणा ब्रह्मन् कीर्तितास्तव सुव्रत । शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः । शब्दः स्पर्शश्च वायौ तु शब्दश्चाकाश एव तु ॥' इति महाभारते उक्तेश्च । 'विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् । परान्वयाद्रसस्पर्शरूपशब्दगुणान्वित' इत्यादिना श्रीमद्भागवते पृथिव्यादीनां शब्दगुणत्वोक्तेश्च । ततश्च सर्वथा शब्दस्य श्रोत्रसन्निकर्षासंभवात् कथं श्रोत्रेण शब्दग्रह इति चेत् । उच्यते । यत्तावदुक्तं शब्दस्य पृथिव्यादिपञ्चभूतगुणत्वं तत्तथैव । तथाऽपि न सन्निकर्षासंभवः । शब्दस्यैवागमनेन सन्निकर्षसंभवात् । न चाश्रयं परित्यज्य गुणस्याऽऽगमनमदृष्टचरमिति वाच्यम् । पुष्पादिगन्धेषु प्रभायां च तद्दर्शनात् । प्रमाणसिद्धत्वाद्भवतु गन्धादीनां आश्रयपरित्यागेनान्यत्रगमनम् । इह तु प्रमाणाभावान्नाश्रयपरित्यागेनान्यत्र गमनमिति चेत् न । "तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा । रसा दिशः खं प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशङ्कये"ति पूतनाशब्दस्य । तथा "प्रगायतीनामरविन्दलोचनं गोपाङ्गनानां दिवमस्पृशद्ध्वनिः । दध्नश्च निर्मन्थनशब्दघोषः प्रलीयते येन दिशाममङ्गलम् ।" इति गोपाङ्गनामथनशब्दस्य तथा "तदैव तस्मिन् निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत् । यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे" इति नृसिंहनिनादस्य च दूरगमनोक्तेः । न च यदिशब्दस्यान्यत्र गमनं वास्तवं तर्हि काशीशब्दः काश्मीरं गच्छेत । इति वाच्यम् । कारणशक्त्यनुसारेण कार्यभूतः शब्दो धावति । तद्यथा बलवता पुरुषेण निक्षिप्तः पाषाणः तद्बलानुसारेण दूरं गच्छति । दुर्बलेन निक्षिप्तस्तद्बलानुसारेण तथैत्यङ्गीकारात् । नन्वेवमपि यदि शब्दः पूर्वदेशस्थः पश्चिमदेशं धावति । तर्हि तत्पूर्वदेशस्थैः तद्दक्षिणोत्तरस्थैश्च शब्दो नोपलभ्येत । तस्यान्यत्रगतत्वेन तेषु देशेष्वभावात् इति चेत् । स्यादयं दोषः । यदिशब्दो गोधावत् सर्पवत् गच्छतीति ब्रूमः । अपि तु दीपप्रभावत् सूर्यप्रभावत् युगपदेव सर्वदेशेषु व्यापकः सन्नेव गच्छतीति ब्रूमः । पूर्वपश्चिमोत्तरदक्षिणभागस्थैर्भेरीशब्दो मया श्रुत इत्यनुभवात् । न चाद्यशब्दस्यैव सर्वत्र गमने

सर्वैरपि तारतयैव श्रूयेत न मन्दतयेति वाच्यम् । दूरगमनेन क्षीणशक्तेः शब्दस्य, मन्दत्वेन श्रवणस्यैवोचितत्वात् । तद्यथा पुमान् दूरगमनेन म्लानवदनो दृश्यते यथा वा प्रभा दीपाश्रयतो दूरगमनेनास्पष्टा दृश्यते । प्रत्युतायं दोषः शब्दसन्तानवादिन एव स्यात् । शब्दस्य सजातीयारम्भकत्वनियमेन तारशब्दस्य मन्दशब्दारम्भकत्वायोगात् । अन्यथा भेरीशब्दो वीणाशब्दाऽऽरम्भकः स्यात् । ननु श्रोत्रस्य गत्वाग्राहित्वमेवोचितम् । पूर्वदेशे मृदङ्गः शब्दायत इति देशावच्छिन्नतया शब्दानुभवात् । न च तच्छ्रोत्रस्य गमनाभावे संभवति । शब्दस्याऽऽगमनेन सन्निकर्षसंभवेऽपि देशस्यानागतत्वेन तेन सन्निकर्षासंभवात् । न चामूर्तत्वाच्छ्रोत्रस्य गमनासंभवः । श्रोत्रस्य 'तैजसानीन्द्रियाण्याहुरि'ति तैजसत्त्वाङ्गीकारात् । आकाशात्मकत्वप्रसिद्धिस्तु भूताकाशेनोपचितत्वात् । पृथिव्यादिभागैरुपचयसद्भावेऽपि विशिष्याकाशात्मकत्वव्यपदेशः आकाशभागभूयस्त्वात् इति चेत् । न । श्रोत्रस्य द्रव्यग्राहकत्वाभावेन तत्सन्निकर्षाय दूरगमनाङ्गीकारायोगात् । अन्यथा रसनादेरपि गत्वाग्राहित्वप्रसङ्गो दुर्वारः स्यात् । कथं तर्हि दिङ्निश्चयः इति चेत् । न । प्रवृत्तिनिवृत्त्याद्यनुकूलादृष्टोपगृहीतस्येन्द्रियस्य दिग्ग्राहकत्वेन तादृशश्रोत्रेणैव दिङ्निश्चयोपपत्तेः । तद्यथा । वर्तमानमात्रग्रहणशीलेनापि चक्षुषा योगजधर्मसहकृतेन अतीतानागतार्थनिश्चयः । ननु शब्दागमनेन श्रोत्रसन्निकर्षव्युत्पादनमयुक्तम् । 'चक्षुर्वच्छ्रोत्रस्य गत्या सन्निकर्षोपपत्तेरि'ति सुधया 'चक्षुर्वच्छ्रोत्रस्यैव गमनोपपत्तेरि'ति तत्त्वप्रकाशिकया च विरुद्धत्वादिति चेत् न। मनुष्यादिश्रोत्रस्य गत्यभावेऽपि वराहश्रोत्रस्य गतिसद्भावेन तयोस्तद्विषयत्वात् । अस्ति तावत् गृध्रस्य दूरदर्शनमिव वराहस्य दूरस्थशब्दश्रवणं असाधारणधर्मः । न चासौ श्रोत्रस्य गमनमन्तरा युज्यते । असन्निकृष्टशब्दग्राहित्वे अतिप्रसङ्गात् । मनुष्यवत् आगत्यसन्निकृष्टशब्दग्राहित्वे च मनुष्यादिसाधारण्येनासाधारणत्वाभावप्रसङ्गः । ततो मनुष्यचक्षुषः शब्दग्राहकत्वाभावेऽप्युरगचक्षुषः तद्ग्राहित्ववत् अन्यश्रोत्रस्य गमनसामर्थ्याभावेऽपि वराहश्रोत्रस्य गमनसामर्थ्यमभ्युपेयम् । अत एवोपपत्तेरित्युक्तम् । ननु वीचीतरङ्गन्यायेन शब्दपरंपरोत्पादस्याप्रामाणिकत्वाभिधानमयुक्तम् । तत्त्वनिर्णयटीकाविरुद्धत्वात् । तथा हि । तत्र 'वक्तृप्रयत्नप्रेरितो वायुः उरःप्रभृतिभिः स्थानैः संयुक्तः तत्स्थानसंयुक्तांशे ध्वनिलक्षणं शब्दमुत्पादयति । स च देशान्तरे प्रतिशब्दन् । यस्तु कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे समुत्पन्नस्तद्गुणो ध्वनिः तस्मिन्व्यज्यमानो वर्णः श्रोत्रेण गृह्यते ।' इति शब्दपरंपरोत्पादस्य सिद्धान्तत्वाभिधानात् इति चेत् । स्यादयं दोषः । यदि शब्दपरंपरोत्पादः सिद्धान्तत्वेनाभिहितः स्यात् । न चैवम् । किं नाम वर्णानां नित्यत्वे सर्वदोपलब्धिप्रसङ्ग इति परेण चोदिते तत्परिहाराय व्यञ्जकध्वनिश्रवणसद्भावे गृह्यन्ते, तदभावे न गृह्यन्ते इति स्वसिद्धान्तं वक्तुं, किं ध्वनिग्रहणार्थं स्वसिद्धान्तोपपादनायासेन, परसिद्धान्तालम्बनेन ध्वनिश्रवणव्युत्पादनेनैव चारितार्थ्यादिति भावेन पराभिप्रेत एव वर्णपरंपरोत्पादनप्रकार उक्तः ।

अवश्यं चैतदेवं विज्ञेयम् । अनेकशब्दोत्पादे प्रमाणाभावात् । न हि काचिच्छ्रुतिः स्मृतिर्वा शब्दानेकत्वं गमयति । प्रत्युत देवदत्तध्वनिः श्रुत इत्यनुभवः देवदत्तवक्त्रोत्पन्नस्य श्रूयमाणतादात्म्यं गमयति । न च ध्वनिश्रवणान्यथानुपपत्त्या अनेकशब्दोत्पादकल्पना । श्रवणस्य शब्दागमनेनैवोपपादितत्वात् । कथं च श्रूयमाणः शब्दो भेरीशब्द इति प्रतीतिः स्यात् । श्रूयमाणस्य तद्जन्यत्वात् । न च साजात्यविषयिणीयं प्रतीतिः । भेरीशब्दस्य कदाऽप्यननुभूतत्वेन तत्साजात्यग्रहायोगात् । कथं वा इदं रजतमिति विभ्रमे प्रतीतस्य रजतस्य देशान्तरगतत्वे प्रमाणाभावेन अत्यन्तासत्त्वं अङ्गीकुर्वन् टीकाकारः प्रमाणविधुरानेकशब्दोत्पादमङ्गीकुर्यात् । कथं वाऽयं 'स्वधिष्ण्योपगतं त्वजादय'इति प्रमाणसिद्धं शब्दस्याऽऽगमनं नाङ्गीकुर्यात् । कथं वा शब्दश्रवसोः सन्निकर्षाय इह शब्दोत्पादपरंपरया श्रोत्र एव शब्दोत्पादमङ्गीकृत्य सुधातत्वप्रकाशिकयोः श्रोत्रस्य गमनमभिदध्यात् । कथं वा घटादीनां बौद्धोक्तां प्रतिक्षणोत्पत्तिं पराकुर्वन् शब्दस्य तामङ्गीकुर्यात् । कुलालकृतो घटो मया दृष्ट इति पूर्वोत्तरक्षणवर्तिघटतादात्म्यानुभववत् भेरीशब्दो मया श्रुत इति शब्दतादात्म्यग्राह्यनुभवस्यापि आदरणीयत्वात् । अन्यतरपक्षपाते कारणाभावात् । तत्किं शब्दः शब्दान्तरस्य सर्वथा नोत्पादकः । मैवम् । गुहादौ प्रतिध्वन्युत्पादस्य सर्वानुभवसिद्धत्वात् । अत एव किञ्चिदानन्तर्येणोत्पन्नः शब्दः श्रूयते इति । शब्दो नास्तीति ज्ञानं च श्रोत्रजन्यमेव । सन्निकर्षसद्भावात् ॥ छ ॥ **इति शब्दस्य श्रोत्रविषयत्वसमर्थनम् ॥**

**श्रीरस्तु ॥ मणिकारस्तु** । इन्द्रियजन्यं ज्ञानं जन्यप्रत्यक्षम् । प्रत्यक्षविशेषे सन्निकर्षविशेषो हेतुरनुगत एव । संयोगेन द्रव्यग्रहः । संयुक्तसमवायेन रूपकर्मगोत्वादेर्ग्रहणम् । संयुक्तसमवेतसमवायेन रूपत्वादेः । समवायेन शब्दस्य । समवेतसमवायेन शब्दत्वादेः । विशेषणतया शब्दाभावस्य । इन्द्रियसंबद्धविशेषणतया घटाभावसमवायादेः । योग्यसन्निकर्षादेतद्ग्रहो न तु सन्निकर्षमात्रात् इत्याह । तन्न । द्रव्यग्रहस्य जातिविषयत्वनियमेन तदुत्पत्त्यर्थं संयोगवत् संयुक्तसमवायस्याप्यपेक्षितत्वेन संयोगेन द्रव्यग्रह इत्युक्त्ययोगात् । द्रव्यग्रहे संयुक्तसमवायस्य कारणत्वमङ्गीकृत्य द्रव्येणेन्द्रियस्य संयोग एव प्रत्यासत्तिरित्युच्यते इति चेत् न । समवायस्यालीकत्वेन संयोगेनैव गुणकर्मजातीनां गुणकर्मगतजातीनां शब्दाभावयोश्च ग्रहणसंभवेन क्वचिद्द्रव्येण संयोगः प्रत्यासत्तिः अन्येन त्वन्य इति कल्पनाऽयोगात् । न च द्रव्ययोरेव संयोग इति नियमात् गुणकर्मादीनां न संयोगः संभवतीति वाच्यम् । प्रमाणाभावेन नियमस्यालीकत्वात् । यच्चोक्तं संयुक्तसमवायेन द्रव्यगतगुणकर्मादिग्रह इति । तन्न । घ्राणेन वायूपनीतकेतक्यादिगन्धग्रहे जलसौरभ्यग्रहे च त्वचा वायूपनीतशीतोष्णस्पर्शग्रहे चक्षुषा स्फटिकलौहित्यग्रहे च संयुक्तसमवायाभावात् । घ्राणादिना सन्निकृष्टे वाय्वादौ गन्धादीनामसमवायात् ।

ननु गन्धादीनां वाय्वादौ असमवेतत्वेऽपि घ्राणादिसंयुक्तपुष्पाद्यवयवेषु समवेतत्वेन, लौहित्यस्य च चक्षुः-संयुक्तस्फटिकोपरिगतजपाकुसुमप्रभायां समवेतत्वेन, सर्वत्रापि गुणग्रहे संयुक्तसमवायो नानुपपन्न इति चेन्न । न । वायूर्मीनाः पुष्पावयवा इत्यस्य व्याहतत्वात् । अवयवावयविनोस्त्वन्मतेऽयुतसिद्धत्वात् । सुगन्धि जलमिति प्रतीत्यभावप्रसङ्गाच्च । प्रतीतिजनकसन्निकर्षे जलसंयोगस्य प्रवेशात् । यत्संयोगः यद्गुणग्राहकसन्निकर्षे प्रविशति स गुणः तत्समवेतत्वेन प्रतीयत इति नियमात् । पुष्पावयवानामन्यत्र गमने छिन्नपटवत् पुष्पाणां सच्छिद्रत्वप्रसङ्गात् । गुरुत्वे न्यूनतापाताच्च । केतकीगन्धो वायुरिति प्रतीतेर्भ्रान्त-(भ्रम)त्वापाताच्च । अनुभूयमानगन्धस्य केतक्यवयवगन्धत्वेऽपि केतकीगन्धत्वाभावात । अत एव न वायुना तत्तदारम्भकाः नीयन्ते । अपि तु तदनारम्भकाः तदारम्भकसजातीयाः नीयन्त इत्यपि परास्तम् । केतकीगन्धो वायुरिति प्रतीतेर्भ्रमत्वप्रसङ्गस्योक्तत्वात् । संयुक्तसमवायस्य संयुक्तस्वरूपप्रत्या-सत्तित्वेऽपि चक्षुःप्रत्यासत्तित्वाभावात् । न ह्यन्यस्य संबन्धोऽन्यस्य प्रत्यासत्तिः । येन संयुक्तसमवायः चक्षुः-प्रत्यासत्तिः स्यात् ।

संयोगसमवायौ मिलित्वा प्रत्यासत्ती इत्यत्र तात्पर्यमिति चेत् । कथं तर्हि संयुक्तसमवाय इति व्यवहारः । संयोगसमवायाविति भाव्यत्वात् । संयुक्तेति भावे क्तप्रत्ययाङ्गीकारेऽपि द्विवचनस्यावर्जनीय-त्वात्। सर्वो द्वन्द्वो विभाषया एकवद्भवतीति एकवद्भावाङ्गीकारेऽपि 'स नपुंसकमि'ति नपुंसकस्य भाव्यत्वात्। घटे रूपमिति रूपप्रत्ययस्य घटघटत्वरूपरूपत्वतत्समवायविषयत्वेन तदुत्पत्तये संयुक्तसमवायापेक्षावत् संयोगसंयुक्तविशेषणविशेष्यभावसंयुक्तसमवेतसमवायसंयुक्तसमवेतविशेषणविशेष्यभावानामप्यपेक्षासद्भावेन अन्ततो रूपनिर्विकल्पकस्यापि रूपरूपत्वविषयत्वेन गुणादिप्रत्ययस्य संयुक्तसमवायमात्रसाध्यत्वाभावाच्च ।

यत्तु संयुक्तसमवायः न संयोगः, न वा समवायः, उभौ वा, गन्धे इन्द्रिये चावृत्तेः । न चेन्द्रि-येण गन्धस्य परंपरासंबन्धः । परंपराऽपि संयोगसमवायावेव । तत्र विरोध एव । नाधिकोऽपसिद्धान्ता-दितिआशङ्क्य इन्द्रियतत्संयोगतदाश्रयतत्समवायानामेव परंपरासंबन्धत्वात् इति समाधानम् ।

तत्र शङ्का तावदयुक्ता । संयुक्तसमवाये केवलसंयोगत्वस्य केवलसमवायत्वस्य वाऽप्रसक्तत्वेन तद्दूषणवैय्यर्थ्यात् । गन्धे इन्द्रिये चावृत्तित्वस्य गन्धेन्द्रियप्रत्यासत्तित्वाभावसाधकस्य तदर्थं प्रयोज्यत्वेन, संयोगत्वसमवायत्वाभावसाधनायाप्रयोज्यत्वात् । घटसंयोगे तत्समवाये च गन्धेन्द्रियावृत्तित्वेऽपि संयोगत्वस्य समवायत्वस्य च दर्शनात् । केवलसंयोगत्वे समवायत्वे च विरोधसद्भावेऽपि द्वाविमौ संबन्धौ तत्रैकः इन्द्रियवृत्तिः अपरस्तु गन्धवृत्तिः । तौ चोभौ समानाधिकरणत्वात् संभूय गन्धेन्द्रियप्रत्यासत्ती इत्यङ्गीकारे विरोधाभावेन परंपरात्वे विरोधाभिधानायोगाच्च ।

समाधानं चानुपपन्नम् । इन्द्रियस्य प्रत्यासन्नत्वेन प्रत्यासत्तिप्रवेशायोगात् । अन्यथा गन्धस्यापि तत्प्रवेशापत्तिः । यदपि संयुक्तसमवेतसमवायाद्रूपत्वादिग्रह इति । तदपि न । संयुक्तसमवेतनिष्ठस्य समवायस्य इन्द्रियप्रत्यासत्तित्वायोगात् । गुणगतजातिमात्रविषयकप्रतीतेरेवाभावेनाधिकविषयस्य तत्प्रत्ययस्य संयुक्तसमवेतसमवायमात्रसाध्यत्वाभावाच्च ।

यदपि समवायेन शब्दग्रह इति । तदपि न । वर्णात्मकशब्दानां द्रव्यत्वेन श्रोत्रसमवायाभावात् । 'तैजसानीन्द्रियाण्याहुरि'ति वचनात् श्रोत्रस्य तैजसत्वेन अन्यगुणेन शब्देन समवायायोगाच्च । शब्दग्राहकसर्पचक्षुषः शब्देन समवायाभावाच्च । अथ तत्र सन्निकर्षान्तरमङ्गीक्रियते तर्हि इहापि तदस्तु । किं च । समवायेन शब्दग्रहे केरलदेशवासिनः काश्मीरदेशोत्पन्नशब्दग्रहो दुर्वारः स्यात् । शब्दस्याव्याप्यवृत्तित्वेऽपि तत्संबन्धस्य समवायस्य सर्वगतत्वेन सन्निकर्षसद्भावात् । न चायमस्ति नियमः यदवच्छेदेन शब्दोऽस्ति तदवच्छेदेनैव तत्समवायोऽस्तीति । शब्देऽपि शब्दसमवायसद्भावात् । अन्यथा समवायः शब्दश्रवसोः प्रत्यासत्तिर्न स्यात् । उभयानिष्ठत्वात् ।

ननु यस्य शब्दस्य समवायवृत्त्याधारता कर्णसंयोगेनावच्छिद्यते स गृह्यते । यस्य तु कर्णसंयोगात्यन्ताभावेनाधारताऽवच्छिद्यते स न गृह्यते । देशान्तरशब्दाधारतायाः तदत्यन्ताभावेनावच्छिन्नत्वान्न ग्रह इति चेत् न । वीणायां शब्द इति प्रतीत्यभावापातात् । गृह्यमाणशब्दाधारताया उक्तसंयोगात्यन्ताभावावच्छिन्नत्वात् । ननु न गृह्यत एव वीणावच्छिन्नः शब्दः श्रोत्रेण । अपि तु वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श्रोत्रदेशोत्पन्न एव शब्दः श्रोत्रेण गृह्यते । तस्य च परंपरया वीणा कारणमिति । स एव शब्दो वीणायामिति प्रतीयते । तद्यथा सुखं प्रति शरीरस्य परंपरया कारणत्वात् शरीरे सुखमिति सुखं प्रतीयते । सा चेद्भ्रान्तिरियमपि तथाऽस्तु इति चेत् । न । वैषम्यात् । उपपन्ना शरीरे सुखमिति प्रतीतिः । शरीरस्य सुखाधारात्माधारत्वेन परंपरया सुखाधारत्वात् । तद्यथा मंजूषायाः मण्याधारत्वेऽपि तदाधारस्य गृहस्य परंपरया मण्याधारत्वात् गेहे मणिरिति प्रतीतिः । वीणा तु न श्रूयमाणशब्दाधार इति कथं वीणायां शब्द इति प्रतीतिरुपपन्ना भवेत् ।

किं च गव्यूतिव्यवहितभेरीशब्दोत्पत्त्यनन्तरमेव शब्दश्रवणं न स्यात् । स्याच्च बहुकालव्यवधानेन शब्दश्रवणम् । कर्णदेशे शब्दोत्पत्तये बहुक्षणव्यवधानस्यापेक्षितत्वात् । न स्याच्च क्रोशद्वयान्तरितप्रदेशे भेरीशब्दो भवतीति प्रदेशादिनिश्चयः । क्रोशद्वयान्तरितशब्दस्याग्रहणात् । वीचीतरङ्गन्यायेन शब्दोत्पत्तौ प्रमाणाभावाच्च । अन्यथा बौद्धोक्तां प्रतिक्षणं घटाद्युत्पत्तिं को निवारयेत् । अथ तत्र कुलालोत्पन्न एव मया दृष्ट इत्यनुभवबलात् बौद्धोक्ता घटसन्ततिर्नाभ्युपगम्यते । तर्हि भेरीशब्दो मया श्रुत इति प्रतीतिबलात् शब्दसन्तानोऽपि नाभ्युपगन्तव्यः अर्धजरतीयानुपपत्तेः ।

यदत्रोक्तं कर्णावच्छिन्ननभमः श्रोत्रत्वे तेन वीणादिप्रभवशब्दग्रहो न तत्र सन्तानक्रमेणोत्पादं विनेत्यनन्यगतिकनया तत्कल्पनाऽपि प्रामाणिकीति । तदज्ञानमूलम् । श्रोत्रेण वीणावच्छिन्नशब्दग्रहाभावेन सन्तानक्रमोत्पादं विना तद्ग्रहो न संभवतीत्यभिधानस्यायुक्तत्वात् । न हि येन यज्ज्ञानं सर्वथा नोत्पद्यते तत् वस्त्वन्तरविरहप्रयुक्तमित्यभिधानं युक्तिमत् । येनेदं वचनमज्ञानमूलकं न स्यात् । आद्यशब्देन श्रोत्रस्य सन्निकर्षानुपपादकत्वाच्च ।

न मया वीणोत्पन्नशब्दग्रहः शब्दपरंपरोत्पादमन्तरा नोपपद्यत इत्युच्यते । किन्तु वीणाशब्द इत्येवमाकारको ग्रहः शब्दपरम्परोत्पादमन्तरा न संभवतीत्युच्यते ततो नोक्तदोष इति चेत् । न। वीणाशब्दस्य कदाऽप्यननुभूतत्वेन श्रोत्रोत्पन्नशब्दे वीणाशब्द इत्येवमाकारकप्रत्ययायोगात् । न ह्यज्ञातरजतस्येदं रजतमिति प्रत्ययो भवति । येनेह तथा स्यात् ।

किं च शब्देन चेत् शब्द उपपद्येत । तर्हि यदवच्छेदेनाकाशे आद्यशब्दः तदवच्छिन्नाकाश एव द्वितीयः शब्दो भवेत्। द्वितीयशब्दसमवायिकारणप्रदेशावच्छिन्नाकाशेन भेर्यवच्छिन्नाकाशगतस्यासमवायिकारणत्वेनाभिमतस्याद्यशब्दस्य संबन्धाभावात् । न चासंगतस्यैव जनकत्वम् । घटाद्यसंबन्धस्यैव वह्निसंयोगस्य घटादौ पाकजरूपोत्पादकत्वप्रसंगात् । नचावच्छिन्नाकाशयोरैक्यात् समवायः सन्निकर्ष इति वाच्यम् । तादात्म्यप्रयुक्तसमवायस्य तत्राप्रयोजकत्वात् । अन्यथा आद्यशब्देन श्रोत्र एव द्वितीयशब्दोत्पत्तिः स्यात् । उक्तसंबन्धस्य तत्राप्यविशिष्टत्वात् ।

किं च मेघशब्दस्य भूलोकप्राप्तिः युगान्तरेऽपि न स्यात् । यदत्रोक्तं मेघाद्यभिहितसर्वतोगामिमहावायोर्महति देशे संयोगं निमित्तमासाद्य शब्देन सर्वदिग्वर्तिशब्द एक एव जन्यते । निमित्तसंयोगानुरोधित्वात विभुकार्याणाम् । उत्तरोत्तरेणाप्यधिकाधिकदेशे सर्वत एकैक एव शब्दो वीचीतरङ्गवदुत्पद्यते इति तदपि न । क्रियावद्वायुसंयोगस्य सर्वदिक्षु नानात्वेन क्रमभावित्वात् तेन च नानाशब्दोत्पादस्यैवोचितत्वेन चतुर्दिक्षु एकशब्दोत्पादायोगात् । एकदेशवाय्वोः संयोगसमवायिपूर्वदेशसंयोगस्य नष्टत्वात् उत्तरदेशसंयोगस्यानुत्पन्नत्वेन विनष्टवर्तमानोत्पत्स्यमानैः एकमेव कार्यं भवतीत्यस्य प्रमाणविरुद्धत्वात । महत एव शब्दस्योत्पाद इत्यङ्गीकारे एक एव मेघशब्दो भूपर्यन्तः भेरीशब्दो गव्यूतिपर्यन्तः अन्ये तु स्वस्वकारणानुसारेण यथायोगमुत्पद्यन्त इत्यङ्गीकारस्यैवोचितत्वेनानेकशब्दोत्पादो भवतीत्यङ्गीकारस्य व्यर्थत्वात । एकोत्पादासंभव एवानेकोत्पादस्य कल्प्यत्वात् ।

यदपि समवेतसमवायेन शब्दत्वादिग्रह इति । तदपि न । शब्दत्वग्रहस्य समवेतसमवायमात्रनिर्वाह्यत्वाभावात् ॥ छ ॥ **इति मण्युक्तसन्निकर्षभङ्गः ॥**

ननु समवायः अप्रामाणिक इत्ययुक्तम् । तस्य गुणक्रियाजातिविषयकप्रत्यक्षसिद्धत्वात् इति चेत् । न । गुणक्रियाजातिप्रत्ययानां समवायाविषयकत्वात् । **अत्राह मणिकारः ।** गुणक्रियाजातिविशिष्टबुद्धयः विशेषणसंबन्धविषयाः । विशिष्टबुद्धित्वात् । दण्डीति बुद्धिवत् । न चाभावादिविशिष्टबुद्धौ व्यभिचारः । तस्या अपि स्वरूपसंबन्धविषयत्वात् । न चैवमत्रापि तेनैवार्थान्तरम् । यतो गुणक्रियाजातिविशिष्टबुद्धीनां पक्षधर्मताबलेन विषयः संबन्धः सिध्यन् लाघवेनैक एव सिध्यति । स एव समवायो न तु स्वरूपसंबन्धः तत्स्वरूपाणामनन्तत्वात् । संबन्धत्वेनाक्लृप्तत्वाच्च । अथवा विशेषणसंबन्धनिमित्तक इति साध्यम् । हेतौ च सत्यन्तं विशेषणम् । विशेषणसंबन्धश्च कारणत्वेनैकः सिध्यति । लाघवात् । अनुगतकार्यस्यानुगतकारणनियम्यत्वाच्च । न तु स्वरूपसंबन्धः । तेषामनन्तत्वात् । अननुगतत्वाच्च । न चोभयमप्यप्रयोजकम् । विशिष्टसाक्षात्कारस्य संबन्धाविषयत्वे तदजन्यत्वे वा गवाश्वादावपि विशिष्टधीप्रसंगात् ।

यद्वेन्द्रियप्रत्यासत्तित्वेन समवायसिद्धिः । तथा हि । गुणक्रियाजातिसाक्षात्कारः इन्द्रियसंबन्धसाध्यः । जन्यप्रत्यक्षत्वादित्यतः साक्षात्संबन्धबाधे कारणत्वेनेन्द्रियसंयुक्त संबन्धः सिध्यन् पक्षधर्मताबलात् लाघवेनानुगतः समवायः एक एव सिध्यति । अनुगतकार्यस्यानुगतकारणजन्यत्वात् । न तु संयुक्तविशेषणतादिरूपस्वरूपसंबन्धः । तस्य तत्तद्रूपादिरूपत्वेनाननुगतत्वात् इति ।

स स्थूलदृश्वा । विशिष्टबुद्धीः विशिष्टबुद्धित्वेन पक्षीकृत्य विशेषणसंबन्धविषयकत्वसाधनात् । न हि बुद्धेः संबन्धविषयकत्वसिद्धेः पुरा विशिष्टबुद्धित्वं सिद्धम् । येन तद्रूपेण पक्षीकरणमनुपपन्नं न स्यात् । संसर्गमर्यादया विशेषणविशेष्यसंबन्धावगाहिबुद्धेरेव विशिष्टबुद्धित्वात् । ज्ञानविषयस्य ज्ञानवित्तिवेद्यत्वेन ज्ञानं पक्षीकृत्य संबन्धविषयकत्वसाधनायोगाच्च । हेतूकृतस्य विशिष्टबुद्धित्वस्य विशेषणविशेष्यसंबन्धावगाहिबुद्धित्वरूपतया हेतोः साध्याविशेषाच्च ।

**अत्रोक्तं पक्षधरेण ।** अतद्व्यावृत्तिधीजनकबुद्धित्वमेव विशिष्टबुद्धित्वम् । ततश्च न साध्यावैशिष्ट्यमिति । तत्र वक्तव्यम् । किं फलोपहितं अतद्व्यावृत्तिबुद्धिजनकत्वं विवक्षितम् । अथ स्वरूपयोग्यत्वम् । नाद्यः । भागासिद्धेः । विशिष्टज्ञानमात्रस्य तथात्वाभावात् । न द्वितीयः । विशेषणसंबन्धावगाहित्वरूपयोग्यतावच्छेदकरूपापरिचये योग्यत्वस्य दुर्ग्रहत्वात् । व्यावृत्तिधीहेतुत्वमात्रस्य

लक्षणत्वसंभवं अतदितिविशेषणवैय्यर्थ्याच्च । न च विशेषणत्वावगाहिबुद्धित्वमेव व्यावृत्तिधीजनक-तावच्छेदकमिति वाच्यम् । विशिष्टबुद्धेर्विशेषणत्वाविषयत्वात् । न चैवं सति दण्डदेवदत्ततत्संबन्धा इति प्रतीतेर्दण्डीति प्रतीतेर्भेदो न स्यादिति वाच्यम् । संसर्गविधया संबन्धविषयकबुद्धित्वस्य विशिष्ट-बुद्धित्वात् । प्राधान्येन तद्विषयबुद्धित्वस्य समूहालम्बनत्वात् । अन्यथा दण्डविशेषणत्वतत्संबन्धा इति समूहालम्बनाद्भेदो न स्यात् ।

यदपि चोक्तम् । गुणक्रियाजातिविशिष्टबुद्धीनां पक्षधर्मताबलेन विषयः संबन्धः सिध्यन् लाघवेनैक एव सिध्यति । स एव समवायः न तु स्वरूपसंबन्धः । तत्स्वरूपाणामनन्तत्वात् । संबन्धत्वेनाक्लृप्तत्वाच्चेति । तदपि न । अभावादिविशिष्टबुद्धीनामपि विषयीभूतः संबन्धः लाघवात् एक एव न च समवाय इत्यापातात् । समवायस्यैकत्वेन वायौ रूपमिति प्रतीत्यापातात् । रूपादीनां स्वरूपस्यापि संयुक्तसमवेतसमवायाद्यन्तर्गततया संबन्धत्वस्य त्वयाऽङ्गीकृतत्वेन संबन्धत्वेनाक्लृप्त-त्वाभिधानायोगाच्च । धर्मिकल्पनातो धर्मकल्पनस्यैव लघीयस्त्वेन क्लृप्ततत्तत्स्वरूपाणामेव संबन्धत्वकल्पनस्योचितत्वाच्च ।

यदपि विशेषणसंबन्धनिमित्तका इति साध्यम् । हेतौ च सत्यत्वं विशेषणं विशेषणसंबन्धश्च कारणत्वेनैक एव सिध्यति । लाघवात् । अनुगतकार्यस्यानुगतकारणनियम्यत्वाच्च । न तु स्वरूप-संबन्धस्तेषामनन्तत्वात् । अननुगतत्वाच्चेति । तदपि न । अयुतसिद्धविषयकलौकिकप्रत्यक्षमात्रस्य लाघवेनैकसंबन्धनिमित्तकत्वे युतसिद्धविषयकलौकिकप्रत्यक्षप्रतीतिमात्रस्यापि लाघवेनैकसंबन्धनिमित्तकत्व-प्रसङ्गात् । पटे स्तम्भसंयोगसद्भावेऽपि घटसंयोगो नास्तीति प्रतीतिबलात् लाघवमनादृत्य संयोगाने-कत्वमभ्युपगम्यत इति चेत् । तर्हि वायौ स्पर्शसमवायसद्भावेऽपि रूपसमवायो नास्तीति प्रतीतेः सत्त्वात् लाघवमनादृत्य समवायानेकत्वमभ्युपगम्यताम् । कार्यस्याप्यननुगतत्वेन अनुगतकार्यस्यानुगत-कारणनियम्यत्वाच्चेत्युक्त्ययोगाच्च । न हि गुणक्रियाजातिविशिष्टप्रत्ययानां अनुगतमेकं कार्यतावच्छेदक-मस्ति । जन्यविशिष्टप्रत्ययत्वेन कार्यानुगमाङ्गीकारे च विशेषणसंबन्धत्वेन रूपादिस्वरूपाणामप्यनुगम-संभवेन स्वरूपसंबन्ध एव सिध्येत् । न समवायः ।

यदपि यदिन्द्रियप्रत्यासत्तित्वेन समवायसिद्धिः । तथा हि । गुणक्रियाजातिसाक्षात्कारः इन्द्रियसंबन्धसाध्यः जन्यप्रत्यक्षत्वादित्यतः साक्षात्संबन्धबाधे कारणत्वेनेन्द्रियसंयुक्ते संबन्धः सिध्यन् पक्षधर्मताबलात् लाघवेनानुगतः समवायः एक एव सिध्यतीत्यादि । तदपि न । अभावादि-

स्वरूपाणामननुगतत्वेऽपि अभावेनेन्द्रियस्य संयुक्तविशेषणतादेरिव रूपादिनाऽपि तस्यैव प्रत्यासत्तित्व-संभवेन प्रत्यासत्तित्वेनापि समवायसिद्ध्यसंभवात् । किं च । रूपादिसन्निकर्षस्यैकत्वे अभावादि-सन्निकर्षोऽप्येक एक एव स्यात् । न च भावादिसन्निकर्षो नैकोऽभ्युपगन्तुं शक्यः । पटवति भूतले पटाभावबुद्धिप्रसङ्गात् । घटाभावाधिकरणस्य भूतलस्य पटाभावेनापि संबन्धसद्भावात् । अन्यथा घटाभावधीर्न स्यात् । तस्यैव तत्रैव तदैव सत्त्वासत्त्वयोरयोगेन घटाभावेनापि संबन्धाभावात् । इति चेत् । तर्हि समवायोऽप्येको न स्यात् । स्पर्शवति वायौ रूपधीप्रसङ्गात् । रूपसमवायसद्भावात् । अन्यथा स्पर्शधीरपि न स्यात् । यदि च रूपसमवायसद्भावेऽपि वायौ रूपाभावान्न रूपधीः । तर्हि पटवति भूतले पटाभावसंबन्धसद्भावेऽपि अभावाभावान्नाभावधीरित्यस्तु ।

किञ्च स्पर्शाधारताप्रयोजकीभूतस्पर्शसमवायसद्भावे वायौ रूपं नेति रिक्तं वचः । तस्यैव रूपा-धारताप्रयोजकसंबन्धत्वात् । न हि तदाधारताप्रयोजकसंबन्धोऽस्ति नास्ति च तत्र तत् इति संभवति । स्पर्शोऽपि नास्तीत्यापातात् । यदत्रोक्तं वायौ रूपसमवायसत्त्वेऽपि रूपात्यन्ताभावोऽस्ति । न घटे । कथमेवम् । अधिकरणस्वभावादिति । तन्न । पटवति भूतले पटाभाववैशिष्ट्यसद्भावेऽपि न पटा-भावोऽस्ति । अधिकरणस्वभावादित्यपि वक्तुं शक्यत्वात् गुणादीनां गुण्यादिभिरभेदेन संबन्धस्यान-पेक्षितत्वाच्च ॥ छ ॥ **इति मण्युक्तसमवायभङ्गः ॥**

ननु गुणादीनां गुण्यादिभिरभेद इत्ययुक्तम् । गुण्यादीनां गुण्यादिपदोक्तगुणाधारताऽभाव-प्रसङ्गात् । गुणगुण्यादिशब्दानां पर्यायत्वापाताच्च । अनेकगुणाभिन्नस्य घटस्यानेकत्वापाताच्च । घटसद्भावदशायां रूपविनाशाभावप्रसङ्गाच्च । प्रतियोगितद्ध्वंसयोः समानकालत्वायोगात् । अन्धकारे घटनिश्चये शौक्ल्यादिनिश्चयापाताच्च । गन्धादीनां घ्राणादिवेद्यत्वेन तदधिकरणद्रव्यस्यापि तदिन्द्रिय-ग्राह्यत्वापाताच्च । न च गुणगुण्यादीनामभेदेऽपि भेदप्रतिनिधिविशेषसद्भावात् पूर्वोक्तानि सर्वाणि भेदकार्याणि सिध्यन्तीति वाच्यम् । अनुभवसिद्धभेदकार्याणि भेदप्रतिनिधिविशेषबलाद्भवन्तीति कल्पयित्वा प्रमाणं विनाऽभेदाङ्गीकारायोगात् । अन्यथा घटपटयोरपि भेदो न स्यात् । भेदकार्याणि विशेषबलाद्भवन्तीति तत्रापि वक्तुं शक्यत्वात् ।

ननु यदि गुणगुणिनोर्भेदः स्यात् । गवाश्वयोरिव भेदेनोपलम्भः स्यात् । न चोपलम्भोऽस्तीति नास्त्येव भेद इति चेत् न । भूतलाभावयोर्गवाश्वादिवन्न भेदेनोपलम्भाभावेन भेदाभावप्रसङ्गात् । पुष्पादिना व्यतिरिच्यमानस्य गन्धस्य भेदेनोपलम्भसद्भावेन भागासिद्धेश्च इति चेत । अत्रोच्यते ॥

गुणजन्यगुणादीनां गुण्यादिभिस्तावद्भेदो वक्तव्यः । तदुपादानकत्वात् । अत्यन्तभिन्नयोर्दण्डघटयोरिवोपादानोपादेयभावायोगात् । अन्यथा मृत्पिण्डघटयोरपि अत्यन्तभेदः स्यात् । न चासावभ्युपगन्तुं शक्यः । घटप्रतीतिसमये मृत्पिण्डप्रतीतिप्रसङ्गात् । न हि समनस्केन्द्रियसन्निकर्षसद्भावे घटपटाविति प्रतीतिर्भवति न भवति च घटमृत्पिण्डाविती ति संभवति । मृत्पिण्डगुरुत्वात् अधिकगुरुत्वापाताच्च । परमाण्वादिघटान्तानां अनन्तमूर्तद्रव्याणां सामानाधिकरण्यापाताच्च । दधिभोजनसमये क्षीरगतमाधुर्यानुभवापाताच्च । क्षीरनाशेन दध्यवयवैः दध्युत्पाद इति कल्पनायाः निष्प्रामाणिकत्वात् ।

ननु अवयवावयविनोर्भेदोऽपि नाभ्युपगन्तुं शक्यः । घटमृत्पिण्डशब्दयोः पर्यायत्वापातात् । घटप्रागभावदशायां मृत्पिण्डाभावापातात् । एकस्यैकदा सत्त्वासत्त्वयोरयोगात् । सत्यवयवेऽवयविनाशाभावापातात् । पिष्टभक्षणे सुरापानदोषप्रसङ्गाच्च । पिष्टस्य सुरोपादानत्वात् । कार्यकारणभावश्च न स्यात् । कार्यकारणभावस्य पूर्वापरकालवृत्तित्वघटितत्वात् इति चेत् । न ब्रूमो वयं उपादेयस्योपादानात् अत्यन्ताभेद इति । येनोक्तदोषः स्यात् । किं नाम भेदाभेद इति । ततश्च भेदसद्भावात् उपादानोपादेयशब्दानामपर्यायत्वं उपादानस्य पूर्ववर्तित्वं उपादेयस्योपादाने सत्यपि प्रध्वंसः पिष्टभक्षणेऽपि पैष्टीसुरापानदोषाभावश्चेत्यादीनि भेदकार्याण्युपपद्यन्ते । अभेदकार्याणि तु अभेदेनोपपद्यन्ते । न च भेदाभेदयोर्विरुद्धत्वात् एकत्रावस्थानायोगः । विरुद्धयोरपि संयोगतदत्यन्ताभावयोर्धर्मिभेदप्रतिनिधिना अवच्छेदकभेदेन विरुद्धानां घटतत्प्रागभावतद्ध्वंसानां धर्मिभेदप्रतिनिधिना कालभेदेनैकत्रावस्थानवत् विरुद्धयोरपि भेदाभेदयोः धर्मिभेदप्रतिनिधिना विशेषेण एकत्रावस्थानसंभवात् ।

ननु अयावद्द्रव्यभाविनां गुणादीनां गुण्यादिभिरत्यन्ताभेद एवास्तु किं भेदस्याप्यङ्गीकारेण । अपर्यायशब्दवाच्यत्वादीनां भेदकार्याणां भेदाभेदयोरेकत्र समावेशार्थमन्ततोऽभ्युपगन्तव्येन विशेषेणैवोपपत्तेः । विशेषस्य भेदकार्यकारितायाः त्वयैवोक्तत्वात् इति चेत् । न । विशेषस्य भेदकार्यकारित्वेऽपि यावद्भेदकार्यकारित्वाभावात् । यावत्कार्यकारित्वे च भेद एव स्यात् । न विशेषप्रतिनिधिः । न हि धर्मिभेदप्रतिनिधिरवच्छेदकादिभेदः यावद्भेदकार्यं करोति । ततश्च विशेषेण धर्मधर्मिभावादिभेदकार्यनिर्वाहेऽपि, उपादानसत्त्वेऽपि उपादेयानां प्रध्वंसः, उपादेयाभावदशायां उपादानसत्त्वमित्यादिभेदकार्याणां निर्वाहासंभवात् भेदोऽप्यङ्गीकार्यः । नन्वस्तु तर्हि गुण्यादीनां गुणादिभिरत्यन्तभेद एव । अभेदकार्यनिर्वाहाय अभेदस्यैव प्रतिनिधिः कश्चिदभ्युपगम्यताम् । न हि भेदकार्यमेव प्रतिनिधिना निर्वाह्यं न त्वभेदकार्यमित्यत्र राज्ञामाज्ञाऽस्ति । अवश्यं चाभेदस्य प्रतिनिधिरभ्युपगन्तव्यः । नीवाराणां व्रीहिकार्यकारित्वस्य पूतीकस्य सोमकार्यकारित्वस्य तेन विना

निर्वोढुमशक्यत्वात् । तदन्यजन्यं तत्कार्यमित्यस्य व्याहतत्वात् इति चेत् । न । अभेदप्रतिनिधिना कतिपयाभेदकार्यनिर्वाहसंभवेऽपि उपादानोपादेयभावलक्षणाभेदासाधारणकार्यस्य तेनानिर्वाहात् । अभेदासाधारणकार्यनिर्वाहेऽभेद एव स्यात् । न तत्प्रतिनिधिः । ननूपादानोपादेयभावः नाभेदासाधारणकार्यं किन्तु साधारणम् । ततश्च प्रतिनिधिनिर्वाह्यत्वं नानुपपन्नमिति चेत् । न । नीवाराणां व्रीहितादात्म्यप्रतिनिधिसंपन्नानां व्रीह्युपादानकपुरोडाशोपादानत्वापातात् ।

ननु यावद्द्रव्यभाविगुणगुण्यादीनां किं भेदाभेदावेव । न । किं तु अत्यन्ताभेदः कुत इति चेत् । तदात्मकत्वानुभवादिति ब्रूमः । न हि घटसाक्षात्कारः घटरूपादीन् कुण्डबदरादीनिवाधाराधेयभावेनावगाहते । किन्तु तद्वैलक्ष्यण्येन । ऊर्ध्वाधरीभावानवगाहित्वस्यानुभवसिद्धत्वात् । नापि स बद्धाङ्गुलिद्वयवदवगाहते पार्थक्येन स्वरूपद्वयानवगाहित्वस्याप्यनुभवसिद्धत्वात् । किञ्च रूपादीनां घटाद्भेदे घटस्य निःस्वरूपत्वं स्यात् । रूपाकृतिपरिमाणादिव्यतिरेकेण घटस्वरूपानुपलम्भात् । किञ्च घटादिनिष्ठयावद्द्रव्यभाविगुणादयः घटाद्यभिन्नाः गुणत्वादीश्वरगुणवत् इत्यनुमानेन तत्सिद्धिः । न च दृष्टान्ते विवदितव्यम् । आनन्दो ब्रह्मेति व्यजानात् । इति श्रुत्या तदभेदस्य सिद्धत्वात् । 'एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावती'ति भेदनिषेधाच्च । न च गुणत्वहेतुनाऽभेदमात्रं सिध्येत् नत्वत्यन्ताभेदः । तस्य पाकजरूपादौ व्यभिचारेण अत्यन्ताभेदेन सह व्याप्त्यभावात् इति वाच्यम् । भेदासाधारणकार्यानुपलम्भेन भेदे निरस्ते अभेदसिद्धेरेवात्यन्ताभेदसिद्धित्वात् । एतेन घटपटयोरभेद एवास्तु भेदकार्याणि भेदप्रतिनिधिविशेषबलात् उपपद्यन्त इति अतिप्रसङ्गचोदनं परास्तम् । यत्र यत्र भेदकार्योपलम्भः तत्र सर्वत्रापि विशेषः इत्यङ्गीकारे विशेषस्यैव भेदत्वापत्त्या भेदो मास्तु विशेषोऽस्तु इत्यापादनस्य व्याहतत्वात् । क्वचित्प्रमाणबलाद्भेदाङ्गीकारे घटपटयोरपि तत एव भेदोऽस्तु ॥ छ ॥ **इति गुणगुण्यादीनामभेदसमर्थनम् ॥**

**मणिकारस्तु** । गुणगुणिनोर्नाभेदाङ्गीकारो युक्तः । तथा सति शुक्लपटशब्दयोरेकार्थत्वेन सहप्रयोगो न स्यात् । अन्धस्य पटग्रहवत् रूपग्रहः रूपाग्रहवत् पटाग्रहोऽपि स्यात् । महारजनरक्ते पटग्रहवत् शुक्लग्रहः शुक्लाग्रहवत् पटाग्रहोऽपि भवेत् । पटमानयेत्युक्ते यं कञ्चिच्छुक्लमानयेत् । अपटः पट इतिवत् अशुक्लः पट इति विरुध्येत । शुक्लपटयोरभेदात् । अग्निसंयोगादेकत्र श्यामरक्तयोर्विनाशोत्पादे घटस्य तौ स्याताम् । घटसत्त्वे वा तयोरपि तौ न स्याताम् । अथ शुक्लत्वादीनां द्रव्यभेदात्तद्बोधनार्थं सहप्रयोगः । अन्धादिना शुक्लादिग्रहे शुक्लत्वादीनामग्रह उपपद्यते । शुक्लत्वादिजातेश्च द्रव्येण नाभेदो न वा समवायः । किन्तु स्वरूपसंबन्ध इति चेत् । न ।

शुक्लत्वमधुरत्वसुरभित्वोष्णत्वादीनां द्रव्यवृत्तित्वे द्रव्यग्राहकत्वगादिभिर्ग्रहणसंभवात् । रूपत्वादीनां प्रतिनियतेन्द्रियग्राह्यत्वनियमात् नैवमिति चेन । रूपत्वादीनां द्रव्यवृत्तित्वे प्रतिनियतेन्द्रियग्राह्यतैव न स्यात् । योग्यवृत्तित्वेन जातेर्ग्रहणयोग्यत्वात् । तत्तज्जातित्वेन योग्यत्वेऽननुगमात् । तस्माद्रूपत्वादीनां प्रतिनियतेन्द्रियग्राह्यत्वमपि गुणगुणिनोर्भेदे मानम् । अभेदे च कथं पटस्य शुक्लरूपमिति भेदबुद्धिः । घटो नास्तिमेति बुद्धिप्रसङ्गश्चेत्याह ।

स स्थूलदृश्या । वृक्षशिंशुपाशब्दयोः प्रतिपाद्यैक्येऽपि पर्यायत्वाभावेन सहप्रयोगवद् शुक्लपटशब्दयोः एकार्थप्रतिपादकत्वेऽपि पर्यायत्वाभावात् सहप्रयोगसंभवेन तदभावापादनायोगात् । ननु येषां मते धर्मधर्मिणोर्भेदः तेषां मते प्रवृत्तिनिमित्तभेदात् शुक्लपटशब्दयोरपर्यायत्वसंभवेऽपि येषां धर्मधर्मिणोरभेदः तेषां शौक्ल्यपटत्वयोः तदभिन्नाभिन्नस्य तदभेदनियमेनाभेदात् शुक्लपटशब्दयोः पर्यायत्वमवर्जनीयं इति चेत् । न । त्वचा पटत्वग्रहेऽपि शौक्ल्याग्रहणस्य दूरेण शौक्ल्यग्रहेऽपि पटत्वाग्रहस्यानुभवसिद्धत्वात् तदन्यथाऽनुपपत्त्या तयोर्भेदस्य सिद्धत्वेनानुमानस्य बाधितविषयत्वात् । न च भेदप्रतिनिधिना विशेषेणैव ग्रहणाग्रहणयोरुपपन्नत्वात् नानुमानस्य बाधितविषयत्वम् । अन्यथ पटतद्रूपयोरप्यभेदो न स्यात् । विशेषमङ्गीकृत्य प्रमाणसिद्धभेदापलापेऽपि त्वदापादितसहप्रयोगासंभवासमर्थनात् । विशेषबलेनैव शब्दयोरपर्यायत्वेन सहप्रयोगो युक्त इति वक्तुं शक्यत्वात् ।

यदपि गुणगुणिनोरभेदे अन्धस्य पटग्रहवत् रूपग्रहः रूपाग्रहवत् पटाग्रहोऽपि स्यादिति । तदपि न । ग्रहणाग्रहणयोर्भेदकार्यत्वेन कथञ्चिद्भेदसाधकत्वेऽपि अभेदाबाधकत्वात् । न च भेदकार्येण सिद्धो भेदः अभेदं विरुणद्धि । भेदाभेदयोः सहावस्थानायोगात् इति वाच्यम् । स्वतः सहावस्थानानर्हयोरपि भेदप्रतिनिधिना विशेषेण विरोधशांत्यैकत्रावस्थानसंभवात् । अन्यथा संयोगतदत्यन्ताभावयोरपि एकत्रावस्थानं न स्यात् । न हि धर्मिभेदप्रतिनिधिना अवच्छेदकभेदेनैव भावाभावयोर्विरोधशान्तिर्भवति नतु तत्प्रतिनिधिना विशेषेणेति राज्ञामाज्ञाऽस्ति । न च प्रतियोगितदत्यन्ताभावयोरवच्छेदकभेदेनैकत्रावस्थानसंभवेऽपि भेदाभेदयोर्नैकत्रावस्थानं युक्तम् इति वाच्यम् । श्यामावच्छिन्नस्य तस्यैवान्योन्याभावाभावस्तत्रैव रक्तावच्छिन्ने तदन्योन्याभावश्च श्यामावच्छेदेनेति त्वयैवान्योन्याभावतदभावयोरेकाधिकरणस्योक्तत्वात् । एतेन महारजनरक्त इत्यादिदूषणं परास्तम् । विशेषबलेन भेदकार्यग्रहणाग्रहणोरुपपत्तेः ।

यदपि पटमानयेत्युक्ते यं कञ्चिच्छुक्लमानयेत् । अपटः पट इतिवत् अशुक्लः पट इति विरुध्येत शुक्लपटयोरभेदादिति । तदपि न । पटमानयेत्युक्ते यस्य कस्यचिद्वृक्षस्यानयनाभाववत् पटमानयेत्युक्तेऽपि

यस्य कस्यचिच्छुक्लस्यानयनाभावोपपत्तेः । शुक्लपटशब्दयोरपर्यायत्वेनाशुक्लः पट इत्यस्यापि विरुद्धार्थत्वोपपत्तेश्च ।

यदपि अग्निसंयोगादेकत्र श्यामरक्तयोर्विनाशोत्पादे घटस्य तौ स्याताम् । घटसत्त्वे वा तयोरपि तौ न स्यातां इति । तदप्यनेनैव परास्तम् । भेदाभेदसद्भावात् भेदनिर्वाह्यस्य रूपानाशेऽपि पटनाशस्य पटानाशेऽपि रूपनाशस्य चोपपत्तेः ।

यदपि रूपत्वादीनां द्रव्यवृत्तिजातित्वेन द्रव्यग्राहकत्वगादिभिर्ग्रहणप्रसङ्ग इति तदप्यत एव परास्तम् । भेदप्रतिनिविविशेषबलेन द्रव्यस्य त्वग्ग्राह्यत्वेऽपि रूपत्वस्य तदग्राह्यत्वोपपत्तेः । पटस्य शुक्लरूपमित्यादिज्ञानं तु घटस्य स्वरूपमित्यादिवदुपपन्नम् । पटो नीलिमेति बुद्धिप्रसङ्गस्तु नास्त्येव । विशेषसद्भावात् ॥ छ ॥ **इति गुणगुणिनोर्मण्युक्तात्यन्तभेदभङ्गः ॥**

न चैतेषामिन्द्रियाणां स्वविषयप्रतियोगिकाभावो विषय इत्ययुक्तम् । सन्निकर्षाभावेनेन्द्रियाणां तद्विषयकज्ञानजनकत्वायोगात् । न चेन्द्रियसंबन्धविशेषणता प्रत्यासत्तिः । चक्षुःसंयुक्तपरमाणौ जलत्वाभावस्य चक्षुषा ग्रहणप्रसङ्गात् । यदि अभावो नेन्द्रियस्य विषयः तर्हि अनुमानागमाप्रवृत्तिवेलायां अभावग्रहो न स्यादिति चेत् । उच्यते । योग्यानुपलब्धिरूपेणाभावाख्यप्रमाणेनाभावग्रहः । न चानुपलब्ध्या परमाण्वाद्यभावग्रहः स्यादिति वाच्यम् । प्रत्यक्षप्रतियोगिकाभावस्यैवाभावप्रमाणविषयत्वात् । न च पृथिवीपरमाणौ जलत्वाभावग्रहप्रसङ्गः । प्रतियोगिकग्राहकेणेन्द्रियेण अभावधर्मिग्रहस्य अभावप्रमाणसहकारित्वात् । अथ भूतले अभावधीरिन्द्रियजन्या । साक्षात्कारित्वादिति चेन्न । असिद्धेः । अभावज्ञानस्य स्मृतिवत् परोक्षत्वाङ्गीकारात् । न चाज्ञातकारणकानुभवत्वादभावज्ञानं साक्षात्कारीति वाच्यम् । यथा ज्ञातकारणत्वेऽपि अनुमितिर्न शाब्दी, शाब्दी वा नानुमितिः । एवं अभावज्ञानस्याज्ञातकारणकत्वेऽपि इन्द्रियजन्यं ज्ञानं साक्षात्कारः । अनुपलब्धिजन्यं तद्विजातीयमानुपलब्धमित्यङ्गीकारात् । न च भावाधिकरणयोर्विशिष्टबुद्धिस्तावदस्ति । सा च नाभावप्रमाणजन्या । भावबुद्धित्वात् । नेन्द्रियाभावप्रमाणाभ्यां जन्या । जातिसंकरप्रसङ्गात् । अतः परिशेषात् इन्द्रियमेव भावाभावयोर्ग्राहकमभ्युपेयमिति चेत् न । इन्द्रियस्य स्वरूपतोऽभावग्राहकत्वाभावेऽपि अनुपलब्ध्युपनीताभावग्राहकत्वाङ्गीकारात् । यथा चक्षुषः स्वरूपतः गन्धग्राहकत्वाभावेऽपि घ्राणोपनीतगन्धग्राहकत्वम् । कथं तर्हि भूतले घटाऽभाव इति भावविशेषणकाभावबुद्धिरिति चेत् । प्रत्यक्षोपनीते भूतले अभावेनाभावबुद्धिरिति गृहाण । यत्तु व्यापाराभावान्नाभावः करणमिति । तन्न । क्रियाऽयोगव्यवच्छिन्नस्यैव करणत्वेन व्यापारस्यानपेक्षितत्वात् इति ।

अत्रोच्यते । अनुमानागमाप्रवृत्तिवेलायां जायमानमभावज्ञानमिन्द्रियजन्यमेव । तदन्वयव्यतिरेकानुविधानात् । न च प्रत्यासत्त्यनुपपत्तिः । संयोगविशेषस्यैव प्रत्यासत्तित्वात् । न चाभावेन संयोगानुपपत्तिः । वैशेषिकादिप्रक्रियायाः अप्रामाणिकत्वात् । न चानुपलब्ध्यैवाभावग्रहः । इन्द्रियं त्वधिकरणग्रहोपक्षीणमिति वाच्यम् । परमाण्वादेरभावग्रहप्रसङ्गेन अनुपलब्धेरभावग्राहकत्वाङ्गीकारायोगात् । न च योग्यस्यैवाभावमनुपलब्धिर्गृह्णाति नातीन्द्रियस्याभावमिति वाच्यम् । अनुपलब्धेः स्वतन्त्रप्रमाणत्वे प्रतियोगियोग्यताया अनपेक्षणीयत्वात् । न हि प्रत्यक्षायोग्यस्याभावमनुमानं न गृह्णाति । न वा शब्दः अतीन्द्रियाभावं न गृह्णाति । येन अनुपलब्धिः प्रतियोगिनः प्रत्यक्षायोग्यत्वात् अभावं न गृह्णीयात् । नियामकविशेषमन्तरा वैजात्यकल्पनाऽयोगात् । न च फलबलात् योग्यस्यैवाभावमनुपलब्धिर्गृह्णातीति कल्प्यत इति वाच्यम् । इन्द्रियव्यापारान्वयव्यतिरेकानुविधानेन प्रत्यक्षयोग्यस्याभावं प्रत्यक्षमेव गृह्णातीति कल्पनस्यैवोचितत्वात् । किं च यद्यनुपलब्धिरेव योग्यस्याभावं गृह्णातीति स्यात् । तर्हि काष्ठविशेषे सौरभ्याभावनिर्णयाय घ्राणप्रवृत्तिर्न स्यात् । धर्मिग्रहस्य चक्षुषैव जातत्वात् । न च प्रतियोगिग्राहकेणैव धर्मिग्रह इति नियमः । तथा च धर्मिग्रहार्थं घ्राणप्रवृत्तिः संभवतीति वाच्यम् । घ्राणस्य द्रव्याग्राहकत्वात् । ननु वायौ रूपाभावः । यत्र क्वापि सौरभाभावः । यत्र क्वापि रसमात्राभावः । तथैव गन्धाभावः । शब्दाभावः इत्येते नानुपलब्ध्या प्रमाणान्तरविधया गृह्यन्ते । किं तु लिङ्गविधया गृह्यन्ते । तथा च लिङ्गग्रहार्थं घ्राणरसनश्रोत्रप्रवृत्तिः । न तु गन्धाद्यभावग्रहार्थमिति चेत् । न । प्रत्यासत्त्यभावान्नाभावग्रहः इन्द्रियेणेति वदता अनुपलब्धिग्रहार्थमिन्द्रियव्यापाराङ्गीकारायोगात् । त्वन्मते उपलब्धेरतीन्द्रियत्वेन तदभावरूपानुपलब्धेः प्रत्यक्षेण ग्रहायोगाच्च । अनुमानेनानुपलब्धिग्रह इत्यङ्गीकारेऽनवस्थानात् । योग्ययोः चाक्षुषस्पार्शनयोरेवाभावः अनुपलब्ध्या गृह्यते न तु योग्यानामपि गन्धादीनामभावः अनुपलब्ध्या गृह्यत इति नियामकविशेषमन्तरा कल्पनाऽयोगात् । इन्द्रियव्यापारानन्तरं व्याप्त्याद्यनुसंधानमन्तरा झडिति प्रतीयमानत्वस्योभयत्रापि साम्यात् ।

ननु गृहमुपलभ्य निर्गतश्चैत्रः तत्र मैत्र आसीदिति केनचित्पृष्टः क्षणं ध्यात्वा मैत्राभावमवगम्याह । नासीत्तत्र मैत्र इति । सेयं प्राक्नास्तितार्थीने स्मृतिः । प्रतियोगिस्मरणाभावेन नास्तितायाः प्रागननुभूतत्वात् । नेन्द्रियजन्या । विप्रकृष्टत्वेन संनिकर्षाभावात् । नापि शब्दानुमानाभ्याम् । तदभावात् । अतः परिशेषादनुपलब्धिरेव तद्ग्राहिकेति चेत् । न । अनुपलब्धेरज्ञातत्वेन ध्यानवैय्यर्थ्यात् । देवदत्तस्य तद्देशकालवैशिष्ट्याभावज्ञानं तु यदि पूर्वं देवदत्तस्तत्र स्यात् । तर्हि

स्तम्भादिवदुपलब्धः स्यात् । न चोपलब्ध इति नाभूत्तत्रासाविति तर्केण भवति । प्राचीनोपलब्ध्य-भावज्ञानं तु वर्तमानेन स्मरणाभावलिङ्गेन भवतीति नानुपलब्धेः पृथक् प्रामाण्यं कल्प्यमिति । **इति भाट्टोक्ताभावप्रामाण्यभङ्गः ।**

ननु तेषां इन्द्रियाणां स्वविषयप्रतियोगिकाभावोऽपि विषय इत्ययुक्तम् । अभावस्य धर्मिरूप-भावात्मकत्वात् । अभावधर्मिणः परमाण्वादेः सर्वस्यैन्द्रियकत्वाभावात् । न हि भूतलव्यतिरेकेण घटादिरिवाभावः प्रतीयते । येन भूतलाद्यतिरिक्तत्वं घटाद्यभावस्य प्रतिपद्येमहि । न हि घटो नास्तीति प्रतीतिबलात् भूतलाद्यतिरिक्तोऽभावोऽभ्युपगन्तव्य इति युक्तम् । उक्तप्रतीतेः केवल-भूतलविषयत्वात् । कैवल्यं च भूतलस्य घटाभावान्मतैव । न तु स्वभिन्नघटाभावाधिकरणता । न च भूतले घटाभाव इत्याधाराधेयभावप्रतीत्यनुपपत्तिः । त्वन्मते घटरूपयोरेकत्वेऽपि घटे रूपमिति आधाराधेयभावप्रतीतिवदुपपत्तेः । मया रूपं घटाभिन्नमपि तद्विशेषतयाऽङ्गीक्रियते । ततश्चा-धाराधेयभावेन प्रतीतिरुपपन्नेति चेत् । मोच्चैर्वोचः परोऽपि श्रोष्यति । मयाऽप्यभावस्य भूतलेन सविशेषाभेदाङ्गीकारात् । कथमन्यथा भूतले घटाभाव इति प्रतीतेः भूतलं भूतलं इति धारावाहिक-प्रतीतेर्विशेषं ब्रूमः ।

किं च यदि घटाभावो भूतलाद्भिद्येत तदा वक्तव्यम् । किं घटाभावः घटवति भूतले संबध्यते उत तदभाववतीति । नाद्यः । विरुद्धत्वात् । घटवति भूतले घटो नास्तीति बुद्धिप्रसङ्गाच्च । द्वितीये वक्तव्यम् । घटाभावसंबन्धघटकीभूतोऽभावः स एवोतान्य इति । आद्य आत्माश्रयः । द्वितीये त्वनवस्था । तस्याप्याभावान्तरसापेक्षत्वात् । न चैवं सति, घटः किं स्वाभाववति संबध्यते । उत घटवति । नाद्यो विरुद्धत्वात् । द्वितीयेऽपि घटसंबन्धघटकीभूतः घटः स एवोतान्यः । आद्य आत्माश्रयः द्वितीये अनवस्थेति वक्तुं शक्यत्वात् घटादेरप्यपलापः स्यादिति वाच्यम् । स्वाभावात्मके भूतले स्वयं संबध्यत इत्यङ्गीकारात् । न च विरोधादसंभवः । सामानाधिकरण्यस्यैव विरुद्धत्वेन भावाभावयोराधाराधेयभावस्याविरुद्धत्वात् । अन्यथा प्रतियोगिनि तदभावो न स्यात् । भूतले घटसंबन्धे भूतलं घटाभावात्मतया न प्रतीयते । घटसंबन्ध-विशेषस्य प्रतिबन्धकत्वात् । गोत्वादिधर्माणां तु न गोत्वाभाववति संबन्धः । नापि गोत्वादिमति किं तु धर्मधर्मिणां सहैवोत्पत्तिर्भवतीति सहज एव संबन्धः ॥ भूतलघटाभावयोरैक्येऽपि सप्रतियोगिकत्वनिष्प्रति-योगिकत्वे इवोपपन्ने । तस्मात् चक्षुरादीन्द्रियाणां स्वविषयप्रतियोगिकाभावोऽपि विषय इत्ययुक्तमिति चेत् ।

अत्रोच्यते । भिन्न एव धर्मिणा संसर्गाभावोऽभ्युपगन्तव्यः । अन्यथा घटपटादीनां भूतलरूपादिना सामानाधिकरण्याभावप्रसङ्गात् । भूतलवत् भूतलरूपस्यापि घटाभावात्मकत्वेन भावाभावयोः समानाधिकरण्यस्य विरुद्धत्वात् । अन्यथा विरोधमात्रोच्छेदः ॥ अन्यविरोधस्य भावाभावविरोधमूलकत्वात् । घटो घटे नेति प्रतीतेः भूतलवत् घटस्यापि घटाभावात्मकताऽऽपत्तेश्च । अभावस्याधिकरणव्यतिरेकेणाप्रतीयमानत्वं त्वसिद्धम् । भेदप्रतीतिमन्तरा घटाभाववद्भूतलमिति आधाराधेयभावेन प्रतीत्यनुपपत्तेः । न च विशेषेणोपपत्तिः । प्रागुक्त्युक्त्या भेदस्य समर्थितत्वेन विशेषेणान्यथासिद्धिकथनायोगात् ।

यदपि घटाभावः किं घटवति भूतले संबध्यते । उत घटाभाववतीति पृष्टम् । तत्र घटाभाववतीत्युत्तरम् । न चात्माश्रयः । घटाभाववतीत्यनेन घटाभावस्य घटाभावेन सामानाधिकरण्यप्रतीतावपि अधिकरणत्वाप्रतीतेः । न हि धूमवान वह्निमानित्युक्ते धूमे वह्निरिति प्रतीयते । येनेह तथा प्रतीतिमालम्ब्यात्माश्रयाभिधानमुचितं स्यात् । न चैवमन्योन्याभावस्यापि धर्मिस्वरूपत्वं न स्यात् । वैषम्ये कारणाभावादिति वाच्यम् । भेदप्रतियोग्यधिकरणयोः तादात्म्यनिवृत्त्यर्थमन्योन्यभावधर्मिणोरैक्यस्य वक्तव्यत्वात् । परस्परविरहरूपतां विना तादात्म्यनिवर्तकस्यान्यस्याभावात् । न च विरुद्धधर्माधिकरणत्वं तादात्म्यनिवर्तकमिति वाच्यम् । धर्मिभेदमन्तरा धर्मयोर्विरुद्धत्वायोगेनान्योन्याश्रयापातात् । अत एव घटस्य, घटः पटो नेति पटाभावात्मतया प्रतीतिरुपपन्ना भवति ।

किं चान्योन्याभावस्य धर्मिस्वरूपत्वाभावे कदाऽपि न तत्प्रतीतिः स्यात् । भेदो हि अयमस्माद्भिन्न इत्येव प्रत्येतव्यः । न च भेदप्रतीतिमन्तरा धर्मिप्रतियोगिनोरयमस्मादिति वैलक्षण्येनावगाहनं युज्यते इति प्राग्भेदप्रतीतिर्वक्तव्या । साऽपि अयमस्मादित्याकारैवेति । तदुपपत्त्यर्थं प्राग्भेदप्रतीत्यङ्गीकारेऽनवस्थापातात् । धर्मिस्वरूपत्वे तु धर्मिप्रतीतावेव सामान्यतः प्रतीतत्वात् विशेषतः अयमस्मादिति धर्मिप्रतियोगिनौ निर्दिश्य भेदावगाहिनी प्रतीतिरुपपद्यते । न च भेदस्य धर्मिणो भेद एवास्तु । तथाऽपि धर्मिसमानसंवित्संवेद्यतया धर्मिभाने सामान्यतो भातत्वात् अयमस्मादिति विशेषप्रतीतिरुपपद्यत इति वाच्यम् । धर्मिप्रतियोगिसंबन्धित्वेन ज्ञानाङ्गीकारे अनवस्थाऽनिस्तारात् । असंबन्धित्वेन ज्ञाने च अयमस्मादिति विशेषप्रतीत्यनुपयोगात् । न हि भेदाज्ञानाविशेषे घटः पटाद्भिद्यत इति प्रतीतिरुपपन्ना, न तु घटो घटाद्भिन्न इतीत्यत्र नियामकमस्ति । भेदस्य धर्मिस्वरूपत्वे तु घटपटोपस्थितावेव तदात्मकोभयभेदस्य ज्ञातत्वात् । घटः पटादिति वैलक्षण्येन प्रतीतिरुपपन्नेति ॥ २० ॥

इत्यधिकरणातिरिक्तसंसर्गाभावसमर्थनम् ॥ श्रीरस्तु ॥

**अभावस्त्रिविधः**। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति। ननु चतुर्विधोऽभाव इति वक्तव्यम्। अन्योन्याभावस्यापि प्रामाणिकत्वात् इति चेत्। सत्यम्। घटस्य प्रागभावादिरिवान्योन्याभावोऽप्यस्ति। तथाऽपि त्रिविधोऽभाव इति युज्यते। तस्याधिकरणस्वरूपत्वेनाधिकरणातिरिक्ताभावगणनावसरेऽप्रसङ्गात्। तदुक्तम्। 'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्' इति। अनादिः सान्तः प्रागभावः। नन्विदमयुक्तम्। परिपालितप्रागभावेऽव्याप्तेः। न च प्रागभावपरिपालनमेव नास्तीति वाच्यम्। प्रतियोगिन एव प्रागभावनाशत्वेन कृतप्रायश्चित्तस्यापि दुःखोत्पत्तिप्रसङ्गात् इति चेत्। न। परिपालितप्रागभावस्याप्रामाणिकत्वात्। न च प्रागभावपरिपालनाभावे कृतप्रायश्चित्तस्यापि दुःखप्रसङ्गः। प्रतियोगिन एव प्रागभावनाशात्मकत्वादिति वाच्यम्। न प्रतियोग्येव प्रागभावविनाशः अपि तु तद्ध्वंसोऽपि। क्वचित्तु प्रतियोगिकारणध्वंसोऽपि। प्रायश्चित्तेन च दुःखकारणध्वंसात्मकदुःखप्रागभावध्वंसो भवतीत्यङ्गीकारात्। प्रतियोग्येव प्रागभावध्वंस इति वदन् कथं प्रतियोगिध्वंसानन्तरं प्रागभावोन्मज्जनं निवारयेत्। प्रतियोगिवत् तद्ध्वंसोऽपि तत्प्रागभावविरोधी। न तु तद्ध्वंस इति चेत्। अत्र वक्तव्यम्। प्रति-योगिध्वंसानन्तरं प्रागभावोऽस्ति नवेति। अस्तीति वदन् श्लाघनीयप्रज्ञः। प्रागभावसद्भावे पुनः प्रतियोग्युत्पत्तिप्रसङ्गात्। प्रागभावस्य परिपालिकाभावे अनित्यत्वनियमस्य त्वयाऽङ्गीकारात्। नेतिपक्षे प्रतियोगिध्वंसस्य प्रागभावध्वंसत्वमवर्जनीयम्। प्रागभावो नास्तीति बुद्धिविषयत्वात्। अन्यथा प्रतीतेर्निर्विषयत्वं स्यात्। किं च प्रतियोगिध्वंसस्य प्रागभावध्वंसरूपत्वाभावे प्रागभावविरोधित्वमेव न स्यात्। तद्विरहरूपत्वस्य तद्विरहव्याप्यत्वस्य चाभावात्। ननु कारणध्वंसस्यैव कार्यप्रागभावविनाशात्मकत्वे दण्डविनाशे घटप्रागभावस्य नष्टत्वात् दण्डान्तरसंपत्तावपि घटोत्पत्तिः स्यात् प्रागभावविरहादिति चेत्। न ब्रूमो वयं कारणमात्रविनाशः कार्यप्रागभावविनाश इति। न चैवम्। किं नाम प्रायश्चित्तविधिबलात् प्रायश्चित्तजन्यपापनाश एव तत्कार्यदुःखप्रागभावविनाश इति ॥ **इति प्रागभावनिरूपणम्** ॥

सादिः संसर्गाभावः प्रध्वंसः। स द्विविधः नित्योऽनित्यश्चेति। न च ध्वंसस्य नित्यत्वे विवदितव्यम्। प्रामाणिकत्वात्। तथा हि। बृहस्पतिपुत्रस्य कचस्य ध्वंसस्तावदनित्यः। आदिपर्वणि भारते ययात्युपाख्याने 'जघ्नुः बृहस्पतेर्दोषात् विद्यारक्षार्थमेव च। हत्वा शालावृकेभ्यश्च प्रायच्छंल्लवशः कृतमि'ति तच्छरीरविनाशमुक्त्वा 'ततः संजीविनीं विद्यां प्रयुज्य कचमाह्वयत्। आहूतः प्रादुरभवत्कचो हृष्टोऽथ विद्यये'ति तदुज्जीवनाभिधानात्। तथा 'ततो द्वितीये हत्वा तं दग्ध्वा कृत्वा च चूर्णशः। प्रायच्छन् ब्राह्मणायैव सुरायाममुरास्तदे'ति पुनस्तन्नाशमुक्त्वा 'गुरोः सकाशा-

त्समवाप्य विद्यां भित्त्वा कुक्षिं निर्विचक्राम विप्र' इति पुनरुज्जीवनोक्तेः ।' एवं तक्षकदग्धयोर्नरवृक्षयोः प्रध्वंसोऽनित्यः । तत्रैवास्तीकोपाख्याने 'सह तेनैव वृक्षेण भस्मीभूतोऽभवन्नृपे'ति नाशमुक्त्वा 'द्विजप्रभावाद्राजेन्द्र व्यजीवत्स वनस्पतिरि'त्युज्जीवनाभिधानात् । एवं नाडीजङ्घसंज्ञस्य बकस्य प्रध्वंसोऽप्यनित्यः । शान्तिपर्वणि कृतघ्नोपाख्याने आपद्धर्मे 'कृतघ्नस्तु स दुष्टात्मा तज्जिघांसुरथाग्रतः । ततोऽलातेन दीप्तेन विश्वस्तं निजघान तम् । निहत्य च मुदायुक्तः सोऽनुबन्धं न दृष्टवान् । स तं विपक्षरोमाणं कृत्वाग्नावपचत्तदे'ति तत्प्रध्वंसमुक्त्वा 'तस्मिन् काले च सुरभिर्देवी दाक्षायणी शुभा । उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी । तस्या वक्त्राच्च्युतः फेनः क्षीरमिश्रस्तदाऽनघ । सोऽपतद्वै ततस्तस्य चितायां राजधर्मणः । ततः सञ्जीवितस्तेन बकराजस्तदाऽनघे'ति तदुज्जीवनोक्तेः । एवं नाडीजङ्घभक्षककृतघ्नब्राह्मणस्य ध्वंसोऽप्यनित्यः । तत्रैव 'इत्युक्त्वा राक्षसास्तेन शूलपट्टिशपाणयः । कृत्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदे'ति तन्नाशमुक्त्वा 'राजधर्मा बकः प्राह प्रणिपत्य पुरन्दरम् । यदि तेऽनुग्रहकृता मयि बुद्धिः सुरेश्वर । सखायं मे सुदयितं गौतमं जीवयेत्युत । तस्य वाक्यं समादाय वासवः पुरुषर्षभः । सिक्त्वामृतेन तं विप्रं गौतमं जीवयत्तदे'तीन्द्रेणोज्जीवनोक्तेः ॥ एवं भारतयुद्धप्रध्वंसितानां दुर्योधनादीनां ध्वंसोऽनित्यः । आश्रमवासिके पर्वणि 'ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् । अवगाह्य जुहावाथ सर्वाल्लोकान् महामुनिः' । इत्युपक्रम्य 'ततस्ते पाण्डवाः सर्वे भीष्मद्रोणपुरोगमाः । ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रश' इति तदुज्जीवनोक्तेः । एवं वातापिप्रध्वंसोऽप्यनित्यः । वनपर्वणि अगस्त्योपाख्याने 'समाह्वयति तं वाचा गतं वैवस्वतक्षयम् । स पुनर्देहमास्थाय जीवन् स प्रत्यदृश्यते'ति तदुज्जीवनोक्तेः ।

अवश्यं चैतदेवं विज्ञेयम् । सञ्जीविनीविद्यादिना प्राप्तस्य पूर्वदेहादन्यत्वे विद्यायाः संजीविनीत्वं न स्यात् । न हि विनष्टकार्यानुज्जीविन्याः कार्यान्तरोत्पादिकायाः संजीविनीत्वं युक्तम् । घटान्तरोत्पादकस्य कुलालस्यापि नष्टघटसंजीवकत्वप्रसंगात् । उज्जीवितस्य कचस्य पूर्वकचादन्यत्वे बृहस्पतिपुत्रत्वाभावप्रसंगाच्च । कचोज्जीवने देवयान्या प्रार्थितस्य शुक्रस्य तमुज्जीवयामीति प्रतिज्ञायाः वन्ध्यात्वापाताच्च । प्रत्यभिज्ञायाः भ्रमत्वापाताच्च । न चेष्टापत्तिः । सर्वज्ञकल्पस्य बृहस्पतेः सोऽयं मम पुत्र इति भ्रमायोगात् । **इति प्रध्वंसाभावनिरूपणम्** ॥

धर्मिभिन्नः सदातनोऽभावोऽत्यन्ताभावः । स द्विविधः प्रामाणिकप्रतियोगिकोऽप्रामाणिकप्रतियोगिकश्चेति । तत्राद्यस्त्वकेवलान्वयित्वात् प्रतियोगिनः यत्र क्वापि सत्त्वं न विरुणद्धि । द्वितीयस्तु केवलान्वयित्वात् यत्र क्वापि प्रतियोगिनः सत्त्वं न सहते । ततः अत्यन्तासत्प्रतियोगिक एव सः ।

प्रामाणिकप्रतियोगिकोऽत्यन्ताभाव एव नास्तीति कश्चित् । तदसत् । हेतुतदाभासविवेकाभाव-प्रसङ्गात् । यथा हि धूमो वह्न्यव्यभिचारी तथा वह्निरपि धूमाव्यभिचारी । धूमस्य स्वसाध्यवह्न्यत्यन्ताभावसामानाधिकरण्यवत् वह्नेरपि स्वसाध्यधूमात्यन्ताभावासामानाधिकरणत्वात् । अप्रामाणिक-धूमात्यन्ताभावसामानाधिकरण्यस्य वह्नाविवाप्रामाणिकवह्न्यन्ताभावसामानाधिकरण्यस्य धूमेपि सत्वात् । सति चैवं धूमः सद्धेतुः वह्निरसद्धेतुरिति विवेकः कथं स्यात् । किं चैवं ब्रह्मणो निर्दोषत्वप्रतिपादक-श्रुतिवैय्यर्थ्यं स्यात् । अप्रामाणिकदोषनिषेधस्य सिद्धत्वात् । किं चैवं विरोधवार्तोच्छेदः । गोत्वाश्वत्वा-दीनां परस्परविरहरूपत्वस्य परस्परविरहव्याप्यत्वस्य चाभावात् । न हि गोत्वादीनामभाव एव नास्ति । अश्वत्वादिकं च तद्रूपं तद्व्याप्यं वेति संभवति । येन तयोर्विरोधः स्यात् । किं च किमिह देवदत्तो-ऽस्तीति पृष्टे अप्रामाणिकदेवदत्तो नास्तीति वदन् श्लाघनीयप्रज्ञो देवानां प्रियः स्यात् । किं च घटवति भूतले रक्तघटो नेति प्रतीतिवत् घटो नेति प्रतीतिरपि स्यात् । घटाभावबुद्धेरप्रामाणिकप्रतियोगिका-भावविषयत्वे घटबुद्ध्यविरोधित्वात् । किं च घटादीनां प्रामाणिकानां केवलान्वयित्वं स्यात् । तदभावा-नधिकरणानां तदधिकरणत्वस्यावश्यकत्वात् ।

ननु गेहे घटो नास्तीति प्रतीतेर्न घटात्यन्ताभावो विषयः । कालान्तरे तत्र घटस्याप्युपलभ्य-मानत्वेनात्यन्ताभावस्य तत्र वक्तुमशक्यत्वात् । न हि अत्यन्ताभावो नष्टोऽन्यत्रगतो वेति वक्तुं शक्यम् । येन तत्रात्यन्ताभावसद्भावेऽपि कालान्तरे घटसद्भावः स्यात् । अथ गेहे घटो नास्तीति न घटात्यन्ताभावप्रतीतिः किं तु तत्संसर्गाभावप्रतीतिः । तथा च यदि घटसंसर्गो भावी तर्हि सा बुद्धिः प्रागभावविषयिणी । यदि भूतः तदा तद्ध्वंसविषयिणी । कदाऽपि तत्र संसर्गासंभवे संसर्गात्यन्ताभावविषयिणीति चेत् । न । घटाभावबुद्धेः सर्वत्र तत्संसर्गावलम्बनत्वसंभवे क्वचिद्घटा-भावः क्वचिद्घटसंसर्गाभावो विषय इति वैजात्यकल्पनाऽयोगात् इति चेत् उच्यते । गेहे घटो नास्तीति प्रतीतिर्घटात्यन्ताभावविषयिण्येव । न च कालान्तरे तत्र घटसत्त्वासंभवापातः । भावाभावयोः सामानाधिकरण्यस्यैकावच्छेदेन विरुद्धत्वात् इति वाच्यम् । घटासंजकसामग्र्या घटे प्राप्ते गेहघटाभावयोऽऽराधाराधेयभावस्य नष्टत्वेन सामानाधिकरण्याभावात् । यथाऽऽकाशस्य विभुत्वेऽपि तस्य भूतलादिनाऽऽधाराधेयभावाभावात् । परमते भूतलादौ सर्वत्राकाशात्यन्ताभावः । अपसारिते तु घटे पुनराधाराधेयभाव उत्पद्यते । अत एव तत्र घटो नास्तीति प्रतीतिः पुनरुदेति । तत्र घटसंसर्गप्रागभावप्रध्वंसौ तु न व्यासेधामः । घटो नास्तीति प्रतीतिविषयतां तु व्यासेधामः ।

नन्विदं सिद्धान्तविरुद्धम् । तत्त्वविवेकटीकायां अत्यन्ताभावस्य तु कः प्रतियोगीत्याशङ्क्य शशविषाणादीनामभावोऽत्यन्ताभाव इति असत्प्रतियोगिकत्वाभिधानात् । तथा च प्रमाणलक्षणटीकायां

'न चात्यन्ताभावोऽपि' सर्वधर्मरहित इति मूलव्याख्यानावसरे 'किमु प्रागभावादिः यः प्रामाणिकप्रतियोगिक इति शेष' इत्यभिधानात्। विशिष्य प्रागभावादीनां प्रामाणिकप्रतियोगिकत्वाभिधानेनात्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वमेवेति नियमलाभादिति चेत्।

उच्यते। नात्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वमेवेति नियमः सिद्धान्तकारस्याभिमतः। तत्त्वनिर्णयटीकायां 'तदभावस्य तज्ज्ञानपूर्वकत्वं चान्यत्र तस्य सत्त्वादेव दृष्टमि'ति मूलव्याख्यानावसरे 'देशकालान्तरस्थितप्रतियोगिज्ञानमेव देशकालान्तरस्थिताभावज्ञानस्य कारणं न तु तत्रैव देशकाले चेत्यर्थ' इत्यभिधानात्। न चात्र प्रागभावप्रध्वंसयोरेव देशकालान्तरस्थितप्रतियोगिज्ञानाधीनज्ञानत्वमुक्तम्। न त्वत्यन्ताभावस्येति युक्तम्। प्रागभावप्रध्वंसयोः प्रतियोगिसमानाधिकरणत्वेन तत्प्रतियोगिनः देशान्तरसत्त्वाभावात्। सुधायामपि 'वैलक्षण्यं सतश्चापि स्वयं सद्भिदवादिन' इति मूलव्याख्यानावसरे 'मया चैकस्यैव सदसत्त्वमङ्गीकृतम्। स्वोपाधौ निषेधाप्रतियोगित्वात्। परोपाधौ च तत्प्रतियोगित्वादित्यभिधानात्। तथा मायावादखण्डनटीकायां 'किं च घटादीनां सत्त्वं शशविषाणादीनामसत्त्वं घटादीनामेव देशकालव्यवस्थया सदसत्त्वमिति प्रकारत्रयस्यैवानुभवादि'त्यभिधानात्। प्रमाणपद्धतावपि 'प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं तदभावव्यापकाभावप्रतियोगित्वात्' इत्यभिधानात्। न हि प्रामाणिकयोः सात्मकत्वप्राणादिमत्त्वयोरत्यन्ताभावाभावे तदभावव्यापकाभावप्रतियोगित्वं प्राणादिमत्त्वे भवति। येन प्रामाणिकानां अत्यन्ताभावस्तदभिमतो न स्यात्। तत्त्वविवेकटीकायां शशविषाणादीनामिति आदिशब्देन घटादेरपि ग्रहणान्न तद्विरोधः। प्रमाणलक्षणटीकाया अपि अप्रामाणिकप्रतियोगिकात्यन्ताभावोऽपि न सर्वधर्मरहितः किमु प्रामाणिकप्रतियोगिकाः प्रागभावप्रध्वंसाभावात्यन्ताभाचा इत्यभिप्रायत्वान्न तद्विरोधः ॥ **इति प्रामाणिकप्रतियोगिकात्यन्ताभावसमर्थनम् ॥**

**उदयनस्तु**। अस्तु प्रामाणिकप्रतियोगिकोऽत्यन्ताभावः। अप्रामाणिकप्रतियोगिकात्यन्ताभावाङ्गीकारस्त्वयुक्तः। अप्रामाणिकत्वात्। तथा हि। प्रतियोग्यावेदकं हि प्रमाणमभावे प्रमाणम्। प्रत्यक्षे तथा दर्शनात्। रूपादिग्राहकं चक्षुराद्येव तदभावमावेदयति। न त्विन्द्रियान्तरम्। यद्यपि यदेवानुमानं प्रतियोगिग्राहकं न तदेव तदभावग्राहकम्। तथाऽपि यत्प्रमाणं प्रतियोगिग्राहकं तज्जातीयमेव तदभावग्राहकमित्यस्त्येव नियमः। न चात्यन्तासति शशविषाणादौ प्रत्यक्षमनुमानमागमो वा प्रमाणमस्ति। येन तदभावः सिध्येत् इति आह।

**स स्थूलदृश्वा ।** शशविषाणाद्यत्यन्ताभावस्याप्रामाणिकत्वेनासत्त्वं प्रसाध्य शशविषाणाद्यत्यन्ताभावो नास्तीति निषेधात् । असतो नात्यन्ताभाव इति नियममङ्गीकृत्य शशविषाणाद्यभावं निषेधन् कथं न स्थूलदृश्वा । स्वाभ्युपगतनियमपरित्यागात् । असत्प्रतियोगिकोऽभावो नास्तीत्यस्य व्याहतत्वाच्च । असच्छब्देन शशविषाणादीनामभावप्रतियोगित्वबोधकेनाभावस्य सत्त्वावेदनात् ।

किञ्च । भूतलादौ शशविषाणाद्यभावाभावे शशविषाणं स्यात् । यत्र यदभावो नास्ति तत्र तदिति नियमात् । यच्चोक्तं प्रतियोगिग्राहकमेव प्रमाणमभावग्राहकं न च प्रतियोगिनि प्रमाणमस्ति । अतोऽभावोऽप्यप्रामाणिक इति । अत्र वक्तव्यम् । सत्त्वेन प्रतियोगिग्राहकं प्रमाणं नास्ति । उत केनापि रूपेण प्रतियोगिग्राहकं प्रमाणं नास्तीति । आद्यस्त्वनुमतः । तथाऽपि नाभावस्याप्रामाणिकताऽऽपत्तिः । यो यत्रासत्त्वेन प्रमितः तदभावस्तत्र प्रामाणिक इति व्याप्तिबलेनाभावस्य प्रामाणिकत्वस्यैव प्राप्तेः । न द्वितीयः । शशः विषाणशून्यः अनुपलभ्यमानविषाणत्वादित्यनुमानस्य शशनिष्ठात्यन्ताभावप्रतियोगितया शशविषाणावेदकस्य विद्यमानत्वात् । योग्यानुपलब्धिरभावे लिङ्गम् । न चेह योग्यानुपलब्धिरिति न शशशृङ्गानुपलब्ध्या शशशृङ्गाभावसाधनं युक्तं इति चेत् । न । प्रतियोगिनः सत्त्वे उपलम्भप्राप्तेरेव योग्यत्वात् । तस्य चेहापि सद्भावात् । यदि शशविषाणं सत्स्यात् तर्हि गोशृङ्गवदुपलभ्येतेति । अन्यथा घटाद्यभावोऽपि न प्रत्यक्षः स्यात् । अभावाधिकरणे प्रतियोग्युपलम्भप्रसक्तेरभावात् । यदीह घटः स्यात्तर्हि उपलम्भः स्यात् इति सत्त्वप्रसंजितप्रतियोग्युपलम्भोऽस्तीति यद्युच्यते तर्हीहापि तुल्यम् । न च नाभावाधिकरणे योग्यस्य प्रतियोगिनोऽनुपलम्भोऽभावग्रहे तन्त्रम् । अपि तु यत्र क्वापि योग्यस्याभावाधिकरणेऽनुपलम्भः । स च घटस्यास्तीति तदभावग्रहो युक्तः । न तु शशविषाणाभावस्य । प्रतियोगिनः क्वाप्ययोग्यत्वात् । इति वाच्यम् । आलोकावच्छिन्नप्रदेशे योग्यस्य घटस्यान्धकारेऽनुपलम्भात् घटाभावग्रहप्रसङ्गेन यत्र क्वापि योग्यस्याभावाधिकरणेऽनुपलम्भस्याभावग्रहे तन्त्रत्वाभावात् । गत्यन्तराभावेनाभावाधिकरणे प्रतियोगिसत्त्वप्रसञ्जितोपलम्भप्रतियोगिकानुपलब्धेरेव योग्यानुपलब्धित्वेन वक्तव्यत्वात् । अत एव शशविषाणाद्यभावः प्रत्यक्षः । न च प्रतियोगिज्ञानाभावादभावज्ञानानुपपत्तिः । शब्दादिना प्रतियोगिज्ञानसद्भावात् ।

ननु शृङ्गस्य प्रामाणिकत्वेऽपि शशीयत्वरूपतद्विशेषणस्याप्रामाणिकत्वात् । शशे प्रतीयमान शशशृङ्गाभावोऽप्रामाणिकप्रयोगिकः स्यात् तर्हि भूतलादौ प्रतीयमानाः सर्वेऽपि घटाद्यभावाः अप्रामाणिकप्रतियोगिकाः प्रसज्येरन् । घटविशेषणस्यापि देशकालसंबन्धस्याप्रामाणिकत्वात् । न हि घटाभावो, नास्तीत्येव प्रतीयते, किन्त्विहेदानीं घटो नास्तीति । न चैतद्देशैतत्कालसंबन्धित्वं

प्रतियोगिनि प्रामाणिकम् । येन शशविषाणात्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वम् । घटात्यन्ताभावस्य प्रामाणिकप्रतियोगिकत्वमिति स्यात् । इति चेत् । न । अस्माभिरपि एतद्देशैतत्कालावच्छिन्नघटात्यन्ताभावोऽप्रामाणिकप्रतियोगिक एव । प्रतियोगिनोऽप्रामाणिकविशेषणघटितत्वात् । घटात्यन्ताभावस्तु प्रामाणिकप्रतियोगिक इत्यङ्गीकारात् । घटात्यन्ताभावो हि इहेदानीं घटो नास्तीति प्रतीयते । देशकालसंसृष्टघटाभावस्तु इह शशविषाणं नास्तीतिवत् एतद्देशकालसंसृष्टो घटः अत्रेदानीं नास्तीति देशकालान्तरसंबन्धितया प्रतीयत इति विवेकः । **इत्यभावस्योदयनोक्तप्रामाणिकप्रतियोगिकत्वनियमभङ्गः ॥**

प्राभाकरास्तु । घटवद्भूतलबुद्धिभिन्ना भूतलबुद्धिरेव घटाभावः । नार्थान्तरम् । न च घटवति दोषवशात् घटाज्ञाने भूतलज्ञानमभावः स्यादिति वाच्यम् । भूतलमिति ज्ञानस्य घटवत्त्वाविषयकत्वेऽपि वस्तुतो घटवद्भूतलज्ञानत्वेन घटवद्भूतलज्ञानभिन्नज्ञानत्वाभावात् । तज्ज्ञाने च घटवद्भूतलज्ञानभिन्नज्ञानत्वभ्रमेण घटाभाववद्भूतलं इत्याकारको भ्रमो भवति। ननु भूतलमिति ज्ञानस्य अवृत्तिगगनाभावत्वं न स्यात् । प्रतियोगिमदधिकरणाप्रसिध्या प्रतियोगिमदधिकरणे ज्ञानभिन्नज्ञानत्वाभावादिति चेत् । न । अवृत्तिपदार्थानां प्रतियोगिमदधिकरणज्ञानभिन्नवदधिकरणज्ञानं नाभावः । किं तु प्रतियोगिमदिदमिति ज्ञानभिन्नज्ञानमभावः इत्यङ्गीकारात् । न चैवं सत्यप्यप्रसिद्धिर्भवति । प्रतियोगिमदधिकरणाभावेऽपि प्रतियोगिमदिदमिति भ्रमसंभवेन तद्भिन्नज्ञानत्वसंभवात् । घटः पटो नेति अन्योन्याभावप्रतीतिस्तु घटाद्यात्मको भेद एव विषयः । तेन घटवत्वेन ज्ञायमानेपि भूतले भूतलं घटो नेति प्रतीतिः । यद्वा घटवद्भूतलभिन्नं भूतलमभावः यत्र परेषामभावोऽस्ति ।

ननु भूतले घटोऽस्ति न वेति संशयो घटोऽस्तीति विपर्ययो वा कथं भवेत् । प्रतियोगिनि बुद्धिस्थेऽधिकरणस्य तज्ज्ञानस्य वाऽभावस्योपलंभादिति चेत् । न । भूतले तज्ज्ञाने वा घटवद्भिन्नत्वस्य घटवद्भूतलज्ञानभिन्नत्वस्य वा दोषवशेनानिश्चयादित्याहुः । तन्न । बुद्धेरचाक्षुषत्वेन घटाद्यभावानामचाक्षुषत्वापातात् । भूतलबुद्धेर्भूतलवृत्तित्वाभावेन भूतले घटाभाव इति आधाराधेयभावप्रतीत्यभावापाताच्च । किञ्च स्वस्य भूतलबुद्धिरभावः । उत सर्वेषाम् । अथ सर्वज्ञस्य । नाद्यः । व्यासंगादिना भूतलबुध्द्युपरमवेलायां घटशून्यस्य घटवत्त्वप्रसंगात् । देवदत्तयज्ञदत्तयोरेकस्मिन् क्षणे केवलभूतलज्ञानाज्ञानयोः संभवेन तत्र तदैव घटस्य सत्त्वासत्त्वप्रसंगाच्च । नापि द्वितीयः । सर्वज्ञानस्य कदाऽप्यभावेन घटस्य सर्वत्र सदा सत्त्वापातात् । नाप्यन्तः । परबुद्धेरप्रत्यक्षत्वेन अभावस्याप्रत्यक्षत्वापातात् । किञ्चैवंकपालबुद्धिरेव

घटध्वंस इति वक्तव्यम् । न च तद्युक्तम् कपालबुद्धिविनाशे घटोन्मज्जनप्रसंगात् । न च यथा घटध्वंसो बुद्धिः एवं तद्ध्वंसोऽपि बुध्यंतरमेव न घट इति न घटोन्मज्जनमिति वाच्यम् । स्वापमूर्छयोर्बुध्यन्तराभावेन कपालबुद्धेर्विनाशाभावप्रसंगात् । कपालबुद्धेरेव तदा सत्त्वेन स्वापमूर्छे न स्याताम् ।

यदत्र केनचिदुक्तम् सुप्तिमूर्छितयोर्बुद्ध्यन्तराभावात् स्वापमूर्छे उपपन्ने कीटकादीनां बुद्ध्यन्तरसद्भावात् कपालबुद्धिध्वंसोऽप्युपपन्न इति तन्न । देवदत्तस्य कपालबुद्धिसद्भावदशायां कीटादीनां बुद्ध्यन्तरसद्भावेन कपालबुद्धेर्युगपत्सत्त्वासत्त्वापातात् ।

यदपि भूतलमेव घटाभाव इति । तदपि न । भूतले घटाभाव इति बुद्धेर्भ्रमत्वापातात् । एकस्यैवाधाराधेयभावायोगात् । अग्नेर्धूमाभावरूपत्वेन धूमाग्न्योः सामानाधिकरण्याभावापाताच्च । किञ्चाभावस्य धर्मिस्वरूपत्वे धर्मिणो भूतलादेरपि स्वधर्म्यात्मकत्वापत्तिः । अभावः धर्मिस्वरूपमेव नातिरिक्त इति त्वयैवोक्तत्वात् । भूतलाधिकरणमप्येवमिति भिन्नत्वेन प्रमितानामनेकेषां तादात्म्यापत्तिरिति । किञ्च । प्रतियोगितदभावयोरैक्यापत्तिः । प्रतियोगिनोऽप्यभावाधिकरणत्वात् । घट घटो नेति प्रतीतेः ॥ इति **संसर्गाभावस्याधिकरणतज्ज्ञानात्मकतानिरासः ॥**

**श्रीवेंकटेशाय नमः ॥ मणिकारस्तु** । सप्रतियोगिकोऽभावः । घटो नास्ति पटो नास्तीत्यनुभवात् । ततश्चाभाववित्तिवेद्यत्वं प्रतियोगिनो अनुभवसाक्षिकम् । सादृश्यप्रतियोगिनो गवादेः सादृश्यवित्तिवेद्यत्ववत् प्रतियोगिनोऽभाववित्तिवेद्यत्वेन प्रतियोगिज्ञानाधीनज्ञानत्वं चाभावस्य सिध्यति । विशेषणतया भासमानस्य पूर्वं ज्ञाननियमात् । न च केवलमधिकरणं तज्ज्ञानं वाऽभावः । प्रतियोगिज्ञानं विनाऽपि तद्वित्तेस्तद्वित्तौ प्रतियोगिनोऽविषयत्त्वाच्च । तथा च सप्रतियोगिकत्वनिष्प्रतियोगिकत्वरूपविरुद्धधर्माधिकरणत्वान्नाभावाधिकरणयोरभेद इत्याह ।

अत्र वक्तव्यम् । किमिदमभावस्य प्रतियोगिसाहित्यं यद्बलादभावस्याधिकरणाद्भेदः साध्यते यच्चानुभवसाक्षिकमित्युच्यते । न तावच्छात्रसहित एवोपाध्यायः सञ्चरतीत्यादिवत् सामानाधिकरण्यनियमः । तयोर्विरुद्धत्वात् । नापि प्रतियोगिगोचरबुद्धिविषयत्वम् । एवंविधप्रतियोगिकत्वनिष्प्रतियोगिकत्वयोरेकस्मिन् देवदत्ते दर्शनेन भेदासाधकत्वात् । देवदत्तो हि अयं देवदत्त इति प्रतीत्या प्रतियोगिनं विना विषयीक्रियत इति निष्प्रतियोगिकः । पुत्र इति प्रतीत्या च प्रतियोगिना सह विषयीक्रियमाणत्वात् सप्रतियोगिकः । न च भेदो दृश्यते इति न तेन भेदसाधनं युक्तमिति । किं चेह घटो नास्तीति बुद्धिः प्रतियोगिना सह भूतलं विषयीकरोति । भूतलमिति बुद्धिस्तु विनाप्रतियोगिनं भूतलवगाहत इति प्रतीत्योरेव भेदसाधनमुचितम् । न तु भूतलस्याभावेन । अन्यथा

घटपटाविति बुद्धिः घटपटाववगाहते । घट इति बुद्धिस्तु घटमात्रमवगाहत इति घटस्य घटाद्भेदः स्यात् । नियमेन प्रतियोगिविषयकबुद्धिविषयकत्वं त्वभावस्य नास्त्येव । प्रमेयत्वादिनाऽभावबुद्धौ अभावत्वाभिमतान्धकारबुद्धौ गुरुत्वाभावात्मकलघुत्वबुद्धौ च प्रतियोगिविषयकत्वाभावात् । अत एव प्रतियोगिज्ञानाधीनज्ञानविषयत्वतदभावाभ्यां भेदसाधनं निरस्तम् ॥ छ ॥ **इति अभावस्य मण्युक्ताधिकरणानिरिक्तसाधकभङ्गः ॥**

श्रीनिवासाय नमः । विषयालोकसंयोगविशेषः प्रायश्चाक्षुषप्रत्ययहेतुः । न चाक्षुषप्रत्ययमात्रे । विषयालोकसंयोगं विना अन्धकारप्रत्ययस्य, आलोकप्रत्ययस्य, पेचकादीनामन्धकारस्थघटादिसाक्षात्कारस्य च दर्शनात् । न च द्रव्यचाक्षुषसाक्षात्कार एव आलोकसंयोगविशेषः कारणमिति वक्तव्यम् । न तु प्रायेणेति । गुणकर्मसामान्याभावानां संयोगासंभवेन तत्साक्षात्कारे तस्याहेतुत्वादिति वाच्यम् । द्रव्ययोरेव संयोग इति नियमस्याप्रामाणिकत्वेन गुणादेरपि संयोगसंभवात् । न च परभागावच्छेदेनालोकसंयुक्तकुड्यादिग्रहप्रसङ्गः । एकावयवावच्छेदेनेन्द्रियसंनिकर्षसामानाधिकरणालोकसंयोगस्यैव हेतुत्वेन विवक्षितत्वात् । एवं द्रव्यचाक्षुषज्ञाने विषयगतं महत्त्वं उद्भूतरूपं च प्रयोजकम् । महत्त्वविरहात्परमाण्वादेरुद्भूतरूपविरहाच्चोष्मादेरचाक्षुषत्वात् ॥ इति **विषयालोकसंयोगकारणत्वसमर्थनम् ॥**

श्रीमुकुन्दाय नमः । **मणिकारस्तु** । विषयेणालोकसंयोगविशेषश्च तत्र कारणम् । न तु चक्षुषा । प्रकाशस्थेन चक्षुषाऽन्धकारस्थघटग्रहणप्रसङ्गात् । वैपरीत्ये च ग्रहणात् । आलोकस्योद्भूतरूपमपि व्यञ्जकम् । अन्वयव्यतिरेकित्वात् । ननु तेजःकारणतावच्छेदकं तत् । ऊष्मादिना तेजसा चाक्षुषज्ञानस्यानुत्पादात् तेजस्त्वस्य कारणताऽवच्छेदकत्वायोगेनास्यैव कारणतावच्छेदकत्वेन वक्तव्यत्वात् । न च स्वतन्त्रेणाऽन्वयव्यतिरेकित्वात् द्वयोरपि हेतुत्वम् । अन्यथा सहकार्युच्छेदादिति वाच्यम् । अन्यगतोद्भूतरूपसहकृतेन ऊष्मादिना चाक्षुषप्रत्ययप्रसङ्गादिति चेत् । न । यथोद्भूतरूपतेजस्त्वं कारणतावच्छेदकम् । उद्भूतरूपं तु कारणतावच्छेदककोटिप्रविष्टत्वात् न कारणमित्युच्यते तथा तेजस उद्भूतरूपत्वमेव कारणताऽवच्छेदकम् । तेजस्तु कारणताऽवच्छेदककोटिप्रविष्टत्वान्न कारणमिति वक्तुं शक्यते । न च विनिगमकं दृश्यत इत्युभयोरपि कारणत्वात् । एवं चक्षूरूपमपि व्यञ्जकं व्यञ्जकतेजोरूपत्वाव् इत्याह ।

तन्न । त्वन्मते रूपादिनाऽलोकस्य संयोगासंभवेन तत्साक्षात्काराभावापातात् । द्रव्यसाक्षात्कारे विषयालोकसंयोगः गुणादिचाक्षुषसाक्षात्कारे तु आलोकसंयुक्तसमवायादिर्हेतुरित्यभिप्रेतमिति चेत् । न ।

आलोकस्यालोकसंयोगाभावेन तत्साक्षात्काराभावापातात् । न चालोकस्यापि स्वावयवावयवैः संयोगोऽस्तीति वाच्यम् । अन्यतरोभयकर्मरूपकारणाभावेन संयोगासंभवात् । एवमपि आलोकसंयोगस्य कारणत्वासमर्थनाच्च । न हि आलोकावयवावयव आलोकः येन तत्संयोगसमर्थनेन विषयालोकसंयोगस्य कारणत्वसिद्धिर्भवेत् । न च तेजोभिन्नद्रव्यसाक्षात्कारे विषयालोकसंयोगः कारणमित्युच्यत इति वाच्यम् । अन्धकारस्थखद्योतरत्नादिचाक्षुषसाक्षात्कारस्य तं विनाऽपि ज्ञायमानत्वात् । न च रत्नादीनां तेजस्त्वमिति वक्तुं युक्तम् । यत्कठिणं सा पृथिवीति श्रुतिविरोधात् । मार्जालोलूकादीनां आलोकसंयोगं विनाऽपि चक्षुषा घटादिसाक्षात्कारदर्शनाच्च । यदपि आलोकस्योद्भूतरूपमपि व्यञ्जकमिति तदपि न । सत्यालोके आलोकरूपविलम्बेन कार्यविलम्बादर्शनात् । अन्यथा तन्तुरूपादिकमपि पटकारणं स्यात् । अविशेषात् ।

यदत्रोक्तं क्वचिदत्तेन । उद्भूतरूपोत्कर्षेण प्रत्यक्षोत्कर्षदर्शनात्तस्य तत्र हेतुत्वं दण्डदार्ढ्यादौ तदभावान्न तस्य हेतुत्वमिति । तदपि न । आलोकोत्कर्षादेव प्रत्यक्षोत्कर्षो न रूपोत्कर्षादिति वक्तुं शक्यत्वात् । न हि नास्ति तत्रालोकोत्कर्ष अस्ति च रूपोत्कर्ष इति अत्र किञ्चिन्मानं येन नालोकोत्कर्षात्कार्योत्कर्षः अपि तु रूपोत्कर्षात्कार्योत्कर्ष इति कल्पयामः । रूपोत्कर्षाभावात् ऊष्मोत्कर्षसद्भावेऽपि कार्यं न दृश्यत इति चेत् । मा दर्शि तस्यालोकत्वाभावात् । यदपि चक्षूरूपमपि व्यञ्जकं व्यञ्जकतेजोरूपत्त्वात् आलोकरूपवदिति । तदपि न । हेतोरप्रयोजकत्वात् दृष्टान्तस्य साध्यविकलत्वात् । ॥ छ ॥ **इति मण्युक्तविषयालोकसंयोगादिकारणत्वभङ्गः ॥**

श्रीमध्वाय नमः । द्रव्यस्य स्पार्शनत्वे महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्त्वं प्रयोजकम् । महत्वाभावात्परमाण्वादेः स्पर्शाभावादाकाशादेः उद्भूतस्पर्शाभावात्सुवर्णाद्यन्तर्गततेजोभागस्य च स्पार्शनत्वाभावदर्शनात् । ननु महत्त्वसमानाधिकरणोद्भूतरूपवत्वमेव बहिरिन्द्रियजद्रव्यसाक्षात्कारे प्रयोजकमस्तु । चाक्षुषसाक्षात्कारे प्रयोजकत्वेन क्लृप्तस्योद्भूतरूपस्यैव स्पार्शनसाक्षात्कारेऽपि प्रयोजकत्वसंभवे तत्र प्रयोजकान्तरकल्पने गौरवात् । अन्यथा वायोः तप्तवारिस्थतेजसः निदाघोष्मणश्च प्रत्यक्षत्वं स्यात् । न च तदिष्टम् । वाय्वादिगतसंख्यासंयोगपरिमाणकर्माणां प्रत्यक्षत्वापातात् । संख्यादीनां योग्यवृत्तित्वे योग्यत्वनियमात् इति ।

उच्यते । रूपस्य चाक्षुषसाक्षात्कारप्रयोजकत्वमेवोचितम् । चक्षुरिन्द्रियस्य रूपेण सहैव द्रव्यग्राहकत्वात् । रूपं विना केवलद्रव्यग्राहकस्य कदाऽप्यभावात् । न तु स्पार्शनप्रत्यक्षत्वे

प्रयोजकत्वम्। स्पर्शेन्द्रियस्य रूपेण सह द्रव्याग्राहकत्वात्। प्रत्युत स्पर्शेण सहैव द्रव्यग्राहकत्वात् स्पर्शत्वमेव स्पार्शनत्वे प्रयोजकम्। न हि येन विना यन्न गृह्यते तत्तद्ग्रहे प्रयोजकमित्यनुक्त्वा येन विनैव यद्गृह्यते तत्तद्ग्रहे प्रयोजकमिति वचनं युक्तिमत्। वायोः स्पार्शनत्वं त्विष्टमेव। वायुर्वाति शीतो वायुरुष्णो वायुरिति त्वगिन्द्रियेणानुभवात्। न च त्वगिन्द्रियेणादौ स्पर्शग्रहः तेन लिङ्गेन वायोरनुमानम्। अथ वायुर्वाति शीतो वायुरित्यादिर्मानसिको बोधो भवतीति युक्तम्। त्वगिन्द्रियव्यापारानन्तरं झटिति वायुर्वातीत्याद्यनुभवात्। चक्षुरादिना गुणग्रह एव घटादिग्रहस्त्वनुमानात्। शुक्लः पट इत्यादिप्रत्ययस्तु मानसो वा उपनीतभानं वेत्यापाताच्च। अपि च सर्पादयो वायुभक्षाः दृश्यन्ते। न चातीन्द्रियस्य भक्षणं नाम युज्यते इति वायुः रसनस्यत्वग्वेद्यः। अपि च वाय्वभिघातस्त्वयाऽनुभूयते। अभिघातश्च संयोगविशेषः। न च संबन्धस्य प्रत्यक्षता संबन्धिनं विहाय संभवतीति वायुः प्रत्यक्षः। उक्तं च स्पर्शेन्द्रियगम्यत्वं काठकभाष्ये। 'एवं देवो वायुरपि धारकोऽन्यो न विद्यते। रूपरूपं तथाऽप्यस्य प्रत्यभूत्प्रतिरूपकः। अचेतनः स्पर्शगम्यो वोऽयमेव जनार्दन' इति। न च वायोः प्रत्यक्षत्वे संख्यासंयोगपरिमाणकर्मणां प्रत्यक्षत्वापत्तिरिति वाच्यम्। इष्टत्वात्। संख्या तावद्गृह्यत एव। विरम्य विरम्यवाय्वागमने संख्याऽनुभवात्। प्रवाहान्तर्गतजलसंख्याया इव विशिष्याग्रहो न दोषाय। संयोगग्रहे त्वविवादः। वाय्वभिघातस्यानुभवसिद्धत्वात्। महान्वायुरित्यनुभवेन परिमाणग्रहोऽपि सिद्ध एव। कर्मापि प्रत्यक्षमेव वायुर्वातीत्यनुभवात्।

ननु वायोः प्रत्यक्षत्वाभिधानं सिद्धान्तविरुद्धम्। महान्ति रूपवन्ति द्रव्याणि केचित्तद्गुणाः कर्माणि जातयश्च चक्षुस्त्वचोर्विषयाः। वायुस्पर्शोऽपि त्वचोविषय इति महत्त्वसमानाधिकरणोद्भूतरूपत्वस्य द्रव्यप्रत्यक्षताप्रयोजकत्वेनोक्तत्वात्। अत एव वायुस्पर्शोऽपि त्वचो विषय इति वायोरस्पार्शनत्वमभिप्रेत्य स्पर्शस्यैव त्वग्विषयत्वमुक्त इति चेत्। न। पररीत्या तस्य ग्रन्थस्य प्रवृत्तत्वात्। अत एव सुधायां चाक्षुषत्वे रूपं प्रयोजकं स्पार्शनत्वे स्पर्शः प्रयोजकः इत्यभिप्रायं मनसि निधाय द्रव्यस्य ह्यस्मदादिप्रत्यक्षत्वे सत्युद्भूतरूपस्पर्शवत्त्वेन व्याप्तं इत्युक्तम्। तथवारिस्थतेजसः प्रत्यक्षत्वेऽपि उष्णं जलमित्यादिप्रतीतिः परंपरासंबन्धेन जलेऽप्यौष्ण्यसद्भावात् जलधर्मित्वेनौष्ण्यविपर्यिणी न तु तेजोग्रहणसामर्थ्याभावात्। तेजोग्रहणस्यापि त्वग्जन्यत्वेनानुभवसिद्धत्वात्। न ह्ययो दहतीति जानन् अग्निं न जानाति। येन उष्णं जलमिति जानन् तेजो न जानातीति स्यादिति॥ इति वायोः स्पार्शनत्वसमर्थनम्॥

श्रीमध्वराजहृदम्बरभास्कराय नमः। द्रव्यस्पार्शनत्वे उद्भूतस्पर्शवत्त्वमात्रं न तन्त्रम्। निदाघोष्मणि वायुपर्यन्तर्गतोष्णद्रव्ये च प्रत्यक्षत्वे तद्गतसंख्यापरिमाणसंयोगकर्मणां प्रत्यक्षत्वप्रसंगात्।

न चोष्मादिजातीये दोषाभावेऽपि घटादाविव करपरामर्शे कदाऽपि केनापि संख्यादि गृह्यते । तथोद्भूतरूपवत्त्वमात्रस्य तथात्वे चान्द्राद्युद्योतस्य नयनगतपित्तद्रव्यस्य च प्रत्यक्षत्वे तद्गतसंख्यादिग्रहोऽपि स्यात् । न च घटादाविव निपुणं निभालयन्तोऽपि तद्गतद्वित्वादिसंख्यां हस्तवितस्त्यादिपरिमाणं कर्म वा वीक्षामहे इत्येकैकव्यभिचाराद्विनिगमकाभावादुभयमपि बहिरिन्द्रियसाक्षात्कारे प्रयोजकमिति वायुरप्रत्यक्ष इति नवीनाः । बहिरिन्द्रियजद्रव्यसाक्षात्कारे उद्भूतरूपमेव प्रयोजकम् । न तूद्भूतरूपत्वे सति उद्भूतस्पर्शवत्वम् । प्रभामण्डलादेरप्रत्यक्षताऽऽपातात् । न च तदिष्टम् । चान्द्रोद्योतादौ पक्षिकाण्डे चलति पूर्वदेशविभागोत्तरदेशसंयोगयोरप्रत्यक्षताऽऽपातात् । पूर्वोत्तरदेशत्वेनाभिमतप्रभामण्डलस्यानुद्भूतस्पर्शत्वेनाप्रत्यक्षत्वात् । तथा च मीमांसकानां संयोगविभागलिङ्गकं पक्ष्यादिगत्यनुमानं न स्यात् । न च पक्षी पूर्वदेशविभागवान् प्राक् तत्रोपलभ्येदानीमनुपलभ्यमानत्वात् । तथोत्तरदेशसंयुक्तः तत्रोपलभ्यमानत्वादित्यनुमानाभ्यां संयोगविभागावनुमाय ताभ्यां गत्यनुमानमिति वाच्यम् । लिङ्गविशेषणयोः पूर्वोत्तरदेशयोरप्रत्यक्षत्वेन तद्घटितलिङ्गयोः प्रत्यक्षेणासिद्धेः । अनवस्थाप्रसङ्गेनानुमेयत्वायोगाच्च । अस्माकमपि चन्द्रतारादौ तत्प्रभायाः कुड्यादिपूर्वापरभागसंयोगविभागादिना गत्यनुमानं न स्यात् । रूपशून्यत्वादेव वायुरप्रत्यक्ष इति संप्रदायविदः ।

यत्तावत् बहिरिन्द्रियजद्रव्यसाक्षात्कारमात्रे स्पर्शस्य न प्रयोजकत्वमिति नवीनमतदूषणं तदनुमतमेव । स्पर्शपुरस्कारेण द्रव्यमगृह्णतः चक्षुषः प्रवृत्तौ स्पर्शः प्रयोजक इत्यस्य साधकशून्यत्वात् । यत्तु चलति पक्षिकाण्डादौ संयोगविभागयोः प्रत्यक्षता न स्यादिति । तन्न । स्पर्शस्य द्रव्यप्रत्यक्षतायामेव प्रयोजकत्वस्य नवीनैरुक्तत्वात्प्रभायाश्च गुणत्वेन तत्प्रत्यक्षे पक्षिणां पूर्वदेशस्थप्रभासंबन्धाभावस्योत्तरदेशस्थप्रभासंबन्धस्य च ग्रहणसंभवात् । अत एव चन्द्रतारादौ गत्यनुमानं न स्यादित्यपि परास्तम् । प्रभायाः कुड्यादिपूर्वापरभागोपलम्भानुपलम्भाभ्यामेव गत्यनुमानसंभवात् ।

यत्तु स्पार्शनप्रत्यक्षे चाक्षुषप्रत्यक्षे चोद्भूतरूपमेव प्रयोजकमिति वायुरप्रत्यक्ष इति सिद्धान्तवर्णनम् । तदपि न । रूपमगृहीत्वैव द्रव्यग्राहिणः स्पर्शस्य प्रवृत्तौ रूपं प्रयोजकमित्यस्यायुक्तत्वात् । किं च वायोरप्रत्यक्षत्वे शीतो वायुः उष्णो वायुरिति प्रतीतिर्न स्यात् । विशेष्यस्यायोग्यत्वात् । न चानुमित्या वातोपनये सुरभिचन्दनखण्ड इतिवत् शीतो वायुरिति प्रत्ययः स्यादिति वाच्यम् । वायुव्याप्तलिङ्गज्ञानविधुरस्य बालमूढादेरपि शीतो वायुरिति प्रत्ययात् ॥ इति **वायोरप्रत्यक्षत्वभङ्गः** ॥

श्रीमन्मुख्यप्राणपतये नमः । ननु महत्त्वसमानाधिकरणमुद्भूतरूपं द्रव्यचाक्षुषताप्रयोजकमित्ययुक्तम् । सुवर्णस्य चाक्षुषत्वप्रसङ्गात् । तथा हि । सुवर्णं तावत्तेजः 'अग्नेर्हि जातं प्रथमं हिरण्यमिति

धन्युपादानकत्वश्रवणात् । सुवर्णं तैजसं अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वात् । यन्नैवं तन्नैवं यथा लाक्षादीत्यनुमानात् । न चोद्भूतरूपं तदिति वक्तुं शक्यम् । शुक्लभास्वरस्य तेजोरूपस्याननुभवात् । न चाचाक्षुषमेव तदिति वक्तुं शक्यम् । चक्षुर्व्यापारानन्तरं सुवर्णमिति प्रत्ययात् । तस्मादयुक्तमुद्भूतरूपस्य द्रव्यचाक्षुषताप्रयोजकत्वाभिधानमिति चेत् । स्यादयं दोषः । यदि सुवर्णं तैजसं स्यात् । न चैवम् । किं नाम पार्थिवं दिव्यम् । 'पार्थिवं वस्वि'त्यादिश्रुतेः कठिणत्वलिङ्गाच्च । यत्कठिणं सा पृथिवीति काठिण्यस्य पृथिवीलिङ्गत्वोक्तेः जम्बूनदीरोधसो मृत्तिका जम्बूफलरसानुविध्यमाना वाय्वर्कसंयोगविपाकेन जाम्बूनदं नाम सुवर्णं भवतीति । तावती भूमिः कांचन्यादर्शतलोपमेति श्रीमद्भागवतोक्तेश्च । न च 'अग्नेर्हि जातं प्रथमं हिरण्यमि'ति श्रुतिविरोधः । तस्या अग्निजातत्वप्रतिपादकत्वेऽपि तैजसत्वाप्रतिपादकत्वात् । तेजसस्तु तदुपादानैकदेशत्वेऽपि घटादीनामिव पार्थिवत्वोपपत्तेः । न हि घटादिकं शुद्धपृथिव्युपादानकम् । किन्तु तेजोबन्नजन्यम् । 'तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'ति त्रिवृत्करणाभिधानात् । पार्थिवत्वादिविभागस्तु यत्रपृथिवीभागानां भूयस्त्वं तत्पार्थिवं यत्राब्भागानां भूयस्त्वं तदाप्यम् । यत्र तेजोभागानां भूयस्त्वं तत्तैजसमिति द्रष्टव्यः । 'वैशेष्यात्तु तद्वादस्तद्वाद' इत्युक्तः । अनुच्छिद्यमानद्रवत्वाधिकरणत्वलिङ्गं स्वसिद्धम् । द्रवत्वोच्छेदमन्तरा भस्मारंभकत्वायोगात् । उदाहृतश्रुतिस्मृतिविरोधाद्बाधितविषयं च ॥ **इति सुवर्णस्य पार्थिवत्वसमर्थनम्** ॥

**श्रीहिरण्यरेतसे नमः** । उदयनस्तु न द्रव्यप्रत्यक्षं स्पर्शस्तन्त्रम् । सुवर्णतेजोद्रव्यस्य प्रत्यक्षत्वाभावप्रसङ्गात् । तत्प्रभावत्तस्यानुद्भूतस्पर्शत्वात् । न चोद्भूतरूपस्य प्रयोजकत्वेऽपि अयं दोषः । तस्योद्भूतरूपत्वात् । न चोपलम्भप्रसङ्गः । पार्थिवसुवर्णरूपेण तस्याभिभवात् । न च पीतिमगुरुत्वाश्रयातिरिक्तं तदसिद्धम् । अत्यन्ताग्निसंयोगि पीतं सुवर्णं विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तम् । अत्यन्ताग्निसंयोगित्वे सति रूपविजातीयरूपानधिकरणपार्थिवत्वाज्जलमध्यस्थिताग्निसंयुक्तपीतपटवत् इत्यनुमानसद्भावात् । न चाप्रयोजकता । विरोधिद्रवद्रव्यसंबन्धं विना पार्थिवेऽत्यन्ताग्निसंयोगस्य विजातीयरूपजनकत्वात् । तच्च द्रवद्रव्यं न जलम् । स्वाभाविकद्रवत्वानाश्रयत्वात् । नापि पार्थिवं रूपपरम्परावृत्तिप्रतिबन्धकत्वात् । पार्थिवस्यापि रूपपरावृत्तिप्रतिबन्धकत्वे घृतादावपि तथात्वापत्तिः । ननूपष्टम्भद्रवद्रव्यं यथा न पृथिवी तथा न तेजः तेजसोऽपि रूपपरावृत्तिप्रतिबन्धकत्वस्य क्वाप्यदृष्टत्वात् । इति चेत् । सत्यम् । तथापि प्रत्यक्षद्रव्यत्वेन तस्य रूपवत्त्वे पृथिवीजलान्यत्वे तेजस्त्वात् धर्मिग्राहकमानसिद्धं तथात्वम् । पीतभागद्रवत्वमपि न नश्यति । तत्र द्रुततेजःप्रतिबन्धादेवेत्याह ।

स स्थूलदृश्वा । पार्थिवसुवर्णावष्टम्भद्रव्यान्तरमनङ्गीकुर्वता तस्य प्रत्यक्षत्वानङ्गीकारेण तं प्रति तत्र प्रत्यक्षत्वाभावापादनायोगात् । तेजोद्रव्यस्य रूपपरावृत्तिप्रतिबन्धकत्वस्य क्वाप्यदर्शनेऽपीह धर्मिग्राहकमानसिद्धं तदिति वदतोदयनेनापि तस्य रूपपरावृत्तिप्रतिबन्धकत्वसाधकानुमानमात्रवेद्यत्वस्याङ्गीकर्तव्यत्वाच्च । कथमन्यथा प्रतिबन्धकत्वस्य धर्मिग्राहकमानसिद्धत्वं भवेत् । धर्मिग्राहकप्रत्यक्षस्य तदविषयत्वात् । यदपि तस्य उद्भूतरूपवत्त्वमङ्गीकृत्यानुद्भूतस्पर्शवत्त्वाभिधानं तदप्ययुक्तम् । रूपस्पर्शयोरुभयोरप्यप्रत्यक्षत्वसाम्ये वैरूप्यकल्पनाऽयोगात् ।

यदपि अत्यन्ताग्निसंयोगि पीतं सुवर्णं विजातीयरूपपरावृत्तिप्रतिबन्धकद्रवद्रव्यसंयुक्तम् । अत्यन्ताग्निसंयोगित्वे सति रूपविजातीयरूपानधिकरणपार्थिवत्वाज्जलमध्यस्थिताग्निसंयुक्तपीतपटवदित्यनुमानं तदपि न ! सुवर्णयोर्युतसिद्धत्वप्रसङ्गात् । ततश्च कदाचिद्विभागः स्यात् । किञ्च । संयोगस्यान्यतरोभयकर्मसंयोगाः कारणानि । न चात्रान्यतरोभयकर्मणोः कारणत्वं संभवति । तत्संयोगस्यागन्तुकत्वप्रसङ्गात् । न च तदिष्टम् । संयोगस्य सदातनत्वाङ्गीकारात् । नापि संयोगस्य, पीतसुवर्णोपादानस्य तेजःसुवर्णेन संयोगे मानाभावात् । न च पीतसुवर्णस्य रूपपरावृत्त्यनधिकरणत्वानुपपत्त्या सुवर्णावयवस्य तत्संयोगकल्पना । कदाचित्पीतसुवर्णेषु श्वेतसुवर्णविभागापातात् । पार्थिवमात्रस्य लोहलेख्यत्वेऽपि वज्रे तदभावाय वज्रे स्वभावविशेषवत् इहापि रूपपरावृत्तिप्रतिबन्धाय स्वभावविशेषकल्पनस्यैवोचितत्वाच्च ; परेणापि तेजसि रूपपरावृत्तिप्रतिबन्धकत्वस्य क्वाप्यदर्शनेन कल्प्यमानतेजसि स्वभावस्य कल्प्यत्वात् । धर्मधर्मिकल्पनातो धर्ममात्रकल्पनस्यैव लघुत्वात् ।

यदपि प्रत्यक्षद्रव्यत्वेन तस्य रूपवत्त्वे पृथिवीजलान्यत्वे तेजस्त्वात् धर्मिग्राहकमानसिद्धं तथात्वमिति । तदपि न । प्रत्यक्षद्रव्यत्वस्यैवासिद्धेः । न हि द्रव्यमेव नास्तीति वदन् प्रत्यक्षद्रव्यत्वमङ्गीकरोति । येनासिद्धिर्न स्यात् । त्वन्मते प्रत्यक्षस्यैव धर्मिग्राहकत्वेन तस्य च विजातीयरूपपरावृत्तिप्रतिबन्धकत्वाविषयकत्वेन धर्मिग्राहकमानसिद्धं तथात्वमित्यभिधानायोगाच्च । कथञ्चित्प्रतिबन्धकस्य तेजस्त्वसिद्धावपि सुवर्णत्वासिद्धेः । सुवर्णं तेज इत्यभिधानमयुक्तमेवेति । **इत्युदयनोक्ततेजःसुवर्णसाधकत्वभङ्गः** ।

**श्रीसुवर्णभूषणाय नमः ॥ नवीनास्तु** । अत्यन्ताग्निसंयोगेऽनुच्छिद्यमानप्रत्यक्षद्रवत्वाधिकरणं तैजसम् । जलपृथिवीभिन्नत्वे सति रूपवत्त्वाद्वह्निवत् । न चासिद्धिः । प्रत्यक्षद्रवत्वाधारत्वेन तस्य रूपवत्त्वात् । न च तज्जलम् । सांसिद्धिकद्रवत्वानाधारत्वात् । नापि पृथिवी । विरोधि-

शून्यत्वेऽपि अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् । जलपरमाणुवत् इत्याहुः । तन्न । विवादपदं न तेजः द्रवत्वाधारत्वात् । जलवत् । इत्यनुमानबाधात् । न च यदीदं जलभिन्नत्वे सति तेजो न स्यात् । तर्हि अत्यन्ताग्निसंयोगे द्रवत्वोच्छेदः स्यादिति प्रतिकूलतर्कपराहत-मनुमानमिति वाच्यम् । घृते लाक्षादौ च व्यभिचारात् । न हि घृतादिकं अत्यन्ताग्निसंयोगेन अत्यन्त-हिमसंयोगेनेव घनीभूतं भवति । येनोच्छिद्यमानद्रवत्वाधिकरणमिति प्रतीमः । किन्तु घृतमेव नश्यति । पीतसुवर्णेऽनुच्छिद्यमानद्रवत्वाधिकरणत्वरूपत्वदुक्तहेतुसद्भावेऽपि तेजस्त्वस्य त्वयाऽनङ्गीकारेण व्यभिचाराच्च । न च तत्र द्रवत्वमेव नेति युक्तम् । द्रुतं पीतमित्यनुभवात् । न च प्रतीतिर्भ्रान्तिः नेदं रजतमितिवत् बाधकप्रत्ययादर्शनात् । न च पार्थिवद्रवत्वस्यात्यन्ताग्निसंयोगेनोच्छित्त्यापत्त्या द्रुतप्रतीतेर्भ्रमत्वं कल्प्यत इति वाच्यम् । सति धर्मिणि अत्यन्तानलसंयोगे द्रवत्वोच्छेदस्य क्वाप्यदृष्टत्वात् व्याप्त्यभावेन पार्थिवद्रवत्वेनोच्छेदापादनायोगात् । धर्मिणः सह विनाशस्येहापि भावात् ॥ **इति नवीनोक्तसुवर्णतैजसत्वसाधकभङ्गः ।**

**श्रीहिरण्यमूर्तये नमः ॥ मणिकारस्तु ।** घृतपरमाणावग्निसंयोगदशायां द्रवत्वनाशे द्रवत्वान्तरं नोत्पद्यते । तदारब्धे भस्मनि द्रवत्वाभावात् । एवं सुवर्णपरमाणुद्रवत्वं यदि अग्निसंयोगा-द्विनश्येत् तदा तदारब्धं हिरण्यमद्रवं स्यात् । तथा च, कनकारंभकाः परमाणवः अपार्थिवाः अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् । जलपरमाणुवत् । अथ वा तैजसाः जलान्यत्वे सति अत्यन्तानलसंयोगेऽनुच्छिद्यमानद्रवत्वाधिकरणत्वात् । यन्नैवं तन्नैवम् । यथा घृतपरमाणुः । एवं चापार्थिवारब्धं सुवर्णं अपार्थिवम् । अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वारब्धत्वात् जलवत् । यद्वा तैजसम् । अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणजलपरमाणुभिन्नपरमाण्वा-रब्धत्वात् व्यतिरेकेण जलवदित्याह ।

**स स्थूलदृश्वा ।** गवाद्युपभुक्ततृणादिसारभागस्य क्षीरात्मना क्षीरस्य दध्यात्मना दध्नो नवनी-तात्मना नवनीतस्य घृतात्मना परिणामात् परमाणुक्रमेण घृतोत्पत्तेरभावेनाविद्यमानघृतपरमाण्व-भिधानात् । घृतपरमाण्वारब्धभस्मन एवाप्रत्यक्षत्वेन तत्र द्रव्यत्वाभावासिध्या तेन घृतपरमाणौ द्रवत्वाभावसाधनायोगाच्च । कज्जलात्मकघृतारब्धभस्मन एव परम्परया घृतपरमाण्वारब्धत्वात् तन्निष्ठ-प्रत्यक्षसिद्धद्रवत्वाभावेन घृतपरमाणौ द्रवत्वानुत्पादसमर्थनं नानुपपन्नमिति चेत् । न । द्रवत्वशून्य-भस्मनः स्वोपादाने द्रवत्वाभावसाधकत्वेऽपि स्वानुपादानघृतपरमाणौ तत्साधकत्वायोगात् । न हि घृतं भस्मन उपादानम् । येन घृते द्रवत्वाभावसाधनद्वारा घृतपरमाणौ द्रवत्वाभावसाधनमुपपन्नं स्यात्

यदपि, एवं सुवर्णपरमाणुद्रवत्वं यद्यग्निसंयोगात् विनश्येत तदा तदारब्धं हिरण्यमद्रवं स्यात् । इति । तदप्ययुक्तम् । विनष्टद्रवत्वानां परमाणूनां भस्मारम्भकत्वेन तदारब्धसुवर्णस्यैवाभावेन तत्र द्रवत्वाभावापादनायोगात् । न हि अग्निसंयोगविशेषां परमाणूनां द्रवत्वं नष्टं तैरेव सुवर्णमारब्धमिति किञ्चिन्मानम् । अन्यथा अग्निसंयोगात् घृतपरमाणावपि द्रवत्वनाशो नेति स्यात् । तथा सति विनष्टद्रवत्वपरमाण्वारब्धघृतेऽपि द्रवत्वं न स्यादिति वक्तुं शक्यत्वात् । न हि विनष्टद्रवत्वानां घृतपरमाणूनां भस्मारम्भकत्वं न तु तादृशानां सुवर्णपरमाणूनां सुवर्णभस्मारम्भकत्वमित्यत्र किञ्चिन्मानम् । यदपि कनकारम्भकाः परमाणवो न पार्थिवाः । अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् जलपरमाणुवत् इत्यनुमानम् तदपि न । सुवर्णपरमाणूनां अपृथिवीत्वस्यैव साधर्नीयत्वेन अपार्थिवत्वसाधनस्यासङ्गतत्वात् । न हि सुवर्णस्य पार्थिवत्वं मन्यमानाः तदारम्भकपरमाणूनां पृथिव्युपादानकत्वलक्षणपार्थिवत्वं मन्यन्ते । येन तदभावसाधनं सङ्गतं स्यात् ।

यदपि अपार्थिवारब्धं सुवर्णं अपार्थिवम् । अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वारब्धद्रव्यत्वादिति अनुमानं तदपि न । कार्यत्वे सति पृथिव्यनारब्धत्वस्य लघुभूतस्य अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वस्य वा हेतुत्वसंभवे गुरुभूतोक्तहेतूपन्यासायोगात् । अत एव तैजसत्वानुमानं निरस्तम् । अजलत्वे सत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वादित्येतावतैव पूर्णत्वात् । **इति मण्युक्ततैजसत्वसाधनभङ्गः ।**

**श्रीज्योतिर्मयाय नमः ।** नैयायिकैकदेशी तु द्रवत्वाधिकरणं न तेजः पीतत्वात् द्रवत्वाधिकरणत्वात् । शुक्लभास्वररूपानधिकरणत्वात् । उष्णस्पर्शविधुरत्वात् स्वपरप्रकाशकत्वाभावात । पीतपटवत् । न पृथिवी । अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् । जलवत् । नापि जलं नैमित्तिकद्रवत्वाधिकरणत्वात् । लाक्षावत् । तस्मात्पीतं द्रवत्वाधिकरणं सुवर्णं द्रव्यान्तरमित्याह । तन्न । 'दिव्यं, पार्थिवं वस्वि'ति श्रुत्या 'जम्बूनदीरोधसो मृत्तिका जम्बूफलरसानुविध्यमाना वाय्वर्कसंयोगविपाकेन जाम्बूनदं नाम सुवर्णं भवती'त्यादिस्मृत्या यत्कठिणं सा पृथिवीतिश्रौतव्याप्तिककाठिण्यरूपलिङ्गेन च विरुद्धत्वात् । न च पृथिवीत्वे द्रवत्वोच्छेदप्रसङ्गः । वज्रस्य पृथिवीत्वेऽपि लोहलेख्यत्वाभाववत् स्वभावविशेषेण द्रवत्वानुच्छेदोपपत्तेः ॥ **इति सुवर्णस्य द्रव्यान्तरत्वभङ्गः ॥**

**श्रीमन्महाभूतपतये नमः ।** ननु प्राकृतं षड्विधं इत्ययुक्तम् । मनः सद्भावे प्रमाणाभावात् । न हि चक्षुराद्यनङ्गीकारे रूपादिज्ञानासंभवरूपबाधकवत् मनसोऽनङ्गीकारे कस्यचिद्विज्ञानस्यानुपपत्तिर्नामास्ति । यया मनः सिध्येत् । योग्यानां बाह्यपदार्थानां रूपादीनां यथायथं चक्षुरादिग्राह्यत्वात ।

सुखाद्यान्तरपदार्थानां कालाव्याकृताकाशादीनां साक्षिवेद्यत्वात् इति चेत् । न । मनसः साक्षिसिद्धत्वात् । अनुभूयते हि सर्वैः इदानीं मे मनः सुस्थं वर्तते पूर्वं चञ्चलमासीदिति । न चानुभवसिद्धस्यापलापो युज्यते । घटादीनामपि तत्प्रसङ्गात् । किञ्च 'आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्' इत्यादि-स्मृतिसिद्धं मनः । किञ्च अतीतार्थस्मरणं तावद्दृश्यते । न च तच्चक्षुरादिजन्यम् । चक्षुरादीन्द्रिय-व्यापारभावेऽपि जायमानत्वात् । नापि साक्षिजन्यं यथार्थ्यनियमाभावात् । ततश्च तदन्यथानुपपत्त्या च मनःसिद्धिः । तदेतदणवेव । 'अणुभिः पश्यत्यणुभिः शृणोति प्राणा वा अणव' इति प्राणशब्दोदि-तानामिन्द्रियाणामणुत्वाभिधानात् । किञ्च युगपदनेकेन्द्रियाणां स्वस्वविषयसंनिकर्षेऽपि किञ्चिदेवेन्द्रियं ज्ञानमुत्पादयति न सर्वाणीत्यनुभवसिद्धम् । तदन्यथाऽनुपपत्त्या येनेन्द्रियेण ज्ञानं जन्यते तन्मनसा संनिकृष्टं नान्यानीत्यभ्युपगन्तव्यम् । सन्निकर्षतदभावौ च नाणुत्वं विना संभवत इति अणुत्वमुपेयम् । इति स्वमते मनोऽणुत्वसमर्थनम् ॥

श्रीमध्वमनोमन्दिराय नमः ॥ **भाट्टास्तु** । व्याप्तं मनः । ज्ञानासमवायिकारणसंयोगा-धारत्वात् । आत्मवत् । नित्येन्द्रियत्वात् । नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वात् । श्रोत्रेन्द्रि-यवत् । विशेषगुणशून्यद्रव्यत्वात् । कालवत् । किं च । हस्तपादाद्यवच्छेदेन युगपत्सुखसाधन-संबन्धे युगपदेव सुखदुःखान्युत्पद्यन्ते । अनुभूयन्ते च । न च तानि युगपत्स्वावच्छिन्नदेशोत्पन्ना-समवायिकारणमन्तरा संभवन्ति । न चान्यदसमवायिकारणमस्तीति मनःसंयोग एवासमवायिकारण-मिति वाच्यम् । न च मनसोऽणुत्वे हस्तपादाद्यवच्छिन्नात्मना युगपन्मनसः संयोगः संभवतीति व्याप्तत्वमुपेयम् । यद्यपि मध्यमपरिमाणेनाप्येतदुपपन्नम् । तथाऽपि मध्यमपरिमाणस्यानित्यत्वनियमेन मनसोऽनित्यत्वप्रसङ्गात् न तदभ्युपगन्तव्यम् । तदयं प्रयोगः । विवादाध्यासितसुखदुःखानि । युगपद्विद्य-मानासमवायिकारणकाणि । युगपदुत्पद्यमानत्वात् । युगपदुत्पद्यमानघटवत् । अबाधितानुभवाच्च नासिद्धिरिति ।

तत्र । 'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेदि'त्यादिना चाञ्चल्यनियमनयोरुक्तेः । तयोश्च विभुत्वपक्षेऽनुपपत्तेः । आद्यानुमानदृष्टान्तस्य साध्यविकलत्वाच्च । न चात्मा विभुः उत्क्रान्त्याद्यनुपपत्तेः । द्वितीयानुमानदृष्टान्तस्यापि साध्यवैकल्यात् । न हि श्रोत्रं आकाशः येन विभुत्वं स्यात् । श्रोत्रस्याकाशात्मकत्वे बधिराभावप्रसङ्गः । तत एव कर्ण-शष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यपि न । न हि बधिरस्य कर्णः शष्कुली वा तदवच्छिन्नं नभो वा नास्तीति युक्तम् । येन बाधिर्यं स्यात् । अस्तु वा करणशष्कुल्यवच्छिन्नं नभः श्रोत्रम् ।

तथाऽपि साध्यवैकल्यमेव । नभोमात्रस्य विभुत्वेऽपि श्रोत्रशब्दाभिधेयस्य विशिष्टस्य तदभावात् । विशिष्टस्य नित्यत्वाभावेन साधनवैकल्याच्च । सर्वेषां हेतूनामप्रयोजकत्वाच्च । 'प्राणा वा अणव' इति श्रुतिबाधितत्वाच्च ।

यदपि विवादाध्यासितसुखदुःखानि युगपद्विद्यमानासमवायिकारणकानि । युगपदुत्पद्यमानत्वादित्यनुमानम् । तदपि न । आत्ममनसोरुभयोरपि विभुत्त्वे अन्यतरोभयकर्मरूपकारणाभावेनात्ममनःसंयोगासंभवेनानुमानस्य बाधितविषयत्वात् । न च नित्य एव मनःसंयोगः । तथा सति मनःसंयोगविलम्बप्रयुक्तसुखदुःखादिविलम्बाभावेन कारणताग्राहकप्रमाणान्तरस्याप्यभावेन तस्य तत्र कारणत्वाभावापातात् । किं च मनसः विभुत्वे पञ्चेन्द्रियाणां युगपत्स्वविषयसंबन्धेऽपि अनुभवसिद्धं युगपज्ज्ञानाजनकत्वं न स्यात् । मनःसंयोगरूपकारणविलम्बेन कार्यविलम्बस्य वक्तुमशक्यत्वात् । अदृष्टविलम्बेन कार्यविलम्बस्य क्वाप्यदृष्टत्वात् । न चाणुत्वपक्षेऽपि शष्कुलीभक्षणादौ युगपदनेकेन्द्रियजज्ञानानुत्पादप्रसङ्गः । इष्टत्वात् । ज्ञानयौगपद्यानुभवस्तु परमसूक्ष्मकालभेदानाकलनादित्यङ्गीकारात् ।
**इति भाट्टोक्तमनोविभुत्वसाधकभङ्गः ।**

**श्रीमनोऽगोचरायनमः ॥ प्राभाकरास्तु ।** वर्तमानं ज्ञानं न साक्षिवेद्यं नापि मानसम् । स्वेनैव स्वव्यवहारसंभवे ज्ञानान्तराङ्गीकारवैयर्थ्यात् । तस्मिन् सत्येव स्वव्यवहारात् । ज्ञानान्तरविरहदशायां स्वविरहादेव स्वव्यवहारविरहात् । स्वयमतीतं अनागतं स्वव्यवहारे ज्ञानान्तरमपेक्षते । वर्तमानतादशायामपि परस्परव्यवहारार्थं ज्ञानान्तरमपेक्षत एव । ज्ञानान्तरव्यतिरेके व्यवहारव्यतिरेकात् । न चैवमिच्छादेरपि स्वव्यवहृतिकारणत्वापातः । व्यवहारस्य ज्ञानजन्यत्वनियमेनेच्छादिव्यवहारे ज्ञानापेक्षणात् । न च व्यवहारस्य व्यवहर्तव्यविषयज्ञानसाध्यत्वाज्ज्ञानव्यवहारेऽपि ज्ञानान्तरापेक्षेति वाच्यम् । स्वस्यैव स्वविषयत्वात् । न च प्रत्यक्षजनकस्यैव पदार्थस्य प्रत्यक्षविषयत्वेन न ज्ञानस्य स्वविषयत्वं आत्माश्रयप्रसङ्गादिति वाच्यम् । तद्व्यवहारानुकूलशक्तियोगित्वस्यैव तद्विषयत्वशब्देन विवक्षितत्वात् । न चैवं रजतमिति भ्रमसंज्ञिकस्य विज्ञानस्य रजतविषयकत्वं न स्यात् । रजतार्थिनः रजतविषयकप्रवृत्तिरूपरजतव्यवहाराजनकत्वात् । स्याच्च शुक्तिविषयकत्वम् । तत्र प्रवृत्तिरूपव्यवहारजनकत्वादिति वाच्यम् । अस्त्येव रजतज्ञानस्य रजतव्यवहारजननशक्तिः । दोषाभिभूतत्वात्तु न प्रवृत्तिं जनयति । शुक्तौ प्रवृत्तिश्चेन्द्रियजन्यादिदमिति विज्ञानादेव भवति । न चेदमिति शाब्दबोधादपि रजतार्थिप्रवृत्तिप्रसङ्गः । उपस्थितरजतभेदाग्रहस्तत्र सहकारीत्यङ्गीकारात् । स्वप्रकाशत्वे प्रमाणं प्रत्यक्षमेव । सर्वाः प्रतीतय इदमहञ्जानामीत्येवमाकाराः ज्ञातारं ज्ञेयं ज्ञानं चोल्लिखन्त्यो

जायन्ते । तत्रात्मा कर्तृत्वेन, ज्ञेयं कर्मतया, ज्ञानं क्रियात्वेन भासते । अथवा परिशेषाद्वा स्वप्रकाशत्वसिद्धिः । परप्रकाशत्वे हि ज्ञानमेव न सिध्येत् । अजिज्ञासितग्राह्यत्वे ज्ञानज्ञानतज्ज्ञानधाराप्रसङ्गेन सुप्त्याद्यभावप्रसङ्गात् । जिज्ञासितग्राह्यत्वे च अज्ञाते जिज्ञासाऽयोगेन ज्ञाने सति जिज्ञासा जिज्ञासायां च ज्ञानमित्यन्योन्याश्रयप्रसङ्गात् । प्रकारान्तराभावादिति । तस्माद्वर्तमानज्ञानानां स्वप्रकाशत्वमेवेत्याहुः ।

तन्न । ज्ञानस्य इदमहञ्जानामीत्याकारकत्वस्याप्रामाणिकत्वेन प्रत्युत घटोयमित्याद्याकारत्वेन स्वविषयस्वरूपस्वप्रकाशत्वस्य वक्तुमशक्यत्वात् । न हि घटोऽयमित्याकारस्य विज्ञानस्य ज्ञानमात्मा वा विषय इति वक्तुं युक्तम् । पटादिविषयकत्वस्याप्यापातात् । न च इदमहं जानामीत्येव ज्ञानाकारः, न तु घटोयमित्याकार इति वाच्यम् । किं जानासीति पृष्टे घटं जानामीत्येवोत्तरदर्शनात् । अन्यथा घटमात्मानं ज्ञानं च जानामीति वदेयुः । किं च ज्ञानस्य घटवज्ज्ञानादिविषयत्वे घटमहं जानामीति न ज्ञानाकाराभ्युपगमो युक्तः । किं तु घटात्मज्ञानानीत्याकारो वक्तव्यः । अनेकविषयकेषु घटपटस्तम्भा इत्यादिसमूहालम्बनज्ञानेषु तदाकारदर्शनात् । समूहालम्बनत्वाविशेषेप्याकारभेदाङ्गीकारायोगात् । न चानुव्यवसायस्यापि घटमहं जानामीत्याकारकत्वानुपपत्तिः । तस्यात्मविशेष्यकघटज्ञानविशेषणकविशिष्टवैशिष्ट्यबोधत्वेन समूहालम्बनत्वाभावात् । न च चाक्षुषज्ञानमपि तथेति वक्तुं युक्तम् । आत्मनो रूपरहितद्रव्यत्वेन तस्याचाक्षुषत्वात् । न चोपनीतस्यात्मनश्चाक्षुषप्रत्यक्षे भानं नायुक्तम् । घ्राणेन चाक्षुषज्ञानोपनीतचन्दनविशेष्यकस्य सुरभिचन्दनमिति ज्ञानस्योत्पाददर्शनात् इति वाच्यम् । ज्ञानमात्रस्योत्पत्तेः पूर्वमात्मोपनयकल्पकाभावात् ।

अपि च । अत्र घटोऽस्तीत्यादिशब्दजन्यज्ञानस्यात्मादिविषयकत्वं नेत्यभ्युपगन्तव्यम् । जनकीभूतशब्दाविषयस्यात्मादेः जन्यज्ञानाविषयत्वात् । न हि घटपदमस्तिपदं वा आत्मविषयकम् । येन जन्यज्ञानविषयत्वं भवेत् । शाब्दादिज्ञानस्यात्मादिविषयकत्वाभावे चाक्षुषप्रत्यक्षादेरपि तद्विषयत्वं न भवेत् । कारणाविषयत्वसाम्यात् । किं चैवमिच्छादेरपि स्वव्यवहारजनकत्वरूपस्वविषयकत्वापातः ।

यदत्रोक्तं व्यवहारस्य ज्ञानजन्यत्वनियमेनेच्छादिव्यवहारे ज्ञानमपेक्षितं न तु ज्ञानव्यवहारे ज्ञानान्तरमिति । तन्न । व्यवहारे व्यवहर्तव्यातिरिक्तज्ञानसाध्यत्वस्य घटादौ दर्शनेन ज्ञानव्यवहारेपि ज्ञानान्तरमपेक्षितमिति वक्तुं शक्यत्वात् । लाघवात्स्वविषयकज्ञानसाध्यत्वमेव स्वव्यवहारस्य न तु स्वातिरिक्तत्वमपि ज्ञानविशेषणम् इति चेत् न । स्वव्यवहारे स्वविषयकसाध्यत्वमेव लाघवात् न तु स्वविषयकस्य ज्ञानत्वमपेक्षित गौरवादित्यपि वक्तुं शक्यत्वात् । किं च व्यवहारस्य व्यवहर्तव्याविषयकज्ञानसाध्यत्वनियमेन ज्ञानविषयकज्ञानाभावे व्यवहार एव न स्यात् ।

यदत्रोक्तम् । स्वयमेव स्वविषयकं तद्व्यवहारानुकूलशक्तियोगिज्ञानत्वस्यैतद्विषयकत्वशब्दार्थत्वादिति । तन्न । स्वविषयव्यवहारानुकूलशक्तिसिद्धौ स्वविषयकत्वसिद्धिः तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयात् । यदपि ज्ञानस्य परप्रकाशत्वे ज्ञानमेव न सिध्येत् । अजिज्ञासितग्राह्यत्वे ज्ञानज्ञानतज्ज्ञानधाराप्रसङ्गेन गृह्याग्रहभावप्रसङ्गात् । जिज्ञासितग्राह्यत्वे चाज्ञाते जिज्ञासायोगेन ज्ञाने सति जिज्ञासा, जिज्ञासायां च ज्ञानमित्यन्योन्याश्रयप्रसङ्गात् । प्रकारान्तराभावात् । इति तदपि न । ज्ञानस्य जिज्ञासितग्राह्यत्वेऽपि ज्ञानज्ञानस्य साक्षिरूपस्य स्वप्रकाशत्वेन ज्ञानधाराप्रसङ्गाभावात् । न च ज्ञानज्ञानस्य स्वप्रकाशत्वाङ्गीकाराद्वरं ज्ञानस्यैव स्वप्रकाशत्वाङ्गीकारो लाघवादिति युक्तम् । इन्द्रियजज्ञानस्य इन्द्रियसन्निकृष्टविषयत्वनियमेन इन्द्रियासन्निकृष्टस्वविषयत्वायोगात् । न च साक्षिज्ञानस्याप्ययं दोषः । साक्षिणो नित्यज्ञानव्यञ्जकत्वाङ्गीकारेण अभिव्यञ्जनानुगुण तस्य विषयीभूतज्ञानवत्सत्त्वेन साक्षीन्द्रियस्य विषयीभूतेन घटादिज्ञानेन तद्विषयकनित्यज्ञानेन च संनिकर्षसद्भावात् । घटादिविषयकशाब्दबोधस्य शब्दाविषयस्वात्मविषयकत्वस्य कथमप्ययोगाच्च । **इति प्राभाकरोक्तज्ञानस्वप्रकाशत्वभङ्गः ।**

**श्रीस्वप्रकाशाय नमः ॥ मणिकारस्तु ।** न ज्ञानं स्वप्रकाशं ज्ञानजनकेन्द्रियसन्निकर्षानाधारत्वात् । इन्द्रियासन्निकृष्टस्यापीन्द्रियजन्यज्ञानविषयत्वेऽतिप्रसङ्गात् । किं तु मनोवेद्यम् । न च तस्यापि ज्ञायमानत्वेन ज्ञानान्तरानुसरणे तस्याप्येवमित्यनवस्थाऽऽपातः । तस्यावश्यवेद्यत्वाभावेन ज्ञानपरम्पराऽनुसरणाभावात् । ननु ज्ञानस्यावश्यवेद्यत्वाभावान्नानवस्थेत्ययुक्तम् । मनसो ज्ञानबोधने संयुक्तसमवायस्यापेक्षणीयत्वात् तस्य च सद्भावादन्यस्यानपेक्षणीयत्वात्सामग्रीसद्भावेन ज्ञानस्यावर्जनीयत्वात् । सत्यामपि सामग्र्यां ज्ञानधाराऽनुत्पादे आद्यज्ञानमपि न ज्ञायेतेति चेत् न । सुखादिसामग्र्याः तद्बुद्ध्यादिसामग्र्याश्च प्रतिबन्धकत्वात् । ननु योग्यात्मविशेषगुणत्वात् ज्ञानत्वात् ज्ञानं प्रत्यक्षमेवेति व्याप्तेर्वित्तेरवश्यवेद्यत्वमिति अनवस्था स्यादेवेति चेत् । न । व्याप्त्यसिद्धेः । परप्रकाशत्वेऽनवस्थानात् । स्वप्रकाशत्वे कारणानुपपत्तेः ।

अपि च परप्रकाशेऽनवस्थानात्परिशेषानुमानेन ज्ञानस्य स्वप्रकाशत्वं ज्ञेयम् । तथा च स्वप्रकाशत्वानुमितेरपि स्वप्रकाशत्वमनुमित्यन्तरगम्यमेव । तस्यापीत्यनवस्था स्वप्रकाशत्वानुमितिपरम्पराद्वारा स्वप्रकाशत्ववादिनोऽपि स्यात् । विषयान्तरसंचारस्य प्रतिबन्धकत्वं यावज्जिज्ञासं वा स्वप्रकाशत्वानुमितिरिति यदि, तुल्यं परप्रकाशत्वेऽपीत्याह ।

तत्र ज्ञानस्य स्वजनकेन्द्रियसन्निकर्षानाधारत्वात् इति यत्स्वप्रकाशत्वनिराकरणं तदनुमतमेव। यत्तु मानसत्ववचनं तदयुक्तम्। ज्ञानस्य मनोवेद्यत्वे ज्ञानज्ञानस्यापि ज्ञानं स्यात्। तस्याप्येवमिति ज्ञानज्ञानतज्ज्ञानधाराप्रसङ्गात्। ज्ञानग्राहकत्वाभिमतस्य मनसः स्वजन्यज्ञानेन संयुक्तसमवायलक्षण-सन्निकर्षसद्भावात् अपेक्षणीयान्तराभावात्।

यदत्रोक्तं सुखादिसामग्र्याः तद्बुद्ध्यादिसामग्र्याश्च प्रतिबन्धकत्वान्न ज्ञानधारोत्पाद, इति। तन्न। सुखसामग्रीसन्तानवता महाराजेन इदमहं जानामीति ज्ञानस्यानुभूयमानत्वेन सुखादिसामग्र्या ज्ञानज्ञानसामग्रीप्रतिबन्धकत्वाभावात्। अन्यथा कदापि ज्ञानं न ज्ञायेत। सुखदुःखतज्ज्ञानघटाद्यन्यतम-ज्ञानसामग्र्याः सदा सद्भावात्। न च जाग्रदवस्थायां यस्य कस्यापि ज्ञानसामग्री नेति वक्तुं युक्तम्। ज्ञानसामग्रीवैधुर्यस्य सुषुप्तिमोहासाधारणत्वात्। अन्यथा यदा सुखस्य तज्ज्ञानस्य वा सामग्री नास्ति तदा घटज्ञानतज्ज्ञानतज्ज्ञानधारा त्रिंशच्चत्वारिंशत्पर्यन्ता स्यात्। तत्परिहाराय सुखाद्यन्यतम-सामग्रीनैयत्याङ्गीकारे ज्ञानं कदाऽपि न ज्ञायेतेत्येतत्सुस्थं भवति।

किं च बहुवित्तव्ययायाससाध्या पारत्रिकी प्रवृत्तिरावश्यकार्थनिश्चयसाध्या। स च अर्थ-विषयकप्रमाणजन्यज्ञानप्रामाण्यनिश्चयसाध्यः। प्रामाण्यसन्देहेऽर्थसंशयदर्शनात्। एवं प्रामाण्यनिश्चयोऽपि ज्ञानप्रामाण्यनिश्चयसाध्यः। सोऽप्येवं सोऽप्येवमिति प्रामाण्यनिश्चयधाराऽवश्यं वक्तव्या। न च प्रामाण्यनिश्चयधाराऽङ्गीकारो युक्तः। अनानुभाविकत्वात्। न च सा परित्यक्तुं शक्या। उत्तरोत्तर-ज्ञानप्रामाण्यसंदेहे पूर्वपूर्वज्ञाने विश्रामाभावेन आवश्यकार्थे संदेहापत्त्या प्रवृत्त्यभावापातात्। साक्षि-ज्ञानस्य प्रामाण्यनिश्चयात्मकस्य स्वप्रकाशत्वाङ्गीकारे नायं दोषः प्रसज्यत इति ज्ञानज्ञानस्य स्वप्रकाशत्वमभ्युपेयम्।

यदपि यज्ज्ञानं तत्प्रत्यक्षमेवेति व्याप्तेरसिद्धत्वाभिधानं तदपि न। स्वेनाननुभूयमानं ज्ञानं स्वस्यास्तीत्यस्याप्रामाणिकत्वात्। अप्रामाणिकं चास्तीत्यस्य व्याहतत्वात्। यदत्रोक्तं अविरललग्न-तद्वित्तिधारा नाभ्युपेयते। किं नाम केनचित् कदाचित् क्वचिद्वित्तिर्व्यवहारस्मरणलिङ्गादिना प्रतीयत इति सर्वा प्रमाणसिद्धैवेति। तन्न व्यवहाराजनकप्रतीतेः स्वेनाज्ञातायाः लिङ्गाभावेन परेणाप्यनु-मातुमशक्यायाः प्रामाणिकत्वाव्युत्पादनात्। व्यवहारादिना लिङ्गेन परेणानुमिताया अपि स्वज्ञातत्वे मानाभावेन स्वाज्ञाता स्वस्यास्तीत्यस्यानुपपादनाच्च।

यदपि ज्ञानस्य परप्रकाशेऽनवस्थानात्परिशेषानुमानेन ज्ञानस्य स्वप्रकाशत्वं ज्ञेयम् । तथा च स्वप्रकाशत्वानुमितेरपि स्वप्रकाशत्वमनुमित्यन्तरेण गम्यं एवं तस्यापीत्यनवस्था स्वप्रकाशत्वानुमिति-परंपरया स्वप्रकाशत्ववादिनोऽपि स्यादिति परस्य दूषणाभिधानं तदपि न । स्वाध्यायोऽध्येतव्य इति सर्वस्याध्ययनबोधकेन वाक्येन स्वस्याप्यध्ययनबोधनवत् ज्ञानानां स्वप्रकाशत्वं विषयीकुर्वन्त्या स्वस्यापि स्वप्रकाशत्वविषयीकरणेनानुमितिधाराऽनाश्रयणात् । परेण स्वप्रकाशत्वानुमितेः विषयान्तरसंचार-प्रतिबद्धत्वानङ्गीकारेण तत्प्रतिबन्दीग्रहणमप्ययुक्तम् ॥ **इति मण्युक्तज्ञानमानसत्त्वभङ्गः ॥**

**श्रीचिदात्मने नमः ॥ मणिकारास्तु । द्विविधं** प्रत्यक्षम् । सविकल्पकं निर्विकल्पकं च । तत्र नामजात्यादियोजनारहितं निष्प्रकारकं निर्विकल्पकम् । न च निर्विकल्पके मानाभावः । प्राथमिकं गौरिति विशिष्टज्ञानं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् । अनुमितिवत् । इत्यनुमानेन विशेषणज्ञानजन्यत्वे सिद्धे अनवस्थाप्रसङ्गेन सविकल्पकविशेषणज्ञानस्य कारणत्वासंभवेऽपि परिशेषात् कारणतया विशेषणावगाहिनिर्विकल्पकसिद्धेः । ननु विशेषणविशेष्यभानसामग्रीतः साकाङ्क्षोभयविषयक-मेकं ज्ञानम् । तत्र प्रत्यक्षे योग्येन्द्रियसन्निकर्षात्, अनुमितौ पक्षधर्मताबलात् व्यापकताऽवच्छेदकप्रकारेण, शब्दे योग्यतादिवशात् पदार्थतावच्छेदकरूपेण, अपूर्वमेव विशेषणं भासते । उपमितावप्येवमिति न क्वापि विशेषणज्ञानं हेतुः । न च प्रत्यभिज्ञायां तत्ताऽनुभवरूपं विशेषणज्ञानं कारणमिति वाच्यम् । उद्बुद्धतत्तद्गोचरसंस्कारस्यैव इन्द्रियसहकारित्वेन तत्तानुभवस्याहेतुत्वात् । यद्यपि सुरभिचन्दनमित्यादौ विशेषणज्ञानमपेक्षितं तथाऽपि न विशेषणज्ञानत्वेन अपि त्विन्द्रियप्रत्यासत्तित्वेनैवेति चेत् । उच्यते । साध्यप्रसिद्धिपदार्थोपस्थितिवाच्यत्वज्ञानतत्तानुभवानां अनुमित्यादिहेतुत्वम् । साध्यप्रसिद्ध्यादिकं विना तदभावात् । साध्यादिकं च विशेषणमिति तज्ज्ञानमनुमित्यादिहेतुः । यद्यपि अनुमित्यादिकं प्रति साध्यादिज्ञानत्वेन हेतुता ; तथाऽपि विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानत्वेन कारणता । यद्विशेषणयोः कार्यकारणभावस्तत्सामान्ययोर्बाधकाभावे तथात्वनियमात् । अभावस्य तु न निर्विकल्पकम् ॥ तद्बुद्धौ प्रतियोग्यधिकरणज्ञानयोः कारणत्वेन तदुभयविशिष्टज्ञानसामग्रीनियमात् इत्याह ।

तन्न । ज्ञानमात्रस्य क्वचिद्विषये तार्किकाभिमतसविकल्पकत्वानाश्रयशुद्धनिर्विकल्पकसद्भावे प्रमाणाभावात् । यदत्रोक्तं प्राथमिकं गौरिति विशिष्टज्ञानं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवत् । इत्यनुमानेन विशेषणज्ञानजन्यत्वे सिद्धे अनवस्थाप्रसङ्गेन सविकल्पकविशेषणज्ञानस्य कारणत्वायोगे परिशेषात् कारणतया विशेषणावगाहिनिर्विकल्पकसिद्धिरिति । तन्न । विशेषण-विशेष्यतत्संबन्धभानसामग्रीत एव विशिष्टज्ञानसंभवे विशेषणज्ञानस्यापि कारणत्वे मानाभावेन तद्व्याप्य-

सिद्धेः । न च विशेषणज्ञानं वैशिष्ट्यभानसामग्रीति वाच्यम् । विशेषणविशेष्यभाने तदुभयसन्निकर्षस्येव, तद्वैशिष्ट्यभानेऽपि तत्सन्निकर्षस्यैव कारणत्वात् । न च वैशिष्ट्यस्य संबन्धत्वात् संबन्धस्य च संबन्धिनिरूप्यत्वात् विशेषणज्ञानं वैशिष्ट्यभानसामग्रीति युक्तम् । विशेष्यज्ञानस्यापि सामग्रीत्वप्रसङ्गात् । न चेष्टापत्तिः । विशेष्यज्ञानं च न कारणमिति त्वयैवोक्तत्वात् । अभवावज्ञानविलोपापाताच्च । यथा हि अभावनिर्विकल्पकानङ्गीकारिणस्तव मते विशेषणज्ञानाभावात्, घटाभाववद्भूतलमिति प्रथमतो ज्ञानासंभवः तथा विशेष्यज्ञानाभावात् भूतले घटाभाव इत्यपि ज्ञानं न भवेत् ।

यदपि 'साध्यप्रसिद्धिपदार्थोपस्थितिवाच्यत्वज्ञानतत्तानुभवानां अनुमित्यादिहेतुत्वम् । साध्यप्रसिद्ध्यादिकं विना तदभावात् । साध्यादिकं च विशेषणमिति तज्ज्ञानमनुमित्यादिहेतुः । यद्यपि अनुमित्यादिकं प्रति साध्यादिज्ञानत्वेन हेतुता । तथाऽपि विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानत्वेन कारणता । यद्विशेषणयोः कार्यकारणभावः तत्सामान्ययोर्बाधकाभावे तथात्वनियमादि'ति । तदपि न । व्याप्तिज्ञानसद्भावे साध्यप्रसिद्धिविलम्बेन अनुमितिविलम्बादर्शनात् । साध्यप्रसिद्धेरनुमितौ कारणत्वाभावात् । साध्यप्रसिद्धिं विना व्याप्तिज्ञानं न संभवतीति साध्यप्रसिद्धिरावश्यकीति चेत् । न । व्याप्तिज्ञानार्थमावश्यकत्वेनानुमितिकारणत्वसाधनायोगात् । पदार्थोपस्थितेरपि वाक्यार्थज्ञानाहेतुत्वाच्च । वाक्यश्रवणानन्तरं झडितिवाक्यार्थबोधस्य जायमानत्वेन वाक्यश्रवणवाक्यार्थबोधयोरन्तरा पदार्थोपस्थितेरभावात् । वाच्यवाचकसंबन्धस्मरणसद्भावे पदार्थज्ञानविलम्बेन कार्यविलम्बाभावात् । उपमानस्यानुमान एवान्तर्भावेन वाच्यत्वज्ञानस्य व्याप्तिज्ञानोपयोगित्वेन उपमितावहेतुत्वात् । प्रत्यभिज्ञायां तत्तानुभवजनितसंस्कारस्यैवेन्द्रियसहकारित्वेन तत्ताऽनुभवस्याहेतुत्वात् । अस्तु वा साध्योपस्थितिरनुमितौ कारणम् । तथाऽपि न विशेषणज्ञानस्य विशिष्टज्ञानकारणतासिद्धिः । अनुमितिकारणस्य साध्यतावच्छेदकप्रकारकज्ञानस्य विशेषणज्ञानत्वाभावात् । पक्षधर्मतावललभ्यापूर्वव्यक्तेरेव पक्षविशेषणत्वात् । तस्याश्चापूर्वत्वहानिप्रसङ्गेन अनुमितिजनकसाध्योपस्थितिविषयत्वाभावस्य स्वीकर्तव्यत्वात् । न च विशेषणतावच्छेदकप्रकारकज्ञानस्यैव विशिष्टज्ञानकारणत्वमुच्यते न विशेषणावगाहिज्ञानस्येति वाच्यम् । निर्विकल्पकासिद्धिप्रसङ्गात् ।

एतेन यद्यपि अनुमित्यादिकं प्रति साध्यादिज्ञानत्वेन हेतुता तथाऽपि विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानत्वेन कारणता । यद्विशेषयोः कार्यकारणभावः बाधकाभावे तत्सामान्ययोरपि तथात्वनियमादित्यपि परास्तम् । अनुमितिकारणविशेषणतावच्छेदकप्रकारकज्ञानस्य विशेषणाविषयकत्वेन विशेषणज्ञानविशेषणतावच्छेदकप्रकारकविशेषणजातीयज्ञानयोः सामान्यविशेषभावाभावात् ।

यत्तु अभावस्य न निर्विकल्पकम् । तद्बुद्धौ प्रतियोग्यधिकरणज्ञानयोः कारणत्वेन तदुभयविशिष्टज्ञानसामग्रीनियमादिति । तन्न । घटाद्यभावत्वेन अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वेऽपि अभावबुद्धिमात्रे प्रतियोगिज्ञानस्य कारणत्वाभावात् । अन्यथाऽभावोऽस्तीति शब्दात् अभावज्ञानं न स्यात् । एवं प्रमेयमिति शब्दाच्च अभावज्ञानं न स्यात् ।

किं च घटादेरपि न निर्विकल्पकम् । घटत्वादिना घटादिबुद्धौ विशेषणसंबन्धभाननियमादिति वक्तुं शक्यत्वात् । घटादिसविकल्पकबुद्धेः विशेषणसंबन्धाभानसामग्रीनैयत्येऽपि ज्ञानमात्रस्य तन्नियत्याभावात् घटादीनां यदि निर्विकल्पकम् । तदाऽभावस्यापि तथाऽस्तु । अभावसविकल्पकस्यैव प्रतियोगिभानसामग्रीनैयत्यं इति वक्तुं शक्यत्वात् । किं च अभावत्वोपस्थितिं विनाऽपि यदि अभाव इति विशिष्टबुद्धिः । तर्हि घटत्वादीनामुपस्थितिं विनाऽपि विशिष्टबुद्धिसंभवात् निर्विकल्पकोच्छेदः स्यात् । ननु नास्माभिर्घटत्वादीनां विशेषणतया भानार्थं निर्विकल्पकमङ्गीकृतं येनोक्तदोषः स्यात् । किं नाम विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियमात् विशिष्टज्ञानसिद्ध्यर्थम् । कारणं विना कार्यायोगात् । न चाभावबुद्धौ व्यभिचारः । तस्याभावत्वरूपविशेषणज्ञानजन्यत्वाभावेऽपि प्रतियोगिरूपविशेषणज्ञानजन्यत्वात् । यावद्विशेषणज्ञानजन्यत्वानभ्युपगमात् इति चेत् । न । घटादिबुद्धेरपि धर्मिकालान्यतरविशेषणज्ञानजन्यत्वसंभवेन निर्विकल्पकासिद्धिप्रसङ्गात् । न हि घटो घट इत्येव प्रतीयते । येन निर्विकल्पकसिद्धिः स्यात् । किं तु अत्रेदानीं घट इति धर्म्यादिविशेषणकतया प्रतीयते । तस्मात् सर्वमपि ज्ञानं सविकल्पकमेवास्थेयम् ॥ **इति मण्युक्तनिर्विकल्पकभङ्गः** ।

**श्रीमुकुन्दाय नमः** । यद्विशेषणावच्छिन्नतया यस्य ज्ञानं तत्तस्य सविकल्पकम् । अयं घट इत्यादिविज्ञानं विशेषणावच्छिन्नतया घटस्य ज्ञानमिति घटस्य सविकल्पकम् । इदमेव ज्ञानं घटत्वविषयकमपि विशेषणावच्छिन्नतया तद्विषयकत्वाभावात् न तस्य सविकल्पकम् । अपि तु निर्विकल्पकम् । एवं सर्वमपि विज्ञानं कस्मिंश्चिद्विषये सविकल्पकं कस्मिंश्चिद्विषये निर्विकल्पकं इति बोध्यम् । यद्यस्य ज्ञानं तत्तत्सविकल्पकमित्येवोक्ते घटत्वावगाहिनोऽयं घट इति विज्ञानस्य तत्सविकल्पकत्वाभावादतिव्याप्तिः । तस्य घटसविकल्पकत्वेऽपि घटत्वसविकल्पकत्वाभावेनालक्ष्यत्वात् । सा माभूदित्येतदर्थं विशेषणावच्छिन्नतयेत्युक्तम् । द्विविधं विशेषणम् । उपरञ्जकव्यावर्तकभेदात् । अव्यावर्तकत्वे सति भासमानवैशिष्ट्यप्रतियोग्युपरञ्जकं, व्यावृत्तिबुद्धिजनकं भासमानवैशिष्ट्यप्रतियोगि व्यावर्तकम् । तद्द्विविधं विशेषणमुपलक्षणं चेति । तात्पर्यविषयीभूतान्वयप्रतियोगितावच्छेदकं विशेषणम् । यथा दण्डी कुण्डलीत्यादौ दण्डादिः । दण्डिनमानयेत्युक्ते दण्डावच्छिन्नस्यानयनप्रतीतेः । अन्वयप्रतियोगि-

ताऽनवच्छेदकं व्यावर्तकमुपलक्षणम् । यथा काकवद्देवदत्तगृहमित्यादौ काकादिः । काकवद्देवदत्त-गृहं प्रविशेत्युक्ते काकानवच्छिन्नतादशायामपि प्रवेशान्वयदर्शनात् । जटाभिस्तापस इत्यादौ जटानां विशेषणत्वमेव; अन्वयप्रतियोगितावच्छेदकत्वे सति व्यावर्तकत्वात् । जटानामुपलक्षणत्वं तु विशेष्य-वाचकपदविभक्तिभिन्नविभक्त्यन्तपदवाच्यत्वं रूपं पारिभाषिकम् । तथा चात्रोक्तोपलक्षणलक्षणस्य तत्रा-भावो न दोषाय । तासां पारिभाषिकोपलक्षणत्वात् ॥ **इति विशेषणोपलक्षणनिरूपणम् ।**

**मणिकारस्तु ।** प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकं विशेषणम् । तदन्यद्व्या-वर्तकमुपलक्षणम् । अथवा विवक्षितान्वयप्रतियोगितावच्छेदकं व्यवच्छेदकं विशेषणम् । दण्डिन-मानयेत्यादौ दण्डस्तथा । तदनवच्छेदकं व्यवच्छेदकमुपलक्षणम् । काको न देवदत्तस्य गृहान्वयप्रति-योगितावच्छेदकः तद्विरहदशायामपि देवदत्तान्वयात् । किं तु गृहविशेष एवोपलक्षणपरिचरितः । यद्वा यदन्विततया ज्ञान एव तद्विशेष्ये तात्पर्यविषयीभूतेतरान्वयधीस्तद्व्यवच्छेदकं विशेषणम् । तदन्यदु-पलक्षणम् । उपलक्षणानवच्छिन्नेऽप्युपलक्ष्ये तात्पर्यविषयीभूतान्वयबोधात् । यद्वा विशेष्यान्वयिना यस्या-वश्यमन्वयस्तद्व्यवच्छेदकं विशेषणं तदन्यदुपलक्षणम् । तत्रोपलक्ष्यस्य विशेष्यमात्रान्वयात् । यद्व्यावर्तकं विशेष्यान्वयिनाऽन्वीयते तद्विशेषणम् । यन्नान्वीयते तदुपलक्षणम् । यद्वा तात्पर्यविषयान्वयप्रतियोगी उद्देश्यान्वयप्रतियोगी वा धर्मो विशेषणम् । तदन्यदुपलक्षणं इत्याह ।

तन्न । आद्यलक्षणस्योपलक्षणेऽतिव्याप्तिः । उपलक्षणस्यापि काकस्य स्वप्रत्याय्यगृहान्तर-व्यावृत्त्यधिकरणतावच्छेदकत्वात् । अनतिप्रसक्तस्यैवावच्छेदकत्वात् । अतिप्रसक्तत्वे च व्यावृत्तिबुद्धि-जनकत्वायोगेनोपलक्षणत्वमेव न स्यात् । व्यर्थविशेष्यत्वाच्च ।

यदत्रोक्तं रुचिदत्तेन । व्यावृत्त्यधिकरणतावच्छेदकत्वं तदन्यूनातिरिक्तकालीनविशेष्यसंबन्धवत्वं तेनोपलक्षणकाकादिव्युदासः । ततः काकादिरहितकालीनाया अपि काकात्यन्तायोगव्यावृत्तेः प्रतीत्या तस्य तदधिकरणतान्यूनकालीनविशेष्यसंबन्धवत्त्वात् । दण्डस्य तु न तथा । पुरुषे दण्ड-संबन्धकालीनाया एव दण्डायोगव्यावृत्तेः ततः प्रत्ययात् । दण्ड्ययमासीदित्यादितोऽपि यदा दण्ड-संबन्ध आसीत् तदा तत्कालीनाया एवादण्डव्यावृत्तेः प्रत्ययात् । गोत्वादिसमनियतस्याप्रकारीभूत-धर्मस्य विशेषणत्वप्रसङ्गवारणाय व्यावर्तकमिति । प्रत्याय्यव्यावृत्तिप्रत्ययानुकूलो ज्ञानप्रकार इत्यर्थः इति ।

तन्न । प्रत्याय्यव्यावृत्त्यसमानकालीनदण्डादेरविशेषणत्वापातात् । न हि दण्डादीनां विशेष्य-संबन्धः प्रत्याय्यव्यावृत्तिसमानकालिका । व्यावृत्तेरन्योन्याभावरूपत्वेन सदातनत्वात् । दण्डसंबन्धस्य कादाचित्कत्वात् । अत एव ततः काकादिरहितकालीनाया अपीत्यादिना उपलक्षणविशेषणयोर्वैलक्षण्योप-पादनमप्ययुक्तम् । काकबोध्यव्यावृत्तेरिव दण्डबोध्यव्यावृत्तेरपि नित्यत्वात् । दण्ड्ययमासीदिति प्रतीतिवत् काकवदिदमासीदिति प्रतीतेर्भावात् । काकवदिदमासीदिति प्रतीतेः काकसंबन्धध्वंस-विषयकत्वं दण्ड्ययमासीदिति प्रतीतेश्च अन्योन्याभावविषयत्वमिति वैजात्यकल्पनायोगात् । गोत्वसम-नियतस्य धेनुत्वादेरपि विशेषणत्वेन तद्व्यावृत्त्यर्थं व्यावर्तकपदमित्यभिधानायोगात् । प्रत्याय्यव्यावृत्ति-प्रत्ययानुकूलत्वे सति ज्ञानप्रकारत्वस्यापि सद्भावेन विशेषणदानेऽप्यव्यावृत्तेश्च । न हि गौरिति विज्ञाने व्यावृत्तिबोधो भवति धेनुरिति विज्ञाने व्यावृत्तिबोधो न भवतीति युक्तम् । व्याप्त्यनुसंधाने व्यावृत्ति-प्रत्ययानपायात् । अननुसंधाने च गोत्वप्रत्ययेऽपि व्यावृत्तिबोधो न भवतीति युक्तम् । व्याप्त्यनुसंधाने व्यावृत्तिप्रत्ययानपायात् । अननुसंधाने च गोत्वप्रत्ययेऽपि व्यावृत्तिबोधाजननात् ।

यदपि यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयीभूतेतरान्वयधीस्तद्व्यवच्छेदकं विशेषणमिति । तदपि न । उपलक्षणेऽतिव्याप्तेः । काकवद्देवदत्तगृहमितिवाक्येन काकान्विततया ज्ञात एव गृहे देवदत्तान्वयबोधदर्शनात् ।

यदत्रोक्तं उपलक्षणानवच्छिन्नेऽप्युपलक्ष्ये तात्पर्यविषयीभूतान्वयबोधान्नोपलक्षणेऽतिव्याप्तिरिति । तन्न । शब्दस्य काकावच्छिन्न एव देवदत्तान्वयबोधकत्वात् । काकवदिति पदयुक्तस्य वाक्यस्य काकानवच्छिन्नदेवदत्तगृहबोधकत्वस्यायुक्तत्वात् ।

यदपि विशेष्यान्वयिना यस्यावश्यमन्वयस्तद्व्यवच्छेदकं विशेषणं यद्व्यावर्तकं विशेषान्वयिना-ऽन्वीयते तद्विशेषणमिति लक्षणं तदपि न । रसवान् रूपवान् इति रूपाधिकरणतायां ताटस्थ्येनोपात्तस्य रसस्यापि विशेषणत्वप्रसङ्गात् । यावद्विशेष्यभाविनो रसस्य विशेष्यान्वयिनाऽवश्यमन्वयात् । साक्षा-दन्वयस्यारुण्येऽप्यभावात् । न ह्यारुण्यं क्रयेण साक्षादन्वेति किं तु द्रव्यपरिच्छेदद्वारेति ।

यदपि तात्पर्यविषयान्वयप्रतियोगी उद्देश्यान्वयप्रतियोगी धर्मो वा विशेषणमिति । तदपि न । साक्षादन्वयप्रतियोगित्वस्यारुण्येऽभावात् । विशेष्यसंबन्धद्वाराऽन्वयस्य रसवान् रूपवानित्यादावपि सद्भावात् । न च रसस्यापि विशेषणत्वमिष्टम् । उपलक्षणत्वप्रसिद्धिविरोधात् । यस्मिन् प्रयोगे यस्योपलक्षणत्वं तस्मिन् प्रयोगे तस्य विशेषणत्वं नेति त्वयाऽङ्गीकारात् ॥ **इति मण्युक्तविशेषणोपक्षण-विवेकभङ्गः ॥**

**श्रीविष्णुरूपिणे नमः ।** इन्द्रियजन्यं ज्ञानं त्रिविधम् । अयं घट इत्यादीदन्तावगाह्यभिज्ञारूपं सोऽयमिति तत्तेदन्तावगाहिप्रत्यभिज्ञारूपम् । स इति तत्तावगाहिस्मृतिरूपं चेति । अथ केयं तत्ता या प्रत्यभिज्ञायां भासते । अतीतसमयसंबन्धो वा । ज्ञातधर्मवैशिष्ट्यं वा । अतीतज्ञानवैशिष्ट्यं वा । अतीतानुभवविषयत्वं वा । नाद्यः । एप्यदर्थविषयकशब्दजन्यानुभवमूलकश्रुतौ तत्तोल्लेखदर्शनात् । न च तत्रातीतकालसंबन्धो विषयः । एप्यदर्थे अतीतकालसंबन्धानुभवाभावात् । अतीतसमयविशिष्टः स इति सहप्रयोगानुपपत्तेश्च । अत एव न द्वितीयः । ज्ञानधर्मवैशिष्ट्यविज्ञानेऽपि सोऽयं न वेति संशयदर्शनात् । नापि तृतीयः । पुरोवर्तिनि ज्ञानोत्तरक्षणे स इति प्रयोगप्रसङ्गात् । अतीतज्ञानविशिष्टः स इति सहप्रयोगाच्च । नापि चतुर्थः । पुरोवर्तिन्यर्थे अनुभवोत्तरक्षणे स इति प्रयोगप्रसङ्गात् । अतीतानुभवविषयः स इति सहप्रयोगाच्च । किं चेयमिदन्ता, याऽभिज्ञाप्रत्यभिज्ञाभ्यां विषयीक्रियते, किं तन्मात्रवृत्तिगुणादिकम् । उत प्रत्यक्षज्ञानगोचरत्वम् । अथ खण्डोपाधिकलमरूपादिधर्मव्यतिरिक्तः । नाद्यः । अतीतानागतार्थयोरपि इदमिति प्रतीतिगोचरत्वापातात् । नापि द्वितीयः । अतीन्द्रियत्वेनाचाक्षुषत्वप्रसङ्गात् । स्मृत्यापि तदुल्लेखापत्तेश्च । नापि तृतीयः । विप्रकृष्टघटादावपि इदमितिप्रयोगापातात् । अखण्डेदन्तानपायात् इति चेत् ।

उच्यते । तस्य भावस्तत्ता । तच्छब्दार्थश्च विप्रकृष्टदेशसंबन्धः । वर्तमानेऽपि विप्रकृष्टदेशवर्तिनि स इति प्रयोगदर्शनात् । तथा विप्रकृष्टकालसंबन्धश्च । सन्निकृष्टदेशसंबद्धेऽपि कालतो विप्रकृष्टे 'स कोऽपि भविता लोके यो वेदानुद्धरिष्यती'ति प्रयोगदर्शनात् । तथा कालतो विप्रकृष्टज्ञानविषयश्च । पूर्वानुभूतार्थदर्शने वर्तमानदेशसन्निकृष्टेऽपि तस्मिन् सोऽयमिति तच्छब्दप्रयोगदर्शनात् । न च पुरोवर्तिनि ज्ञानाव्यवहितोत्तरक्षणे स इति प्रयोगः स्यादिति वाच्यम् । ज्ञाने प्रविष्टत्वस्याननुभवात् । विप्रकृष्टज्ञानविषयः स इति सहप्रयोगस्तु विप्रकृष्टे देशकालसंबन्धरूपतत्तावगाहित्वादुपपद्यते । न च कालादीनामतीन्द्रियत्वात्तत्तायाः ऐन्द्रियकत्वानुपपत्तिः । साक्षिज्ञानोपनीतानां ऐन्द्रियकत्वोपपत्तेः । अत एवातीतकालसंबद्धः स इत्यादिप्रयोगोऽप्युपपन्नः । अतीतकालसंबद्धे वस्तुनि विप्रकृष्टदेशसंबद्धत्वादेर्ग्रहणसंभवात् । इदन्तापि देशकालसन्निकृष्टता । न केवलं देशसन्निकृष्टता । देशसन्निकृष्टेऽपि कालविप्रकृष्टे इदमिति व्यवहाराभावात् । नापि कालमात्रसन्निकृष्टता । वर्तमानेऽपि देशान्तरवर्तिनि इदंशब्दव्यवहाराभावात् । यथा देशकालोभयसन्निकृष्टतेदन्ता तथा बुद्धिसन्निकृष्टताऽपि । देशकालाभ्यां विप्रकृष्टे बुद्धिसन्निकृष्टे इदमिति व्यवहारदर्शनात् । इदमेतद्देशकालसन्निकृष्टमिति व्यवहारस्तु बुद्धिस्थवर्तमानकाले तद्देशसन्निकृष्ट इत्यर्थत्वादुपपन्नः । इमे च तत्तेदन्ते परत्वापरत्ववद्व्यवस्थिते ।

**इति तत्तेदन्तानिरूपणम् ।**

**श्रीप्रसिद्धाय नमः ॥** ननु न स्मृतेरपरोक्षप्रमाविभागत्वं युक्तम् । अप्रमाणत्वात् । तथा हि । स्मृतिर्हि संस्कारजन्या । संस्कारो न तत्ताविषये । अनुभवाभावात् । न च संस्कारमन्तरा तत्ताविषयकत्वं स्मृतेरुपपन्नम् । अननुभूतार्थस्मरणप्रसङ्गात् । स्मृत्यप्रामाण्ये च तत्तावगाहित्वमवश्यकल्पमानदोषादुपपद्यते । इन्द्रियजन्यस्यापि भ्रमस्येन्द्रियाविषयासदर्थावगाहित्ववत् । न च विषयबाधाभावान्नाप्रामाण्यमिति वाच्यम् । विषयगत-अतीतदेशकालसंबन्धमपहाय तत्समानदेशकालिकवस्तुनिष्ठदेशादिसंबन्धस्य स्मृत्या विषयीकृतस्य तत्राभावेन बाधसद्भावात् । न च स्मृत्या तद्गतमेवातीतदेशकालसंबन्धित्वं विषयीक्रियते नान्यनिष्ठमिति वाच्यम् । तत्र सामग्रीविरहस्योक्तत्वात् । अकारणकार्योत्पत्तेरयोगात् । न च संस्कारस्यैव सहकार्याहितशक्त्या तद्गततत्तावगाहिज्ञानजनकत्वकल्पनं युक्तम् । जन्ययथार्थज्ञानस्य प्रमाणफलत्वनियमेन संस्कारस्य प्रमाणान्तरत्वप्रसङ्गात् । बाधबुद्ध्यनुदयस्तु विषयीकृतार्थसजातीयसद्भावात् । तद्यथा वह्न्यभाववति धूलीपटलेन वह्निमनुमाय प्रवृत्तस्य दैववशात् अनन्तरप्रामवह्निलाभे सति न बाधबुद्धिः । यथा वा प्रतारकवाक्यात्प्रवृत्तस्य दैवाद्विषयलाभे सति न बाधबुद्धिः । न च तत्तायाः कदाऽप्यप्रमितत्वात् आरोपासंभवः । आरोपस्य प्रमापूर्वकत्वादिति वाच्यम् । सोऽयमिति प्रत्यभिज्ञया तत्तायाः विषयीकृतत्वात् । न च तत्रापि सामग्रीविरहः । संस्कारेण देशकालोपनये अननुभूतार्थविषयीकरणसमर्थेन चक्षुषा देशकालगतातीतत्वावगाहिप्रत्यभिज्ञाजननाङ्गीकारादिति चेत् ।

स्यादयं दोषः । यदि संस्कारमात्रजन्यत्वं स्मृतेरभ्युपगच्छामः । न चैवम् । किं नाम मनोजन्या स्मृतिरिति । तथा च संस्कारसहकृतं मनोऽननुभूतामपि निवृत्तपूर्वावस्थां विषयीकुर्वत्स्मरणं जनयेदिति न किञ्चिदनुपपन्नम् ॥ **इति स्मृतिप्रामाण्यसमर्थनम् ॥**

**श्रीस्मर्तव्याय नमः ॥ मणिकारस्तु ।** संस्कारजन्यैव स्मृतिः । अयथार्थैव । तथा हि । स्मृतिः, स्वविषयवर्तमानत्वविषया । अतीतत्वानागतत्वागोचरत्वेऽपि प्रतीतित्वात् । प्रत्यभिज्ञावत् । प्रतीतेः समयविशेषविषयत्वनियमात् । ज्ञानसामग्रीमहिम्ना अननुभूतमपि वर्तमानकालावच्छिन्नत्वं स्मृतिर्विषयीकरोति । न विषयीकरणरूपस्मृतिधर्मे संस्कारव्यापारः स्मृतिजनकत्वेनान्यथासिद्धत्वात् । अत एव पाकस्तु श्यामोऽयमिति धियोऽयथार्थत्वव्यवहारो लौकिकानां श्यामत्वस्य वर्तमानत्वेनावगमात् । यद्वा स घट इति स्मृतौ तत्ताविशिष्टस्य वर्तमानता भासते । संस्कारस्य वर्तमानत्वज्ञानसामग्रीसहितस्यैव हेतुत्वात् । सोऽयमिदानीमित्यादौ प्रत्यभिज्ञायां तथा कल्पनात् । गेहे स घट इति स्मरणात् निःशङ्कप्रवृत्तेश्च । अन्यथा तत्ताविष्टस्येदानीं सन्देहे सा न स्यात् ।

ननु न स्मृतेर्वर्तमानत्वग्राहित्वं युक्तम् । अननुभूतविषयत्वप्रसङ्गात् । स्मृतेश्चानुभूतमात्रविषयकत्वादिति चेत् न । पूर्वानुभवेनैतद्वर्तमानत्वाग्रहेऽपि सामान्यलक्षणप्रत्यासत्तिजन्येनानुभवान्तरेणातीतानागतसर्ववर्तमानत्वानां गृहीतत्वेन स्मृतेरनुभूतमात्रविषयकत्वनियमाक्षतेः । एवं च स्मृतेस्तथाभूतस्य वर्तमानता विषयः । तत्र विशेष्यस्य विशेषणस्य वा वर्तमानत्वाभावात् स्मृतिरयथार्थैव । न च पूर्वं तथाऽऽसीदर्थ इति तद्यथार्थत्वम् । पाकरक्ते श्यामोऽयमिति ज्ञानस्य यथार्थत्वप्रसङ्गात् । तदाहुराचार्याः । किं च स्मृतेर्याथार्थ्यमपि कुत इतीत्याह । तन्न । 'अहं हरे तव पादैकमूलदासानुदासो भविताऽस्मि भूयः । मनः स्मरेतात्मपतेर्गुणान्नो गृणीत वाक्कर्म करोतु कायः' इति स्मृतेः । 'वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि'इत्यादिवचनाच्च । मनःकरणकत्वस्मरणात् । यत्तु स्मृतिः स्वविषयवर्तमानत्वविषया । अतीतत्वानागतत्वागोचरत्वेऽपि प्रतीतित्वादित्यनुमानेन स्वविषयवर्तमानत्वविषयसाधनम् । तन्न । पदजन्यपदार्थस्मृतौ व्यभिचारात् । न हि पदजन्या स्मृतिः पदार्थे स्ववर्तमानतां गृह्णाति । स घट इति स्मृतेर्वर्तमानत्वाविषयकत्वेन बाधाच्च । अत एव हि 'स्मर्यते तु घटः इदानीमत्रास्ति न वेति न जानामी'ति वदन्ति ।

किं च स्मृतिर्यदि प्रत्यभिज्ञावत् वर्तमानतां विषयीकुर्यात् तर्हि तद्वदेव सोऽयमित्याकारा स्यात् । इदानीं स इत्याकारा वा स्यात् । अत एव ज्ञानसामग्रीमहिम्ना वर्तमानकालावच्छिन्नत्वं स्मृतिर्विषयीकरोतीति निरस्तम् । अनुभवविरोधेन वर्तमानताविषयीकरणस्यैवाभावात् । यत्तु अत एव पाकरक्ते श्यामोऽयं इति धियोऽयथार्थत्वव्यवहारे लौकिकानां श्यामत्वस्य वर्तमानत्वेनावगमादिति तदयुक्तम् । सोऽयमिति प्रतीतेरिव विशेष्यस्य वर्तमानत्वग्राहित्वेऽपि श्यामत्ववर्तमानत्वाग्रहेणाप्रामाण्यव्यवहारस्याज्ञानमूलत्वात् । न हि सोऽयमिति प्रत्यभिज्ञा विशेष्यवर्तमानतां गृह्णाति, इयं तु प्रतीतिः श्यामत्वस्य वर्तमानत्वं गृह्णातीत्यत्र मानमस्ति । येनायथार्थत्वव्यवहारो भ्रममूलो न स्यात् । अत एव यद्वेत्यादिनोक्ता स्मृतेर्वर्तमानताग्राहकत्वसाधिका युक्तिरपि परास्ता । बाधितविषयत्वात् । संस्कारस्य वर्तमानताग्राहकसामग्रीसाहित्यासिद्धेश्च । यदपि गेहे स घट इति स्मरणान्निःशङ्कप्रवृत्तेश्चेति । तदपि न । स्मृतेर्गेहे घट आसीदित्याकारत्वेन गेहे स घट इत्याकारत्वाभावात् । स्मरणानन्तरभाविसंभावनाया एव प्रवृत्तिहेतुत्वेन स्मरणस्य तत्राहेतुत्वाच्च । तत्र सत्त्वमविषयीकुर्वतः स्मरणस्य प्रवर्तकत्वायोगात् । निःशङ्कप्रवृत्त्यसिद्धेश्च । अन्यथेत्यापादनं त्विष्टमेव । याऽपि न च पूर्वं तथासीदर्थ इति तद्यथार्थत्वमिति स्मृतेर्याथार्थ्यशङ्का । साऽपि भ्रान्तिमूलिका । स्मृतिविषयत्वेन त्वयोक्तस्य इदानीं-

तनवर्तमानत्वस्य पूर्वमसत्त्वात् । समाधानमप्ययुक्तम् । पाकरक्ते भ्रान्तिगृहीतस्यैतत्कालावच्छिन्नश्यामत्वस्य श्यामतादशायामप्यसत्त्वेन याथार्थ्यापादनस्य विभ्रममूलकत्वात् । इत्यशेषमतिमङ्गलम् ॥ छ ॥

श्रीमत्सर्वसज्जनस्मरणसरणिगोचरचरणनलिनयुगलगुर्वन्तर्गतश्रीरामचन्द्रार्पणमस्तु ।

**इति मण्युक्तस्मृत्ययाथार्थ्यभङ्गः ॥**

इति श्रीमत्सत्यनिधितीर्थश्रीचरणचरणाराधकश्रीमत्सत्यनाथयतिविरचिते

**अभिनवताण्डवे प्रत्यक्षखण्डः समाप्तः ॥**

* * *

# अथ शब्दखण्डः

॥ श्रीवेदव्यासाय नमः ॥

नमामि नारायणमादिदेवं लक्ष्मीपतिं सर्वगुणैरुदारम् ।
शब्दैकगम्यं समतीतदोषं श्रीमध्वहृत्पद्मगतं मुदेऽहम् ॥ १ ॥
शिक्षयन्निव दुस्तर्कसर्पमूर्धनि नर्तनम् ।
यश्चकार श्रये कृष्णं कालिकाङ्घ्रिषु नर्तनम् ॥ २ ॥
न क्षमा यस्य पुरतः वक्तुं सदसि वादिनः ।
अभ्यस्ताखिलविद्याढ्याः श्रये सत्यनिधिं गुरुम् ॥ ३ ॥

अथ शब्दो निरूप्यते । निर्दोषः शब्द आगमः । तस्य दोषाः अबोधकत्वं विपरीतबोधकत्वं ज्ञातज्ञापकत्वं अनभिप्रेतप्रयोजनत्वं अशक्यसाधनप्रतिपादनं लघूपाये सति गुरूपायोपदेशनमित्यादयः । इयांस्तु विशेषः । अबोधकत्वं विपरीतबोधकत्वं च याथार्थ्यलक्षणप्रामाण्यविरोधि अन्यत्तूपादेयत्व-लक्षणप्रामाण्यविरोधीति । निर्दोषं वाक्यमिति वा लक्षणम् । वाक्यं चाकाङ्क्षायोग्यतासन्निधिमतां पदानां समूहः ।

न चागमो न प्रमाणम्, यथार्थज्ञानजनकत्वनियमाभावात् । यदेव हि तत्त्वमस्यादिवाक्यं कस्यचिद्यथार्थज्ञानजनकं तदेव कस्यचिदयथार्थज्ञानजनकं दृश्यते । लोकेऽपि आप्तत्वाभिमतस्य किञ्चिद्वाक्यं प्रमाजनकं दृश्यते । अन्यच्च वाक्यं अप्रमाजनकं दृश्यते । यच्च प्रमाजनकं तदपि न नियमेन । कस्यचित्तेनैव भ्रमोत्पाददर्शनात् । अत एवासौ ब्रवीति अन्यन्मयोक्तं अन्यदेव त्वं जानासीति । न चैवंभूतस्यापि प्रामाण्यं युक्तं अतिप्रसङ्गात् । इति चेन्न ।

निर्दोषवाक्यस्य नियमेन प्रमाजनकत्वात् । यदत्रोक्तं तत्त्वमस्यादिवाक्यं कस्यचिद्भ्रमजनक-मिति । तथैव । तथाऽपि न प्रमाजनकत्वस्वभावरूपप्रामाण्यहानिः । अयथार्थज्ञानजनकत्वस्य श्रोतृदोषनिबन्धनत्वेनास्वाभाविकत्वात् । यदपि चोक्तमाप्तत्वाभिमतस्य किञ्चिद्वाक्यं प्रमाजनकं किञ्चिन्नेति । तदपि न । आप्तस्य सर्वत्राप्तत्वाभावात् । यदेव हि प्रमाजनकं तदाप्तिमूलकम् । यच्चाप्रमाजनकं न तदाप्तिमूलकमिति तस्य प्रमाजनकत्वाभावोऽप्रमाजनकत्वं च नाप्तवाक्यस्य प्रामाण्य-विघातकम् । यदपि यच्च प्रमाजनकं तदपि न नियमेन प्रमाजनकमिति । तदपि न प्रामाण्यविघातकम् । भ्रमजनकत्वस्य श्रोतृदोषनिबन्धनात् ।

नन्वथापि शब्दो न प्रमाणं निर्विषयत्वात् । विषयो हि द्विविधः अपरोक्षः परोक्षश्चेति । तत्राद्यः प्रत्यक्षस्य विषयः । द्वितीयस्त्वनुमानस्य विषयः । न चातिरिक्तं विषयमीक्षामहे येन विषयेण शब्दः प्रमाणं स्यात् । यद्यपि शब्दः परोक्षज्ञानजनकः तथाऽपि यथा त्वन्मते ज्ञातज्ञापनस्य सिद्धसाधकस्य च मानान्तरविषये प्रवृत्तत्वात् अप्रामाण्यम् । एवं सर्वोऽपि शब्दः असङ्कीर्णविषया-भावादप्रमाणमिति चेत् न । यथाऽपरोक्षविषयत्वाविशेषेऽपि श्रोत्रादिविषयासङ्कीर्णविषयसिद्धये चक्षुरादेः प्रामाण्यमवर्जनीयं तद्वत्परोक्षविषयत्वाविशेषेऽपि अनुमानविषयासङ्कीर्णस्वर्गापवर्गादिगतविषय-विशेषसिद्धये शब्दप्रामाण्यस्यावर्जनीयत्वात् । न हि स्वर्गापवर्गादिगतो विशेषः अनुमानवेद्यः येन शब्दस्य निर्विषयत्वं स्यात् । अन्यथा परोक्षविषयत्वाच्छब्द एव प्रमाणम् । अनुमानं तु निर्विषयत्वादप्रमाणमेवेति स्यात् ॥ १ ॥ **इति शब्दप्रामाण्यसमर्थनम् ।**

**मणिकारस्तु ।** अथ शब्दो निरूप्यते । प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम् । ननु शब्दो न प्रमाणम् । तथा हि । करणविशेषः प्रमाणं । करणं तत् यस्मिन्सति क्रिया भवत्येव । न च शब्दे सति प्रमा भवत्येवेति नायं प्रमाणम् । न च, न शब्दः प्रमाणमिति वाक्यप्रामाण्या-प्रामाण्ययोर्व्याघातः । अस्याप्रामाण्येऽपि एतदुत्थाप्यानुमानाविसंवादादिति चेत् न ।

आकाङ्क्षादिमतः पदार्थस्मरणादिव्यापारवतः प्रमाणत्वेन प्रमोत्पत्तेरावश्यकत्वात् । अतथाभूतत्वे च फलाजनकत्वस्य करणान्तरसाम्यात् इत्याह ।

तन्न । अपौरुषेयवेदाव्याप्तेः । त्वन्मते प्रतिपुरुषं भारतभेदेनाविद्वत्पठ्यमानभारताव्याप्तेश्च । न चाविद्वत्पठ्यमानभारतस्यापीश्वरीयवाक्यार्थतत्त्वज्ञानजन्यत्वमस्त्येवेति नाव्याप्तिरिति वाच्यम् । तस्य ईश्वरीयवाक्यार्थतत्त्वज्ञानजन्यत्वेऽपि त्वद्विवक्षितस्य, वाक्यार्थतत्त्वज्ञानत्वेन तज्जन्यत्वस्य, तत्राभावात् । न चान्यत्र ईश्वरज्ञानत्वेन कारणत्वेऽपि अत्र वाक्यार्थज्ञानत्वेन कारणत्वं कल्प्यत इति वाच्यम् । कल्पकाभावात् । न च प्रामाण्यस्य गुणजन्यत्वेन एतद्वाक्यप्रामाण्यान्यथानुपपत्त्या ईश्वरज्ञानस्य तेन रूपेण कारणत्वं कल्प्यत इति वाच्यम् । साक्षात्कर्तृज्ञानस्य प्रामाण्यप्रयोजकत्वेन ईश्वरज्ञानस्य प्रामाण्याप्रयोजकत्वात् अन्यथा वाक्यप्रामाण्येन तत्कर्तुर्ज्ञानसिद्धिर्न स्यात् । ईश्वरज्ञानेन तद्वाक्य-प्रामाण्यस्य अन्यथासिद्धत्वात् ।

**रुचिदत्तस्तु ।** स्वार्थतत्त्वज्ञानजन्यताऽवच्छेदकावच्छिन्नशब्दत्वं लक्षणं तज्जन्यताऽवच्छेदकं च योग्यशब्दत्वं तच्च मौनिश्लोकादावस्त्येवेति नाव्याप्तिः । शब्दपदं च ज्ञानस्वरूपयोग्यशब्दपरं

अतोऽयोग्यताविशिष्टे घटः कर्मत्वमित्यादिशब्देनातिव्याप्तिरित्याह । तन्न । स्वार्थतत्त्वज्ञानाजन्ये वेदे अविद्वत्पठ्यमानभागादौ च वर्तमानस्य योग्यशब्दत्वस्य तज्जन्यताऽवच्छेदकत्वायोगात् । अनतिप्रसक्तस्यैवावच्छेदकत्वात् । यदपि तच्च मौनिश्लोकादावस्त्येवेति नाव्याप्तिरिति । तदपि न । मौनिश्लोकस्य स्वार्थतत्त्वज्ञानजन्यत्वेन मूलोक्त-प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यत्वरूपलक्षणसद्भावात् । अव्याप्तिशङ्काऽयोगेन तत्परिहाराय स्वार्थतत्त्वज्ञानजन्यतावच्छेदकावच्छिन्नत्वविवक्षाऽयोगात् । वर्णानित्यत्ववादिमते मौनिश्लोकस्यासत्त्वेन तत्र लक्षणव्युत्पादनायोगाच्च । न हि त्वन्मतेऽनुच्चारितः शब्दोऽस्ति । यत्तु मौनिश्लोकस्यानुच्चारितत्वेन कथमर्थज्ञानजन्यत्वमित्याशङ्क्य कदाचिदवश्यं तद्घटकपदानामुत्पादस्य स्वीकरणीयत्वेनावश्यं तत्संभवात् । अन्यथा तस्यालीकत्वापातेन मौनिलिखितलिप्यादिना तदनुमानस्याप्यसंभवादिति समर्थनं तदपि न । तद्घटकपदानामुत्पादेऽपि वाक्यस्यानुत्पन्नत्वेन वाक्यार्थतत्त्वज्ञानजन्यत्वसंभवशङ्काऽपरिहारात् । न हि अन्यस्य जन्यत्वेनाजन्यस्य तत्त्वज्ञानजन्यत्वासंभवशङ्कापरिहारो युक्तः । अतिप्रसङ्गात् । कदाचिदुत्पन्नानामाशुतरविनाशिनां तद्घटकत्वायोगाच्च । यदपि अन्यथा तस्यालीकत्वापातेनेत्यादि तदपि न । तद्घटकपदानामुत्पत्त्यङ्गीकारेण मौनिश्लोकस्यालीकत्वापरिहारात् । न च मौनिश्लोकस्यैवालीकत्वपरिहाराय कदाचिदुत्पत्तिरङ्गीक्रियत इति वाच्यम् । मौनिश्लोकत्वाभावापातात् । न हि अन्येन कदाचिदुत्पन्नस्य मौनिश्लोकत्वं युक्तिमत् । पूर्वमुत्पन्नस्य उत्पत्स्यमानस्य वा इदानीमभावेन लिप्यादिना तदनुमानायोगाच्च । न हि लिपिः मौनिश्लोकं अतीतत्वेन एष्यत्त्वेन वाऽनुमापयति । येन कदाचिदुत्पादाङ्गीकारः सार्थकः स्यात् ।

यदपि शब्दपदं ज्ञानस्वरूपयोग्यशब्दपरं अतो योग्यताऽविशिष्टे घटः कर्मत्वमित्यादिवाक्ये नातिव्याप्तिरिति । तदपि न । घटः कर्मत्वमानयनं कृतिरित्यस्य निरर्थकत्वात्स्वार्थाभावेन स्वार्थतत्त्वज्ञानजन्यतावच्छेदकावच्छिन्नशब्दत्वस्य सुतरामभावात् अतिव्याप्त्यभावेन शब्दपदस्य ज्ञानस्वरूपयोग्यशब्दपरत्वविवक्षावैयर्थ्यात् । ननु योग्यशब्दत्वावच्छिन्नशब्दत्वं लक्षणत्वेन विवक्षितम् । तच्च घटः कर्मत्वमानयमित्यादावस्त्येवेत्यतिव्याप्तिरिति तत्परिहाराय विवक्षा युक्तेति चेत् । न । ज्ञानस्वरूपायोग्ये योग्यशब्दत्वव्युत्पादनस्य व्याहतत्वात् । न च ज्ञानस्वरूपायोग्येऽपि अबाधितार्थकत्वलक्षणयोग्यत्वं युक्तमिति वाच्यम् । तज्जन्यज्ञानाविषयस्य तदर्थत्वायोगेन अबाधितार्थकत्वासंभवात् ।

यदपि न च 'न शब्दः प्रमाणमि'ति वाक्यप्रामाण्याप्रामाण्ययोर्व्याघात इति । तदपि न । न शब्दः प्रमाणमिति वाक्ये पूर्वपक्ष्याशङ्कितस्य अविलम्बेन प्रमाजनकत्वरूपप्रामाण्याभावस्य सत्त्वेऽपि

शब्दप्रामाण्यप्राप्त्यभावेन व्याघाताभावात् । न हि परेण शब्दस्य बाधितार्थकत्वरूपमप्रामाण्यं उक्तम् । येन शब्दो न प्रमाणमिति वाक्यप्रामाण्याप्रामाण्ययोर्व्याघातः स्यात् । अत एव, एतदप्रामाण्ये एतद्विषयीभूतशब्दाप्रामाण्यबाधेन शब्दप्रामाण्याभ्युपगमात् एतत्प्रामाण्ये साक्षादेवेत्युभयथाऽपि व्याघात इत्यर्थ इति रुचिदत्तोक्तं निरस्तम् । शब्दो न प्रमाणमितिवाक्यस्य शङ्किताप्रामाण्ययुक्तत्वेऽपि विषयबाधाभावेन शब्दप्रामाण्यप्रसक्त्यभावेन व्याघाताभावात् ।

यदपि अस्याप्रामाण्येऽप्येतदुत्थाप्यानुमानाविसंवादादिति समाधानम् । तदपि न । अविसंवादादित्यस्य न व्याघात इति प्रकृतसाध्यासाधकत्वात् । न हि माता वन्ध्येति वक्तारं प्रति व्याघाते चोदिते मातृत्वं प्रामाणिकमिति वचनं युक्तिमत् । येन शब्दो न प्रमाणमित्यत्र व्याघातपरिहाराय शब्दाप्रामाण्येऽनुमानचोदनं युक्तं स्यात् । यत्तु शब्दस्य प्रमायामजनकत्वेऽपि शब्दो न प्रमाणतया व्यवहर्तव्यः प्रमायोगव्यवच्छिन्नत्वाभावादित्याद्युत्थापितानुमानस्येत्यर्थ इति रुचिदत्तव्याख्यानं तदप्ययुक्तम् । न व्याघात इति पूर्ववाक्येनान्वयानिरूपणात् बाधितार्थकत्वाबाधितार्थकत्वाभ्यां व्याघातशङ्कायास्त्वथैव व्युत्पादितत्वात् अप्रामाण्येऽपीति मूलस्य बाधितार्थकत्वेऽपीति व्याख्यानस्योचितत्वेन प्रमायामजनकत्वेऽपीति व्याख्यानायोगाच्च ।

**पक्षधरस्तु** । द्विविधं हि अप्रामाण्यम् । प्रमायामजनकत्वं अप्रमाजनकत्वं चेति । तत्र द्वितीयाभ्युपगमस्य विषयबाधनान्तरीयकत्वेऽपि प्रथमे न तथेत्याह एतदिति । न च प्रमाऽजनकत्वे प्रमाणोत्थापकत्वमपि कथमिति वाच्यम् । शब्देन पदार्थमात्रस्मरणे तदसंसर्गाग्रहेणोक्तानुमानावतारसंभवादिति भावः । अनुमानं च शब्दो न प्रमाणतया व्यवहर्तव्य इत्याकारकं अन्यथाप्रमायोगव्यवच्छिन्नत्वस्यैव प्रमाकरणत्वरूपतया साध्याविशेषादित्याह । स स्थूलदृश्वा । द्वितीयपक्षस्यैव विषयबाधनान्तरीयकत्वेन द्वितीयाभ्युपगमस्येत्युक्त्ययोगात् । एतदुत्थाप्यानुमानाविसंवादादित्यस्य पूर्ववाक्येन सङ्गत्यनिरूपणाच्च ।

यत्तु अनुमानं च शब्दो न प्रमाणतया व्यवहर्तव्य इत्याकारकमिति तदपि न । नाममात्रे विवादायोगेन शब्दवाच्यत्वाभावसमर्थनवैयर्थ्यात् । यदपि अन्यथा प्रमायोगव्यवच्छिन्नत्वस्यैव प्रमाकरणत्वरूपतया साध्याविशेषादिति । तत्र वक्तव्यम् । प्रमायोगव्यवच्छिन्नत्वाभावे-विवादोऽस्ति न वा । नाद्यः तस्य संदिग्धत्वेन हेतूकरणायोगात् । द्वितीये नाममात्रे विवादायोगेन अनुमानवैयर्थ्यमेव दोष इति ॥ छ ॥ **इति मण्युक्तागमलक्षणभङ्गः** ॥

ननु शब्दो न स्वातन्त्र्येण प्रमाणम् । प्रवृत्तिनिवृत्तिजननोपयोगिज्ञानजननसामर्थ्यविधुरत्वात् । तथा हि । इदमहं कुर्यामिदं मया कार्यं, ममेदमिष्टसाधनमित्यादि ज्ञानं प्रवर्तकम् । नेदं कुर्यामिदं मया न कार्यं, ममेदमनिष्टसाधनं इत्यादिज्ञानं निवर्तकं इत्यत्रिवादम् । प्रवर्तकश्च पुरुषः, इदमहं कुर्यां, इदं मया कार्यं, ममेदमिष्टसाधनमिति न प्रयुङ्क्ते । किं तु त्वं कुरु, त्वयेदं कार्यं, तवेदमिष्टसाधनमित्यादेव वदति । एवं निवर्तकपुरुषस्यापि प्रयोगो द्रष्टव्यः । न च त्वं कुरु इत्यादि मध्यमपुरुषयुष्मच्छब्दघटितस्य शब्दस्य अस्मच्छब्दोत्तमपुरुषोल्लेखिधीजननसामर्थ्यमस्ति । अन्यथा घटोऽस्तीति वाक्यस्यापि पटशब्दोल्लेखिधीजनकत्वं स्यादविशेषात् । तस्मादकामेनापि त्वं कुर्वित्यादि शब्दात् युष्मच्छब्दमध्यमपुरुषोल्लेखिनी धीरुदेतीति अस्मच्छब्दाद्युल्लेखिप्रवर्तकज्ञानं तु अनुमानादिना भवतीत्यभ्युपगन्तव्यम् ।

उच्यते । व्युत्पत्त्यपेक्षो हि शब्दोऽर्थप्रत्यायकः । व्युत्पत्तिश्च घटादिशब्दानामन्यप्रकारा त्वमहमादिशब्दानामन्यप्रकारा । अतो घटादिशब्दाः स्वव्युत्पत्तिप्रकारानुरोधेन घटादिशब्दोल्लेखिनीं धियमुत्पादयन्ति । त्वमहमादिशब्दास्तु व्युत्पत्तिग्रहकाले संबोध्यत्वप्रयोक्तृत्वादिप्रयोगोपाधिका एते शब्दा इति गृहीतत्वात् तत्तच्छब्दोल्लेखिनीं धियं जनयन्ति । तथा हि । युष्मच्छब्दस्य संबोध्यत्वप्रयोगोपाधिकत्वात् प्रयोक्ता अहं कुर्यामिति बोधजननाय त्वमिति युष्मच्छब्दं प्रयुङ्क्ते । तदधीनत्वात् कुर्विति मध्यमपुरुषं प्रयुङ्क्ते । तस्माच्च शब्दात् श्रोतुर्व्युत्पत्तिवशेन अस्मच्छब्दोत्तमपुरुषान्तशब्दोल्लेखिनी धीरुदेति । एवमहं कुर्यामित्यादिशब्दात् अयं करिष्यतीति धीरुदेतीतिशब्दस्य प्रवर्तकज्ञानजनकत्वं नानुपपन्नमिति । **इति स्वमते शब्दस्वातन्त्र्यसमर्थनम् ।**

वैशेषिका मन्यते । शब्दो न प्रमाणान्तरम् । पदार्थसंसर्गस्यानुमानादेव सिद्धेः । तथा हि । विमतानि पदानि तात्पर्यविषयस्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बत्वात् । घटमानयेति मत्प्रयुज्यमानपदसमूहवत् । यद्यप्यत्र संसर्गज्ञानपूर्वकत्वमेव साध्यते । तथाऽपि तन्सिद्धिदशायामेव ज्ञानावच्छेदकतया संसर्गः सिध्यति । संसर्गे च संबन्धिन एव विशेषत्वात् पक्षधर्मतावलाद्व्यापकत्वेनागृहीतस्यापि संसर्गविशेषस्य सिद्धिः । अथवा एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् । गामभ्याजेतिपदार्थसार्थवत् । इत्यनुमानात्साक्षादेव संसर्गसिद्धिरिति । तन्न । शब्दस्य न पृथक्प्रामाण्यमिति वदता अनुमानत्वेन प्रामाण्यस्याङ्गीकृतत्वात् शब्दस्य हेतूकर्तव्यत्वेन आकाङ्क्षादिमत्पदकदम्बत्वस्य आकाङ्क्षादिमत्पदस्मारितत्वस्य वा हेतूकरणायोगात् । योग्यतासन्देहदशायां अपि प्रवर्तकीभूतज्ञानदर्शनात्सन्दिग्धस्य लिङ्गस्य तज्जनकत्वायोगेन शब्दस्वातन्त्र्यस्यावर्जनीयत्वाच्च । ज्ञानावच्छेदकतया संसर्गसिद्धेरप्रवर्तकत्वेन प्रवर्तकसंसर्गज्ञानाय शब्दप्रामाण्यस्य वक्तव्यत्वाच्च । अन्यथा

रजतज्ञानवानयमिति भ्रान्तिज्ञस्यापि पुरोवर्तिनि प्रवृत्तिः स्यात् । किं च एते पदार्था इति अविशेषेण स्मृताः सर्वेऽपि पदार्थाः पक्षीक्रियन्ते उत व्यक्तिविशेषाः । नाद्यः बाधात् । न हि नदीतीरस्य यावत्फलानां चाधाराधेयभावोऽस्ति येन बाधो न स्यात् । न द्वितीयः । विशेषस्मरणाभावात् । न च पदतात्पर्यवशात् अन्वयप्रतियोगिविशेषस्मृतिर्भविष्यतीति वाच्यम् । विशिष्य पदार्थोपस्थितिं विना विशिष्य तात्पर्यग्रहस्यैवायोगात् ।

अपि च । किमियं लौकिकी प्रतीतिराहोस्वित् स्वसमयानुरोधादेवं उच्यते । नाद्यः । शब्द-श्राविणां शब्दादेवार्थस्य झडिति प्रतीयमानत्वेन शब्दपक्षकस्यार्थपक्षकस्य वा अनुमानस्याप्रवृत्तेः । न द्वितीयः । त्वत्समयस्याप्रामाणिकत्वात् । किं च परार्थानुमाने पर्वतोऽग्निमानिति प्रतिज्ञामात्रेणैव पर्वताग्नि-संसर्गसिद्धेर्हेत्वाद्यभिधानवैयर्थ्यं स्यात् । न चाप्तिनिश्चयाभावेन आकाङ्क्षादिमत्पदकदम्बकत्वनिश्चयाभावान्न संसर्गसिद्धिरिति वाच्यम् । शब्दस्वातन्त्र्याभावे अनुमानस्याप्यप्रवृत्तौ संसर्गज्ञानाभावेन कुत इति आकाङ्क्षोदयाभावप्रसङ्गात् । किं च अनाप्तवाक्याज्ज्ञानमुत्पद्यते न वा । नेति पक्षे निषेधानुपपत्तिः । आद्येऽपि तज्ज्ञानं शब्देन भवति । उत लिङ्गेन । नाद्यः । अपसिद्धान्तात् । नापि द्वितीयः । लिङ्गाभावात् । न च अयोग्यपदकदम्बकत्वेन संसर्गभ्रमपूर्वकत्वानुमानं शक्यमिति वाच्यम् । विसंवादि-शुकवाक्ये व्यभिचारात् ॥ ४ ॥ छ ॥ **इति वैशेषिकोक्तशब्दास्वातन्त्र्यभङ्गः ।**

आकाङ्क्षा च संभूय एकान्वयप्रतीतिजननसामर्थ्यम् । यद्यप्याकाङ्क्षाशब्द इच्छायां रूढः । तथापीह लाक्षणिकार्थो विवक्षितः । न च प्रयोजनाभावाल्लक्षणाऽयोग इति वाच्यम् । दण्डो हि घटजननाय चक्रचीवरादिकमाकाङ्क्षत इत्यादिप्रयोगदर्शनेन रूढलक्षणात्वात् ॥

**मणिकारस्तु ।** अभिधानापर्यवसानमाकाङ्क्षा । यस्य येन विना न स्वार्थान्वयानुभावकत्वं तस्य तदपर्यवसानम् । नामधात्वाख्यातक्रियाकारकपदानां परस्परं विना परस्परं न स्वार्थान्वयानुभवजनकत्वं इत्याह । तन्न। आनयेति पदस्य घटमिति पदाभावेऽपि करीरमितिपदेन सह तात्पर्यविषयीभूतस्वार्थान्वयबोध-कत्वेन घटमितिपदेन साकाङ्क्षत्वाभावप्रसङ्गात् । न च यस्य पदस्य येन यत्पर्यायेण विना न स्वार्थान्वयानु-भावकत्वं तत्तेन साकाङ्क्षमिति विवक्षितमिति वाच्यम् । गङ्गायां घोष इत्यत्र घोषपदस्य तीरतत्पर्यायाभ्यां विनाऽपि गङ्गायामिति पदेन सह स्वार्थान्वयानुभावकत्वदर्शनेन घोषपदस्य तीरपदेन साकाङ्क्षत्वाभाव-प्रसङ्गात् । न चेष्टापत्तिः । कदाचित्तीरे घोष इत्युक्तेऽप्यन्वयबोधाभावप्रसङ्गात् । न च यत्पदं स्वार्थान्वयप्रतियोग्युपस्थापकपदसामान्यस्याभावान्न स्वार्थान्वयानुभावकं तत् तदुपस्थापकमात्रेण प्रत्येकं साकाङ्क्षमिति विवक्षितमिति वाच्यम् । परस्परान्वयप्रतियोग्युपस्थापकत्वं साकाङ्क्षत्वमित्येतावतैव पूर्णत्वेन त्वदुक्तगुरुभूतलक्षणाऽङ्गीकारायोगात् ।

ननु परस्परमन्वयप्रतियोग्युपस्थापकत्वं साकाङ्क्षत्वमित्ययुक्तम् । जनितान्वयबोधेऽप्यतिव्याप्तेरिति चेत् । न । तेषामपि लक्ष्यत्वात् । न च जनितान्वयबोधेनापि पुनरन्वयबोधापत्तिः । अन्वयबोधहेतोः पदोपस्थितेर्विनश्यदवस्थापन्नत्वात् ।

यच्चोक्तं रुचिदत्तेन अत्र पदपदं तदुपस्थितिपरम् । तेन मौनिश्लोकाव्याप्तिः, पदस्य स्वभावत एवाननुभावकत्वेनासंभवश्चेति दोषद्वयमलग्नकं बोध्यमिति । तदपि न । मौनिश्लोकस्यैवासत्त्वेन तत्राव्याप्तिपरिहाराय विवक्षाकरणायोगात् । न हि परमते मौनिश्लोको नाम युज्यते । तथा हि । श्लोका नामानुपूर्वीविशेषावच्छिन्नवर्णाः । ते च परमते ताल्वोष्ठपुटव्यापारजन्या एव न तु नित्याः । न च मौनी ताल्वोष्ठपुटव्यापारवान् । तदभावे च तच्छ्लोकाभावः सिद्ध एव । कारणाभावे कार्यस्यायोगात् । किं च समीपस्थस्य समनस्कस्याबधिरस्य शब्दाः श्रोत्रग्राह्या एव । न च मौनिश्लोकस्तथाविधेन गृह्यत इत्यसन्नेव मौनिश्लोकोऽभ्युपगन्तव्यः । पदस्य स्वत एवाननुभावकत्वादित्यप्ययुक्तम् । पदानामन्वयाननुभावकत्वे पदोपस्थितेरनुभावकत्वाभावप्रसङ्गात् । न हि पदोपस्थितिः पदोपस्थितिरित्येव घटाद्यन्वयबोधहेतुः । पटपदोपस्थितेरपि घटाद्यन्वयबोधहेतुत्वप्रसङ्गात् । किं नामान्विताभिधानशक्तपदोपस्थितित्वेन । तथा च पदानामनुभावकत्वमकामेनाप्यभ्युपगन्तव्यम् । परं तु पदानां करणत्वात्तदुपस्थितिरपि हेतुरिति । यदपि पदपदं तदुपस्थितिपरमिति विवक्षया दूषणद्वयमलग्नकं बोध्यमिति । तदप्ययुक्तम् । अविवक्षादशायां दोषद्वयस्यालग्नत्वेन तद्विवक्षयाऽलग्नत्वाभिधानायोगात् । न हि अव्याप्त्यावसंभवो भवति असंभवे वाऽव्याप्तिर्भवति विरोधात् येन दूषणद्वयपरिहाराय पदोपस्थितिविवक्षा युक्ता स्यात् ॥ ५ ॥ इति **मण्युक्ताकाङ्क्षालक्षणभङ्गः** ।

सेयमाकाङ्क्षा न शाब्दधीहेतुः न वा तज्ज्ञानम् । किं नाम आकाङ्क्षावन्ति अनुसंहितानि पदान्येव शाब्दधीहेतवः । आकाङ्क्षायाः संभूयार्थान्वयप्रतीतिजननसामर्थ्यरूपत्वात् न हि सामर्थ्यं कारणम् । असमर्थस्य कारणत्वायोगेन तत्रापि सामर्थ्यं वाच्यम् । तस्याप्येवमित्यनवस्थाप्रसङ्गात् । पदानामन्वयबोधसामर्थ्यसद्भावे व्युत्पत्तिमतः सामर्थ्यज्ञानविलम्बेन कार्यविलम्बादर्शनाच्च । न चैवं सति अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपदस्य पुत्रपदेनेव पुरुषपदेनापि साकाङ्क्षत्वात् पुरुषपदेनान्वयबोधापत्तिरिति वाच्यम् । पुत्रपदेनान्वयतात्पर्यग्रहस्य प्रतिबन्धकत्वात् । ततः पूर्वं तु भवत्येवान्वयबोधः ।

तथा हि । अयमेतीति वाक्यश्राविणः द्वावन्वयबोधौ भवतः । राज्ञः पुत्र इत्येकः, राज्ञः पुरुष इत्यपरः । ततः पुनरेष विचारो जायते । कः पुनरनयोरभिप्रेत इति । ततस्तात्पर्यगवेषणाय प्रवर्तते । प्रकरणादिवशात् पुत्रपदान्वयतात्पर्यग्रहे पुनरनुसंहितेन वाक्येनायमेति राज्ञः पुत्र इत्यवधारण-रूपं तात्पर्यविषयान्वयविषयकं ज्ञानं जन्यते । तात्पर्यग्रहप्रतिरुद्धत्वात् राजपदस्य न पुनः पुरुष-पदेनान्वयबोध उदेति । प्रागुत्पन्नस्तु पुरुषपदार्थान्वयबोधो नाद्रीयते । तात्पर्यानुपपत्त्या यष्टीः प्रवेशयेत्यादौ दण्डप्रवेशबोधवत् ॥ ६ ॥ **इत्याकाङ्क्षातज्ज्ञानयोः कारणत्वभङ्गः ।**

योग्यता च अबाधितार्थकत्वं सा च प्रामाण्यप्रयोजिका । इयं च अपरा योग्यता यत् अन्वय-प्रयोजकरूपवत्त्वम् । सा च अर्थनिष्ठैव द्रवद्रव्यत्वादिरूपा । इयं च न शाब्दधीहेतुः । वह्निना सिञ्चेदिति वाक्यान्वयबोधदर्शनात् । नापि तज्ज्ञानं अनेनैव वाक्येन, तद्व्यतिरेकनिश्चयेऽपि, अन्वयबोध-दर्शनात् । किं तु इदमस्यां क्रियायां योग्यमिति व्यवहारहेतुः । अत एव लौकिकाः जलेन सिञ्चतीति वक्तारं बाधितार्थकत्वं ज्ञात्वाऽपि योग्यमेवायं सेककरणत्वेन ब्रवीति, अग्निना सिञ्चेदिति वक्तारं तु अयोग्यमेवायं ब्रवीतीति वदन्ति । नापि प्रामाण्यप्रयोजिका । जलेन सिञ्चतीति अनाप्तवाक्ये तत्सद्भावेऽपि अप्रामाण्यदर्शनात् । आद्या प्रामाण्यप्रयोजिकाऽपि न शाब्दधीहेतुः । तदभावेऽपि शब्दा-द्भ्रमदर्शनात् । नापि तज्ज्ञानम् । तद्व्यतिरेकनिश्चयेऽपि अग्निना सिञ्चेदिति वाक्यात्तदर्थावगमदर्शनात् । अन्यथा बधिरकलहापत्तिः ॥ ७ ॥ **इति स्वमते योग्यतानिरूपणम् ।**

अत्राह गङ्गेशः । बाधकप्रमाविरहो योग्यता । सा चेतरपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ता-भावप्रतियोगित्वप्रमाविशेष्यत्वाभावः । प्रमेयं वाच्यमित्यत्र प्रमेयनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वं गोत्वे प्रसिद्धम् । वाच्यत्वसंसर्गे तदभावः । वस्तुतस्तु इतरपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रति-योगितावच्छेदकधर्मशून्यत्वं योग्यता । सेयं न स्वरूपसती प्रयोजिका । किं तु संशयविपर्ययप्रमा-साधारणं तज्ज्ञानं हेतुरिति ।

स स्थूलदर्शी । बाधकप्रमाविरहो योग्यतेति योग्यताया निरूपितत्वेन पुनः सा चेति योग्यता-निरूपणाय योग्यतापरामर्शायोगात् । प्रमाविरहरूपायाः योग्यतायाः प्रमाविषयत्वाभावरूपत्वाभिधाना-योगाच्च । किं च । अपरपदार्थेत्यत्र अपरत्वं पदविशेषणं अपरं यत्पदमिति । आहोस्वित् पदार्थ-विशेषणम् । अपरो यः पदार्थ इति । नाद्यः । यजेतेतिपदस्य यागेष्टसाधनताबोधकस्याप्ययोग्यत्व-प्रसङ्गात् । न द्वितीयः । प्रमेयत्वे प्रमेयत्वमिति वाक्यस्यायोग्यत्वप्रसङ्गात् । वृक्षे कपिरिति वाक्यस्या-

योग्यत्वप्रसङ्गाच्च । तत्र पदपदार्थभेदे विद्यमानेऽपि एकपदार्थसंसर्गस्याव्याप्यवृत्तित्वेन अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वात् ।

**पक्षधरस्तु ।** मण्युक्तलक्षणस्य दूषणमाशङ्क्य विवक्षां कृत्वा समादधौ । तथा हि । अत्र वदन्ति । नेदं लक्षणं युक्तम् । गन्धवानाद्यक्षणवर्ती घट, इत्याद्यपि वाक्यं योग्यं स्यात् । प्रागभावसत्त्वेऽप्यत्यन्ताभावप्रतियोगित्वाभावात् । एवं ध्वंसस्थलेऽपि । अपि च द्रव्यं संयोगीत्यपि वाक्यमयोग्यं स्यात् । तन्निष्ठात्यन्ताभावप्रतियोगित्वात् संयोगस्येति । अत्र वयं ब्रूमः । तात्पर्यविषयीभूतसंसर्गे तदाश्रयत्वाभिमतापरपदार्थनिष्ठधर्मविरोधित्वप्रमाविशेष्यत्वाभावो योग्यता । तथा च तात्पर्यविषयविशिष्टवैशिष्ट्यसंसर्गे तादृशप्रागभावाद्यपि विरोधीति नातिव्याप्तिः । संयोगि द्रव्यमित्यत्रापि सामानाधिकरण्यमात्रे न विरोध इति नायोग्यत्वम् । विशिष्टवैशिष्ट्ये तु विरोध एवेति न योग्यता । यस्मिन् ज्ञाते यज्ज्ञानं नेत्यस्यैव विरोधित्वात् इति ।

स स्थूलदृश्वा । गन्धप्रागभावावच्छिन्ने घटे गन्धसंसर्गस्य समवायस्य नित्यत्वात् प्रागभावाभावेन, प्रागभावसत्त्वेऽपीति परोक्तातिव्याप्तिव्युत्पादनस्याज्ञानमूलकस्य स्वीकारायोगात् । द्रव्यं संयोगीत्यत्र दण्डीत्यादौ दण्डसंबन्धस्येव, संयोगीत्यत्रापि संयोगसंसर्गस्यैव मतुवर्थतया ग्राह्यत्वात्; तस्य च समवायत्वेन द्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावादव्याप्तेरभावेन तत्स्वीकारायोगाच्च । अथ संयोगी एव अन्वयप्रतियोगीत्यभ्युपगम्यते तथाऽपि नाव्याप्तिः तादात्म्यस्यैव संसर्गत्वात् तस्य च द्रव्यनिष्ठत्वेन तन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् । तात्पर्यविषयसंसर्गे तदाश्रयत्वाभिमतनिष्ठत्वमित्येतावतैव पूर्णत्वेन तन्निष्ठधर्मविरोधित्वप्रकारकप्रमाविशेष्यत्वाभावपर्यन्तं धावनायोगाच्च ।

यदपि संयोगि द्रव्यमित्यत्रापि सामानाधिकरण्यमात्रे न विरोध इति नायोग्यता । विशिष्टवैशिष्ट्ये तु विरोध एवेत्ययोग्यतेति तदपि न । द्रव्यं संयोगीति वाक्यस्य द्रव्यत्वसमानाधिकरणतया संयोगबोधने विरोधाभावेन योग्यत्ववत् द्रव्यत्वविशिष्टे सर्वत्र संयोगवैशिष्ट्यमिति बोधनेऽपि विरोधाभावेन योग्यतासद्भावात् । एतेनैव अत्यन्ताभावपदं विरोधिपरं, तेन गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यादौ विशिष्टवैशिष्ट्यसंसर्गे प्रागभावादेरपि विरोधित्वान्नातिव्याप्तिरिति वदन् रुचिदत्तः परास्तो वेदितव्यः । गन्धप्रागभावस्य गन्धं प्रति विरोधित्वेऽपि तत्संसर्गसमवायं प्रति विरोधित्वाभावेनातिव्याप्तिपरिहाराभिधानायोगात् । ननु गन्धसंसर्गं प्रति गन्धप्रागभावस्य विरोधित्वं नाम न तद्विरहरूपत्वं नापि तद्व्याप्यत्वम् । येनोक्तदोषः स्यात् किं नाम तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वम् । तथा च गन्धप्रागभावस्य गन्धसंसर्गे

प्रति विरोधित्वेन तत्प्रतियोगित्वप्रमाविशेष्यत्वाभावस्य गन्धसंसर्गे अभावान्नातिव्याप्तिरिति चेत् । न । समवायेन गन्धज्ञानस्यापरपदार्थनिष्ठगन्धप्रागभावज्ञानविरोधित्वेऽपि गन्धसमवायज्ञानस्य विरोधित्वाभावात्। अस्तु वा कथञ्चित् विरोधित्वम् । तथाऽपि गन्धसंसर्गस्य गन्धप्रागभावप्रतियोगित्वाभावेन तत्प्रतियोगित्वप्रमाविशेष्यत्वाभावोऽस्तीति अतिव्याप्तिरेव । न हि घटस्य घटात्यन्ताभाववत् तद्व्याप्यमपि विरोधीत्येतावता घटः स्वाभावस्येव तद्व्याप्यस्यापि प्रतियोगी भवति ।

यत्तु, वस्तुतस्तु इतरपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं योग्यतेति । तदपि न । इतरपदार्थसंसर्गमात्रे अपरपदार्थनिष्ठद्वित्वावच्छिन्नप्रतियोगिकात्यन्ताभावप्रतियोगितावच्छेदकद्वित्वस्य सत्त्वेन प्रतियोगितावच्छेदकधर्मशून्यत्वस्य क्वाप्यभावात् । प्रतियोगितावच्छेदकस्याव्यासज्यवृत्तित्वविवक्षायामपि वृक्षे कपिरिति वाक्यस्यायोग्यत्वापत्तेः । कपिसंयोगस्यापरनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वात् । गन्धप्रागभावावच्छिन्नो घटो गन्धवानिति वाक्यस्य योग्यत्वापत्तेश्च । गन्धसमवायस्यापरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वात् ।

यत्तु सेयं न स्वरूपसती प्रयोजिका किं तु संशयविपर्ययप्रमासाधारणं तज्ज्ञानं हेतुरिति । तदपि न । ज्ञानस्यैव संशयविपर्ययप्रमाभेदभिन्नत्वात् संशयविपर्ययप्रमासाधारणत्वायोगेन संशयविपर्ययप्रमासाधारणं तज्ज्ञानं हेतुरित्युक्त्ययोगात् । उक्तरूपयोग्यताज्ञानाभावेऽपि प्रत्युत तद्विपरीतायोग्यताज्ञानसद्भावेऽपि वादिवाक्यात् शब्दबोधदर्शनेन तस्य तत्र हेतुत्वायोगाच्च । न च अयोग्यतया निश्चिताद्वादिवाक्यात् शाब्दबोधो न भवतीति वक्तुं शक्यम् । निराकरणाभावप्रसङ्गात् । दूष्याज्ञाने दूषणाभिधानायोगात् ।

रुचिदत्तस्तु । विषयाबाधो योग्यता । सा चैकान्वयप्रतियोगिन्यपरान्वयप्रतियोगिसंसर्गः । येन संबन्धेन यत्र यद्ग्राह्यं तेन तत्र तद्वत्त्वमिति यावत् । तज्ज्ञानं संशयसाधारणं कारणम् । पर्वतो वह्निमान्न वेतिवत् अयं पदार्थो अपरपदार्थसंसृष्टो न वेति संशयस्य सुलभत्वात् । तत्प्रमा च गुणः संशयेऽप्येककोटौ तथात्वमस्त्येव । तदभावश्चायोग्यता । तन्निश्चयश्चाप्रामाण्यशङ्काशून्यः प्रतिबन्धक इत्याह ।

स स्थूलदृश्वा । विषयाबाधो योग्यतेति योग्यताया निरूपितत्वेन पुनस्तन्निरूपणाय सा चेति परामर्शायोगात् । विषयबाधाभावत्वेन निरूपिताया योग्यतायाः अन्वयप्रतियोगिसंसर्गात्मना निरूपणायोगाच्च । यदपि तज्ज्ञानं संशयसाधारणं कारणमिति तदपि न । ज्ञानत्वस्यैव संशयसाधारणत्वेन ज्ञानस्य

संशयसाधारणत्वाभावात् । यदा योग्यताप्रमा तद्भ्रमो वा तिष्ठति तदा वाक्यस्य ज्ञातज्ञापकत्वेन वैयर्थ्यप्रसङ्गाच्च । योग्यतासंशयस्यैव हेतुत्वमभिमतं न विपर्ययादीनामिति चेत् । न । तथा सति तत्संशयो हेतुरिति वक्तव्यत्वेन संशयसाधारणं तज्ज्ञानं कारणमित्युक्त्ययोगात् । प्रत्यक्षादिना घटं जानता घटोऽस्तीति वाक्याद्बोधाभावप्रसङ्गाच्च ।

यदपि तत्प्रमा च गुणः । संशयेऽप्येककोटौ तथात्वमस्त्येवेति । तदपि न । शाब्दप्रमायां वक्तृनिष्ठाप्त्यादेरेव गुणत्वेन, श्रोतृनिष्ठयोग्यताप्रमाया गुणत्वायोगात् । योगे वा संशयस्य सर्वत्राप्येककोटौ प्रमात्वेन भ्रान्तवाक्यजन्यज्ञानस्यापि प्रमात्वप्रसङ्गो दुर्वारः । वक्तुराप्त्याद्यभावात् न तज्जन्यं ज्ञानं प्रमेति चेत् । वक्तुराप्त्यादिकमेव गुणोऽस्तु । किं श्रोतृनिष्ठयोग्यताप्रमाया गुणत्वाङ्गीकारेण । यदपि तदभावश्चायोग्यता । तन्निश्चयश्चाप्रामाण्यशङ्काशून्यः प्रतिबन्धक इति । तदपि न । अप्रामाण्यशङ्का-शून्यायोग्यतानिश्चयसद्भावेऽपि अग्निना सिञ्चेदित्याद्युन्मत्तवाक्यस्य बोधहेतुत्वदर्शनात् । कथमन्यथा तदर्थं निराकुर्यात् । अत एवायोग्यताज्ञानं प्रतिबन्धकमिति वदन्तौ पक्षधरमणिकारौ परास्ताविति ॥ ८ ॥

**इति परोक्तयोग्यतालक्षणभङ्गः ।**

**श्रीरस्तु ।** आसत्तिश्च पदनिष्ठान्वयबोधविरोधिव्यवधानाभावः । ततश्च व्यवहितान्वयवन्ति वेदादीनि आसन्नत्वाद्वाक्यानीति बोध्यम् । घटकं च चकन्दानयतं पुत्रकरं करमितिवाक्याभासगतानि घटमानय पुत्रकेति पदानि न वाक्यम् । कञ्चकमित्यादिव्यर्थाक्षरैर्व्यवहितत्वात् । इयं चासत्तिः स्वरूपसत्येव शाब्दधीहेतुः । देवदत्त गामभ्याजेतिपदश्रावेिणः अन्वयबोधविरोधिव्यवधानाभावरूपा-सत्त्यनुसन्धानविरहेऽपि आसन्नेभ्यः पदेभ्योऽन्वयबोधदर्शनात् । न चैवमनासन्नेभ्यः पदेभ्य आप्ताभास-वाक्येन आसत्तिभ्रमे शाब्दबोधो न स्यादिति वाच्यम् । इष्टत्वात् । न हि अन्वयबोधविरोधि-व्यवधाने सत्यपि तदभावभ्रममात्रे शाब्दबोधः संभवति व्याहतत्वात् । अन्यथा दाहप्रतिबन्धकमणि-मन्त्रादिसमवधानदशायां तदभावभ्रममात्रेण दाहप्रसङ्गो दुर्वारः स्यात् ।

**अत्रोक्तं मणिकृता ।** आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः । सा च स्मृतिर्नानुभवोऽतो नान्योन्याश्रय इति । स स्थूलदृश्वा । आसत्तेः पदधर्मभूताया आत्मधर्मोपस्थित्यात्मकत्वाभावेन आसत्तेस्तदात्मकत्वोक्त्ययोगात् । अनासन्नमप्यासत्तिभ्रमेणान्वयबोधसमर्थमेवेति स्वयमेव आकाङ्क्षा-वादेऽभिहितत्वेन तद्विरोधाच्च । नह्यासत्तेः पदार्थोपस्थित्यात्मकत्वे तद्विरहवेलायां तद्भ्रमः संभवति । येन शाब्दबोधः स्यात् । यदपि चोक्तं सा च स्मृतिर्नानुभवोऽतो नान्योन्याश्रय इति । तदपि न ।

आसत्तेरनुभवात्मकत्वेऽपि अन्योन्याश्रयप्रसक्त्यभावेन तत्परिहाराभिधानायोगात्। न हि अन्वयप्रतियोग्यनुभवः अन्वयानुभवजन्यः येन तस्य तद्धेतुत्वाङ्गीकारेऽन्योन्याश्रयः स्यात्।

**पक्षधरस्तु**। अव्यवधानेनार्थोपस्थित्यनुकूलो व्यापारः आसत्तिः। स चैकपदानन्तरमपरपदे तात्पर्यमुच्चारणं वा। तेन शुकादिवाक्ये नाव्याप्तिः। न चैवमननुगमः। सामान्यतोऽव्यवहितपदार्थोपस्थित्यनुकूलव्यापारत्वेन जनकत्वादित्याह। तन्न। पदधर्मभूतासत्तेः वक्तृनिष्ठव्यापारात्मकत्वाभिधानायोगात्। व्यवहितान्वयोपेतपदघटितवाक्येन योजनयाप्यन्वयबोधाभावप्रसङ्गाच्च। न हि तत्राव्यवधानेनान्वयप्रतियोग्युपस्थित्यनुकूलो व्यापारोऽस्ति। किं तर्हि व्यवधानेनान्वयप्रतियोग्युपस्थित्यनुकूल उच्चारणरूपो व्यापारोऽस्ति। न च तत्रापि कर्मवाचकपदानन्तरं क्रियापदमित्यादिप्रकारेण वक्तुः पदतात्पर्यं अव्यवधानेन पदार्थोपस्थित्यनुकूलव्यापारोऽस्तीति वाच्यम्। एवं सति तात्पर्यविषयीभूतक्रमस्य पठ्यमानक्रमान्यस्त्वेन तदवच्छिन्नपदात्मकवाक्यस्यैव बोधकत्वं न तु पठ्यमानक्रमावच्छिन्नवाक्यस्येत्यापातेन वेदपुराणादीनामप्रामाण्यप्रसङ्गात्। तात्पर्यज्ञानस्यैवान्वयप्रतियोग्युपस्थित्यनुकूलत्वेन तात्पर्यस्यान्वयप्रतियोग्युपस्थित्यनुकूलत्वाभावाच्च। न हि तात्पर्यज्ञानसद्भावे तात्पर्यविलम्बेन कार्यविलम्बः। येन तात्पर्यमप्युपस्थित्यनुकूलो व्यापारः स्यात्। अज्ञोच्चरितवेदादिवाक्येन यदान्वयबोधः तदा अव्यवधानेनार्थोपस्थित्यनुकूलयोः तात्पर्योच्चारणयोरुभयोरप्यभावेनासत्त्यभावापाताच्च। स्वतन्त्रवक्तुस्तात्पर्यमस्तीति चेत्। न। वर्णानित्यत्ववादिमते स्वतन्त्रपुरुषप्रणीताज्ञोच्चरितवाक्ययोर्भिन्नत्वेन स्वतन्त्रपुरुषप्रणीतवाक्यस्यासन्नत्वेऽपि अज्ञोच्चरितवाक्यस्यानासन्नत्वापरिहारात्। न हि वाक्यान्तरगतया आसत्त्या वाक्यान्तरमासन्नं भवतीति। अत एवाव्यवहितत्वेन पदतात्पर्यमासत्तिरिति निरस्तम्। शुकादिवाक्येऽव्याप्तेः। न चेश्वरतात्पर्यं तत्रास्तीति वाच्यम्। ईश्वरतात्पर्यस्य ज्ञातुमशक्यत्वेन तव आसत्तिज्ञानाभावेन वाक्यार्थबोधाभावप्रसङ्गात् इति।

केचित्तु अव्यवहितपदज्ञानजन्याव्यवहितान्वयप्रतियोग्युपस्थितिरासत्तिः सा च ज्ञाता शाब्दधीहेतुः। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ यदा गिरिरग्निमानित्येव श्रुत्वा पदार्थौ स्मरति तदाऽपि समभिव्याहृतपदजन्या नेयं पदार्थस्मृतिः किं तु व्यवहितपदजन्येति व्यतिरेकनिश्चये तत्संशये च शाब्दानुभवप्रतिबन्धात्। यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति व्याप्तेरुक्तरूपासत्तिनिश्चयो हेतुरित्याहुः। तन्न। 'न चेश्वरः सर्वज्ञो नेति वाच्यं' इति वाक्ये इति न वाच्यमिति पदजन्योपस्थितीनां व्यवहितपदजन्यत्वनिश्चयेऽपि अन्वयबोधदर्शनेनोक्तरूपासत्तिव्यतिरेकनिश्चयस्याप्रति-

वन्धकत्वादिति । तस्मादन्वयबोधजनकताविरोधिव्यवधानाभाव एवासत्तिरित्युक्तलक्षणमेवास्थेयम् ॥ छ ॥
**इति स्वाभिमतासत्तिलक्षणनिरूपणपूर्वकं पराभिमतासत्तिलक्षणभङ्गः ॥**

**अन्ये तु** अव्यवधानेनान्वयप्रतियोग्युपस्थितिरेवासत्तिः । अन्वयप्रतियोग्युपस्थितिश्च न शब्दजन्यैवान्वयबोधाङ्गम् । द्वारमित्यादौ अध्याहृतेन पिधानादिनाऽर्थेनाप्यन्वयबोधदर्शनात् । न चात्र पिधेहीति शब्दस्यैवाध्याहारः । अर्थाध्याहारवादिनः शब्दस्याध्याहारं विनाऽपि अन्वयबोधदर्शनेन शब्दाध्याहारस्यानावश्यकत्वात् । न हि अन्वयबोधोपयुक्तायाः अन्वयप्रतियोग्युपस्थितेः स्वत एव सत्त्वे प्रकारान्तरेण वा संभवे शब्दं स्मृत्वा तेनैवार्थः स्मर्तव्य इति कुलधर्मः । येन शब्दाध्याहारनियमः स्यात् । न च स्वार्थान्वयपरत्वाच्छब्दानां द्वारमित्यादौ अर्थाध्याहारपक्षे पिधानान्वयबोधकाभावात् पिधानान्वयबोधो न स्यादिति तत्सिद्धये पिधेहीति शब्दोऽध्याहार्य इति वाच्यम् । पिधानान्वयस्य द्वारान्वयस्य चैकत्वेन द्वारपदेनैव तदन्वयबोधोपपत्तेः । घोषपदस्यैव लाक्षणिकतीरान्वयबोधकत्वदर्शनात् इति वदन्ति ।

अत्रोच्यते । द्वारमितिपदश्रवणानन्तरं जातो द्वारपिधानान्वयबोधः शब्दकरणक एव न प्रत्यक्षानुमानकरणक इत्यभ्युपेयम् । इन्द्रियार्थसन्निकर्षाभावेन प्रत्यक्षस्य, व्याप्त्यादिमल्लिङ्गाभावेनानुमानस्यापि करणत्वायोगात् । कुतस्त्वयेदं कृतमिति प्रश्नेऽनेनोक्तमित्यभिधानाच्च । न च पिधानानुभवः द्वारशब्देनैव भवितुमर्हति । शक्तिलक्षणाद्यभावात् । ततश्च पिधानानुभवोत्पत्तये वक्त्रभिप्रेतः पिधेहिशब्दोऽनुसन्धेयः । वक्त्रभिप्रेतशब्दानुसन्धानमेवाध्याहार इति शब्दाध्याहारसिद्धिः ।

किं च द्वारमितिवक्तुः अन्वयबोधाङ्गतया पिधेहीतिशब्दोऽभिमतो न वा । आद्ये न तत्परित्यागेनार्थाध्याहारो युक्तः । पिधेहीत्युच्चारणदशायामपि तत्परित्यागप्रसङ्गात् । द्वारशब्दस्यापि परित्यागापातात् । न हि शब्दबोधाङ्गतया वक्तृविवक्षितशब्दत्वाविशेषे पिधेहिशब्द एव परित्याज्यः न तु द्वारमिति शब्द इति राज्ञामाज्ञाऽस्ति । स्वाभिप्रेतो द्वारशब्द उच्चारणेन ज्ञापितः, पिधेहिशब्दस्तु प्रकरणादिना ज्ञापित इति तु वैषम्यमात्रम् । न द्वितीयः । शाब्दबोधजननाय प्रवृत्तस्य तत्कारणशब्दानुपादानायोगात् । अकारणकमेव कार्यमभिलषतो मौढ्यापाताच्च । न च, 'शब्दाध्याहारपक्षे वाक्यार्थस्य द्वारकर्मकपिधानस्य ज्ञाने पिधेहिशब्दाध्याहारः । ज्ञानं विनापि अध्याहारे कस्यचिदेव शब्दस्याध्याहारप्रसङ्गः । न तु पिधेहिशब्दस्यैवाध्याहारः । अध्याहारे च वाक्यार्थज्ञानमित्यन्योन्याश्रय' इति वाच्यम् । प्रकरणादिना लिङ्गेन द्वारपिधानज्ञापनाय प्रवृत्तोऽयं देवदत्त इति तत्तात्पर्यज्ञानानन्तरमेव

प्रवर्तकशाब्दबोधसिद्धये शब्दाध्याहार इत्यङ्गीकारात् । अन्यथा रजतज्ञानवानयमिति ज्ञानादपि रजतार्थिनः प्रवृत्तिः स्यात् ।

यच्चोक्तं अर्थाध्याहारवादिनः शब्दाध्याहारं विनैवान्वयबोधदर्शनात् शब्दाध्याहारो नावश्यक इति । तन्न । पिधानवाचकस्य पिधेहिशब्दस्याभावे पिधानगोचरशाब्दानुभवो भवतीत्यस्य व्याहतत्वात् । कथं तर्हि तस्य शाब्दबोध इति चेत् शब्दाध्याहारेण । परन्तु अभ्यासपाटवात् झडिति जातमपि शब्दानुसन्धानं मौढ्यान्नास्तीत्येव मन्यते । तद्यथा धूमदर्शनात् व्याप्तिबलादेव वह्निं जानन् मूढः अविलम्बेनैव मया वह्निर्विज्ञातः, न तु व्याप्त्यादिप्रतिसन्धानं ममाभूदिति मन्यते ।

यदपि, न हि अन्वयबोधोपयुक्तायाः अन्वयप्रतियोग्युपस्थितेः स्वत एव सत्त्वे प्रकारान्तरेण वा संभवे शब्दं स्मृत्वा तेनैवार्थः स्मर्तव्य इति कुलधर्म इति । तदपि न । शब्दं विना कथञ्चित्स्मृतिसंभवेऽपि अन्वयप्रतियोग्यनुभवाय शब्दानुसन्धानावश्यकत्वस्यास्माभिरभिहितत्वात् । न हि स्मर्यमाणेष्वन्वयो अनुभूयते । येन स्मृतेरन्यतः सिद्धौ शब्दाध्याहारो न स्यात् । किंत्वनुभूयमानधर्मतयैवानुभूयते । एवं चान्वयतत्प्रतियोगिविषयकैकानुभवाय क्रियाकारकपदान्यपेक्षितानि । किं च शब्दं विना अन्वयप्रतियोगिस्मृतिर्नोपपद्यते । अन्वयप्रतियोग्यभिनवव्यक्तेः प्रागननुभूतत्वेन संस्काराभावात् । न चैवं शब्देनाप्यभिनवव्यक्तिस्मृत्यसंभवः । इष्टत्वात् । सामान्यलक्षणप्रत्यासत्त्या सादृश्यलक्षणसंबन्धेन वा सर्वव्यक्त्युपस्थितौ शक्तिग्रहस्य जातत्वात् । तद्बलेन शब्दश्राविणः सामान्यत एवान्वयप्रतियोगिस्मृतिः न तु विशिष्याभिनवव्यक्तेरेव स्मृतिरित्यङ्गीकारात् । अत एव पिधानान्वयस्य द्वारान्वयस्य चैकत्वात् द्वारपदेनैव तदन्वयबोधोपपत्तेः पिधेहिशब्दाध्याहारो व्यर्थ इत्यपि परास्तम् । पिधानानुभवसामग्रीत्वेन पिधेहिशब्दानुसन्धानस्यावश्यकत्वात् ।

यदपि, घोषपदस्यैव लाक्षणिकतीरान्वयबोधकत्वमिति । तदपि न लाक्षणिकस्याप्यनुभावकत्वेन घोषपदस्यैवेत्युक्त्ययोगात् । ननु द्वारमित्यादौ यद्यनुचरितमपि पिधेहीति पदमस्तीत्यभ्युपगम्यते । तर्हि द्वारपदमेव किमर्थमुच्चारयति । न पुनः पिधेहिपदम् । न च विना विनिगमकं वैषम्यं युक्तम् । ततो नास्त्येव द्वारमित्यत्र पिधेहिपदमिति चेत् । उच्यते । अनुसंहितमेव वक्तुः शाब्दबोधाङ्गतया द्वारपदमिव पिधेहिपदमपि । किं नाम द्वारपदमेव कर्मबोधकमस्तु न तत्पर्यायपदम् । पिधानरूपक्रियोपस्थापकं तु पिधेहिपदं वा तत्पर्यायपदं वाऽस्त्विति सामान्यत एवानुसंहितम् । इममेव विशेषमवलम्ब्य वक्ता द्वारपदमुच्चारयति । क्रियावाचकस्याभिप्रेतपदसामान्यं प्रकरणादिना विज्ञापयति । अत एव केचित्पिधे-

हीत्यध्याहरन्ति । अपरे पुनराच्छादयेति । उक्तं च । अध्याहारस्थले अध्याह्रियमाणस्यानुसंहिततया सत्त्वं 'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यं चेति सतां नीतिः सावकाशो न तद्भवेदि'ति । उक्तश्च सूत्रकृता शब्दाध्याहारः । 'व्यतिहारो विशिषन्ति हीतरवदि'ति । उक्तं च भाष्यकृता अध्याह्रीय-माणस्य स्वार्थान्वयानुभावकत्वम् । 'उक्तप्राणात्परमात्मनः उत्तमत्वं पूर्वोक्ताध्याहारेणे'ति । **इति शब्दाध्याहारसमर्थनम् ॥**

**मणिकारस्तु ।** क्रियापदोपस्थापिता क्रिया कारकपदोपस्थापितं च कारकं परस्परमाकाङ्क्षति न तूपस्थितमात्रम् । अन्यथा द्वारं कर्मता पिधेहि द्वारं पिधानं कृतिरित्यत्रापि क्रियाकर्माध्याहार इवान्वय-बोधप्रसङ्गः । अन्वयप्रतियोग्युपस्थितेस्तुल्यत्वात् । अपि च शब्दाध्याहाराभावे द्वारमित्यादौ द्वितीया न स्यात् । सकर्मकक्रियापदयोगाभावात् । न हि क्रियापदार्थयोगे द्वितीया । घट आनयनं कृतिरित्यत्रापि द्वितीयाऽऽपत्तेः । तथा पुष्पेभ्य इत्यत्र चतुर्थी न स्यात् । स्पृहयतियोगाभावात् । न च स्पृहेरर्थ-योगे चतुर्थी । पुष्पमिच्छतीत्यत्रापि चतुर्थीप्रसङ्गात् । तस्मात्क्रियाकारकपदोपस्थापितयोरेव क्रिया-कारकयोः परस्परमन्वयबोध इति शब्दाध्याहार एव कार्य इत्याह ।

स स्थूलदृश्वा । द्वारमित्यत्र पिधेहिपदयोगाभावेऽपि कर्मत्वविवक्षामात्रेण द्वितीयासंभवात् । न हि सूत्रकृता कर्मणि द्वितीयेति सूत्रेण अन्तरा अन्तरेण युक्त इत्यत्र अन्तराशब्देन अन्तरेणशब्देन वा योगे द्वितीयाऽनुशासनवत् क्रियापदयोगे द्वितीयानुशासनं कृतम् । येन क्रियापदाभावे द्वारमित्यत्र द्वितीया न स्यात् । पुष्पेभ्य इति चतुर्थ्या उपपदविभक्तित्वेन स्पृहयतिप्रयोगनिर्वाह्यत्वात् तन्निर्वाहाय शब्दाध्याहारकल्पनाऽयोगात् । न हि सूत्रकारः 'अस्मद्युत्तमः' 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम' इति सूत्राभ्यां युष्मदि अस्मदि च प्रयुज्यमाने अप्रयुज्यमाने चोत्तममध्ययोः प्रयोगमिव स्पृहयति-प्रयोगे अप्रयोगे च चतुर्थीप्रयोगमभिप्रैति । येन स्पृहयतिपदाभावेपि स्पृहयतिपदाध्याहारेण पुष्पेभ्य इति चतुर्थी स्यात् । स्पृहयतिपदाप्रयोगे पुष्पेभ्य इति प्रयोगोऽसाधुरेव । अन्यथा यदा वक्ता आनयपदाध्याहाराभिप्रायेण दधीत्युच्चार्योपरमते तदा यणादेशः स्यात् । स्पृहयतिपदाध्याहारेण कर्मणि चतुर्थ्याः साध्यत्वव्युत्पादनवत् इहापि इकारान्तदधिशब्दप्रयोगस्थाने आनयशब्दाध्याहारेण यकारान्तदधिशब्दप्रयोगस्य व्युत्पादयितुं शक्यत्वात् । **इति मण्युक्तशब्दाध्याहारसाधकभङ्गः ॥१४॥**

तात्पर्यं च वक्तुरभिप्रायः । वक्त्रभिप्रेतार्थप्रतिपादनाद्वाक्यमपि सतात्पर्यमुच्यते । विधि-वाक्यानि वक्त्रभिप्रेतयागादिकर्तव्यताप्रतिपादकत्वात् साक्षाद्यागकर्तव्यतापराणि । तज्जन्यविज्ञानं प्रवृत्ति-

जनकमिति तद्वाक्यानि प्रवृत्तिपराणीत्युच्यन्ते। एवं न कलंजं भक्षयेदित्यादिवाक्यानि वक्त्रभिप्रेतनिवृत्तिबोधकत्वात्तत्पराणि। तज्जन्यज्ञानस्य निवृत्तिसाधनत्वात्तानि निवृत्तिपराणीत्युच्यन्ते। प्रशंसानिन्दावाक्यानि स्वार्थप्रतिपादनद्वारा वक्त्रभिप्रेतप्राशस्त्यादिबुद्धिजनकत्वात्तत्पराणि। तज्जन्यज्ञानस्य प्रवृत्तिनिवृत्तिहेतुत्वात् तत्पराण्यपि। एवं धूमवानित्यपि वाक्यं स्वार्थप्रतिपादनद्वारा वक्त्रभिप्रेतवह्निप्रतिपत्तिहेतुत्वात्तत्परमुच्यते। एवं 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि'तिवाक्यं स्वार्थजन्मप्रतिपादनेन मरणसूचनद्वारा वक्त्रभिप्रेतगत्यभावसूचकत्वाद्गमनाभावपरमित्युच्यते। अहोदर्शनीय इत्यादिवाक्यं तु विपरीतलक्षणया सौन्दर्याद्यभावप्रतिपादकत्वात्तत्परम्। तात्पर्यज्ञानं च शाब्दधीहेतुरपि न सर्वत्र। किं तु अवधारणरूपवाक्यार्थज्ञाने। संशयोत्तरप्रत्यक्षे विशेषदर्शनमिव। तथा हि। वाक्याच्चावत्शाब्दन्यायानुसन्धानवतः एककोटिकं संशयरूपं ज्ञानं जायते। तत एव प्रवृत्तिनिवृत्ती भवतः। कुतश्चित् कारणात् प्रतीतार्थस्य तात्पर्यविषयत्वसन्देहे उपक्रमादिविचारे प्रवर्तते। तेन च तात्पर्यनिर्णयो जायते। इदं वाक्यमेतत्परमिति। तदनन्तरं तु वाक्यानुसन्धानवतः तात्पर्यविषयीभूतार्थगोचरं निश्चयरूपं ज्ञानं जायते न च तात्पर्यज्ञानावच्छेदकतया वाक्यार्थस्य सिद्धत्वात् किं तात्पर्यज्ञानजन्यवाक्यार्थज्ञानेनेति वाच्यम्। तात्पर्यज्ञानस्यार्थसत्तानिश्चयरूपत्वाभावात् प्रवर्तकत्वायोगेन प्रवृत्त्यनुकूलस्यार्थसत्तानिश्चयरूपस्य शाब्दबोधस्यादर्तव्यत्वात्। न चैवं सति वेदस्यातात्पर्यकत्वप्रसङ्गः। वक्तुरेवाभावेन तदभिप्रेतार्थप्रतिपादकत्वलक्षणस्य तात्पर्यस्य वक्तुमशक्यत्वादिति वाच्यम्। वेदे स्वतन्त्रवक्तुरभावेऽपि पुरुषाभिप्रायप्रवेशसद्भावेन तदभिप्रेतार्थप्रतिपादकत्वेनैव तात्पर्यसंभवात्। कथमन्यथाऽहमादयः शब्दाः प्रयुज्येरन्॥ **इति तात्पर्यनिरूपणम्॥**

ननु वेदो न प्रमाणम्। अनृतव्याघातपुनरुक्तादिदोषेभ्यः। यदनृतं तदप्रमाणं दृष्टम्। यथा विप्रलम्भकवाक्यम्। अनृतश्च वेदः। पुत्रेष्ट्यनुष्ठानेऽपि फलानुपलब्धेः। व्याहतं चाप्रमाणम्। यथोन्मत्तवाक्यम्। व्याहतं च वेदवाक्यम्। 'अतिरात्रे षोडशिनं गृह्णाति। नातिरात्रे षोडशिनं गृह्णाति। उदिते जुहोति। अनुदिते जुहोतीत्या'दि। पुनरुक्तम् चाप्रमाणम्। पुनरुक्तं च वेदवाक्यम्। शाखान्तरे पठितस्य शाखान्तरे आम्नानात्। एकस्यामेव शाखायां द्वितीयाष्टके पठितस्य 'यज्ञेन यज्ञमयजन्त देवा'इति वाक्यस्य अष्टमाष्टकेऽप्याम्नानात्। ननु एकैकं प्रत्युक्तस्य तेनैव तं प्रत्येव पुनर्वचनं पुनरुक्तम्। अन्यथा देवदत्तेन स्वात्मजं प्रति कालान्तरे उक्तस्य कालान्तरभाविना यज्ञदत्तेन स्वात्मजं प्रत्यवचनापातात्। न चेदं वेदवाक्यं एकैकं प्रत्युच्यते ऋषिभेदात् अधिकारिभेदात् इति चेत्। मा भूत्तर्हीदं पुनरुक्तोदाहरणम्। तथाऽपि 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'ति वाक्यान्युदा-

हरणम् । येन ऋषिणा यं प्रति प्रवोवाजा इति मन्त्रस्य त्रिवारं पाठो विधीयते तेनैव तं प्रत्येव प्रवोवाजा इति मन्त्रस्य त्रिवारं पाठस्य 'त्रिः प्रथमामन्वाहे'ति पुनःपुनर्विधानात् । निरर्थकञ्चाप्रमाणं दृष्टम् । निरर्थकञ्च वेदवाक्यम् । 'शृण्वेवजर्भरीतुर्फरी'त्यादि इति चेत् । मैवम् । असिद्धेः । तथा हि । अनृतत्वं तावदसिद्धम् । श्रुत्युक्तस्य पुत्रकामेष्टिपुत्रजन्मनोः कार्यकारणभावस्य सत्त्वात् । यत्क्वचित्कार्यादर्शनं अङ्गवैगुण्याधीनं तत् । न हि सहकारिविरहात् कार्यासाधनमसाधनं भवति । अतिप्रसङ्गात् । न च विसंवादस्यान्यथासिद्धौ प्रामाण्यसिद्धिः तत्सिद्धौ च विसंवादस्याङ्गवैगुण्याधीनत्वसिद्धिरिति इतरेतराश्रय इति वाच्यम् । सत्यपि विसंवादे अपौरुषेयत्वेन प्रामाण्यसिद्ध्यङ्गीकारात् । व्याघातोऽप्यसिद्धः । षोडशिग्रहणाग्रहणवाक्ययोरुदितानुदितहोमवाक्ययोश्च अधिकारिभेदेन प्रवृत्तत्वात् । न हि अधिकारिभेदेन प्रवृत्तमपि वाक्यद्वयं व्याहतं भवत्यतिप्रसङ्गात् । पौनरुक्त्यं तु नाप्रामाण्यसाधकम् । पुनरुक्तस्यापि याथार्थ्यदर्शनेन व्यभिचारात् । न हि घटवद्भूतलमित्युक्त्वा पुनरपि घटवद्भूतलमित्युक्ते घटशून्यं भूतलं भवति । येन पुनरुक्तं वाक्यमप्रमाणं स्यात् । वैयर्थ्यं तु कथञ्चित्साधयेत् । प्रयोजनसद्भावात्तदपि नास्ति । यदपि शृण्वेवेत्यादिवाक्यं निरर्थकमिति । तदपि न । तस्याप्यर्थवत्त्वात् । तथा हि । सृणिरंकुशः सरणसाधनत्वात् । तमर्हत इत्यस्मिन् अर्थे तत्र साधुरिति यत्प्रत्ययः सृण्यौ अंकुशार्हौ कुञ्जरौ । औकारस्याकारादेशः छान्दसः । ताविव जर्भरी जृम्भमाणौ । तुर्फरी तूर्हि सतौ । नैतोशानैतोशौ । नीतोशतिर्वधकर्म तत्कारिणौ योद्धाराविव तुर्फरी त्वरमाणौ । फर्फरीका । शोभावन्तौ । उदन्यजा उदन्यतिः पिपासार्थः तत्र जातौ । प्रावृषिकचातकौ । जेमना । उदकवन्तौ । जेमशब्दात् पामादिविहितोनप्रत्ययः । तौ यथा उदकलाभेन मत्तौ भवतः तथा यौमदेरू । मत्तौ । ता । तौ अश्विनौ । मे जरायु मरायु जरामरणशीलं शरीरं अजरममरं च कुरुतामिति ।

नन्वपौरुषेयो वेद इत्ययुक्तम् । वेदः पौरुषेयो वाक्यत्वात् कालिदासवाक्यवत् । अयं कालः वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान् कालत्वात् अन्यकालवत् । आकाशः वेदव्यतिरिक्ताकाशनिष्ठत्वरहितपौरुषेयवान् । द्रव्यत्वात् तन्तुवत् । श्रोत्रं वेदव्यतिरिक्तश्रोत्रग्राह्यत्वरहितपौरुषेयग्राहकम् । इन्द्रियत्वात् चक्षुर्वत् इत्याद्यनुमानविरोधात् । कालपक्षकानुमाने दृष्टान्ते अतीतघटेन साध्यवत्ता वेदव्यतिरिक्तस्याप्यतीतघटस्य इदानीन्तनत्वरूपविशेष्याभावेन वेदव्यतिरिक्तत्वे सति इदानींतनत्वरहितपौरुषेयत्वात् । पक्षे तु वेदपौरुषेयत्वमन्तरा साध्यपर्यवसानाभावात् अभिमतसिद्धिः । तथा हि । यद्यपि अतीतमनागतं च वेदव्यतिरिक्तमिदानीन्तनत्वरहितं च । तथाऽपि न तेन पौरुषेयेण साध्यवत्ता । अतीतमनागतं चेदानीमस्तीत्यस्य व्याहतत्वात् । यच्च घटादिकं वेदव्यतिरिक्तं वर्तमानपौरुषेयं न

तेनापि साध्यवत्ता । इदानीन्तत्वराहित्याभावात् । वेदपौरुषेयत्वाङ्गीकारे तु यद्यपि वेदे इदानीन्तनत्व-मस्ति । तथाऽपि वेदव्यतिरिक्तत्वरूपविशेषणाभावात् वेदव्यतिरिक्तत्वे सति इदानीन्तनत्वरूपविशिष्टाभावसद्भावेन वेदेन पौरुषेयेण साध्यवत्ता । आकाशपक्षकानुमाने तु दृष्टान्ते वेदव्यतिरिक्तस्यापि पटस्याकाशनिष्ठत्वरूपविशेष्याभावात् वेदव्यतिरिक्ताशनिष्ठत्वरूपविशिष्टाभाववता पौरुषेयेण पटेन साध्यवत्ता । पक्षे तु आकाशनिष्ठत्वरहितपौरुषेयेण पटादिना साध्यवत्त्वासंभवात् आकाशनिष्ठेनापि वेदव्यतिरिक्तत्वरूपविशेषणाभावात् वेदव्यतिरिक्तत्वे सति आकाशनिष्ठत्वरूपविशिष्टाभाववता पौरुषेयेण वेदेन साध्यपर्यवसानात् अभिमतसिद्धिः । श्रोत्रपक्षकानुमाने तु दृष्टान्तस्य वेदव्यतिरिक्तस्यापि श्रोत्रग्राह्यत्वरूपविशेष्याभावेन वेदव्यतिरिक्तत्वे सति श्रोत्रग्राह्यत्वरूपविशिष्टाभाववतः पौरुषेयस्य घटादेर्ग्राहकत्वेन साध्यवत्ता । पक्षे तु श्रोत्रग्राह्यत्वस्यापि वेदव्यतिरिक्तत्वाभावेन वेदव्यतिरिक्तत्वे सति श्रोत्रग्राह्यत्वरूपविशिष्टाभाववतः पौरुषेयस्य वेदस्य ग्रहणेन साध्यपर्यवसानादभिमतसिद्धिः ।

श्रुतयश्चात्र भवन्ति । 'प्रजापतिर्वा इदमेक आसीत् । नाहरासीत् न रात्रिरासीत् । स तपोऽतप्यत । तस्मात्तपस्तेपानात् चत्वारो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत । वायोर्यजुर्वेद' इत्याद्याः । ननु काचिच्छ्रुतिः प्रजापतेः कर्तृत्वं श्रावयति । काचनाग्न्यादेः कर्तृत्वं श्रावयति । तथा च परस्परविरोधेन श्रुतीनामेव प्रतीतार्थेऽप्रामाण्यात्र तद्बलेन पौरुषेयत्वसिद्धिरिति चेत् । न ब्रूमो वयं य एव ऋग्वेदादिः प्रजापतिकृतः स एवाग्न्यादिकृत इति । येनोक्तदोषः । किं नाम प्रजापतिकृतोऽन्यः, अग्न्यादिकृतोऽप्यन्य एव प्रतिपुरुषं वेदभेदात् इति ब्रूमः । न चैवं सत्युपाध्यायादेरपि कर्तृतापातः स्वातन्त्र्यभावाभावाभ्यां विशेषात् । उपाध्यायो हि स्वगुरूच्चारितवेदानुभवजनितसंस्कारेण वेदं रचयति । अग्न्यादिस्तु प्रजापतिजनितवेदानुभवजनितसंस्कारमन्तरा स्वप्रभयैव सर्वप्रकारेण तत्सदृशं वेदं जनयति ।

अपि च वेदेऽहमादिशब्दाः श्रूयन्ते । न चापौरुषेयत्वेऽहमादिशब्दप्रयोगो युक्तः इति पौरुषेय एवास्थेयः । अपि च वेदस्तात्पर्यवानवसीयते । न चापौरुषेयत्वे तात्पर्यं संभवति ।

किं च वेदे विधिनिषेधौ श्रूयेते । न च तौ स्वतन्त्रवक्तारं विनोपपद्येते । विधिनिषेधयोः प्रेरकवाक्यत्वाद्वेदः पौरुषेय एवेति चेत् ।

मैवम् । वेदोऽपौरुषेयः अप्रमितकर्तृकत्वात् । आकाशवत् । इत्यनुमानात् 'वाचा विरूपनित्यया' । 'श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाच' इत्यादिश्रुत्या 'अनादिनिधना

नित्या वागुत्सृष्टा स्वयम्भुवा' 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगा' इत्यादिस्मृत्या चापौरुषेयत्वावगमात् । न चानुमानस्य गूढकर्तृके वाक्ये व्यभिचारः । ऋष्यादिभिस्तत्कर्तुः प्रमितत्वेना-प्रमितकर्तृकत्वाभावात् । किञ्च ज्ञातो हि व्यभिचारः अनुमितिप्रतिबन्धकः । तत्र गूढकर्तृकं वाक्यं गूढक-र्तृकत्वेन निश्चितं न वेति पृच्छामः । आद्ये विशेषाकारेण कर्तृप्रसिद्ध्यभावेऽपि सामान्याकारेण कर्तृप्रसिद्धेः सद्भावान्न व्यभिचारधीः । द्वितीये साध्याभावनिश्चयाभावान्न व्यभिचारधीः । न चासिद्धो हेतुः । वेदकर्तापि ऋष्यादिभिः ज्ञायत इति वक्तुं शक्यत्वात् । न हि मुक्तश्लोकादौ गूढोऽपि कर्ता ज्ञातुं शक्यः न शक्यश्च वेदकर्तेति वक्तुं शक्यं वैपरीत्यस्यापि सुवचत्वादिति वाच्यम् । अपौरुषेयो वेद इति तद्वचनेन तेषामपि वेदकर्तृज्ञानं नास्तीति निश्चयसंभवात् । ननु ऋष्यादीनां वेदकर्तृज्ञानं नास्तीत्य-युक्तम् । कणादादीनां तज्ज्ञानस्य विद्यमानत्वात् । तच्च तद्वचनसिद्धम् यथा कणादः 'तद्वचना-दाम्नायप्रामाण्यमि'ति । उक्तं च मणिकृता । 'कपिलकणादगौतमतच्छिष्यैश्चाद्यपर्यन्तं वेदे सकर्तृकत्व-स्मरणादिती'ति चेत् । मैवम् । न ते वेदं सकर्तृकत्वेन पश्यन्ति । किंत्वसुरजनमोहनाय गौतमादयः वेदं सकर्तृकं वदन्ति । तदन्ये तु भ्रान्ताः । न हि सर्वज्ञकल्पा ऋषयः 'नित्यया वाचा ।' 'नित्यया-ऽनित्यया स्तौमि' 'नित्या वाव श्रुतयो अनित्या वाव स्मृतयः' इत्यादिश्रुतिभिः अपौरुषेयतया सिद्धमपि वेदं अन्यथा जानन्तीति युक्तम् ।

नन्वेवं वाक्यत्वानुमानविरोध इति चेत् । अत्र वक्तव्यम् । किमिदं पौरुषेयत्वम् । यद्वाक्यत्वानुमानसाध्यम् सजातीयोच्चारणानपेक्षोच्चरितत्वमुत रचितत्वम् । नाद्यः । इष्टत्वात् । न हि वेदेऽपौरुषेयत्वं वदन्तः सजातीयोच्चारणानपेक्षोच्चरितत्वं नेच्छन्ति । येनेदमनिष्टं स्यात् । किं नाम प्राक्कल्पीयं उच्चारणमनपेक्ष्यैव परमेश्वरः अनादिनित्यं वेदमुच्चारयतीत्यङ्गीकुर्वन्ति । स्वयमेवो-च्चारणासमर्थो हि उपाध्यायाद्युच्चारणमपेक्षते । न चेश्वरस्तथाविधः । येन पूर्वकल्पीयमुच्चारणमपेक्षेत । नापि द्वितीयः । नित्यत्वग्राहकश्रुतिस्मृत्यादिबाधात् ।

नापि कालादिपक्षकानुमानविरोधः । तेषां, अयं काल आकाशातिरिक्तेदानीन्तनत्वरहित-कार्यवान् । कालत्वात् अन्यकालवत् इत्याद्याभाससमानत्वात् । न चोक्तागमविरोधः । तदेवेदं वाक्यमिति पूर्वोत्तरकल्पीयकर्मक्यावगाहिमहर्षिप्रत्यभिज्ञाविरोधेन श्रुतिविरोधेन चागमस्य संप्रदाय-प्रवर्तकत्वमात्रपरत्वात् । उक्तं च पद्मनाभतीर्थैर्विष्णुतत्वनिर्णयटीकायाम् । 'अतीतकालोच्चारितवेदानां पुनः कालान्तरे उच्चार्यमाणानां प्रत्यभिज्ञानेनैकत्वस्योक्तत्वादि'ति ।

यदपि चोक्तम् । वेदेऽहमादिशब्दप्रयोगाः श्रूयन्त इति वेदः पौरुषेय इति । तदपि न । तत्प्रयोगेऽप्यपौरुषेयत्वसंभवात् । न हि कालिदासवाक्येषु 'एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च । अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वमि'त्यादिषु सिंहादिपरा अस्मच्छब्दाः श्रूयन्त इत्येतावता तानि वाक्यानि सिंहादिवाक्यानि भवन्ति । येन वेदः अहमादिशब्दविषयकृतः स्यात् ।

यदपि वेदस्तात्पर्यवानवसीयते । वेदे विधिनिषेधौ श्रूयेत इति । तदपि न । पौरुषेयत्वं विनाऽपि तत्संभवेन तात्पर्यस्य वेदपौरुषेयत्वासाधकत्वात् । न हि तात्पर्यं नाम तत्प्रतीतीच्छया कृतत्वम् । गङ्गायां घोष इति वाक्यस्य देवदत्तकृतत्वेऽपि गङ्गायामितिपदस्य देवदत्तकृतत्वाभावेन तस्य तीरे तात्पर्याभावप्रसङ्गात् । किं नाम तत्प्रतीत्युद्देशेनोच्चरितत्वमेव । न चैवं सत्यपौरुषेयत्वहानिः अपौरुषेयस्यापि पुरुषाभिप्रायप्रवेशेन तदुद्देश्यकत्वसंभवात् । अत एव विधायकत्वं निषेधकत्वं चोपपन्नम् ।

ननु पूर्वोत्तरकल्पीयक्रमैक्यावगाहिप्रत्यभिज्ञाविरोध इत्ययुक्तम् । पूर्वोत्तरकल्पीयक्रमस्य नानात्वात् तदैक्यावगाहिप्रत्यभिज्ञायाः भ्रमत्वेन तद्विरोधस्याकिञ्चित्करत्वात् इति चेत् । न । वाचा विरूपयेत्यादिपूर्वोदाहृतश्रुतिबलात् पूर्वोत्तरकल्पीयवेदतादात्म्यस्य सिद्धत्वेन वेदभेदाङ्गीकारायोगात् । अन्यथा पठ्यमानवेदस्य अज्ञप्रणीतत्वेनाप्रामाण्यापातः । न हि वेदं पठन् देवदत्तादिः विवक्षितार्थतत्त्वज्ञानादिमान् । येन प्रामाण्यं स्यात् । न च प्राज्ञप्रणीतवेदसादृश्यात् अज्ञप्रणीतवेदस्य प्रामाण्यमिति वाच्यम् । आप्तवाक्यसदृशानाप्तवाक्यस्यापि प्रामाण्यप्रसङ्गात् । अज्ञप्रणीतवेदसादृश्येन प्राज्ञप्रणीतवेदस्याप्यप्रामाण्यमिति वक्तुं शक्यत्वाच्च । पठ्यमानवेदजपादिना तत्कर्तृप्रणीतलौकिकवाक्यजपादिनेवाभ्युदयाभावापाताच्च । न च धर्मादिहेतुप्राज्ञप्रणीतवेदसादृश्यात् धर्मादिहेतुत्वम् । प्राज्ञप्रणीतवेदस्यापि तत्प्रणीतश्लोके धर्महेतुत्वादर्शनेन स्वतो धर्महेतुत्वासिद्धेः । तस्यापि धर्महेतुत्वं पूर्ववेदसादृश्यादित्यङ्गीकारेऽनवस्था । अन्यथा मातृमातङ्गमदिराद्यतिसादृश्यस्य भार्यादावपि सत्त्वेन तदुपभोगे प्रत्यवायः स्यात् । स्याच्च भार्यासादृश्यं मात्रादावस्तीति तदुपभोगो धर्महेतुः ।

स्वाध्यायोऽध्येतव्य इति विधिवैयर्थ्यप्रसङ्गाच्च । तथा हि । किमनेन पारमेश्वरवेदस्याध्ययनमुच्यते । उत स्वप्रणीतस्य । नाद्यः । अध्ययनस्य प्रणयनरूपत्वेनान्यप्रणीतस्यान्येनाध्ययनायोगात् । नापि द्वितीयः । कृतस्य करणायोगात् । पठ्यमानभारतस्यापि व्यासप्रणीतभारताद्भेदप्रसङ्गाच्च । न चेष्टापत्तिः । व्यासोपज्ञताप्रसिद्धिविरोधात् । व्यासप्रणीतभारतसादृश्यात् व्यासोपज्ञतेति चेत् ।

न । देवदत्तपुत्रस्य यज्ञदत्तपुत्रसादृश्यमात्रेण यज्ञदत्तपुत्रत्वप्रसङ्गात् । स्याच्च स्वस्मिन्नाप्त्यनिश्चयात् स्वाभिहितार्थे विवदमानं प्रति स्ववाक्यभारतं प्रमाणत्वेनोदाहरन् देवानां प्रियः । स्याच्च तेनोक्तमर्थं प्रागनङ्गीकृत्य पद्यात्मकेन भारतसंज्ञकेन तद्वाक्येनैवाङ्गीकुर्वन्नपि देवानां प्रियः । तस्मात् वेदः कूटस्थनित्य एवाभ्युपगन्तव्यः । उक्तं च तत्त्वसंख्यानटीकायाम् । 'अत्र नित्यत्वं नाम कूटस्थतया आद्यन्त-शून्यत्वम् । तच्च वेदानां नित्याः वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धं' इति । अभिमतं च तत्त्वनिर्णयटीका-कारस्यापि 'यद्वर्णक्रमाद्युपेतं पूर्वं मया श्रुतं वाक्यं तद्वर्णक्रमाद्युपेतमेवेदं श्रूयमाणं वाक्यमिति प्रत्यभिज्ञानादि'-त्युक्तेः । 'पूर्वस्थितान्येव वेदवाक्यानि कानिचित् कैश्चित् पुरुषैः स्वाभिप्रायप्रवेशेन प्रयुज्यन्ते' इत्युक्तेश्च । 'तथा चाखिलैः श्रुता एव न तु कृता इति श्रुतिशब्दवाच्यत्वेन लभ्यत' इत्युक्तत्वाच्च । वेदशब्दं व्याकुर्वता 'अतो नित्यं विद्यत इति लभ्यत' इत्युक्तत्वाच्च । 'अस्ति तावदीश्वरादयो वेदस्य द्रष्टार इत्यादिव्यवहारः । स इमं मन्त्रमपश्यदिति श्रुतेः । दर्शनं च पूर्वसिद्धस्य भवति । न हि यो यत्करोति स तत्पश्यतीत्युच्यत' इत्युक्तत्वाच्च । 'सर्गेऽपि नोपजायन्ते प्रलयेन व्यथन्ति चेति प्रमाणोदाहरणाच्च ॥ **इति वेदापौरुषेयत्वसमर्थनम्** ॥

ननु वेदाः कूटस्थनित्याः प्रत्युच्चारणं न भिद्यन्त इति सिद्धान्तविरुद्धम् । तथा हि । सुधाविरुद्धं तावत् । 'ननु कोऽयं वेदः किं च तस्यापौरुषेयत्वम् । क्रमविशेषविशिष्टावर्णा वेदः । तस्य नियतैकप्रकारकत्वमपौरुषेयत्वम् । स्वतन्त्रपुरुषपूर्वकत्वाभाव इति यावत् इति । न हि वयं वेदं कूलस्थनित्यं ब्रूमः । किन्तु नियतैकप्रकारं तत्र क्व वर्णनित्यत्वस्योपयोगः । वस्तुतत्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्वं भगवत्पादैरेवान्यत्रोपपादितमित्यास्तां विस्तर' इति च सुधायामभि-धानात् । न हि वेदस्य प्रतिपुरुषं भेदेन तत्तज्जन्यत्वाभावे स्वतन्त्रपुरुषपूर्वकत्वाभावकथनस्योपयोगोऽस्ति । नापि वर्णनित्यत्वप्रतिपादनस्य वैयर्थ्यशङ्काऽस्ति । येन वस्तुतत्वविचारकं प्रतीति समाधानमर्थव-त्स्यात् । ततश्च तदभिधानान्यथानुपपत्त्या प्रतिपुरुषं जन्यत्वसिद्धिः । तत्त्वनिर्णयटीकाविरुद्धं च । 'न हि वयं वेदस्य कूटस्थतां ब्रूमः । किन्तु शब्दतः अर्थतश्च सर्वदा एकप्रकारकमेव । ततश्च 'क्रमस्य कृतकत्वेऽपि पुरुषाभिप्रायप्रवेशेऽपि स्वतन्त्रस्य वक्तुरभावादपौरुषेयत्वमुपपद्यत' इति । 'तथा भूतभवद्भविष्यद्भिरप्येकप्रकारेण पठ्यत इति लभ्यते । एतदेवानादिनित्यत्वमिति' च । 'तथा वर्णानां कौटस्थ्याभावः अनित्यत्वं पदादीनां तु क्रमव्यत्यय इति सूचयितुं आदिशब्दग्रहणमि'ति च । तथा 'न केवलं वर्णमात्रं नापि पदमात्रं किंतु समस्ताश्च यथायोगं शाश्वता' इति च । तथा 'नित्यत्वस्य पृथग्विधत्वात्पृथगुपसंहार' इति च तत्त्वनिर्णयटीकोक्तेरिति चेत् । न । सुधातत्त्वनिर्णय-

टीकयोरङ्गीकारवादेन प्रवृत्तत्वेन तदुक्तगौणापौरुषेयत्वस्यासिद्धान्तत्वात् । मीमांसोक्तगौणापौरुषेयत्वाङ्गीकारस्य चेदं प्रयोजनम् । गौणापौरुषेयत्वेऽपि वेदप्रामाण्यं सिध्यति । किमु मुख्यापौरुषेयत्वाङ्गीकार इति कैमुत्यसूचनम् । अत एव सुधायां मीमांसकोक्तगौणापौरुषेयत्वे वर्णनित्यत्वस्योपयोगाभावेऽपि वास्तवापौरुषेयत्वे वर्णनित्यत्वस्योपयोगोऽस्तीति वर्णनित्यत्वनिरूपणमाचार्यैस्तत्त्वनिर्णये कृतमित्याशयेन 'वस्तुतत्त्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्वं भगवत्पादैरेवान्यत्रोपपादितमित्यास्तां विस्तर' इत्युक्तम् ।

अवश्यं चैतदेवं विज्ञेयम् । 'अत्र वेदानां नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वमि'ति स्वयमेव तत्त्वसंख्यानटीकायामभिधानात् । न च तदेवाङ्गीकारवादेनोक्तमिति युक्तम् । 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगा' इति प्रमाणसिद्धत्वात् । 'सर्वज्ञत्वादीश्वरस्य तत् बुद्धौ सर्वदा प्रतीयमानत्वादि'त्युक्त्वा 'न च घटादिवत् संस्कारमात्रत्वं वक्तुं युक्तं प्रतिज्ञाविरोधस्योक्तत्वादि'ति आचार्यरुपपादितत्वाच्च । पुराणकृता 'विष्णुबुद्धिगा इति ईश्वरेण सर्वदा वर्तमानतयाऽनुभूयमानत्वमुक्तमि'त्युक्तेश्च । न हि वेदस्य कौटस्थ्याभावे सर्गे सर्गे एत एवोद्गीर्यन्त इति स्मृत्युक्तप्रत्यभिज्ञाप्रामाण्यं युज्यते । नापि तत्प्रामाण्याभावे सर्वज्ञाचार्यस्य स्वाभिमतसिद्धये प्रत्यभिज्ञोपन्यासो युज्यते । न च 'सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति' चेति प्रत्यहमुत्पत्तिपक्षे सर्गेऽप्युत्पत्त्यभावप्रतिपादनमुपपद्यते । येन वेदानां प्रतिदिनमुत्पत्तिविनाशमङ्गीकृत्य पूर्वापरवेदयोः सादृश्यमेवापौरुषेयत्वमिति प्रतीमः । टीकाकृतैव नित्यं विद्यन्त इति लभ्यत इति कौटस्थ्यस्य स्वयमेवाभिधानाच्च । 'तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु । चेतनस्य जनिर्यद्वदुच्यते सर्वलौकिकैरि'ति उत्पत्तिवाक्यानां सावकाशत्वाभिधानाच्च । तथा 'वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया । अवान्तराभिमानानां देवानां वा व्यपेक्षया । नानित्यत्वात्कुतस्तेषां अनित्यत्वं स्थिरात्मनामि'ति स्थैर्योक्तेश्च । टीकाकृतैव 'अनादिनित्यत्वेन प्रमितानामि'त्यर्थ इति स्थिरात्मनामित्यस्य व्याख्यातत्वाच्च । गायत्र्यधिकरणसुधायां 'अनादिनित्यत्वान्न वेदस्येश्वराधीनत्वमि'त्याशङ्क्य 'अनादिभूताया अपि गायत्र्याः अचिन्त्येश्वरशक्तिनियम्यत्वं संभवती'त्युक्तेश्च ।

केचित्तु टीकाकाराणां उभयविधवाक्यान्यालोच्य ईश्वरबुद्धिघटितो वेदः कूटस्थनित्यः ईश्वरबुद्धेर्नित्यत्वात् । अस्मदादिबुद्धिघटितस्त्वनित्यः । तत्र यानि कूटस्थनित्यताप्रतिपादकश्रुतिस्मृतिवाक्यानि टीकावाक्यानि च तानि सर्वाणि ईश्वरबुद्धिघटितवेदपराणि । यान्यनित्यत्वप्रतिपादकवाक्यानि तानि सर्वाणि अस्मदादिबुद्धिघटितपराणीत्यविरोध इति कल्पयन्ति । तन्न । शब्दात्मकवेदस्य बुद्धिघटितत्वाभावात् । तथात्वे च बुद्धेरश्रावणत्वेन तद्घटितवेदस्याप्यश्रावणत्वप्रसङ्गः । ऋग्वेद एवाग्ने-

रजायत इत्यादिवेदोत्पत्तिप्रतिपादकवाक्यव्याख्यानपर 'तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु' इति स्मृति-वैयर्थ्यप्रसङ्गाच्च । न हि ऋग्वेद एवाग्नेरजायत इत्यादिवाक्यानां अनीश्वरवेदोत्पत्तिपरतयैव मुख्यार्थसंभवे गौणोत्पत्तिपरतया व्याख्यानोपयोगोऽस्ति येन स्मृतिवाक्यं सार्थकं स्यात् । ततश्च वेदकौटस्थ्या-भावस्य टीकाकारानभिमतत्वात् वेदकौटस्थ्याङ्गीकारे नापसिद्धान्त इति सिद्धम् ॥ छ ॥ **इति वेदकौट-स्थ्येऽपसिद्धान्तोद्धारः** ।

अत्राह मणिकारः । वेदः पौरुषेयो वाक्यत्वात् । भारतवत् । वेदत्वं च शब्दतदुपजी-विप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् । ईश्वरप्रमाया अजन्यत्वात् । वेदार्थस्यानुमानादिविषयत्वेऽपि अनुमानादेर्वेदोपजीवकत्वात् । स्मृतीनां भारतादिभागस्य च वेदसमानार्थत्वेऽपि शब्दजन्यधीजन्यत्वात् । वेदार्थं प्रतीत्य तत्प्रणयनात् । पौरुषेयत्वं च सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वम् । आद्यभारतेऽपि तज्जातीयत्वान्न व्यभिचारः । अथवा वेदत्वं सजातीयोच्चारणानपेक्षोच्चरितवृत्ति प्रमाणतावच्छेदकवाक्यवृत्तिधर्मत्वात् । स्मृतित्ववदिति । यद्वा वेदाः शब्दाजन्यवाक्यार्थगोचरयथार्थज्ञानजन्याः । प्रमाणशब्दत्वात् । भारतवत् । न च पठ्यमानवेदे बाधो, भारते मन्वादिस्मृतौ च व्यभिचारः । तेषां द्विकर्तृकत्वात् । तादृशज्ञानजन्य-जातीयत्वं वा साध्यम् । तथाप्येतदभावादेव वेदेऽपौरुषेयत्वव्यवहार इति ।

तन्न । वेदसमानार्थके भारतभागेऽतिव्याप्तेः । न हि भारतमूलभूतं व्यासज्ञानं शब्द-जन्यमिति संभवति । तस्य भगवदवतारत्वेन नित्यज्ञानत्वात् । अत एव स्मृतीनां भारतादिभागस्य च वेदसमानार्थत्वेऽपि शब्दजन्यधीजन्यत्वादित्यतिव्याप्तिपरिहारवर्णनं निरस्तम् ।

**पक्षधरस्तु** । न च वेदव्याख्याने भगवत्कृतेऽतिव्याप्तिः वेदाः केनचिद्व्याख्याताः महा-जनपरिगृहीतत्वात् इत्यादीनां तदुभयातिरिक्तप्रमाणत्वात् । वेदव्याख्यानस्य वेदतदर्थबोध्यबोधकभाव-तात्पर्यकत्वात् । ततश्च वेदव्याख्यानतात्पर्यविषयीभूतस्य वेदतदर्थबोध्यबोधकभावस्यानुमानविषयत्वात् वेदव्याख्याने सत्यन्तविशेषणाभावान्नातिव्याप्तिरित्याह । तदसत् । अनुमानेन वेदव्याख्यानतात्पर्य-विषयस्य वेदतदर्थबोध्यबोधकभावस्य सामान्यतः विषयीकरणेऽपि विशेषतोऽविषयीकृतत्वेन सत्यन्त-विशेषणस्य वेदव्याख्याने सद्भावेन तत्रातिव्याप्त्यपरिहारात् । अन्यथा सकलस्यापि वेदार्थस्य सामान्यलक्षणप्रत्यासत्या चक्षुरादिजन्यप्रमेयमिति प्रमितिविषयत्वेन, वेदः किञ्चिदर्थप्रतिपादकः प्रमाण-

शब्दत्वादित्यनुमानविषयत्वेन च सत्यन्तविशेषणाभावात् असंभवः स्यात् । न च स्वजन्यज्ञान-समानप्रकारकत्वेन प्रमितिर्विशेष्यत इति नासंभव इति वाच्यम् । उदाहृतानुमानस्यापि वेदव्याख्यान-समानप्रकारकप्रमितिजनकत्वाभावेन वेदव्याख्यानेऽतिव्याप्तेर्वज्रलेपायितत्वप्रसङ्गात् । अन्ये तु अदृष्टार्थकमीश्वरेण प्रणीतं वेदातिरिक्तं वाक्यमेव नास्ति मानाभावात् । तत्कृतः सर्वोऽपि वेद एवेत्याहुः । तन्न । केनचित्सर्वज्ञेन वेद एव प्रणीतः न तु वेदातिरिक्तमदृष्टार्थकं वाक्यं प्रणीतमित्यस्मिन्नर्थे मानाभावात् ।

**रुचिदत्तस्तु** । ईश्वरोक्तादृष्टार्थकवेदभिन्नवाक्याभ्युपगमे पक्षतावच्छेदकातिप्रसक्तावपि न कोऽपि दोष इत्याह । तन्न । सिद्धसाधनतासद्भावात् । न च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् नांशतः सिद्धसाधनता दूषणमिति वाच्यम् । विवादविषय एव साध्यसिद्धेरुद्देष्टव्यत्वेन साध्यवत्त्या निश्चितेऽपि साध्यसिद्धेरुद्देश्यत्वायोगात् । यदपि, पौरुषेयत्वं च सजातीयोच्चारणानपेक्षोच्चरितजातीय-त्वमिति । तदपि न । अपौरुषेयत्ववादिनापि सजातीयोच्चारणमनपेक्ष्यैव वेदाः ईश्वरेणोच्चार्यन्त इत्यङ्गीकृतत्वेनार्थान्तरत्वात् । किं च त्वन्मते उच्चारणजन्याः शब्दाः वीचीतरङ्गन्यायेन अन्यान् शब्दान् आरभन्ते तेऽप्येवं तेऽप्येवमिति श्रोतुः श्रवणदेशे शब्दा उत्पद्यन्ते । ते च श्रोत्रा श्रोत्रेण गृह्यन्ते । ततः पुनः स्वयं शब्दानुच्चारयति । इदं चोच्चारणं न पूर्वोच्चारणसापेक्षं नापि तज्जन्य-शब्दानुभवसापेक्षमिति सजातीयोच्चारणानपेक्षोच्चरितत्वस्यैव वक्तुं शक्यत्वाज्जातीयपदवैयर्थ्यम् ।

**रुचिदत्तस्तु** । सजातीयपदं स्वसमानजातीयानुपूर्वीकशब्दपरम् । उच्चारणमनुसंधानं वाक्यत्व-हेतुरेव वा उच्चारणघटित इति न मौनिश्लोके व्यभिचार इत्याह । तन्न । त्वन्मते मौनिश्लोकस्या-शब्दात्मकत्वात् वाक्यत्वस्यैवाभावेन व्यभिचारप्रसक्तेरेवाभावात् । न हि, नास्त्युच्चारणं, सन्ति च वर्णात्मकाः शब्दा, इति संभवति । कारणाभावे कार्यायोगात् । यदपि आद्यभारतेऽपि तज्जातीयत्वान्न व्यभिचार इति । तदपि न । भारतभेदे प्रमाणाभावात् । सर्वैः पठ्यमानस्य भारतस्य प्रत्यभिज्ञाबलेनैकत्वाच्च । अन्यथा पठ्यमानभारतस्याप्तोक्तत्वाभावेन प्रामाण्यं न स्यात् । न च प्रमाणसदृशानुपूर्वीकत्वात्प्रामाण्यं युक्तम् । घटोऽस्तीत्याप्तवाक्यजातीयस्य घटाभावदशायां घटोऽस्तीत्य-नाप्तवाक्यस्यापि प्रामाण्यप्रसङ्गात् । यदपि, अथवा वेदत्वं सजातीयोच्चारणानपेक्षोच्चरितवृत्ति प्रमाण-तावच्छेदकवाक्यवृत्तिधर्मत्वात् स्मृतित्ववदिति । तदपि न । निरुक्तवेदत्वस्य भगवत्कृतवेदव्याख्यानवृत्तित्वात् उक्तसाध्यपर्यवसानसंभवेनार्थान्तरत्वात् । यदपि, यद्वा वेदाः शब्दाजन्यवाक्यार्थगोचरयथार्थज्ञान-

जन्याः । प्रमाणशब्दत्वादिति । तदपि न । अप्रयोजकत्वात् । प्रामाण्यसिद्धौ यथार्थवाक्यार्थजन्यत्वसिद्धिः तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयाच्च । न च महाजनपरिगृहीतत्वात्प्रामाण्यसिद्धिः । वेदपरिगृहीतृणां महत्वासिद्धेः । यदपि, न च पठ्यमानवेदे बाधः । नापि भागतादौ व्यभिचारः । तेषां द्विकर्तृकत्वात् इति । तदपि न । वेदभेदाभावेन बाधशङ्कायोगात् । अस्तु वा वेदभेदः । तथापि न समाधिः शोभां बिभर्ति । ईश्वरस्य भ्रान्तवाक्यादाविव साधारणकारणत्वेन तदीययथार्थज्ञानमादाय बाधशङ्का-परिहारायोगात् । वाक्यप्रामाण्यं प्रति वक्तृयथार्थज्ञानस्यैव प्रयोजकत्वेन ईश्वरज्ञानमादाय बाध-परिहारायोगात् । अन्यथा प्रमाणवाक्येन वक्तृज्ञानानुमानं न स्यात् । अत एव व्यभिचारशङ्का-परिहारोऽपि परास्तः । यदपि मणिकृता । 'तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त' 'ऋचः सामानि जज्ञिरे' इति कर्तृश्रवणात् । 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत' इति कर्तृस्मरणाच्चापौरुषेयत्वे बाधकं विना अर्थवादमात्रत्वस्य वक्तुमशक्यत्वात् । 'स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ता स्मर्तारो नैव कारका' इति महाभागवतपुराणीयवाक्यस्य श्रुतिविरोधेनान्यत्र तात्पर्यात् इति वेदः पौरुषेय इत्युक्तम् । तन्न । तस्मात्तपस्तेपानादिति श्रुतेः प्रजापतेर्वेदाः प्रादुर्भूता इत्यर्थत्वात् । अन्यथा 'ऋग्वेद एवाग्नेरजायत वायोर्यजुर्वेद आदित्यात्सामवेद इति वाक्यव्यापकोपः स्यात् । एकस्यानेकजन्यत्वायोगात् । वेदस्य परमेश्वरजन्यत्वं वदता प्रजापतिजन्यत्वाभिधायिश्रुत्युदाहरणयोगाच्च । 'प्रतिमन्वतरं चैषे'ति स्मृतिस्तु 'नित्या वाव श्रुतयः अनित्या वाव स्मृतय' इत्यादिश्रुत्या । 'सर्गे सर्गे मुनैवैत उद्गीर्यन्ते तथैव च । तत्क्रमेणैव तैर्वर्णैः तैः स्वैररेव नान्यथे'ति स्मृत्या च विरोधात्, यद्येषा तर्हि नान्या । यद्यन्या तर्हि नैषेति प्रतिमन्वन्तरमेषान्या विधीयत इति विशेषणविशेष्याभावायोगाच्च न प्रतीतार्थप्रतिपादनक्षमा । किन्तु प्रतिपाद्यभिन्नत्वेन श्रुतिभेदोपचारपरा । स्वयम्भूरेष भगवानिति महाभागवतवचनं तु उदाहृतश्रुतिस्मृतिसंवादित्वात् न स्वार्थात् प्राच्यावनार्हमिति ॥ छ ॥ **इति मण्युक्तवेदपौरुषेयत्वभङ्गः** ।

इतिहासपुराणानि अपौरुषेयाण्यपि न वेदवत् कूटस्थानि । 'सर्गे सर्गेऽन्यथैव तु । क्रियन्ते-ऽतस्त्वनित्यानी'ति परिणामश्रवणात् । ननु पुराणान्यपौरुषेयाणीत्ययुक्तम् । 'इदं भागवतं नाम पुराणं ब्रह्मसंमितम् । उत्तमश्लोकचरितं चकार भगवानृषिरि'ति भागवतस्य । 'तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् । इतिहासमिमं चक्रे पुण्यं सत्यवतीसुत' इति भारतस्य च व्यासप्रणीतत्वस्मरणात् । 'व्यासो बभूव लोकेऽस्मिन् वेदान्व्यभजदाशु सः । वेदार्थानि पुराणानि चकार भगवान् द्विज' इति ब्रह्मवैवर्ते पुराणानामपि व्यासप्रणीतत्वस्मरणात् । अपौरुषेयत्वप्रमाणाभावाच्चेति चेत् । न । 'आचख्युः

कवयः केचित् संप्रत्याचक्षते परे । आख्यास्यन्ति तथैवान्ये इतिहासमिमं भुवी'ति सूतवचनान्यथानुपपत्त्यैव भारतस्यापौरुषेयत्वसिद्धेः । न हि सूतशौनकसंवादात्मकस्य भारतस्य सूतशौनकसंवादात् प्राक् व्याख्यानमपौरुषेयत्वमन्तरा उपपद्यते । अविद्यमानस्य अध्ययनायोगात् । न च वर्तमानकल्पीयसूतशौनकसंवादात्मकं भारतम् । येन सूतशौनकसंवादात्पुरा अध्ययनमनुपपन्नं सत् अपौरुषेयत्वं गमयेत् । किं नाम प्राक्कल्पीयसूतशौनकसंवादात्मकम् । ततश्च सूतप्रवचनात्पुरा केषाञ्चिद्व्याख्यानं सूतस्याध्ययनं चोपपन्नमिति वाच्यम् । तदर्थः पूर्वसर्गवदिति पुराणानां पूर्वकल्पीयार्थसदृशवर्तमानार्थविषयकत्वस्मरणात् । किं च जनमेजयस्य सर्पसत्रे प्रवृत्त्यर्थं भारते ऋत्विग्वचनं श्रूयते 'अस्ति राजन् महत्सत्रं त्वदर्थं वेदनिर्मितम् । सर्पसत्रमिति ख्यातं पुराणे कथ्यते नृप । आहर्ता सर्पसत्रस्य नान्योस्ति च नराधिप । इति पौराणिकाः प्राहुरि'ति । न च भारतस्य वर्तमानकल्पीयजनमेजयविषयत्वाभावे तत्प्रवृत्त्यर्थं उदाहृतं ऋत्विग्वचनमुपपद्यते । अन्याधिकारिकतया वेदविहितस्यान्याधिकारिकत्वायोगात् । नामसाम्यस्याप्रयोजकत्वात् । वेदानां वर्तमानार्थविषयकत्वेन तत्समानार्थानां पुराणानां वर्तमानार्थविषयकत्वस्यावश्यं वक्तव्यत्वाच्च । लोकानामुद्धरणाय तीर्थक्षेत्रमाहात्म्यादिकथनभागस्य वैयर्थ्यापाताच्च । कल्पान्तरीयतीर्थाद्युपदेशस्य स्नानाद्यनुपयोगित्वात् । 'इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् । एवं परंपराप्राप्तं इमं राजर्षयो विदुः । स कालेनेह महता योगो नष्टः परन्तप । स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः । भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तममि'ति भारतात्मकगीतैकदेशस्य पुरातनत्वोक्तेश्च । तथा नारायणवर्माख्यमन्त्रस्य 'इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः । योगधारणया स्वाङ्गं जहौ स मरुधन्वनी'त्युक्त्वा 'एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुरि'ति भागवतनिर्माणकालादपि पुरातनत्वोक्तेः । 'सूत उवाच । 'एतत्सर्वं समाख्यातं माघमाहात्म्यमुत्तमम् । शुश्रूषुभ्यो भवद्भ्यश्च सदा गोप्यतमं नृणाम् । कस्यापीदमनाख्येयं श्रद्धाहीनस्य दुर्मतेः । देयं पुत्राय शिष्याय चिरं ज्ञातस्वरूपिणे । सर्ववेदसमं शास्त्रं सारभूतं मनोरमम् । विज्ञाते येन शास्त्रे तु सर्वं ज्ञातमिदं भवेत् । भक्त्या तु पूजयेद्यस्तु लिखित्वा पुस्तकं गृहे । तद्गृहं तु कुरुक्षेत्रं तस्य मुक्तिः करे स्थिते'ति वायुपुराणमाघमाहात्म्ये माघमाहात्म्यस्य सूतादिभिर्व्याख्यातत्वाभिधानात् । 'प्रातः स्नात्वा देवपूजां च कृत्वा श्रुत्वा कथां मासमाहात्म्यसंज्ञाम् । धर्मान् कृत्वा चोदितान्वैष्णवैश्च स वै भवेद्विष्णुलोकैकनाथ' इति, तथा 'इत्येतत्परमाख्यानं अंबरीष तवोदितं' इति । तथा 'लिखितं पुस्तकं येषां गृहे तिष्ठति मानद । तेषां मुक्तिः करस्था हि किमु तच्छ्रवणात्मनां' इति । वैशाखमाहात्म्यरूपग्रन्थस्य स्कन्दपुराणे पुराणात्पत्तः पूर्वं अम्बरीषादीन् प्रति कथितत्वाद्यभिधानात् । न हि पुराण एव इदं पुराणमम्बरीषादीन् प्रति कथितमित्युक्तमपि न

पुरातनमिति वक्तुं युक्तम् । अविद्यमानत्वादकथितस्य कथितत्वाभिधाने अप्रामाण्यापातात् । 'पुराणेषु जगन्नाथ न श्रुतं पटमार्जनमि'ति पुराणोत्पत्तेः प्रागेव पुराणेषु न श्रुतमिति नियमोक्त्यन्यथानुपपत्त्यैव पुराणपौरुषेयत्वसिद्धेश्च । न हि पुराणोत्पत्तेः प्राक् पटमार्जनस्य पौरुषेयत्वपक्षे पुराणेषु श्रवणप्रसक्तिरस्ति । येन तन्निषेधः सार्थकः स्यात् । अपौरुषेयत्वपक्षे तु पटमार्जनप्रतिपादकपुराणभागातिरिक्तपुराणभागस्य तेन दृष्टत्वात् पुरुषेष्वश्रवणप्रतिपादनमर्थवत् । एवं 'मैथिल उवाच । पूर्वमन्वन्तरस्थो हि वेनो राजा दुरात्मवान् । अयं वैवस्वतस्थो हि राजा चेक्ष्वाकुनन्दनः । इति श्रुतं मया पूर्वं इदानीं चोच्यते त्वया । अस्मिन् वैकुण्ठगे पश्चात् वेनो राजा भविष्यति । इत्येतत्संशयं छिन्धि श्रुतदेव महामते । श्रुतदेव उवाच । पुराणेषु च वैषम्यं युगकल्पव्यवस्थया । गतेऽस्मिन् दिने कल्पे कथैषा शाश्वती शुभा । मार्कण्डेयेन मे प्रोक्ता सा चोक्ता तव भूपत' इति स्कन्दपुराणवैशाखमाहात्म्ये पुराणानां परस्परं विरोधेनाप्रामाण्यमाशङ्क्य, विषयभेदेन परिहारमभिधाय एतत्कल्पीयपुराणस्य पूर्वदैनन्दिनकल्पीयपुराणाभेदोक्तेश्च । तथा 'ततस्त्वपउपस्पृश्य ददौ पुण्यमनुत्तमम् । वैशाखमासमाहात्म्यश्रवणस्य मुहूर्तजं' इति वैशाखमाहात्म्यस्योत्पत्तेः पूर्वतनस्य सत्यनिष्ठस्य वैशाखमाहात्म्यश्रवणपुण्यदानोक्तेश्च । किं च वेदव्यतिरिक्तस्यापि 'अस्यास्त्वामष्टमो गर्भो हंता यां नयसेऽबुधे'ति वाक्यस्यापौरुषेयत्वमवर्जनीयम् । 'पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवागि'ति अशरीरत्वस्मरणात् । एवं 'सत्यमाह शकुन्तले'त्यादीनामपि द्रष्टव्यम् । न चाशरीरवाक्यस्यापि वक्तारः श्रूयन्त इति वाच्यम् । असाधारण्येनाशरीरिणी वाक् इति व्यवहारान्यथानुपपत्त्या वेदे ऋषीणामिव तेषां तद्दृष्टत्वस्य कल्पनीयत्वात् । न च पुराणोत्पत्तिप्रतिपादकवचनाप्रामाण्यम् । पुराणानां परिणामलक्षणोत्पत्त्यङ्गीकारात् । न च शब्दात्मकस्य पुराणस्य परिणामः कर्तुमशक्य इति वाच्यम् । साधारणैः कर्तुमशक्यस्यापि परमेश्वरेण कर्तुं शक्यत्वात् । दृश्यन्ते हि परमेश्वरानुग्रहात् अगस्त्यादयः असंभावितसमुद्रपानादिकर्तारः । सति चैवं, परमेश्वरावतारस्य व्यासस्य का नामासंभावना । न चापसिद्धान्तः । तत्वसंख्यानटीकायां पुराणानामुत्पत्तिमत्वे सति नाशाभाव एव नित्यानित्यत्वमित्यभिधानात् । तत्वनिर्णयटीकायामपि उत्पत्तिमत्वनिमित्त एवानित्यत्वव्यपदेशः न तु विनाशनिमित्त इत्यर्थ इत्यभिधानादिति वाच्यम् । तत्राप्युत्पत्तिपदेन परिणामस्यैव विवक्षितत्वात् । विनाशाभावस्यास्माभिरप्यङ्गीकारात् । उक्तं च भगवत्पादैः 'पुराणानामप्यन्यथारचनमेवानित्यत्वमि'ति । अन्यथा पुराणानां रचनमित्येवावक्ष्यत् । रचनशब्दस्यैव शुद्धोत्पत्तिवाचकत्वात् । अन्यथारचनशब्दस्य परिणामवाचित्वात् । न च पुराणानां परिणामाङ्गीकारे दध्यात्मना विकृतस्य क्षीरशब्दवाच्यत्वाभाववत् पुराणशब्दवाच्यत्वाभावप्रसङ्गः । कुण्डलाद्यात्मना विकृतस्य सुवर्णस्य सुवर्णशब्दवाच्यत्ववत् तच्छब्द-

वाच्यत्वोपपत्तेः । किं च, प्रतिकल्पं पुराणानि भिद्यन्त इति वदन् प्रष्टव्यः । 'इतिहासपुराणः पञ्चमो वेदानां वेद' इत्यनेनोक्तं पञ्चत्वसंख्यापूरकत्वं इतिहासपुराणानामनन्तकल्पीयानां किं मिलितानां उत प्रत्येकम् । नाद्यः । कदाऽप्यपूर्तिप्रसङ्गात् । मेलनाभावात् । नापि द्वितीयः । यत्किञ्चित्कल्पीय-पुराणेनैव पञ्चत्वसंख्यायाः पूर्णत्वेन कल्पान्तरीयपुराणानां तदभावप्रसङ्गात् । अभिनवापौरुषेयत्वे तु पुराणभेदाभावान्नायं दोष इति तदेवास्थेयम् । अभिमतं चैतत्सूत्रकारस्य स्वोक्तार्थे श्रुतेः प्रमाणत्वेनोदाहरणवत् स्मरतीत्यादिना स्मृतेरपि प्रमाणत्वेनोदाहरणात् । अन्यथा स्वोक्तार्थे विवदमानं प्रति स्ववचनस्य प्रमाणत्वेनोदाहरणमयुक्तं स्यात् ॥ छ ॥ **इत्यभिनवापौरुषेयत्वसमर्थनम्** ।

ननु विशिष्य 'अत्रैवोदाहरन्तीममितिहासं पुरातनमि'ति कतिपयेतिहासानां 'अत्रैव श्रूयते पुण्या पितृगाथा पुरातनी'ति कासाञ्चिद्गाथानाम् 'स एवायं मया तेऽद्य योगः प्रोक्तः पुरातन' इति भारतैकदेशस्य 'इमां विद्यां पुरा कश्चिदि'ति भागवतैकदेशस्य च पुरातनत्वं स्मर्यते । न च तत्सर्वपुराणानां पुरातनत्वे संभवति । अतो अकामेनापि पुराणानां सादित्वमभ्युपगन्तव्यमिति चेत् । न । सर्व-पुराणानामनादित्वेऽपि स्वोक्तार्थे संमतित्वेनोदाहृतेषु इतिहासादिषु बहुमानातिशयजननाय विशिष्य अनादित्वोक्तिसंभवात् । तद्यथा वेदमात्रस्य मन्त्रद्रष्टृऋषिवचनत्वेऽपि स्वोक्तार्थे संमतित्वेनोदाहृते वेदे बहुमानातिशयजननाय साधारणमेव ऋषिवचनत्वं असाधारण्येनोच्यते 'तदुक्तमृषिणा आतेन यातं मनसोज-वीयसा निमिषश्चिज्जवीयसेति जवीयसेती'त्यादिना । अन्यथा वेदविशेषस्यैव ऋषिवचनत्वं न वेदमात्रस्येति स्यात् । ततश्च तदध्यायिनां तेन मन्त्रेण याजिनां चानर्थप्राप्तिः स्यात् । यो ह वा अविदितार्षछन्दो-दैवतं ब्राह्मणेन यजति याजयति अध्यापयति स्थाणुं वृच्छति गर्ते वापद्यते प्रवामीयत' इति श्रवणात् । यद्वा भागविशेषेषु परिणामोऽपि नास्तीति द्योतनाय विशिष्यानादित्ववचनम् । अत एव वेदेषु तत्रैते श्लोकाः । 'यदक्षरं पञ्चविधं समेति युजो युक्ताभियत्संवहन्ति' इत्याद्युदाहृतश्लोकानां वेदैकदेशत्वमुपपद्यते । अन्यथा परिणामिश्लोकघटितवेदस्य परिणामित्वप्रसङ्गो दुर्वारः स्यात् । वेदोदाहृताः श्लोका अपि वेदा एवेति युक्तम् । 'निश्वसितमेतदृग्वेदो यजुर्वेदो अथर्वाङ्गिरसविद्या उपनिषदः श्लोकाः सूत्राणी'ति वेदेभ्यः पृथग्विद्यात्वश्रवणात् । न च, पुराणानां वसिष्ठादिस्मृतीनामिव वेदेनार्थमुपलभ्य रचितत्व-रूपवेदमूलत्वान्यथानुपपत्या तद्वदेव पौरुषेयत्वमभ्युपेयं, न च पुराणसमानार्थस्य वेदस्येदानीमनुपलम्भात् पुराणानां न वेदमूलत्वमिति, वक्तुं युक्तम् । वसिष्ठादिस्मृतिवदुच्छिन्नवेदमूलत्वसंभवादिति वाच्यम् । पुराणानां क्वचिदुच्छिन्नवेदमूलत्वस्य क्वचित्प्रत्यक्षवेदमूलत्वस्य सद्भावेऽपि, तस्य स्मृतिगतवेदमूलत्वा-द्विलक्षणत्वेन तादृशपौरुषेयत्वासाधकत्वात् । स्मृतौ हि वेदेनार्थमुपलभ्य रचितत्वं वेदमूलत्वं पुराणादौ

तु न तादृशं वेदमूलत्वं संभवति । पुराणकर्तुर्व्यासस्य परमेश्वरावतारत्वेन स्वतः सर्वज्ञस्य वेदजन्यज्ञानाङ्गीकारायोगात् । कीदृशं तर्हि वेदमूलत्वमिति चेत् वेदसमानार्थत्वमेव वेदमूलत्वमिति ब्रूमः । यथोक्तम् श्रुतियुक्तिमूलशब्दौ 'श्रुतियुक्तिसमानार्थौ व्याख्येयावि'ति । पुराणानां वेदवत् अपौरुषेयत्वे किमर्थं वेदमूलत्वानुसरणमिति चेत् । पुराणानां परिणामित्वेन कालिदासादिवाक्यवत् पौरुषेयत्वं मन्यमानानामनाश्वासनिरासायेति ब्रूमः । तद्यथा वेदेष्वनाश्वासनिरासाय तदुक्तमृषिणेत्यादिसंवादकोपन्यास इति । **इत्यभिनवापौरुषेयत्वे बाधकोद्धारः ॥**

**श्रीरस्तु** । ननु वेदः कूटस्थनित्य इत्ययुक्तम् । विकल्पासहत्वात् । तथा हि ! क्रमविशेषविशिष्टा वर्णाः वेदः । तत्र वर्णाः किं कूटस्थनित्याः उतोत्पत्तिविनाशवन्तः । न तावदाद्यः कल्पः वेदकौटस्थ्यवादिनाऽभ्युपगन्तुं शक्यः । नित्यानां वर्णानां पौर्वापर्यलक्षणक्रमायोगेन वेदस्वरूपहान्यापातात् । न च वर्णव्यञ्जकोच्चारणपौर्वापर्याद्वा वर्णविषयबुद्धिपौर्वापर्याद्वा वर्णानां पौर्वापर्यमिति युक्तम् । वर्णानां स्वतः क्रमशून्यत्वे उच्चारणतद्विज्ञानयोर्निरंकुशत्वापातात् । न च पूर्वपूर्वोच्चारणमपेक्ष्योत्तरोत्तरोच्चारणमिति न नैयत्यभङ्गः । अन्धपरम्परात्वेन तस्यानादरणीयत्वप्रसङ्गात् । स्वाभाविकक्रमावच्छिन्नवर्णव्यञ्जकध्वनीनामेव वेदत्वसंभवे क्रमशून्यवर्णानां वेदत्वाङ्गीकारायोगापाताच्च । 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः' इत्यादेः अक्षरव्यञ्जकानि यावन्तीत्यर्थत्वोपपत्तेः । अक्षरव्यञ्जनं तु नार्थप्रत्यायनोपयोगितया किं तु अवर्जनीयतयेत्यपि वक्तुं शक्यत्वात् । नापि द्वितीयः कल्पोऽभ्युपगन्तुं शक्यः । वर्णानामनित्यत्वे तत्समुदायात्मकस्य वेदस्य कौटस्थ्यायोगात् इति चेत् ।

उच्यते । कूटस्थनित्या एव वर्णाः । प्रमाणसिद्धवेदपौरुषेयत्वान्यथानुपपत्त्यैव वर्णानां कूटस्थनित्यत्वसिद्धेः । नन्वेवं सति वर्णानां पूर्वोत्तरकालोत्पत्तिरूपक्रमासंभव इति चेत् । न । पूर्वोत्तरक्षणयोः उत्पत्तिमात्रसद्भावेऽपि पूर्वोत्तरक्षणावच्छिन्नोत्पत्त्यभावेन कालिकक्रमासंभवेऽपि क्रमवत् , वर्णानामपि पूर्वोत्तरक्षणावच्छिन्नोत्पत्तिरूपकालिकक्रमासंभवेऽपि पूर्वमक्षरं पूर्वरूपं उत्तरमुत्तररूपमित्यादिप्रमाणसिद्धक्रमान्तरसंभवात् । न च देशकालयोः दैशिककालिकक्रमातिरिक्तक्रमवत्त्वेऽपि देशकालातिरिक्तेषु दैशिककालिकातिरिक्तक्रमानुपलम्भेन वर्णेषु नासावभ्युपगन्तुं शक्य इति युक्तम् । ब्राह्मणेषु यजमानसङ्कल्पात् क्रमस्य दृष्टत्वेन वर्णेष्वपि साङ्कल्पिकक्रमाङ्गीकारस्योचितत्वात् । दृश्यते हि यजमानसङ्कल्पात् ब्राह्मणेषु क्रमः पूजादौ । यजमानो हि विद्यया वयसा च समेषु ब्राह्मणेषु यं विश्वेदेवस्थानत्वेन विवक्षति तमादौ पूजयति यं पितृस्थानत्वेन विवक्षति तं तदनन्तरं पूजयति ।

अपि च विश्वामित्रसङ्कल्पात् कनिष्ठस्यापि ज्येष्ठत्वं ज्येष्ठानामपि कनिष्ठत्वमिति क्रमो दृश्यते । 'अथ ह विश्वामित्रः पुत्रानामन्त्रयामास । मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः एके च भ्रातर स्थनास्मै ज्यैष्ठ्याय कल्पध्वमि'ति वचनात् । न च शुनःशेपादीनां क्रमे देशः कालो वा प्रयोजकः । देशस्याव्यवस्थितत्वात् कालस्य च विपरीतत्वात् । अनन्यगत्या विश्वामित्रसङ्कल्पादेव शुनःशेपादीनां क्रमो वक्तव्यः । एवं वर्णेष्वपि दैशिककालिकक्रमासंभवात् साङ्कल्पिकक्रमोऽभ्युपगन्तव्यः । न च साङ्कल्पिकत्वे कौटस्थ्यहानिः । अनादिनित्यस्यापि जीवस्य परमेश्वराधीनत्ववत् अनादिनित्यस्यापि क्रमस्य अनादीश्वरसङ्कल्पाधीनत्वोपपत्तेः ।

ननु इदं तत्वनिर्णयटीकाविरुद्धम् । 'क्रमविशिष्टा वर्णा एव वेदो न तु घटादिवदर्थान्तरम् । क्रमश्च बुद्धिनिमित्त एव । न तु स्वतोऽस्ति । ततश्च सर्वेषां सर्वथा सर्ववर्णविषयविवक्षितक्रमोपाधिभूत-बुद्ध्युपरम एव वेदविनाशो वक्तव्यः । न तु घटादीनामिवापरः । न चेश्वरस्य तथाविधबुद्ध्युपरमो युज्यते' । इत्यनेन क्रमस्य बौद्धत्वाभिधानात् इति चेत् । न । तत्वनिर्णयटीकायाः पररीत्या प्रवृत्तत्वात् । अवश्यं चैतदेवं विज्ञेयम् । बुद्धेः क्रमविशिष्टवर्णावगाहित्वेन वर्णक्रमोपाधित्वाङ्गीकारा-योगात् । बुद्धेरश्रावणत्वेन बुद्धिघटितक्रमस्याश्रावणत्वप्रसङ्गाच्च । न च साङ्कल्पिकत्वेऽप्ययं दोषः ! सङ्कल्पाधीनः सङ्कल्पाद्यघटितः वर्णधर्मः क्रमोऽस्तीत्यङ्गीकारात् । न चैवमपि 'वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः । व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते' इति तन्त्रसारोक्तवचनविरोधः । तत्र स्वाभाविकक्रमाभावस्य बौद्धक्रमस्य चोक्तेः इति वाच्यम् । न स्वत इत्यस्य दैशिकः कालिकः सङ्कल्पानधीनो वा क्रमो नास्तीत्यर्थत्वात् । अन्यथा 'नित्यत्वान्न क्रम' इत्येतावता पूर्णत्वान्न स्वत इति व्यर्थं स्यात् । 'व्यक्तिक्रमं ब्रह्मबुद्धावि'त्यस्य ब्रह्मबुद्धौ ब्रह्ममनसि व्यक्तिक्रमं एतद्वर्णव्यक्त्यनन्तरं अस्य वर्णस्य व्यक्तिरस्त्विति साङ्कल्पिकक्रममपेक्ष्य क्रम उच्यत इत्यर्थत्वात् । एवं कालिदासादिवाक्येषु तत्तत्सङ्कल्पाधीनः क्रमो द्रष्टव्यः । अत एव व्यत्यासेन पाठे नायमस्य श्लोकस्य क्रम इति प्रतिवक्तारो भवन्ति ।

ननु न वर्णानां नित्यत्वमभ्युपगन्तुं शक्यम् । उत्पन्नो गकारः विनष्टो गकार इति उत्पत्तिविनाशप्रतीतिविरोधादिति चेत् न । शरीरोत्पत्तिविनाशाभ्यां चेतनस्य उत्पत्तिविनाशवत् व्यञ्जकोत्पत्तिविनाशाभ्यां वर्णानां गौणोत्पत्तिविनाशसद्भावेन प्रतीत्योस्तद्विषयत्वात् । न चासतः सत्तासंबन्धरूपमुख्योत्पत्तिरेव प्रतीत्या विषयीक्रियत इत्युक्तम् । स एवायं गकार इति प्राक्तनगकारभेदे

नाना एव उत्पन्नो गकार इति प्रतीतेर्जायमानत्वेन मुख्योत्पत्तिविषयत्वाङ्गीकारायोगात् । न हि प्राक्तनाभेदं जानन् प्रागविद्यमानः इदानीं उत्पन्न इति जानातीति युक्तम् ।

न च प्रत्यभिज्ञा भ्रम इति युक्तम् । बाधकाभावात् । न चोभयोरपि प्रामाण्यसंभवे अन्यतराप्रामाण्याङ्गीकारो युक्तः। नन्वस्तूभयोरपि प्रामाण्यं तथाऽपि न नित्यत्वम् । उत्पत्तिप्रतीतिर्मुख्योत्पत्तिविषया । प्रत्यभिज्ञा तु पीतपीयमानजलेषु एकजातीयत्वावगाहितदेवेदमितिप्रत्यभिज्ञानवत् एकजातीयत्वविषयेति वक्तुं शक्यत्वादिति चेत् । न । प्रमाणसिद्धवेदापौरुषेयत्वान्यथानुपपत्त्या वर्णानां कौटस्थ्यस्य सिद्धत्वेन तथा कल्पयितुमशक्यत्वात् ।

ननु वर्णेषु तावत् तारत्वमन्दत्वादिधर्मा दृश्यन्ते । तथा स्त्रीपुंसादिवक्तृविशेषानुमापकजातिविशेषाश्च दृश्यन्ते । तथा उदात्तानुदात्तत्वादयोऽपि धर्माः दृश्यन्ते । न चैतेषु विरुद्धधर्मेषु सत्सु गकाराद्यैक्यं युक्तं विरुद्धधर्माणां धर्मिभेदाविनाभूतत्वात् । अत एव य उदात्ते कर्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति । अन्यत्वं करोषीति । ततश्च वर्णानां कौटस्थ्यस्य सर्वथा असंभावितत्वात् । वेदानां एकप्रकारेण सर्वैः पठ्यमानत्वमपौरुषेयत्वमभ्युपगन्तव्यं इति न तदन्यथानुपपत्त्या वर्णानां कौटस्थ्यस्य सिद्धिरिति चेत् । न । तारत्वमन्दत्वादिविरुद्धधर्मानां धर्मिभेदं विनैव कपिसंयोगतदत्यन्ताभावयोः समावेशवत् वर्णभेदं विनैव व्यञ्जकध्वनिभेदेन वर्णे समावेशसंभवात् । स्त्रीपुंसाद्यनुमापकधर्माणामपि वर्णव्यञ्जकतत्तध्वनिनिष्ठत्वेनोपपन्नानां वर्णभेदासाधकत्वात् । अत एव देवदत्तध्वनिः श्रूयते स्त्रीध्वनिः श्रूयत इति वक्तारो भवन्ति । न तु देवदत्तवर्णः स्त्रीवर्णः श्रूयत इति वदन्ति । अजिनिष्ठानां उदात्तत्वादीनां अन्यनिमित्तानां भेदासाधकत्वात् । उक्तं च महाभाष्ये । 'उभयविधम् । गुणेपूक्तम् । भेदका अभेदका इति । किं पुनरत्र न्याय्यम् । अभेदका गुणा इत्येव न्याय्यम् । कुत एतत् । यदयं, अस्ति दधिसक्थ्यक्षणामनुदात्त इत्युदात्तग्रहणं करोति । यदि भेदका एव गुणाः स्युः उदात्तमेवोच्चारयेत्' इति ।

ननु न वर्णानां नित्यत्वं युक्तं सर्वदोपलम्भप्रसङ्गात् । न च सर्वदाव्यञ्जकाभावादनुपलब्धिः । एवमपि गकारश्रवणवेलायां सर्वोपलब्धिप्रसङ्गानिवारणात् । न च प्रतिनियतव्यञ्जकव्यङ्ग्यत्वान्न सर्वदोपलब्धिः । समानदेशत्वे सति समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्य क्वाप्यनुपलम्भेनैव तत्स्वीकारायोगात् इति चेत् । तर्हि किं अन्यत्रोपलब्धमेवान्यत्राङ्गीकार्यमिति नियमः । अद्धेति

चेत् । न । श्रावणत्वस्य काप्यनुपलम्भेन शब्देऽपि तदभावप्रसङ्गात् । अनुभवसिद्धत्वाच्छब्दस्य श्रावणत्वमभ्युपगम्यत इति चेत् तर्हि वर्णानामपि प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्यानुभवसिद्धत्वात्त-दङ्गीकुरु ।

ननु वर्णा एव श्रूयन्ते न तु ध्वनयः । ततश्च न व्यञ्जकत्वं ध्वनीनामिति ताल्वोष्ठपुटव्यापार-जन्यत्वमेव वर्णानामिति चेत् न । शुकसारिकामनुष्योच्चारितवर्णश्राविणां अयं शुकध्वनिः अयं मनुष्य-ध्वनिरिति ध्वनेः प्रतीयमानत्वात् । दूरस्थस्य ध्वनिरेव श्रूयते न वर्णा इत्यनुभवाच्च ।

ननु सन्तु वर्णा नित्याः । किं ते व्याप्ताः, उत घटादिवत् परिच्छिन्नाः । नाद्यः । व्यञ्जकस्या-व्याप्तत्वेन वर्णैकदेशस्यैवाभिव्यक्तिः स्यात् न तु समग्रवर्णस्येति एकदेशस्यैव श्रवणप्रसङ्गात् । न च तदिष्टम् । घटादिवाचकानां पदानां सामस्त्येनाश्रुतत्वेन शाब्दबोधाभावप्रसङ्गात् । न द्वितीयः । देशान्तरे वाग्व्यवहाराभावप्रसङ्गात् । न च गकारादिव्यक्तीनामानन्त्यात् देशान्तरेऽपि वाग्व्यवहारः संभवतीति वाच्यम् । प्रत्यभिज्ञाविरोधात् । प्रत्यभिज्ञायाः श्रुतश्रूयमाणगकाराभेदग्राहकत्वात् इति चेत् । उच्यते । व्याप्ता एव वर्णाः । तथाऽपि एकदेशेन्द्रियसन्निकर्षात् नदी समुद्र इति नदीत्वेन समुद्रत्वेन च नद्यादीनां प्रतीतिवत् अभिव्यक्त्यैकदेशसन्निकृष्टेन श्रोत्रेण गकारोऽयमिति गत्वादिप्रकार-बुद्धिविषया भवन्तीति शाब्दबोधो भवति । शाब्दबोधे गत्वादिप्रकारज्ञानस्यैव हेतुत्वात् । न च वर्णानां विभुत्वे उच्चारणरूपाध्ययनासंभवेन स्वाध्यायोऽध्येतव्य इत्यादिविधीनां वैयर्थ्यं इति वाच्यम् । देहोत्पादस्य जीवोत्पादत्ववत् वर्णव्यञ्जकध्वन्यभ्यासस्यैव वेदाध्ययनत्वात् । अन्यथा स्नायादिति विधेः देहस्नानेन अनुष्ठितार्थत्वं न स्यात् ॥ **इति वर्णनित्यत्वसमर्थनम् ॥**

**मणिकारस्तु** । नन्वप्रयोजकं पौरुषेयत्वानुमानम् । नित्यनिर्दोषत्वेनैव तत्प्रामाण्योपपत्तेरिति चेत् । न । वर्णानामनित्यत्वेन तत्समूहस्य सुतरामनित्यत्वात् । न च तदसिद्धम् । तथा हि । वर्णात्मकशब्दः अनित्यः समवेतत्वे सति उत्पत्तिमत्वात् । घटवत् । न च हेत्वसिद्धिः । उत्पन्नो गकारः हट्टे उत्पन्नः कोलाहल इति प्रत्ययात् । न च व्यञ्जकाभावात् प्रागनुपलब्धस्योपलब्धि-मात्रम् । तस्य उत्पन्नो गकारः हट्टायां गकार इति प्रत्ययात् । न चायमौपाधिकः अन्योत्पत्तावगृह्य-माणायामपि तदनुभवात् । न च स्मर्यमाणारोपो बाधकाभावात् । अन्यथा घटोत्पत्तिरपि न सिध्येदित्याह ।

स स्थूलदृश्वा । पौरुषेयत्वसाधकानुमानस्याप्रयोजकत्वं शङ्कमानेन वेदानादितया एव प्रामाण्य-प्रयोजकत्वेनोक्तायाः निराकरणमकृत्वा प्रामाण्याप्रयोजकस्य ध्वंसाप्रतियोगित्वलक्षणनित्यत्वस्य निराकरणात् । न हि ध्वंसाप्रतियोगित्वं निर्दोषत्वे प्रयोजकम् । किं त्वनादित्वमेव । तथा हि । शब्दे हि न स्वतो दोषाः सन्ति । किं तर्हि प्रणेतृमिथ्याज्ञानप्रमादकरणापाटवादिदोषायत्ताः अबोधकत्वविपरीतबोधकत्वादयः शब्दे दोषाः भवन्ति । अनादित्वे च प्रणेतृवैधुर्यात् तद्दोषप्रयुक्त-दोषाभाव इति ।

यदपि वर्णात्मकः शब्दोऽनित्यः समवेतत्वे सति उत्पत्तिमत्वात् घटवदिति । तदपि न । वर्णानां नित्यद्रव्यत्ववादिना समवेतत्वोत्पत्तिमत्वयोरनङ्गीकारात् । यदपि, उत्पन्नो गकारः, हट्टे उत्पन्नः कोलाहल, इति वर्णोत्पत्तिसमर्थनं तदप्ययुक्तम् । हट्टे कोलाहल इति प्रतीतेर्ध्वन्युत्पत्तिविषयत्वेन वर्णोत्पत्तिसाधनाय तदुपन्यासायोगात् । किं च उत्पन्नो गकार इति प्रतीतिश्चेदुत्पत्तिसाधिका तर्हि नष्ट इति प्रतीतिः विनाशसाधिकेति तयैव विनाशसाधनसंभवात्, अनुभवसिद्धविनाशसाधनायानु-मानोपन्यासवैय्यर्थ्यम् । किं च उत्पन्नो गकार इति प्रत्ययो भ्रमः स एवायं गकार इति पूर्वश्रुत-गकाराभेदं गृह्णत्या प्रत्यभिज्ञया बाधितत्वात् । न च धर्मिणो गकारस्य भेदेऽप्येकजातीयत्वेन प्रत्यभिज्ञेति वाच्यम् । तथा सति तज्जातीयोऽयमिति प्रत्ययप्रसङ्गात् । न च वर्णानां तारत्वमन्दत्वा-दिविरुद्धधर्माधिकरणत्वेनाभेदप्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । तारत्वमन्दत्वादीनां ध्वनिधर्मत्वेन वर्णधर्मत्वाभावात् । तारो गकारः मन्दो गकार इति प्रतीतिस्तु सुगन्धि जलमितिवत्प्रमा । न च तदा गकार एव न ध्वनिरिति वाच्यम् । दूरस्थेन गकाराश्रवणेऽपि ध्वनिश्रवणात् ।

सन्तु वा तारत्वादयो वर्णधर्माः तथाऽपि प्रत्यभिज्ञासिद्धं तादात्म्यं को निवारयेत् । देवदत्तः मुण्ड्यपि शिख्यपि जट्यपि प्रत्यभिज्ञासिद्धं तादात्म्यं न मुञ्चतीति दर्शनात् । वर्णाः व्यञ्जक-ध्वनिवशेन तारत्वादिकं प्राप्ता अपि प्रत्यभिज्ञासिद्धं तादात्म्यं न मुञ्चेयुरिति वक्तुं शक्यत्वात् । तारान्मन्दोऽन्य इति प्रतीतिस्तु विशेषणभेदात् विशिष्टभेदमवगाहमाना पुनः प्रत्यभिज्ञासिद्धं विशेष्याभेदं न विरुणद्धि ।

किं च तारत्वादयो न गकारादिवर्णवृत्तिजातयः । गत्वादिना साङ्कर्यप्रसङ्गात् । तारस्तारतरो मन्दो मन्दतरश्चेति तारतम्यदर्शनाच्च । न जातिस्तारतम्यमर्हति । अथ तारत्वादयो जन्या वर्णधर्मा

इति चेत् । एवं तर्हि न भेदकाः । न हि एकस्मिन्नेवात्मनि कर्मभेदात् जायमानाः सुखदुःखादयः विरुद्धा इति आत्मा स्वस्माद्भिद्यते येन कालभेदेनोत्पद्यमानधर्मभेदाद्वर्णा भिद्येरन् ।

**अत्रोक्तं मणिकृता ।** गकारादिव्यक्तयः नैकैकाः । अस्ति हि शुकसारिकामनुष्यप्रभवेषु स्त्रीपुंसतद्विशेषप्रभवेषु च गकारादिषु स्फुटतरवैलक्षण्यात् स्वरूपतो भेदप्रथा । इक्षुक्षीरमाधुर्यवदिति । तन्न । वर्णाभिव्यञ्जकध्वनिभेदप्रथासद्भावेऽपि वर्णभेदप्रथाऽभावात् । वदन्ति हि शुकसारिकास्त्रीभिः रामरामेति व्यवहृतौ तच्छ्राविणः 'अयं शुकसारिकाध्वनिः अयं स्त्रीध्वनिरि'ति । ध्वनिरेव नानाप्रभेदभिन्नः तं तमनुमापयति । कथमन्यथा वर्णाभावात् । गर्दभादिध्वनिश्राविणः गर्दभादीननुमिमीरन् ।

किं च यदि वर्णाः प्रतिपुरुषं उत्पत्तिनाशवन्तो भिन्ना एव स्युः तर्हि पठ्यमानवेदपुराणादेः अप्रामाण्यं स्यात् । आप्तमूलत्वाभावात् । न हि पठ्यमानवेदादिकर्तारः विवक्षितार्थतत्वज्ञानवन्तो विवक्षावन्तो वा येन प्रामाण्यं स्यात् । आप्तवाक्यसादृश्यात् प्रामाण्यमिति वदन् श्लाघनीयप्रज्ञः । नदीतीरे पञ्च फलानि सन्तीति पूर्वदिनोदाहृताप्तवाक्यसदृशपरदिनोदाहृतानाप्तवाक्यस्यापि प्रामाण्यप्रसङ्गात् ।

किं च व्यासादिप्रणीतपुराणादेः पठ्यमानपुराणादेश्च नात्यन्तसादृश्यम् । इक्षुक्षीरमाधुर्यवत् अतिवैलक्षण्यस्य त्वयैवाभिहितत्वात् । सादृश्यमात्रस्यातिप्रसङ्गेनाप्रयोजकत्वात् । पठ्यमानपुराणादौ व्यासोपज्ञता न स्यात् । स्याच्च देवदत्ताद्युपज्ञता । न हि देवदत्तादिकृतत्वमपहाय व्यासवाक्यसादृश्यमात्रेण व्यासकृतत्वं स्मरन् प्रेक्षावान् । देवदत्तजन्यस्यापि यज्ञदत्तं पुत्रसादृश्यमात्रेण यज्ञदत्तपुत्रत्वं वदतोऽपि प्रेक्षावत्त्वप्रसङ्गात् । एवं पठ्यमानवेदस्यामन्त्रत्वेन तदुच्चारणेन कृतस्य यज्ञादेर्धर्महेतुत्वं न स्यात् । न हि मन्त्रसादृश्यमात्रेण मन्त्रकार्यकारित्वम् प्रसिद्धवेदस्येति वक्तुं युक्तम् । गुञ्जापुञ्जादेर्दाहकत्वप्रसङ्गात् । मातृमातङ्गमदिराद्यतिसादृश्यं भार्यादावस्तीति तदुपभोगे प्रत्यवायः स्यात् । स्याच्च भार्यासादृश्यं मात्रादाविति तदुपभोगो धर्महेतुः । परमेश्वरप्रणीतवेदस्य यज्ञाङ्गतया धर्महेतुत्वं न काप्यस्तीति तत्सादृश्यं न पठ्यमानवेदस्य धर्महेतुताप्रयोजकम् ।

किं च स्वाध्यायोऽध्येतव्य इति अध्ययनविधिविषयत्वं किं परमेश्वरप्रणीतस्य उत स्वप्रणीतस्य । नाद्यः । त्वन्मते उपाध्यायशिष्याभ्यां उच्चार्यमाणवेदयोरपरमेश्वरवेदत्वात् । नापि द्वितीयः ।

वैयर्थ्यात् । अयोगाच्च । न हि प्रथमोच्चारित एव वेदः पुनः उच्चार्यमाणो भवति । येन द्वितीयाद्युच्चारणं प्रथमोच्चारितस्याध्ययनं स्यात् ।

यदपि शुक्ला गौः कृष्णा गौरिति भेदे भासमाने गवाकारानुगतप्रतीतिः गोत्वमालम्बते । तथा शुकादिगकारेषु भेदे भासमानेऽयं गकारोऽयमपि गकार इति बुद्धिर्गत्वमालम्बते इति प्रत्यभिज्ञा भेदप्रथा चोपपद्यत इति । तदपि न । गकारव्यञ्जकध्वनिषु भेदे भासमानेऽपि शुकाद्युच्चारितगकारे भेदावभासाभावात् । न च तदा शुकादिभिर्गकारोच्चारणसमये ध्वनिरेव नास्ति तत्कारणस्य भेरीताडनादेरभावादिति वाच्यम् । ताल्वोष्ठपुटव्यापारस्यैव ध्वनिकारणत्वात् । कथमन्यथा काकोलूकादिताल्वोष्ठपुटव्यापारात् ध्वन्युत्पादः ।

यदपि उत्पन्नो गकारः विनष्टो गकार इति प्रत्ययबलात् वर्णानामुत्पत्तिविनाशसमर्थनम् । तदपि न । वर्णोत्पत्तिविनाशप्रतीत्योः उत्पन्नो देवदत्तः विनष्टो देवदत्त इति प्रतीत्योः शरीरलाभशरीर-हानिविषयत्ववत् व्यञ्जकलाभतद्धानिविषयत्वात् । न च भ्रमत्वप्रसङ्गः । शरीरोत्पत्तिविनाशयोरमुख्यतो देवदत्तोत्पत्तिविनाशत्ववत् व्यञ्जकोत्पत्तिविनाशयोरपि वर्णोत्पत्तिविनाशत्वात् । न हि अमुख्यार्थमव-गाहमानाऽपि भ्रान्तिः । व्यञ्जकवर्णविवेकशून्यानां तु उत्पन्नो गकार इति प्रत्ययो भ्रमः । यज्ञादीनामुक्तरीत्या धर्मसाधनत्वान्यथानुपपत्त्या वर्णनित्यस्य सिद्धत्वेन बाधितविषयत्वात् ।

यदपि, उत्पादादिबुद्धिप्रत्यभिज्ञयोरस्त्यवश्यं विषयभेदः । एकविषयत्वे विरोधेनैकानन्तरम-परानुत्पत्तिप्रसङ्गात् । एवं भेदे भासमाने प्रत्यभिज्ञायास्तज्जातीयत्वं विषयो न व्यक्त्यभेदः । न चैवं तज्जातीयोऽयमिति स्यान्न तु सोऽयमिति वाच्यम् । तज्जातीयप्रतीतेरपि सोऽयमित्याकारदर्शनात् इति । तन्न । मन्त्राणामुच्चारणेन धर्मसाधनत्वान्यथानुपपत्तिसिद्धगकारादिव्यक्तितादात्म्यविषयत्वमनु-भवसिद्धमपहाय प्रत्यभिज्ञायास्तज्जातीयत्वालम्बनत्वाभिधानायोगात् । उत्पन्नो गकार इत्यादिप्रतीती-नाममुख्योत्पत्तिविषयत्वमपहाय प्रमाणबाधितमुख्योत्पत्तिविषयत्वाभिधानायोगाच्च । अत एव, 'यदि प्रत्यभिज्ञाबलात् वर्णा नित्याः स्युः स एवायं ध्वनिरिति प्रत्यभिज्ञासद्भावात् ध्वनिरपि नित्यः स्यात् । न हि प्रत्यभिज्ञासाम्ये वर्णा एव नित्या न ध्वनिरिति विभागे कारणमस्ति । उत्पन्नो ध्वनिरिति प्रत्यभिज्ञाबलात् यदीयं प्रत्यभिज्ञा भ्रान्तिस्तर्हि साऽपि तथाऽस्तु । उत्पन्नो गकार इति उत्पत्तिप्रतीते-स्तत्रापि समत्वात्', इति परास्तम् । वेदापौरुषेयत्वान्यथानुपपत्तिसिद्धवर्णतादात्म्यविषयकत्वेन वर्ण-प्रत्यभिज्ञायाः प्रमाणत्वात् । ध्वनिप्रत्यभिज्ञायाश्चानथास्वादप्रमाणत्वेन प्रतिबन्दीग्रहणायोगात् ।

एवमपि न वर्णानां नित्यत्वं युक्तम् । अनुपलम्भबाधात् । न च व्यञ्जकाभावप्रयुक्तानुपलब्धिर्नासत्त्वे हेतुः । सति व्यञ्जके नानुपलब्धिरिति न नित्यत्वहानिरिति वाच्यम् । वर्णश्रवणकाले व्यञ्जकानुपलब्धेः इति चेत् । न । वर्णानां तद्व्यञ्जकध्वनीनां च सहैवोपलम्भात् । न च गकारश्रवणकाले सर्ववर्णश्रवणप्रसङ्गः । व्यञ्जकसद्भावात् । अन्यथा गकारश्रवणं न स्यादिति वाच्यम् । वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाङ्गीकारात् ।

ननु न वर्णाः प्रतिनियतव्यञ्जकव्यङ्ग्या इति वक्तुं शक्याः । अदृष्टकल्पनाप्रसङ्गात् । न हि क्वापि समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमुपलब्धम् । अन्यथा घटदर्शनाय प्रदीपः पटदर्शनाय सौरालोकः अन्यदर्शनायान्यत्स्यादिति चेत् । न । यतो यत्प्रमाणसिद्धं तदभ्युपगन्तव्यमिति नियमः । न तु यदन्यत्र दृष्टं तदेवाभ्युपगन्तव्यमिति । मा हि भूत् घटादेरुपलब्ध्यै व्यञ्जकापेक्षा दृष्टेति प्रदीपाद्युपलब्धयेऽपि व्यञ्जकापेक्षा । मा च भूत् नित्यज्ञानादिमत्त्वं अन्यत्र क्वाप्यनुपलब्धमिति परमेश्वरस्यापि तदभावः । तत्र प्रमाणसद्भावात्तदङ्गीक्रियते तर्हि वर्णेष्वपि प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्यापि प्रमाणसिद्धत्वात्तदङ्गीकुरु । अनुभूयते खलु ताल्वोष्ठपुटव्यापारेण ध्वनिविशेषोत्पादे गकाराभिव्यक्तिः । अन्यविधेन ककाराभिव्यक्तिः । विधान्तरैर्वर्णान्तराभिव्यक्तिरिति । न च नानाविधताल्वोष्ठपुटव्यापारादीनां नानाविधवर्णोत्पत्तावेवोपयोगो न ध्वन्युत्पाद इति वाच्यम् । वर्णानां नित्यत्वस्य साधितत्वेन तदुत्पादकत्वेनान्यथासिद्ध्ययोगात् ।

यत्तु वर्णाः न प्रतिनियतव्यञ्जकव्यङ्ग्याः एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटगतैकत्वपरिमाणवदिति मण्युक्तमनुमानम् । तदयुक्तम् । बाधितविषयत्वात् । अप्रयोजकत्वाच्च । किं चायं हेतुरन्यतरासिद्धः । तार्किकेण उत्पत्तिविनाशावभ्युपगच्छता एकस्मिन् काले समानदेशताऽनभ्युपगमात् । विवक्षितं चैककालावच्छेदेन समानदेशत्वं हेतुविशेषणम् । एकावच्छेदेनेति अतो देशकालसाधारणम् । नैकाधिकरणकक्रमिकगन्धादिभिर्व्यभिचार इति पक्षधरोक्तेः । संमतं चेत्सर्ववर्णानां समानदेशकालत्वम् । तर्हि वर्णानां नित्यत्वं प्राप्तम् । ततश्च प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमकामेनाप्यङ्गीकार्यं इति तन्निषेधानुपपत्तिः । पररीत्याऽयं हेतुरुपन्यस्त इति केचित् । तन्न । प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभावरूपसाध्यस्यावास्तवत्वापातात् । न हि धूमाभाववति प्रदेशे भ्रान्तमतावलम्बनेन वह्निसाधनाय धूमवत्त्वादिति प्रयुक्ते वास्तवो वह्निः सिध्यति । येनेह तथा स्यात् । कर्णावच्छेदेनैकदाऽपि नानावर्णोत्पत्तिसंभवे तद्वर्णविशेषामेव पक्षत्वमित्यपरः । तदपि न ।

श्रोत्रप्रदेशे यावन्तो वर्णाः श्रूयन्ते तावद्व्यञ्जकध्वनीनामप्युत्पन्नत्वेन प्रतिनियतव्यञ्जकत्वस्यानुभवसिद्धत्वेन अनुमानस्य बाधितविषयत्वात् ।

केचित्तु, नानुमानमेतत् । किं तु यदि वर्णाः परस्परव्यभिचारिव्यञ्जकव्यङ्ग्याः स्युः एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्या न स्युरिति परानिष्टप्रसञ्जकस्तर्कः । न चास्यापि विपर्ययापर्यवसानदोषः । द्विविधो हि तर्कः । साधको बाधकश्च । तत्राद्यस्यैव विपर्ययपर्यवसानापेक्षा न द्वितीयस्येत्याहुः । तदुच्छम् । गोत्वाश्वत्वयोः एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वेऽपि प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्य दृष्टत्वेन आपाद्यापादकयोर्व्याप्त्यभावात् । न चाश्वत्वं न गवि गोत्वं च नाश्वे इति समानदेशत्वमेव नेति वाच्यम् । गोत्वाश्वत्वे सर्वगते इति मतेऽश्वे गोत्वसंबन्धस्य गव्यश्वत्वसंबन्धस्यावर्जनात् । समवायस्य वर्णेष्वप्यभावात् । मूले यद्याद्यालिङ्गितत्वाभावाच्च । नञ्व्यत्यासस्यापि कल्प्यत्वात् । समानेन्द्रियग्राह्यत्वादिति श्रुतपञ्चम्यर्थस्य त्यागप्रसङ्गाच्च ।

यानि तु मण्युक्तानि, वर्णो न नित्यः, अनित्यो वा सत्त्वे सत्युत्पत्तिमत्त्वात् । अस्मदादिबाह्येन्द्रियग्राह्यत्वे सति जातिमत्त्वात् । अस्मदादिप्रत्यक्षगुणत्वात् । अस्मदादिप्रत्यक्षविशेषगुणत्वात् । व्यापकसमवेतप्रत्यक्षविशेषगुणत्वात् । अनात्मप्रत्यक्षगुणत्वात् अव्याप्यवृत्तित्वात् । बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात् । भूतप्रत्यक्षगुणत्वात् । उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तजातिमत्त्वादित्याद्यनुमानानि तान्यप्ययुक्तानि ॥ १० ॥ वेदस्य धर्महेतुत्वान्यथानुपपत्त्या वर्णनित्यत्वस्य सिद्धत्वेन बाधितविषयत्वात् । वर्णनित्यत्ववादिना उत्पत्तिमत्त्वस्यानङ्गीकृतत्वेन आद्यानुमानस्यासिद्धेः । जातिशून्यायाः जातेः अस्मदादिबाह्येन्द्रियग्राह्यत्वेऽपि नित्यत्ववत् जातिमतो वर्णस्य नित्यत्वे बाधकाभावेन द्वितीयानुमानस्याप्रयोजकत्वाच्च । न हि जातिर्नित्यत्वविरोधिनी । येन बाह्येन्द्रियग्राह्यत्वेऽपि अनिवारितं नित्यत्वं जातिमत्त्वेन निवारितं स्यात् । वर्णात्मकस्य शब्दस्य द्रव्यत्वेन तृतीयहेतोरन्यतरासिद्धेः । स्वरूपानन्दे अस्मदादिप्रत्यक्षगुणत्वेऽपि अनित्यत्वाभावेन व्यभिचाराच्च । अस्मदादिप्रत्यक्षविशेषगुणत्वादिति चतुर्थस्यान्यतरासिद्धेः व्यापकसमवेतत्वस्य गुणत्वस्य चानङ्गीकारेण पञ्चमस्याप्यन्यतरासिद्धेः । गुणत्वानङ्गीकारादेव षष्ठस्याप्यन्यतरासिद्धेः । विभुत्वाङ्गीकारेण सप्तमस्याप्यन्यतरासिद्धेः । गुणत्वाभावादेवाष्टमस्याप्यन्यतरासिद्धेः । अत एव नवमस्याप्यन्यतरासिद्धेः । दशमस्यापि तारत्वमन्दत्वादीनां तारादिशब्दप्रवृत्तिनिमित्तत्वेऽपि उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तत्वाभावेनासिद्धेः । अप्रयोजकत्वाच्चेत्यलम् ।

**इति वर्णानित्यत्वभङ्गः ॥**

इह खलु केचिन्मीमांसकाः वेदनित्यतामङ्गीकुर्वाणाः अष्टकादिस्मृतिमूलस्य वेदस्य नित्यानुमेयतामाहुः । तथा हि । यद्यष्टकादिस्मृतिमूलभूतो वेदः अधीयमानवेदवत् कदाचित्प्रत्यक्षत्वेनाध्ययनविषयस्तर्हीदानीमप्यध्ययनविषयः स्यात् शाखान्तरवत् बहुभिर्मेधाविभिः आध्यात्मिकशक्तिसंपन्नैरधीयमानवेदस्याध्ययनविलोपनिमित्ताभावात् । न चेदानीमध्ययनमुपलभामहे । ततो मन्यामहे नित्यानुमेय एव स वेदो न कदाप्यध्ययनविषय इति । नन्वष्टकादिस्मृतिप्रणेतुः वेदानुमापकलिङ्गाभावेन वेदानुमानासंभवात् प्रत्यक्ष एव वेदोऽभ्युपगन्तव्य इति चेत् न । स्मृतीनां प्रवाहतोऽनादित्वेन स्मृतिप्रणेतारः पूर्वपूर्वस्मृत्या वेदमनुमाय ततोऽर्थमुपलभ्य स्मृतिं रचयन्तीत्यङ्गीकारात् । ननु नाष्टकादिस्मृतिमूलस्य वेदस्य नित्यानुमेयत्वं अङ्गीकर्तुं शक्यम् । स्मृतिमूलत्वाभावप्रसङ्गात् । वेदो हि स्वार्थानुभवजननद्वारा स्मृतेर्मूलमिति वक्तव्यं गत्यन्तराभावात् । न च उत्पत्तितः अभिव्यक्तितो वा क्रमविहीनस्य वर्णमात्रस्य बोधकत्वं संभवति । क्रमविशेषावच्छिन्नवर्णानामेव अर्थप्रत्यायकत्वदर्शनेन क्रमरहितानां प्रत्यायकत्वादर्शनात् । अस्तु वा तेषु क्रमः । तथापि न बोधकता । क्रमावच्छिन्नतया वर्णविशेषाणां विशिष्याज्ञातत्वादिति चेत् । न । शब्दस्यार्थबोधकत्वे तत्तदर्थज्ञापकतया विज्ञानस्यैव प्रयोजकत्वेन क्रमविशेषावच्छिन्नतया विज्ञानस्याप्रयोजकत्वात् । अन्यथा घटादिशब्दानां तत्तदर्थबोधकत्वरूपशक्तिग्रहात्पुराऽपि घटादिशब्दैर्बोधप्रसङ्गः । क्रमविशेषावच्छिन्नवर्णविज्ञानस्य पुराऽपि भावात् ।

ननु तदर्थज्ञापकत्वेन ज्ञातात्पदार्थज्ञानमात्रं न तु संसर्गधीः । घटः कर्मत्वमानयनं भावनेत्यत्र तद्बोधकमिति ज्ञानेऽपि घटमानयेति वाक्यादिवान्वयबोधाभावात् । एवं चान्वयप्रकारककर्मत्वाद्युपस्थापकविभक्त्यादिमत्पदविशेषस्य तदुपस्थिताकाङ्क्षादेश्च ज्ञानं वाक्यार्थधीहेतुः । अतो न तैर्विना ज्ञापकत्वमात्रेण ज्ञातादर्थधीरिति चेत् न । प्रत्यक्षवाक्यानां स्वार्थबोधजनने विभक्त्यादेः सहकारित्वेऽपि नित्यानुमेयवाक्यानां स्वार्थबोधजनने तत्तदर्थज्ञापकत्वमेव सहकारि । न तु विभक्त्यादिरपि । विभक्त्यादिमत्तया अननुसंहितस्यापि नित्यानुमेयवाक्यस्य अनुभावकत्वेन धर्मिग्राहकमानसिद्धत्वात् । अन्यथेश्वरस्याशरीरस्य कर्तृत्वं न स्यात् । अनुभावकत्वावेदकधर्मिग्राहकमानं तु, 'उच्छिन्नवेदमूलत्वनित्यानुमेयवेदमूलत्वाभ्यां विप्रतिपन्नाष्टकादिस्मृतिः इदानीं स्मृत्यर्थानुभवजनकवेदमूला अविगीतमहाजनपरिगृहीतस्मृतित्वात् । प्रत्यक्षवेदमूलकस्मृतिवत्' । अत्र साध्ये इदानीं स्मृत्यर्थानुभवजनकेति विशेषणमष्टकादिस्मृतिमूलस्य वेदस्य नित्यानुमेयत्वसिद्ध्यर्थम् । अपठ्यमानस्य प्रत्यक्षवाक्यसामग्रीविधुरस्य इदानीमिवान्यदापि बोधकत्वसंभवेन कदाचित्प्रत्यक्षत्वकल्पकाभावेन नित्यानुमेयत्वसिद्धेः । न च

स्मृत्यर्थबोधकवेदानुमानेन स्मृत्यर्थरूपवेदार्थस्य विषयीकृतत्वात् तद्बोधकस्य वेदस्यानुवादकतेति युक्तम् । स्मृत्यर्थरूपवेदार्थस्य अनुमितिविषयविशेषणतया तटस्थज्ञानेनैव भासमानत्वेनानुमितेस्तदविषयत्वात् । तद्यथा । पाककृतौ मानसप्रत्यक्षतायां कृतिविशेषणतया पाकः, तटस्थज्ञानेनैव भासते, यथा वा अयं देवदत्त इति चाक्षुषप्रत्यक्षविषयविशेषणतया संज्ञा तटस्थज्ञानेनैव भासते। मा भूद्वेदार्थस्यानुमानसिद्धत्वाद्वेदस्यानुवादकता, स्मृतिसिद्धत्वात्तु स्यादिति चेन्न । निरपेक्षप्रमाणसिद्धार्थबोधकत्वस्यैवानुवादकताप्रयोजकत्वेन ज्ञातज्ञापकतामात्रस्याप्रयोजकत्वात् । अन्यथा वेदेनार्थबोधानन्तरं पुनरुच्चारितो वेदोऽनुवादकः स्यात् ।

ननु वर्णसमूहः पदं, पदसमूहो वाक्यम् । वाक्यविशेषश्च वेद इति सुप्रसिद्धम् । तद्यदा नित्यानुमेयवेदे उत्पत्तितोऽभिव्यक्तितो वा क्रमासंभवः तदा पदाभावः । यदा च पदाभावस्तदा वाक्यत्वाभावः । यदा च वाक्यत्वाभावस्तदा वेदत्वं तस्य दूरोत्सारितमिति चेन्न । वर्णसमूहः पदम्, पदसमूह एव वाक्यत्वमित्यत्रास्माकमाग्रहाभावात् । अखण्ड एव नित्यानुमेयो वेद इत्यङ्गीकारात् । तस्य च प्रदोषादावनुच्चारणाद्वेदत्वम् । श्रोत्रग्रहणयोग्यत्वाच्छब्दत्वम् । वाक्यत्वमर्थबोधकत्वात् । न च तस्याखण्डत्वेऽन्वयबोधकत्वासंभवः । अन्वयप्रतियोग्युपस्थापकपदविधुरत्वादिति वाच्यम् । पदार्थस्थानीयस्त्वस्य वाक्यार्थ इत्यङ्गीकारात् । तद्यथा छन्दोऽधीत इति वाक्यार्थः श्रोत्रियपदार्थस्थानीयः ।

ननु स्मृत्यर्थबोधकवेदस्य स्मृत्यर्थबोधकतया विज्ञानेऽपि विशिष्याज्ञातत्वादबोधकतेति चेन्न । विशिष्याज्ञातस्यापि धूमस्य अस्ति वह्निलिङ्गमिति शाब्दज्ञानमात्रेण वह्न्यनुमापकत्ववत् विशिष्याज्ञातस्यापि वेदस्य बोधकत्वसंभवात् । एवं आचारानुमितो वेदोऽपि नित्यानुमेय एव । तत्र, मङ्गलाचरणं कर्तव्यम् अलौकिकाविगीतशिष्टाचारविषयत्वादिति तत्कर्तव्यतामनुमाय, सा च कर्तव्यता वेदबोधिता अलौकिकाविगीतशिष्टाचारकर्तव्यतात्वादित्येवानुमानप्रकारः । न तु मङ्गलाचरणं वेदबोधितकर्तव्यताकम् तादृशशिष्टाचारत्वादित्यनुमानप्रकारः । तथा सति वेदबोधितकर्तव्यताकमिति विज्ञाने समानसंवित्संवेद्यतया वेदः कर्तव्यताबोधक इत्येव विज्ञानं स्यात् । ततश्च कर्तव्यताबोधकतया विज्ञाताद्वेदात्कर्तव्यताधीरेव स्यान्न तु मङ्गलाचारकर्तव्यताधीः । विशिष्टबोधकत्वेन वेदस्याज्ञातत्वात् इति । तन्न । नित्यानुमेयत्वपक्षे तत्साधकत्वाभिमतलिङ्गस्य तेन व्याप्तिग्रहासंभवेनानुमानप्रवृत्त्ययोगात् ।

ननु, या महाजनपरिगृहीता स्मृतिः सा वेदमूलेति व्याप्तेः प्रत्यक्षवेदमूलकस्मृतावेव ग्रहणसंभवेन व्याप्तिग्रहो नेत्ययुक्तमिति चेत्। न। प्रत्यक्षवेदनित्यानुमेयवेदयोर्विजातीयत्वेन प्रत्यक्षवेदव्याप्त्या तद्विजातीयवेदसाधनायोगात्। अन्यथा सास्नादिमत्त्वस्य पशुवृत्तिगोत्वेन व्याप्तिसद्भावात् स्वधर्मिणि पृथिवीवृत्तिगोत्वसाधनप्रसङ्गो दुर्वारः स्यात्। त्वयैव तस्याखण्डत्वरूपपदसमुदायात्मकवेद-वैलक्षण्याङ्गीकारात्। न च कार्यत्वस्य घटादौ कुलालाद्यनीश्वरकर्तृव्याप्त्या तद्विजातीयेश्वरानुमानवत् विलक्षणवेदानुमानमुपपन्नमिति वाच्यम्। वैषम्यात्। कर्तृत्वोपयोगिज्ञानचिकीर्षादिमत्त्वेन कुलाल-साजात्यस्य ईश्वरे सत्त्वात् कर्तृत्वानुपयोगिवैलक्षण्यस्य कुलालेष्वपि परस्परं भावेन तस्याविरोधित्वात्। अष्टकादिस्मृतिमूलत्वेनाधीयमानवेदसजातीयाध्ययनविषयवेदकल्पनस्यैवोचितत्वाच्च।

यदत्रोक्तं, शाखान्तरवत् बहुभिर्मेधाविभिराध्यात्मिकशक्तिसंपन्नैरधीयमानवेदस्याध्ययनविलोप-निमित्ताभावात्सर्वदाऽध्ययनप्रसङ्ग इति। तन्न। पूर्वतनेभ्य आधुनिकानां प्रज्ञामान्द्यस्यास्तिक्यवैधुर्यस्य कालवैषम्यगौतमशापादेश्च निमित्तत्वात्। 'उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयमि'ति वेदोच्छेदस्य प्रमाणसिद्धत्वाच्च। नित्यानुमेयवेदस्यानुभावकत्वासंभवेन तत्कल्पनावैयर्थ्याच्च। न हि क्रमविशेषाव-च्छिन्नपदात्मना अविज्ञातो वेदो बोधक इति संभवति।

यदत्रोक्तं, विशिष्याज्ञातस्यापि धूमस्य, अस्ति वह्निलिङ्गमिति शाब्दज्ञानमात्रेण, वह्न्यनुमापकत्ववत् विशिष्याज्ञातस्यापि वेदस्य बोधकत्वं संभवतीति। तन्न। वह्निलिङ्गत्वज्ञानस्यैवानुमितिसामग्रीत्वेन धूमत्वज्ञानस्य तत्सामग्रीत्वाभावात् तज्ज्ञानमात्रेण धूमस्य वह्न्यनुमापकत्वेऽपि तदर्थज्ञापकत्वज्ञानमात्रस्य शब्दसहकारित्वाभावादाकाङ्क्षादिसामग्रीरहितस्य वेदस्य तन्मात्रेण बोधकत्वासंभवात्।

यदत्रोक्तं, पदसमुदायात्मकवेदे आकाङ्क्षादेः सहकारित्वेऽपि अखण्डवेदे तदर्थज्ञापकत्वेन ज्ञानमेव सामग्रीति। तन्न। अप्रामाणिककल्पनापातात्। न ह्यखण्डवेदसद्भावे किञ्चित्प्रमाणम्। यत्तु विप्रतिपन्ना स्मृतिः इदानीं स्मृत्यर्थानुभवजनकवेदमूलेत्यनुमानम्। तदपि न। आकाङ्क्षादिविधुरस्य बोधकत्वासंभवेन बाधितविषयत्वादयुक्तम्। न च स्तुतिनिन्दार्थवादकल्पितविधिवाक्यस्येवास्यापि बोधकत्वं संभवतीति वाच्यम्। अर्थवादस्य विधिशेषत्वेन तद्रहितस्यार्थवादत्वमेव नेति शङ्कानिरासायैव विध्यनुमानं नत्वर्थबोधाय। कर्तव्यताबोधस्तु अर्थवादोत्थापितानुमानादित्यनुभवसिद्धत्वात्। अत एवाचारानुमितवेदस्यापि नित्यानुमेयत्वं परास्तम्।

यदपि मङ्गलाचरणं कर्तव्यं अलौकिकाविगीतशिष्टाचारविषयत्वादिति तत्कर्तव्यतामनुमाय सा च कर्तव्यता वेदबोधिता अलौकिकाविगीतशिष्टाचारकर्तव्यतात्वादित्येवानुमानप्रकारः । न तु मङ्गलाचरणं वेदबोधितकर्तव्यताकम् । तादृशशिष्टाचारत्वादित्यनुमानप्रकार इति । तन्न । यथानुमाने बाधकाभावात् । ननु चोक्तं तथा सति वेदबोधितकर्तव्यताकमितिविज्ञाने समानसंवित्संवेद्यतया वेदः कर्तव्यताबोधक इत्येव विज्ञानं स्यात् ततश्च कर्तव्यताबोधकतया विज्ञातात्कर्तव्यताधीरेव स्यान्न तु मङ्गलाचारकर्तव्यताधीः विशिष्टबोधकत्वेन वेदस्याज्ञातत्वादिति । सत्यमुक्तं दुरुक्तं तत् । वेदबोधितकर्तव्यताकमित्यस्य बहुव्रीहित्वात्समानसंवित्संविद्यतयाऽऽचारनिष्ठकर्तव्यताबोधको वेद इति धीसंभवात् । न हि आकाशः श्रोत्रग्राह्यगुण इत्यनुमितौ आकाशगुणग्राहकं श्रोत्रमितिबोधो न जायत इति संभवति । **इति मीमांसकोक्तवेदविशेषनित्यानुमेयत्वभङ्गः ॥**

**श्रीरस्तु** । विध्यर्थो विचार्यते । किं कृतिसाध्यत्वं विध्यर्थः उत कृत्युद्देश्यत्वम् । अथ कृतिसाध्यत्वे सति कृत्युद्देश्यत्वम् । अथ वक्त्रभिप्रायः । उतेष्टसाधनत्वम् । उत कृतिसाध्येष्टसाधनत्वम् । अथ इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वे सतीष्टसाधनत्वम् । अथ भविष्यत्क्रियात्वम् । उत क्रियाव्याप्यत्वम् । अथ कर्तुमशक्यत्वम् । नाद्यः । कलञ्जं भक्षयेदित्याद्युन्मत्तवाक्यश्राविणः धर्माधर्मविवेकज्ञस्याकार्यमेवेदं कार्यत्वेन ब्रवीतीति प्रतीत्यभावापातात् । तद्भक्षणस्य कृतिसाध्यत्वात् । नापि द्वितीयः । कलञ्जभक्षणस्यापि प्रयत्नोद्देश्यत्वसंभवेन धर्माधर्मविवेकज्ञस्याकार्यत्वबुद्ध्यभावापातात् । अत एव न तृतीयः । नापि चतुर्थः । अनन्वयात् । न हि यजेतेत्यत्र यागः वक्त्रभिप्राय इत्यन्वयः संभवति । येन वक्त्रभिप्रायो विध्यर्थः स्यात् । न पञ्चमः । स्वर्गकामपदसमभिव्याहारादेव इष्टसाधनतावगमसंभवेन लिङादीनामिष्टसाधनत्वे शक्तिकल्पनवैयर्थ्यात् ।

किं च । यल्लिङादिजन्यमिष्टसाधनताज्ञानं न तत् प्रवर्तकम् । यच्च ममेष्टसाधनमिति स्वर्गकामपदलभ्यविज्ञानं न तत् लिङादिजन्यं इति लिङादीनां नेष्टसाधनत्वे शक्तिः कल्प्या । किं चेष्टसाधनताया विध्यर्थत्वे, कर्तव्यमित्युक्ते कुतः इति प्रश्नः इष्टसाधनत्वादिति समाधानं च न स्यात् । विधिप्रत्ययेनैवेष्टसाधनताया अवगतत्वात् । किं च अहं कुर्यामित्यादाविष्टसाधनताऽप्रतीतेर्नेष्टसाधनता विध्यर्थः । न पलाण्डुं भक्षयेदिति निषेधानुपपत्तेश्च । पलाण्डुभक्षणादावपीष्टसाधनतासद्भावात् । अत एव न षष्ठः । कृतिसाध्यत्वविशेषणवैयर्थ्याच्च । चन्द्रमण्डलादौ कार्यताबुद्धिं निवारयितुं कृतिसाध्यत्वविशेषणमिति चेत् । न । कार्यताबुद्धिनिवारणकृत्याभावात् । प्रवृत्तिः स्यादिति चेत् न ।

कृत्यसाध्यताज्ञानप्रतिबद्धेष्टसाधनताज्ञानस्याप्रवर्तकत्वात् । नापि सप्तमः । इष्टोत्पत्तिनान्तरीयकेति विशेषणवैय्यर्थ्यात् । विषसंपृक्तान्नभोजनादौ कार्यताबुद्धिनिवारणार्थं विशेषणमिति चेत् न । तृप्तिरूपेष्ट-साधने तस्मिन् इष्टसाधनतारूपकार्यतानिवारणप्रयोजनाभावात् । बलवदनिष्टानुबन्धित्वानुसन्धानरूप-प्रतिबन्धकसद्भावेनाप्रवृत्त्युपपत्तेः । नाप्यष्टमः । देवदत्तः कटं करिष्यतीति भविष्यत्क्रियाज्ञानेऽपि प्रवृत्त्य-भावेन प्रवर्तकज्ञानाविषयस्य तस्य विधिबोध्यत्वायोगात् । अत एव न नवमः । उदासीनादौ क्रिया-व्याप्यत्वज्ञानसद्भावेपि प्रवृत्त्यदर्शनेन विध्यबोध्यत्वात् । नापि दशमः । यागादेरकर्तुमशक्यत्वाभावेन यजेतेत्यादीनां बाधितार्थकत्वप्रसङ्गात् । ततश्च विध्यर्थनिरूपणमशक्यमिति चेत् ।

अत्रोच्यते । इष्टसाधनत्वमेव विध्यर्थो नान्यः । वेदो हि संसारकान्तारे निपतितान् दुःखा-कुलान् जन्तूनवलोक्य तेषां दुःखप्रहाणाय सुखप्राप्तये च आप्तो बन्धुरिवेष्टानिष्टसाधनोपदेशेन क्वचित् प्रवर्तयति । कुतश्चित् निवर्तयति । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इति स्मृतेः । विध्यति-रिक्तानां शब्दानामन्यत्रावधारितशक्तित्वात् तच्छ्रवणादप्रवृत्तेश्च नेष्टसाधनताविबोधकत्वम् । विधि-प्रत्ययस्य तु झडिति प्रवर्तकत्वात् इष्टसाधनताविबोधकत्वं इत्यस्यैव युक्तत्वात् ।

ननु स्वर्गकामपदसमभिव्याहारादेवेष्टसाधनतावगमसंभवात् । इष्टसाधनत्वे लिङादीनां शक्तिकल्पनं व्यर्थमित्युक्तमिति चेत् । सत्यमुक्तं दुरुक्तं तत् । तथा हि । भवेल्लिङादीनां इष्टसाधनतायां शक्ति-कल्पनवैय्यर्थ्यम् । यदि स्वर्गकामपदसमभिव्याहारात् इष्टसाधनता नियमेन लभ्येत । न च तल्लभ्यते । नियोगतः गृहदाहेष्टौ गृहदाहस्याधिकारसंपादकत्ववत् जातपुत्रः कृष्णकेशोग्नीनादधीतेत्यादौ पुत्रजन्मनः कृष्णकेशानां चाधिकारसंपादकत्ववच्च स्वर्गकामनाया अपि अधिकारिविशेषणत्वमात्र-संभवात् । गुरुदारेच्छोः शिश्नच्छेदवत् स्वर्गकामस्य ज्योतिष्टोमः प्रायश्चित्तमित्यपि संभवाच्च । न हि सत्यामप्येतस्यां संभावनायां स्वर्गकामपदसमभिव्याहारमात्रेण यागस्य स्वर्गसाधनत्वं परिकल्प्य बहु-वित्तव्ययायाससाध्ये यागे प्रवर्तेतेति शक्यते वक्तुम् । ततश्च लिङादीनां इष्टसाधनत्वशक्तिरभ्युप-गन्तव्या । नन्वेवमपि इष्टसाधनताज्ञानमात्रस्य प्रवर्तकत्वात् । विधिप्रत्ययानां प्रवर्तकता न लभ्यत इति चेत् । मा लाभि । न हि वयं केवलस्य विधिप्रत्ययस्य प्रवर्तकत्वं ब्रूमः । येनोक्तदोषः स्यात् । किं नाम स्वर्गकामादिपदसमभिव्याहृतस्य । एवं च विधिप्रत्ययेनेष्टसाधनत्वे बोधिते किं तदिष्टमित्यपेक्षायां स्वर्गकामपदं इष्टसमर्पकं भवति । ततश्च स्वर्गसाधनं याग इत्येव बुद्ध्या स्वर्गकामः प्रवर्तते ।

ननु लिङादीनां इष्टसाधनत्वमर्थ इत्ययुक्तम् । गामानय परिवेषय इत्यादिप्रयोक्ता प्रयोज्येष्टसाधनतावोधेच्छयाऽप्रयुक्तत्वात् प्रयोज्येन च स्वेष्टसाधनतामवुद्ध्वैव प्रवर्तनादिति चेत् । न । तस्याज्ञालोट्त्वेन विधिलोट्त्वाभावात् । न हि वयं लिङादिमात्रस्येष्टसाधनतार्थकत्वं ब्रूमः । येनोक्तदोषः किं नाम विधिलिङादेः । अत एव कुर्विति राजाज्ञया प्रवर्तमानानां इष्टसाधनतावोधाभावात् नेष्टसाधनत्वं लोडर्थ इति परास्तम् । तस्य निमन्त्रणलोट्त्वेन विधिलोट्त्वाभावात् । 'बर्हिर्देवसदनं दामि' 'अग्नीरग्नीन्विहर' 'यस्योभयं हविरार्तिमार्च्छेदि'त्यादयो न विधायकाः । उत्तमपुरुष-आमन्त्रण-विभक्ति-यच्छब्दादिना विधिशक्तिप्रतिबन्धात् किंत्वभिधायकाः । मन्त्रगतानामाख्यातशब्दानां प्रधान-कर्मविधायकत्वं गुणकर्मविधायकत्वमिति द्वावेव प्रकारौ न भवतः । अपि तु अभिधायकत्वमिति तृतीयः प्रकारोस्ति । 'अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात्' इति जैमिन्युक्तेः । तस्मान्मन्त्र-गतो भावशब्द एवंजातीयको न विधायक इति शाबरभाष्योक्तेश्च । अस्ति तृतीयः प्रकार यदभिधायकत्वं नाम पश्य 'एषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् । विधिशक्तिप्रणाशः स्याच्च सर्वत्राभिधायका' इति भट्टोक्तेश्च ।

ननु इष्टसाधनताया विध्यर्थत्वपक्षे कर्तव्यमित्युक्त कुत इति प्रश्नः । इष्टसाधनत्वादिति समाधानं च न स्यादिति बाधकमुक्तमिति चेत् । न । अत्र तव्यप्रत्ययस्याविधायकत्वात् । अनियोज्यं प्रति इदं कर्तव्यमिति नियोगे कृते तदाज्ञाधारित्वाभावात् कुत इति पृच्छति । अयं तु इष्टसाधनत्वादि-त्यभिदधाति । कश्चित्तु तव्यस्य प्रार्थनार्थकत्वे कर्तव्यमित्युक्तः कुत इति पृच्छति । अन्ये इष्टसाधन-त्वादिति हेतुं वदन्ति । ननु इष्टसाधनताया लिङाद्यर्थत्वे याग इष्टसाधनमित्येव बोधः स्यात् । न तु यागेनेष्टं भावयेदिति । ततश्च स्वर्गकाम इत्यस्य ज्योतिष्टोमेनेत्यस्य चानन्वयप्रसङ्ग इति चेत् । न ब्रूमो वयं लिङादीनामिष्टसाधनत्व एव शक्तिरस्तीति । किं नाम भावनायामपि शक्ति-रस्तीति । तथा हि । लिङादिप्रत्ययानां द्वे शक्ती । एकेष्टसाधनत्वे । तदवच्छेदकं तु विधिप्रत्ययत्वं अननुगतलिङादिकं वा । अपरा तु करोत्यर्थरूपायां भावनायां तदवच्छेदकमाख्यातत्वं पचतीत्युक्ते पाकं करोतीति करोत्यर्थस्यानुभूयमानत्वात् । तत्र ते च द्वे शक्ती संभूय इष्टसाधनेन यागेनेष्टं भाव-येदिति बोधं जनयति । एवं च स्वर्गकामपदस्य कर्तृसमर्पकत्वेन यागनामधेयस्य ज्योतिष्टोमेनेत्यस्य यागान्तरव्यवच्छेदार्थयागविशेषणतयाऽन्वयो भवति । नन्वेवं सति कर्मनिर्णयविरोधः तत्र 'लिङाद्यर्थ-स्त्विष्टसाधनत्वमेवेति । लिङादेरिष्टसाधनत्वेनैव कृतार्थत्वे तदन्यार्थकल्पने कल्पनागौरवं चे'त्यन्यार्थ-कत्वनिषेधादिति चेत् । न । तस्य विधिप्रत्ययत्वावच्छिन्नया शक्त्या धात्वर्थे इष्टसाधनत्वमेव

प्रतिपाद्यते न तु तदतिरिक्तकार्यत्वमित्यर्थकत्वात् । न चैवमपि तत्त्वनिर्णयटीकया विरोधः । तत्र 'कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायतयाऽङ्गीकारादि'ति कृतिसाध्यत्वविशिष्टसाधनतायाः विध्यर्थत्वाङ्गीकारादिति चेत् । न । तत्र परमतानुसारेणोक्तत्वेन तद्विरोधस्यादूषणत्वात् । अत एव सुधायां 'ननु सत्यपि चन्द्रमण्डलादौ इष्टसाधनत्वेन कार्यताबुद्धिरिति चेत्' । इत्याशङ्क्य 'केयं कार्यताबुद्धिः इष्टसाधनताबुद्धिः तदतिरिक्ता वा । आद्ये कथं सा नास्ति । न द्वितीयः । अनिरूपणादि'ति इष्टसाधनत्वादन्यस्य कार्यतारूपत्वं निषिध्य चन्द्रमण्डलादावप्यस्त्येवकार्यताबुद्धिरिति समाहितम् । तथा व्यर्थं विशेषणमिति चोक्तम् । अत एव कर्मनिर्णयटीकायां कृतिसाध्यत्वैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेरित्युक्तम् । अन्यथा कृतिसाध्यत्वे सतीष्टसाधनताज्ञानादित्यवक्ष्यत् ।

ननु इष्टसाधनत्वस्य विध्यर्थत्वे न कलञ्जं भक्षयेदिति निषेधानुपपत्तिः । कलञ्जभक्षणस्येष्टसाधनत्वात् । एवमपि निषेधे वाक्यस्याप्रामाण्यप्रसङ्गो दुर्वार इति चेत् । न ब्रूमो वयं विध्यर्थो निषिध्यत इति । किं नाम आख्यातवाच्यकरोत्यर्थरूपभावना निषिध्यत इति । तथा चेष्टसाधनमपि कलञ्जभक्षणं न भावयेदिति वाक्यार्थः सम्पद्यते । न कलञ्जं भक्षयेदिति वाक्यं श्रुतवतः प्राणभृन्मात्रस्य भक्षणं न कार्यमित्यर्थप्रतीतेः । राजादिप्रयुक्तस्य कुर्वित्याज्ञालोटः इष्टसाधनताज्ञानं विना प्रवर्तकत्ववत् नञन्वितस्य भक्षयेदित्यादिलिङः अनिष्टसाधनताज्ञानं विनैव निवर्तकत्वम् । क्वचित्तु आज्ञामात्रेण निवर्तनसामर्थ्यसद्भावेऽपि विषयरागौत्कट्येन सामर्थ्यप्रतिबन्धे निन्दावाक्यबललब्धनरकाद्यनिष्टसाधनत्वविज्ञानसाहित्येन निषेधकवाक्यानि निवर्तयन्ति । तद्यथा. राजा मा कुर्विति निषेधं नियुज्यापि रागौत्कट्यान्मौढ्याद्वा अनिवर्तमानं विपक्षे दण्डभयं प्रदर्श्य निवर्तयति । इममेवाभिप्रायं मनसि निधाय विष्णुतत्त्वनिर्णये 'ज्ञात्वैव हीष्टसाधनतां प्रवर्तते । निवर्तते च विपर्ययेणे'त्युक्तम् । न तु प्रवृत्तिमात्रे इष्टसाधनताज्ञानं कारणं निवृत्तिमात्रे अनिष्टसाधनताज्ञानं कारणमित्यभिप्रेत्य । इष्टसाधनताज्ञानाभावेऽपि प्रत्युतानिष्टसाधनताज्ञानसद्भावेऽपि निवृत्तेर्बहुलमुपलम्भात् ।

ननु विध्यश्रवणस्थले अर्थवादवाक्येनैवेष्टसाधनताज्ञानसंभवात् विधिवाक्यकल्पनं व्यर्थं तथा विधिवाक्येनैवेष्टसाधनत्वस्य ज्ञातत्वात् श्रूयमाणमप्यर्थवादवाक्यं अनुपादेयं प्रसज्यत इति चेत् । सत्यम् । अर्थवादवाक्यादेवेष्टसाधनताज्ञानं भवति । भवति च तावन्मात्रेण केषाञ्चित्प्रवृत्तिः । अन्ये पुनः नेदं कर्तव्यं अविहितत्वात् इत्यनुमानेन प्रवृत्तिप्रतिबन्धप्रसक्तौ विधिवाक्यमनुमाय हेतोराभासत्वं विज्ञाय प्रवर्तन्ते । यदपि चोक्तं विधिवाक्येनैवेष्टसाधनताबोधस्य जातत्वात् श्रूयमाणमप्यर्थवादवाक्य-

मनादरणीयं स्यादिति । तदपि न । बहुवित्तव्ययायाससाध्ये अप्रवर्तमानस्य पुरुषस्य प्रवर्तनाय बहुधा इष्टसाधनत्वस्य व्युत्पादनीयत्वेनार्थवादवाक्यस्यादरणीयत्वात् । अर्थवादवाक्यादेवेष्टसाधनतावोध इति वदता त्वयाऽपि एकेनैवार्थवादवाक्येनैव कृतत्वात् वाक्यान्तरं व्यर्थं इति शङ्काया एवमेव परिहर्तव्यत्वात् ।

ननु एवमपि नेष्टसाधनत्वं विध्यर्थः । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ वाक्ये ज्योतिष्टोमेनेत्यादितृतीयाऽनुपपत्तिप्रसङ्गात् । विभक्तिनिरूपणोपक्रमे 'अनभिहित' इत्यनभिहिताधिकारं कृत्वा सूत्रकृता तिङ्कृत्तद्धितसमासैरनभिहिते कर्त्रादौ तृतीयादिर्भवतीति वदता तिङाद्यविहिते तृतीयनिषेधादिति चेत् । मैवम् । इहापि यजेतेति तिङः प्राधान्येन कर्तृवाचित्वाङ्गीकारात् । इष्टसाधनत्वं तु लिङ्त्वच्छिन्नया शक्त्या अप्राधान्येन बोध्यते । स्वर्गकामो इष्टसाधनेन यागेनेष्टं भावयेदिति शाब्दबोधे तिङ्शक्त्या कर्तुरेव प्राधान्येन भावात् । सूत्रकारोऽपि प्राधान्येन तिङाद्यभिहिते कर्मादौ द्वितीयादि नेत्येव निषेधं करोति ।

न तु तिङादिजन्यशाब्दबोधविषयमात्रे कर्मादौ द्वितीयादिनिषेधं करोति ।

वस्तुतस्तु लिङ्शक्त्या इष्टसाधनत्वावगमेऽपि तिङ्शक्त्यानवगमेन तिङाद्यनभिहितत्वात् अनभिहिताधिकारविहिता तृतीयानुपपन्ना । अत एव स्वर्गकाम इत्यत्र प्रथमापि नानुपपन्ना । कर्तृत्वस्य तिङाभिहितत्वेन कर्तरि तृतीयाया अयोगेन प्रथमाया एव भाव्यत्वात् । न चैवमपीष्टसाधनत्वं न विध्यर्थः । अहरहः संध्यामुपासीतेत्यादिनित्यविधेः इष्टसाधनत्वाबोधकत्वात् । न हि वेदोऽप्रमाणम् । येनेष्टासाधनमपि सन्ध्यावन्दनादिकमिष्टसाधनतया बोधयेत् । न च, नास्त्येव निष्फलं कर्म, 'सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमि'त्यर्थवादात् । 'दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्' इत्यादिवाक्याच्च नित्यानामपि फलावगमात् । यत्र तु सर्वथा फलं न श्रूयते तत्रापि विश्वजिन्न्यायेन फलसिद्धेरिति वाच्यम् । सर्वकर्मणां कामनौपाधिकार्यत्वेन नित्यत्वाभावप्रसङ्गात् इति चेत् । न । ज्योतिष्टोमादीनां संध्यावन्दनादीनां च सफलत्वाविशेषेऽपि येषामकरणे प्रत्यवायः श्रूयते तानि नित्यानि येषां त्वकरणे न प्रत्यवायः तानि काम्यानीति व्यवस्थासंभवात् ।

ननु इष्टसाधनताज्ञानस्यैव प्रवर्तकत्वे प्राणभृन्मात्रस्य चन्द्रमण्डलाहरणादौ, आस्तिकस्य अभक्ष्यभक्षणादौ प्रवृत्तिप्रसङ्गो, हेतुसद्भावादिति चेत् । न । कृत्यसाध्यताज्ञानस्य निषिद्धत्वज्ञानस्य प्रवृत्ति-

प्रतिबन्धकत्वात्। न हि प्रतिबद्धं कार्यं न जनयतीति कारणमकारणं भवति। आस्तिककामुकस्य तु रागौत्कट्यलक्षणोत्तेजकवशात् प्रवृत्तिः। तस्माद् यजेतेति स्वर्गभावनायां नियुक्तस्य यागे प्रवृत्त्यन्यथानुपपत्त्या लिङादीनां विधिप्रत्ययत्वाच्छिन्नशक्त्या यागादाविष्टसाधनताबोधकत्वं ज्योतिष्टोमेन-स्वर्गकामेतिपदाभ्यां अन्वयानुपपत्त्या आख्यातत्वावच्छिन्नशक्त्या तु करोत्यर्थरूपभावनावाचित्वमिति सिद्धम् ॥ इति स्वमते विध्यर्थनिरूपणम् ॥

**प्राभाकरा मन्यन्ते**। अभिधासंकल्पापूर्वभावनाज्ञानं न प्रवर्तकम्। तस्मिन् सत्यप्रवृत्तेः। असत्यपि तस्मिन् प्रवृत्तेश्च। किं तु कार्यत्वज्ञानं प्रवर्तकम्। तथा हि। ज्ञानस्य कृतौ जनयितव्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति। तत्सत्त्वे कृतिविलम्बो हेत्वन्तरविलम्बात्। चिकीर्षा च कृतिसाध्यत्वप्रकारिका कृति-साध्यक्रियाविशेषेच्छा पाकं कृत्या साधयामीति तदनुभवात्। सा च कृतिसाध्यताज्ञानसाध्या इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात्। अत एव कृतिसाध्यपाके प्रवर्तते। न त्विष्टसाधनताज्ञानसाध्या स्वकृत्यसाध्ये चिकीर्षापत्तेः इति। **तन्न**। पाकं कृत्या साधयामीतीच्छाया इष्टसाधनज्ञानसाध्यत्वेन नेष्टसाधनताज्ञानसाध्येति तन्निराकरणानुपपत्तेः। न हि पाकस्येष्टसाधनत्वाज्ञाने सुखदुःखाभावाभ्यां भिन्ने पाके इच्छोपपद्यते। प्राणभृन्मात्रस्य सुखे दुःखाभावे स्वत एवेच्छा जायते। तदन्यत्र तु तत्साधनत्वविज्ञान एव भवति नान्यथा। अत एव व्याध्यादिना अतिपीडिताः उद्बन्धनगङ्गा-प्रवेशविषभक्षणादिकं दुःखनिवृत्तिकारणमिति मन्यमानाः उद्बन्धनादिकमपि कामयन्ते। तृप्तास्तु भोजन-जन्यसुखेच्छाविरहेण भोजनस्येष्टसाधनतामननुसन्दधानाः न भोजनमिच्छन्ति। किं चैवं वादिनो मते प्रवर्तकेन लिङादिप्रत्ययेन कार्यताज्ञानमेव जायत इत्यापतति। न च तदङ्गीकर्तुं शक्यम्। यजेतेत्यनेन यागः कृतिसाध्य इति बोधे जाते ज्योतिष्टोमेनेति तृतीयान्तस्य स्वर्गकाम इतिपदस्य चानन्वयापातात्। यदि विधिवाक्येन ज्योतिष्टोमनामकेन यागेन स्वर्गकामः स्वर्गं भावयेदिति बोधोऽभ्युपगम्यते। अङ्गीकृतं तर्हि लिङादीना यागस्येष्टसाधनताज्ञानं आख्यातेन स्वर्गविषयकृतिविज्ञानम्। इष्टसाधनताज्ञानादेव यागादौ प्रवृत्तिरिति, व्यर्थः कृतिसाध्यताज्ञानस्य प्रवर्तकताग्रहः। ननु, कथं तर्हि कृत्या साधयामीति कृतिसाध्यत्वप्रकारिकेच्छेति चेत् कृतिसाध्यताज्ञानादेवेति ब्रूमः। इयांस्तु विशेषः। इष्टसाधनताज्ञानस्यैव प्रवर्तकत्वात्तदेव विधिप्रत्ययजन्यम्। कृतिसाध्यताज्ञानं तु वह्निना साधयामीतीच्छातः तत्पूर्वं वह्निसाध्यत्वज्ञानवत् मानान्तरजन्यम्। इष्टसाधनताज्ञानं तु इच्छाद्वारैव। कृतिसाधनं तु चिकीर्षाद्वारैवेति न निर्बन्धः। अत एव इष्टसाधनताज्ञानसद्भावे कृत्यसाध्यताज्ञानरूपप्रतिबन्धाभावे प्रवर्तते। किं च कृतिसाध्यताज्ञानस्यैव चिकीर्षाया हेतुत्वे केरलदेशवर्तिनः पुरुषस्य काश्मीरदेशस्थक्षुद्रतृणानयनादावपि

चिकीर्षाप्रसङ्गो दुर्वार इति प्रवृत्तिः स्याद् । ननु स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं प्रवर्तकम् । स्वः प्रवर्तनीयः पुरुषः, तद्विशेषणकाम्ये कामना. तथा च तत्र कामनाविषयसाधनत्वलिङ्गककार्यताज्ञानं च पर्यवस्यति । तथा च काश्मीरदेशस्थतृणानयनादौ कामनाविरहेण कामनाविषयसाधनत्वलिङ्गककार्यताज्ञानाभावात् न तत्र प्रवृत्तिरिति चेत् । एवं तर्हि प्रवर्तककार्यताज्ञानस्यापि विधिजन्यत्वाभावेन विधेः प्रवर्तकत्वं न स्यात् । इति **प्राभाकरोक्तकार्यताज्ञानस्य प्रवर्तकत्वभङ्गः** ॥

**मणिकारस्तु मन्यते** । कृतिसाध्यत्वे सतीष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वे सतीष्टसाधनत्वं विध्यर्थः । तथा हि । स्वर्गार्थी यागे प्रवर्तत इत्यविवादम् । न चान्येच्छाऽन्यत्र प्रवर्तिका अतिप्रसङ्गात् इति यागे चिकीर्षा वक्तव्या । न च सेष्टसाधनताज्ञानाभावे भोगचिकीर्षावत् संभवति । तस्य सुखसाक्षात्काररूपभोगवत् स्वतः सुन्दरत्वाभावात् । इष्टसाधनत्वावगमे तु उपपन्ना यागे चिकीर्षेति इष्टसाधनत्वं लिङाद्यर्थ इत्यभ्युपगन्तव्यम् । न च तन्मात्रं विध्यर्थः । इष्टसाधनताज्ञानमात्रस्याप्रवर्तकत्वात् । अन्यथा तक्षकचूडामण्याहरणादौ प्रवृत्त्यापातः । अपि चोपायचिकीर्षा यागं कृत्या साधयामीत्येवमादिप्रकारा । सा च समानप्रकारकज्ञानसाध्येति विधिजन्ये चिकीर्षाजनकेष्टसाधनताज्ञाने कृतिसाध्यत्वं प्रकार इत्यभ्युपगन्तव्यमिति कृतिसाध्यत्वमपि विध्यर्थः । न च तावन्मात्रं विध्यर्थः । किं तु कृतिसाध्यत्वे सति इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वेसतीष्टसाधनत्वम् । कृतिसाध्येष्टसाधनताज्ञानमात्रस्याप्रवर्तकत्वात् । अन्यथा मधुविषसंपृक्तान्नभोजनादौ प्रवृत्त्यापातो दुर्वारः । तत्रापि कृतिसाध्येष्टसाधनताज्ञानसद्भावात् । नन्वेवं तर्हि कृतिसाध्यत्वे सति दुःखाजनकेष्टसाधनत्वमेव विध्यर्थोऽस्तु किं इष्टोत्पत्तिनान्तरीयकदुःखाधिकेति दुःखविशेषणेनेति चेत् । न । विध्यप्रामाण्यप्रसङ्गात् । यागादेः इष्टोत्पत्तिनान्तरीयकदुःखजनकत्वेन दुःखाजनकत्वाभावात् । न चैवं सति न कलञ्जं भक्षयेदिति विध्यर्थनिषेधानुपपत्तिः । तद्भक्षणस्य तृप्तिरूपेष्टसाधनत्वात् । न चासुराविद्येतिवत् पर्युदासलक्षणया विरोध्यनिष्टसाधनत्वबोधनम् । नञोऽसमस्तत्वात् । क्रियासङ्गतत्वेन प्रतिषेधवाचकत्वव्युत्पत्तेश्चेति चेत् । न । विशेष्यवति विशिष्टनिषेधस्य सविशेषणे हीति न्यायेन विशेषणनिषेधपर्यवसायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखसाधनमिति न कलञ्जं भक्षयेदित्यनेन बोधनात् ।

ननु तर्हि श्येनेनाभिचरन्यजेतेत्यत्र कथं विधिप्रवृत्तिः । हिंसाया बलवदनिष्टसाधनत्वादिति चेत् । न । तत्र कृतिसाध्यत्वे सतीष्टसाधनत्वमेव योग्यतयाऽन्वेति । न तु बलवदनिष्टाननुबन्धित्वमपि ।

अयोग्यत्वात् । निन्दार्थवादेन प्रायश्चित्तोपदेशेन हिंसाया बलवदनिष्टसाधनत्वावगमात् । अत एव विहितेऽपि श्येने त्रिगानान्न तान्त्रिकप्रवृत्तिः ।

अथैवं सुखादिसाधनत्वज्ञानं प्रवर्तकं तन्न शक्यम् । यच्च शक्यं इष्टसाधनत्वं तज्ज्ञानं न प्रवर्तकं इति विधेः प्रवर्तकता न स्यात् इति चेत् साक्षादेवमेव । किं तु इष्टसाधनं याग इति लिङा बोधिते इष्टाकाङ्क्षायां काम्यत्वेन श्रुतः स्वर्ग इति स एवेष्टत्वेनाधिगम्यते । तथा च स्वर्गकामसमिव्याहारात् स्वर्गसाधनं याग इति ज्ञानं प्रवर्तकमुपपद्यते । एवं च विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्तकमिति । इष्टसाधनताविधिपक्षे 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्याद्यर्थवादे विधिबोध्येष्टसाधनत्वस्यार्थवादादेवावगमात् कुतो विधिकल्पनमिति चेत् न । अविनाभावात् । तथाभूतसाधनत्वस्य विधेयत्वव्याप्यत्वात् । व्यापकानुपलम्भबाधोद्धाराय वा ।

यत्त्विष्टसाधनत्वाभिधाने करणे लिङोऽनुशासनात् । दर्शपूर्णमासाभ्यामिति अनभिहिताधिकारविहिता तृतीया न स्यादिति । तन्न । उपायतामात्राभिधानेऽपि तद्विशेषकरणत्वानभिधानात् । वस्तुतस्तु अभिहितान्वयलभ्यं यागेष्टसाधनत्वं, इष्टसाधनत्वमात्रस्य लिङर्थत्वादिति ॥ तन्न ॥ विधिजन्यं ज्ञानं न साक्षात्प्रवर्तकम् । अपि तु विधिजन्यज्ञानजन्यज्ञानं प्रवर्तकमिति वदता लाघवात् इष्टसाधनत्वमात्रस्य विध्यर्थत्वसंभवे विशिष्टेष्टसाधनत्वस्य विध्यर्थत्वकल्पनाऽयोगात् । चिकीर्षायाः समानप्रकारकज्ञानसाध्यत्वनियमात् कृतिसाध्यत्वमपि विध्यर्थ इत्युक्तमिति चेत् । न । प्रवर्तकज्ञानस्य चिकीर्षाजनकस्य तद्विषयकत्वावश्यकत्वेऽपि विधिजन्यज्ञानस्य तद्विषयकत्वानावश्यकत्वेन विधेस्तत्र शक्तिकल्पनावैयर्थ्यात् । अप्रामाण्यप्रसङ्गाच्च । न हि स्वर्गकाममात्रस्य यागः कृतिसाध्यः । यागाधिकृतानामपि त्रैवर्णिकानां यागकृतावसमर्थानां बहुलमुपलम्भात् । येन स्वर्गकामानां कृतिसाध्यतया यागं बोधयन् वेदः प्रमाणं स्यात् । यजेतेतिश्रवणानन्तरमपि यागो मत्कृतिसाध्यो न वेति संशयदर्शनाच्च न कृतिसाध्यत्वं विध्यर्थः । अनन्वयश्च ज्योतिष्टोमेन स्वर्गकाम इत्यनयोर्यजेतेत्यनेन भवति । स्वर्गकामस्य ज्योतिष्टोम इति षष्ठीप्रथमान्तयोरपेक्षितत्वात् ।

यदपि न तन्मात्रं विध्यर्थः । इष्टसाधनताज्ञानमात्रस्याप्रवर्तकत्वादिति । तदपि न । विधिजन्यज्ञानस्याप्रवर्तकत्वेन विधेस्तन्मात्रार्थकत्वोपपत्तेः । यदपि मधुविषसंपृक्तान्ने प्रवृत्तिवारणाय इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वे सतीति विध्यर्थविशेषणं तदपि न । विधिजन्यज्ञानस्याप्रवर्तकत्वात् । यदपि विशेष्यवति विशिष्टनिषेधस्य सविशेषणे हीतिन्यायेन विशेषणनिषेधपर्यवसायितया

कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखसाधनमिति न कलञ्जं भक्षयेदित्यनेन बोधनादिति । तदपि न । विशेष्यवति विशिष्टनिषेधस्य विशिष्टाभावपरत्वसंभवे विशेषणनिषेधपर्यवसानाभिधानायोगात् ।

यदत्रोक्तं रुचिदत्तेन । एतच्चातिरिक्तविशिष्टाभावानभ्युपगमेन बोध्यम् । वस्तुतो विशिष्टनिषेधसिद्धौ ततोऽनुमानाद्विशेषणाभावसिद्धिरिति बोध्यमिति । तन्न । अतिरिक्तविशिष्टाभावपरतयैव वाक्यार्थनिरूपणसंभवे प्रामाणिकविशिष्टाभावानभ्युपगमेन वाक्यार्थनिरूपणायोगात् । न हि मणिकारो व्यामोहनाय प्रवृत्तः येनातिरिक्तविशिष्टाभावानभ्युपगमेनेदं बोध्यमिति व्याख्यानं उपयुक्तं स्यात् । किंच सविशेषणे विधिनिषेधाविति कोऽर्थः । किं विशेषणोपलक्षिते विशेष्ये यौ विधिनिषेधौ तौ विशेषणमुपसंक्रामत इत्यर्थः । आहोस्वित् विशिष्टे यौ विधिनिषेधौ तौ विशेषणमुपसंक्रामत इति । आद्ये नात्र तन्न्यायोदाहरणं युक्तम् । न कलञ्जं भक्षयेदित्यत्र विशिष्टस्यैव निषिद्धत्वेन विशेष्यस्यानिषिद्धत्वात् । न द्वितीयः । सति विशेष्ये बाध इति विशेष्यबाधाभिधानवैयर्थ्यात् । विशिष्टे प्राप्तयोर्विधिनिषेधयोः अन्यत्र पर्यवसानाय विशिष्ट एव बाधस्य वक्तव्यत्वात् । विशिष्टनिषेधबाधस्थले विशेषणनिषेधबाधस्यावर्जनीयत्वेनोदाहरणाभावप्रसङ्गाच्च ।

यदपि श्येनेनाभिचरन् यजेतेत्यादिविधिप्रवृत्त्यनुपपत्तिमाशङ्क्य योग्यतया कृतिसाध्यत्वे सति इष्टसाधनत्वमात्रमन्वेतीति समाधानम् । तदपि न । श्येनेनाभिचरन् यजेतेत्यादिवेदवाक्यानां दर्शनभाषया प्रवृत्तत्वेन ज्योतिष्टोमादिविधिवदेवार्थाभिधायित्वे बाधकाभावात् । न चाप्रामाण्यप्रसङ्गः । श्येनयागस्य वेदतात्पर्याविषयत्वात् । अन्यथा अयमेवमाहेत्यनुवदन्नपि बाधितार्थवक्तृत्वेनानवधेयवचनः स्यात् । इदमेव श्येनाग्नीषोमयोर्वैषम्यं यत् अग्नीषोमीयस्य वेदतात्पर्यविषयत्वम् । श्येनस्य तदभावः । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा वेदे सत्कर्माभिधायकत्वाश्वासवैधुर्येण ज्योतिष्टोमवाक्यादपि प्रवृत्तिर्न स्यात् । न हि प्राणिनां सुखहेतूपदेशाय प्रवृत्तस्य परमेश्वरस्य नरकाद्यनर्थहेतुश्येनाद्युपदेशे कारणमस्ति येन श्येनाद्यपि वेदप्रणेतृपरमेश्वरतात्पर्यविषय इति कल्पयसि । न कलञ्जं भक्षयेदिति निषेधवैयर्थ्यं च । न हि संभवति प्राणिनां दुःखनिवृत्तये प्रवृत्तः परमाप्तः परमेश्वरः महादुःखसाधनमुपदिशति अल्पदुःखसाधनं कलञ्जभक्षणादिकं निषेधति । न च सज्जनहितकामेन श्येनानुष्ठाने प्रत्यवायाभावात् । असद्वधाय श्येनो वेदविहित इति वाच्यम् । प्रायश्चित्तोपदेशवैयर्थ्यप्रसङ्गात् । न च श्येनेन ब्राह्मणहनने कृते प्रायश्चित्तमनेनोपदिश्यत इति वाच्यम् । ब्राह्मणवधप्रायश्चित्तोपदेशेनैव

-गतत्वात् । यदुक्तं विहितेऽपि श्येने विगानान्न तान्त्रिकप्रवृत्तिरिति । तदपि न । विहितत्वे विगानायोगात् । न हि विहितेऽपि ज्योतिष्टोमादौ विगानमस्ति । कथं तर्हि श्येनादौ विगानमिति चेत् । इत्थम् । दर्शनभाषया श्येनेनेति वाक्यं प्रवृत्तमिति जानन्तः नानुष्ठेयः श्येन इति वदन्ति । अन्ये तु विधिरेवेति मन्यमानाः अनुष्ठेयः श्येन इति वदन्ति इति ।

यदपीष्टसाधनताविधिपक्षे तरति मृत्युं तरति ब्रह्महत्यामित्याद्यर्थवादेनेष्टसाधनत्वस्य बोधितत्वात् व्यर्थं विधिकल्पनमित्याशङ्क्य अविनाभावात् तथाभूतसाधनत्वस्य विधेयत्वव्याप्यत्वात् व्यापकानुपलम्भबाधोद्धाराय वेति समाधानमुक्तं तदपि न । अनुमानवैयर्थ्यात् । न हि व्यापकमित्येवानुमीयते । किं तर्हि प्रयोजनसिद्धये । न चात्र प्रयोजनमस्ति ।

यत्तु द्वितीयं समाधानं तत्र वक्तव्यम् । इष्टसाधनत्वमात्रस्य विधेयत्वं व्यापकं ततश्च व्यापकानुपलब्ध्या इष्टसाधनत्वाभावशङ्कापरिहाराय विधिकल्पनमित्युच्यते उतार्थवादबोध्येष्टसाधनत्वस्य विधेयत्वं व्यापकम् । ततश्च तदनुपलम्भेनेष्टसाधनत्वाभावशङ्कापरिहाराय विधिकल्पनमित्युच्यते । नाद्यः । भोजनादौ व्यभिचारेण व्यापकत्वाभावात् । नापि द्वितीयः । व्यापकानुपलम्भात् । अर्थवादबोध्यमपीष्टसाधनत्वं नास्तीत्याशङ्कायां तेनैवं विध्यनुमानायोगात् । यत्तु इष्टसाधनत्वाभिधाने करणे लिङोनुऽशासनात् । दर्शपूर्णमासाभ्यामिति अनभिहिताधिकारविहिता तृतीया न स्यादित्याशङ्क्य उपायतामात्राभिधानेऽपि तद्विशेषकरणत्वानभिधानात् । वस्तुतस्तु अभिहितान्वयलभ्यं यागेष्टसाधनत्वम् । इष्टसाधनत्वमात्रस्य लिङर्थत्वादिति समाधानमुक्तम् । तन्न । प्रवृत्त्यर्थं इष्टसाधनत्वस्यैव बोधनीयत्वेन उपायतामात्रस्याबोधनीयत्वात् । न हि कश्चित् प्रधानसाधनमजानन् बहुवित्तव्ययायाससाध्ये उपायमात्रे प्रवर्तन्ते । येन प्राधान्यमबोधयित्वा उपायमात्रबोधनमुपयुक्तं स्यात् ।

यदत्रोक्तं रुचिदत्तेन वस्तुतः संख्यानमिधानं प्रयोजकम् । अन्यथा कर्तुरवाच्यत्वेनानभिहितत्वाद्देवदत्तः पचतीत्यत्र प्रथमा न स्यात् । एवं च लिङा करणसंख्यानमिधानात्तृतीया स्यादेवेति तत्वमिति । तदपि न । अनभिहिते कर्मादौ द्वितीयादयो भवन्तीति वदतः सूत्रकारस्यानभिहितत्वं कर्मादिविशेषणमित्येवाभिमतत्वात् । पचतीत्यत्र कर्तुरनभिधाने कर्त्रर्थकसार्वधातुकप्रयुक्तशप्प्रत्ययाभावप्रसङ्गात् ॥ छ ॥ **इति मण्युक्तविध्यर्थकभङ्गः ॥**

**उदयनस्तु मन्यते** । प्रवर्तकमिष्टसाधनताज्ञानमेव । लिङर्थस्तु आप्ताभिप्राय एव । नेष्टसाधनत्वम् । तस्यापि विध्यर्थत्वपक्षे बलवदनिष्टाननुबन्धित्वेऽपि शक्तेर्वक्तव्यत्वेन गौरवात् । आप्ताभिप्रायस्य विध्यर्थत्वपक्षे तु बलवदनिष्टाननुबन्धित्वबोधस्यानुमानिकत्वात् । तत्र शक्तेरवक्तव्यत्वेन लाघवात् । पाकं कुर्या इत्यत्र संबोध्यकर्तृकक्रियेच्छायाः पाकं कुर्यामित्यत्र स्वकर्तृकक्रियेच्छाया अभिधायकत्वदर्शनेनाज्ञाप्रार्थनादिलिङश्च वक्त्रादीच्छाभिधायकत्वदर्शनेन च लिङ्मात्रस्येच्छावाचकत्वकल्पनाच्च । एवं च स्वर्गकामो यजेतेत्यस्य स्वर्गकामस्य कृतिसाध्यतया याग आप्तेष्ट इत्यर्थः । स्वर्गकामस्य यागप्रयत्न आप्तेष्ट इति वाऽर्थः । ततो यो व्यापारो यस्य कृतिसाध्यतया, यद्व्यापारविषयः प्रयत्नो वा यस्याप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमिति व्याप्तिग्रहात् यागस्येष्टसाधनत्वमनुमिनोति । तथा हि । यागो मदिष्टसाधनं मत्प्रयत्नविषयतया आप्तेनेष्यमाणत्वात् यथा मत्पित्रा मत्प्रयत्नविषयतयेष्यमाणं मद्भोजनं मदिष्टसाधनम् । तथा चेदं तस्मात्तथा । एवं न कलञ्जं भक्षयेदित्यस्य कलञ्जभक्षणप्रयत्नो नाप्तेच्छाविषय इत्यर्थः । ततः- कलञ्जभक्षणम् मम बलवदनिष्टसाधनं मदिष्टसाधनत्वे सत्याप्तेन मत्प्रयत्नविषयतयाऽनिष्यमाणत्वात् । यथा विषसंपृक्तान्नभोजनं मम बलवदनिष्टसाधनम् । तथा चेदं तस्मात्तथेति अनुमिनोति । स चाप्तो वेदवक्ता भगवानीश्वर एव । यस्तु वेदे पौरुषेयत्वं नावैति । तं प्रति विधिरेव तावद्दर्भ इव श्रुतिकुमार्याः पुंयोगे प्रमाणमिति ।

तन्न । प्रवर्तकज्ञानविषयस्यैव प्रवृत्त्यर्थं बोधनीयत्वेन तदविषयस्य वक्त्रभिप्रायस्याबोधनीयत्वात् । न हि बोधनीयं गौरवमापततीत्यबोधयित्वा अन्यदेव बोधयन् प्राज्ञो भवति । यदपि इष्टसाधनताया विध्यर्थत्वे बलवदनिष्टाननुबन्धित्वेऽपि शक्तिः कल्पनीयेति । तदपि न । इष्टसाधनताज्ञानस्यैव प्रवर्तकत्वात् । तत्रैव शक्तेः कल्पनीयत्वेनान्यत्राकल्प्यत्वात् । न च नेष्टसाधनत्वज्ञानमात्रं प्रवर्तकमपि तु बलवदनिष्टाननुबन्धीष्टसाधनत्वविज्ञानम् । एवं च विशिष्टे शक्तिरवर्जनीयेति वाच्यम् । अगम्यागमनादौ नरकाद्यनिष्टानुबन्धित्वविज्ञानेऽपि आस्तिककामुकस्य इष्टसाधनताज्ञानादेव प्रवृत्तिदर्शनात् । न च विषसम्पृक्तान्नभोजनेऽपि प्रवृत्त्यापत्तिः । विषसम्पृक्तत्वं विजानतः तदन्नजन्यतृप्ताविच्छाऽभावेन अन्ने इष्टसाधनताज्ञानाभावात् ।

यदपि कुर्याः कुर्यामित्यादौ इच्छावाचित्वस्य क्लृप्तत्वात् विधिलिङोऽपि इच्छावाचित्वमिति । तदपि न । कुर्यामित्यादिलिङ्वर्णानन्तरमिच्छाप्रतीत्यभावेन तत्रापि इच्छावाचित्वाभावात् । यदपि

स्वर्गकामो यजेतेत्यस्य स्वर्गकामस्य कृतिसाध्यतया यागः यागप्रयत्नो वा आप्तेष्ट इति अर्थ इति। तदपि न। ज्योतिष्टोमेनेति तृतीयान्तस्य स्वर्गकाम इति प्रथमान्तस्य चानन्वयापातात्। स्वर्गकाममात्रकृतिसाध्यतया यागस्येश्वरानिष्यमाणत्वेन तस्याप्रामाण्यप्रसङ्गाच्च। अस्त्येव सर्वकृतिसाध्यतयेष्यमाणत्वं इति चेत् न। स्वर्गकामानां त्रैवर्णिकानां उक्तविशेषणविशिष्टानां सर्वेषां यागसिद्ध्यभावे ईश्वरेच्छायाः मोघत्वप्रसङ्गेन, यागसिद्धिप्रसङ्गात्। यदपि न कलञ्जं भक्षयेदिति वाक्यस्य मम कलञ्जभक्षणप्रयत्नो नाप्तेच्छाविषय इत्यर्थकथनम्। तदपि न। कलञ्जभक्षणस्य शशविषाणवद्सत्त्वापातात्। ईश्वरानिष्टस्य भवनायोगात्। अन्यथेश्वरस्यापि दुःखादिप्रसङ्गो दुर्वारः। यो भक्षयति तद्भक्षणमीश्वरेच्छाविषय एवेति चेत्। तर्हि तद्भक्षणस्यानिषिद्धत्वेन तस्य प्रत्यवायाभावापातात्। निषिद्धभक्षणाभक्षणयोः स्वेच्छाधीनत्वापाताच्च।

यदपि, यागो मदिष्टसाधनं मत्प्रयत्नविषयतयाऽऽप्तेनेष्यमाणत्वात् इत्यनुमानम्। तदपि न। तृप्तिकामकृतविषभक्षणे व्यभिचारात्। तस्यापि तृप्तिकामकृतिसाध्यतया आप्तेन परमेश्वरेणेष्यमाणत्वात्। यदत्रोक्तं तृप्तिकामनया विषभक्षणप्रवृत्तस्य विषभक्षणं कृतिसाध्यतया नेश्वरेणेष्यते। ततो विषभक्षणस्येश्वरेच्छाविषयत्वेऽपि न तेन व्यभिचार इति। तन्न। कृतिसाध्यतयेश्वरेणानिष्यमाणस्य कृतिसाध्यत्वाभावप्रसङ्गात्। कृत्या विनापि प्राप्तिप्रसङ्गाच्च। कार्यैकोन्नेयस्य कृतिसाध्यतयेश्वरेणेष्यमाणत्वस्य पूर्वं निश्चेतुमशक्यत्वेन हेतोः सन्दिग्धासिद्धेश्च।

यदपि कलञ्जभक्षणं ममानिष्टसाधनं मदिष्टसाधनत्वे सत्याप्तेन मत्प्रयत्नविषयतयाऽनिष्यमाणत्वादिति निषिद्धात् निवृत्तयेऽनिष्टसाधनतानुमानप्रकारप्रदर्शनम्। तदपि न। लोकावगतेष्टसाधने कलञ्जभक्षणादावनिष्टसाधनतानुमानसंभवेऽपि 'नेक्षेतोद्यन्तमादित्यं नास्तं यंतं कदाचने'त्यादिना निषिद्धे विशेषणासिद्धत्वेनानिष्टसाधनतानुमानासंभवात्। न हीष्टसाधनानामेव निषेध इति नियमोऽस्ति। अनिष्टसाधनानां बौद्धागमविहितानां सप्तमलधारणादीनां निषेधदर्शनादिति ॥ छ ॥ **इति उदयनोक्तविध्यर्थभङ्गः।**

ननु विध्यर्थभूतं इष्टसाधनत्वं न यागादिसमवेतं यागादीनामाशुविनाशित्वेन कालान्तरभाविस्वर्गादीष्टसाधनत्वाभावात्। न हि अविद्यमानमेवेष्टसाधनत्वं वेदो बोधयतीति शक्यते वक्तुम्। किं तु अपूर्वेष्टसाधनत्वं विध्यर्थः। ततश्च यजेतेतिलिङा यागेनेष्टसाधनमपूर्वं भावयेदिति शाब्दबोधोऽभ्युप-

गन्तव्यः । न चैवं सत्यप्रामाण्यं भवति । यागस्य कालान्तरभाविस्वर्गादिसाधनत्वासंभवेऽपि अव्यवहितोत्तरक्षणभाव्यपूर्वसाधनत्वसद्भावात् इति चेत् । न । यागस्य स्वर्गसाधनत्वेन तत्समवेतेष्ट-साधनत्वबोधने बाधकाभावात् । स्वर्गोत्पत्तिसमये यागाभावात् यागो न तत्साधनमिति चेत् । तर्हि किं कार्योत्पत्तिकाले सन्मात्रस्य कारणत्वमभ्युपेयते । यस्य कारणतायां प्रमाणं तत्कारणमभ्युपेयत इति चेत् तर्हि यागादिकारणत्वस्य श्रुत्या विदितत्वात् तदप्यभ्युपगम्यताम् । विनष्टस्य कारणत्वा-दर्शनेन श्रुतिरनुभवविरुद्धयागेष्टसाधनत्वं न वदति अपि तु अपूर्वस्यैवेष्टसाधनत्वं वदति । यागस्य तु तत्सा-धनत्वं वदतीति चेत् । तदनुभवे बहुमानवतां श्रुत्युक्तं कामधेनुप्रभृतीनां प्रासादोद्गिरणादिकं परमेश्वरस्य निर्दुःखत्वादिकं च नाभ्युपेयं स्यात् । लोके निषेकद्वारा पितुः पुत्रजनकत्वदर्शनेन जरत्कार्वादीनां अनुग्रहेणैवापत्यकारणत्वमिति नाभ्युपेयं स्यात् । अनुमतं च लौकिकानां विशेषणोपलक्षणभेदं वदतां कालान्तरभाविनोऽपि कारणत्वम् । अभ्युपगच्छन्ति हि दण्डी देवदत्त इत्यादौ दण्डादिर्विशेषणं विद्यमानस्यैव व्यावृत्तिधीहेतुत्वात् । काकवद्देवदत्तगृहं, गुरूणां टीकां लिखति, कुरूणां क्षेत्रे वसति, इत्यादौ काकादिरुपलक्षणम् । कदाचित्संबद्धस्यैव कालान्तरेऽपि व्यावृत्तिधीहेतुत्वादिति । दृश्यते च उपभुक्तं रसायनं जीर्णं सत् कालान्तरे आरोग्यहेतुः । तथा विनष्टस्यैव वरशापादेः कालान्तर-भावीष्टानिष्टसाधनत्वं दृश्यते । न हि लोकवेदसिद्धमनुपपन्नं नामास्ति । येन श्रुतिः यागेष्टसाधनत्वं न बोधयेत् । किं च कारणानां कारणत्वं नाम कार्ये व्यापृतिरेव नान्या । केषाञ्चित्कारणानां स्वात्मनैव व्यापृतिः यथा चक्रभ्रमादीनां । तेषां कार्यकाले सत्ताऽपेक्षिता । स्वविनाशे कार्यव्यापृत्य-योगात् । अन्येषां पुनरन्यैव व्यापृतिः । यथा दण्डादीनां चक्रभ्रमः । चक्रभ्रमातिरेकेण तस्य व्यापृत्यदर्शनात् । चक्रादीनां तु स्वात्मना भ्रमात्मना चेति द्वे व्यापृती । तत्र येषां अन्यात्मनैव व्यापृतिः । न तेषां कार्यकाले सत्तापेक्षिता । व्यापारस्य तदनात्मकत्वेन तद्विनाशानन्तरमवस्थान-संभवात् । एवं च सति येषां यागादीनां व्यापारः चिरकालावस्थायी चिरविनष्टानामपि तेषां स्वर्गादिकारणत्वं नानुपपन्नम् । कार्योत्पादकाले व्यापृत्यसंभवाभावात् । ततश्च वेदस्य यागादिगतेष्ट-साधनताबोधकत्वं नानुपपन्नं इति । **इति वेदस्य यागगतेष्टसाधनताबोधकत्वे बाधकोद्धारः** ॥ छ ॥

**श्रीरस्तु ॥ प्राभाकरास्तु** । अपूर्वमवश्यं विधिपदशक्यमभ्युपेयम् । अन्यथा स्वर्गकामो यजेतेत्यादौ स्वर्गकामनाविशिष्टनिरूपितनियोज्यत्वान्वयबोधो यागे न स्यात् । अन्वयितावच्छेदकस्य स्वर्गसाधनत्वस्य साधने यागे परम्पराघटकानुपस्थितौ ज्ञातुमशक्यत्वात् । स्वर्गकामस्य यागेष्ट-साधनताज्ञानमन्तरा ममेदं कार्यमिति बोद्धृत्वरूपनियोज्यत्वस्य ज्ञातुमशक्यत्वाच्च । न च स्वर्गकामे

नियोज्यत्वज्ञानाभावे यागे चान्वयितावच्छेदकस्वर्गसाधनत्वज्ञानाभावे स्वर्गकामस्य कार्यो याग इति नियोज्यान्वयबोधः संभवति । तस्मात् यागे नियोज्यान्वयबोधसिद्ध्यर्थं यागे इष्टसाधनताबोधोऽभ्युपगन्तव्यः । न च साक्षादसाधने यागे परम्पराघटकापूर्वोपस्थितिमन्तरा इष्टसाधनताबोधः संभवतीति अकामेनापि यागस्येष्टसाधनताबोधसिध्यर्थं विधिपदस्य कार्यपदाभिधेये अपूर्वे शक्तिरभ्युपगन्तव्या । ततश्च विधिपदोपस्थिते अपूर्व एव प्रथमं ममेदं कार्यमिति नियोज्यत्वान्वयबोधः । अयमेवापूर्वे कार्यताबोधः । पश्चात् अपूर्वस्य कार्यत्वं यागकार्यत्वमन्तराऽनुपपन्नमिति प्रतिसन्धाने स्वर्गकामस्य यागः कार्य इति तद्द्वारा यागे कार्यत्वान्वयबोधो भवति । अयमेव यागे नियोज्यत्वान्वयबोधः ।

ननु यागकृतिजनककामनावत्त्वमधिकारित्वं । तच्च काम्यस्वर्गसाधनं यागः स्वर्गकामकार्य इत्यवश्यं बोद्धव्यम् । एवं कर्तृत्वं कृतिसमवायित्वं । तदपि प्रवृत्त्यर्थं स्वर्गकामो यागकर्तेत्यवश्यं बोद्धव्यम् । प्रवृत्तिकारणीभूतबोधद्वयाभावे अपूर्वकार्यताबोधमात्रेण कथं प्रवृत्तिरिति चेत् । न । उक्तकाले औपादानिकतदन्वयबोधस्वीकारात् । इदमेव हि प्रतीतेरौपादानिकत्वं यदनुपपत्तिप्रतिसन्धानसध्रीचीनशब्दजन्यत्वम् । तथाहि । सामग्रीवशात् यजेतेतिलिङा प्रथमं यागविषयकं कार्यमिति बोधो भवति । इदमेव हि कार्यशब्दाभिधेयस्यापूर्वस्य यागविषयकत्वं यद्यागजनकत्वम् । अपूर्वस्य ज्ञानादिवत् सविषयकत्वाभावात् । अनन्तरं प्रथमबोधस्य सामग्रीवशादुत्पत्तावपि मदंशानन्तर्भावेनाप्रवर्तकतया प्रवर्तकत्वान्यथानुपपत्तिप्रतिसन्धानसहायेन शब्देन पुनः स्वर्गकामस्य मम, यागविषयकं कार्यमित्यौपादानिको द्वितीयः कार्यताबोध उपजायते । अपूर्वकार्यताबोधस्यावश्यकत्वात् । एवमपूर्वकार्यताबोधद्वये जातेपि प्रवृत्त्यसंभवः । अपूर्वस्य नित्यपरोक्षस्य प्रवृत्त्यविषयत्वात् । प्रवृत्तिविषयप्रत्यक्षस्य तद्धेतुत्वात् अपूर्वस्य सुखादिवत् फलतया प्रवृत्त्ययोग्यत्वाच्च । न चापूर्वकार्यताज्ञानात् यागे प्रवृत्तिरिति वाच्यम् । भिन्नविषयककार्यताबोधस्यातिप्रसक्त्यान्यगोचरप्रवृत्त्यहेतुत्वात् । तस्मात्प्रवृत्त्यर्थं यागविषयककार्यताज्ञानमपूर्वस्य प्रथमप्रवृत्तकृतिसाध्यताधीनिर्वाहायावश्यं वाच्यम् । तच्च कामी काम्यादन्यत्काम्यसाधनतया ज्ञातमेव कर्तव्यत्वतयाऽवैतीति काम्यसाधनताज्ञानं विना नेत्यपूर्वद्वारा स्वर्गसाधनत्वेन प्रतीतस्य यागस्य कार्यत्वं ज्ञातव्यमेवेति काम्यस्वर्गसाधनयागः स्वर्गकामकार्य इत्यौपादानिकस्तृतीयो बोधः शब्दादुत्पद्यते । अयमेवाधिकारित्वबोधः । यागकृतिजनककामनावत्त्वरूपस्याधिकारित्वस्यात्र भानात् । ततो यागकृतिः कर्तारं विनाऽनुपपन्नेति ज्ञानसहितशब्देन स्वर्गकामो यागकर्ता इत्यौपादानिकश्चतुर्थः कर्तृत्वबोधो जन्यते । अत्र च बोधद्वयेऽपूर्वविषयके बोधद्वये यागविषयके जातेऽपि न प्रवृत्तिर्मदंशाज्ञानादिति स्वर्गकामस्य

यागः कार्योऽहमपि स्वर्गकाम इति ममापि यागः कार्य इत्यनुपपत्तिर्धीसहायेन फलपर्यन्तं व्यापारेण शब्देनैव पञ्चमो बोध उत्पद्यते ।

ननु सजातीयेऽन्वयदर्शनं योग्यता । दृष्टं च घृतपानस्याशुनाशिनः पुष्टिहेतुत्वमिति चेत् । न । यथाकथञ्चित्साजात्यस्यायोग्येऽपि सत्त्वेन योग्यताया अव्यावर्तकत्वापत्तेः । पदार्थताऽवच्छेदकेन साजात्यस्याद्यजातः पयः पिबतीत्यादौ, प्रकृते चासंभवादिति । तस्मादन्वयप्रयोजकरूपवत्त्वं साजात्यम् । अत एव द्रवद्रव्यत्वं मेककरणत्वे प्रयोजकमित्ययोग्यो वह्निः । तदिहाशुविनाशिनः कालान्तरभाविफलजनकत्वे फलसमयपर्यन्तस्थायिव्यापारजनकत्वं प्रयोजकमतोऽपूर्वं विना साजात्यमेव न गृह्यते । घृतपानस्य तु वैद्यकोपस्थितं धातुसाम्यमादाय पुष्टिसाधनत्वयोग्यताज्ञानं प्राज्ञस्येति आहुः ।

तन्न । स्वर्गकामो यजेतीतिवाक्येन अपूर्वोपस्थितिमन्तराऽपि यागः स्वर्गसाधनमिति बोधसंभवात् । ननु साक्षादसाधनत्वेन ज्ञाते अन्वयप्रयोजकस्थायिव्यापारोपस्थित्यभावदशायां साधनत्वान्वयबोधासंभव इति चेत् । न । तदनुपस्थितौ व्यापारद्वारा कारणमिति बोधासंभवेऽपि स्वर्गसाधनं याग इति सामान्यतो बोधसंभवात् । अन्यथा दिवाऽभुञ्जानो देवदत्तः पीन इति वाक्यात् दिवाऽभुञ्जानस्य पीनत्वबोधो न स्यात् । उपपादकानुपस्थितेः । अत एव स्वर्गकामस्य नियोज्यस्य यागे ममेदं कार्यमिति बुद्ध्यसंभवोऽपि परास्तः । यागस्य स्वर्गसाधनत्वेनावगतत्वात् । प्रत्युत परपक्ष एवापूर्वं ममेदं कार्यमिति बुद्धिरनुपपन्ना । यागस्य स्वर्गसाधनत्वेनावगतत्वात् । यदपि विधिपदस्य अपूर्वे शक्तिरभ्युपगन्तव्येति । तदपि न । शक्तिग्रहासंभवात् । अपूर्वोपस्थित्यनन्तरं हि तत्र लिङादीनां शक्तिग्रहः तदुपस्थितिश्च लिङादिभिरेवेत्यन्योन्याश्रयात् । न चेन्द्रादिशब्दानामपि शक्तिग्रहासंभवः । वर्षणशासनादिलिङ्गेन इन्द्रादिस्वरूपोपस्थितौ वज्रहस्तः पुरन्दरइत्यादिलक्षणोपदेशमुखेनेन्द्रादिशब्दानां व्युत्पत्तिग्रहसंभवात् । न चेह तथा संभवति । असाधारणधर्माभावात् । ननु नापूर्वे अपूर्वत्वेन शक्तिग्रहः । येनान्योन्याश्रयः स्यात् । किं तु कार्ये धर्मिणि कार्यत्वेन शक्तिग्रहः । कार्यत्वविशिष्टं चोपस्थितमेव । ततोऽन्विताभिधानदशायां यागजन्यं कार्यमित्यनुभवे घटादीनां स्वर्गकामान्वययोग्यत्वासंभवात् घटादिकं तिरस्कृत्य क्रियाभिन्ने योग्यतावशाद्यागजन्यापूर्वे लिङादिकं पर्यवस्यतीति चेत् । न । उपस्थितघटादीनां तिरस्कारे लिङो निर्विषयतापातात् । अपूर्वे पर्यवसानमुक्तमिति चेत् । न । प्रमाणाभावादनुपस्थिते तस्मिन् पर्यवसानाभिधानायोगात् । प्रमाणान्तरेणापूर्वसिद्धौ तु लिङ्वाच्यताकल्पनवैयर्थ्यम् । किं च । 'आग्नेयोऽष्टकपालो भवत्यमावास्यायामि'त्यादि-

षडुत्पत्तिविधयः 'दर्शपूर्णमासाभ्यां यजेते'ति विधिवाक्यार्थीभूतं प्रधानापूर्वं प्रति दर्विहोमादीनां साधनत्वं बोधयन्ति । प्रतीते च तेषां तत्साधनत्वे तन्निर्वाहाय षडुत्पत्त्यपूर्वाणि कल्प्यन्ते । एवं च सर्वत्र प्रधानवाक्यार्थीभूतं अपूर्वं वाच्यं उत्पत्त्यपूर्वाणि कल्प्यानीति त्वन्सिद्धान्तो न स्यात् । क्रमिकक्षणिकानां आग्नेयादीनां षण्णां यागानां परमापूर्वसाधनत्वग्रहासंभवात् । संभवे वा यागस्यापि कालान्तरभावि-स्वर्गसाधनताग्रहसंभवात् । अपूर्वस्य लिङादिवाच्यत्ववैयर्थ्यम् । अर्धजरतीयानुपपत्तेः । एकस्यैव लिङः प्रधानविधिवाक्यान्तर्गतत्वेऽपूर्वे शक्तिः, अङ्गविधिवाक्यान्तर्गतत्वे नापूर्वे शक्तिरिति कल्पनाऽयोगात् । अन्यथा दर्शपूर्णमासविधिवाक्यान्तर्गतस्यैवापूर्वे शक्तिः । ज्योतिष्टोमादिविधिवाक्यान्तर्गतस्य तु नापूर्वे शक्तिरिति स्यात् ।

किं च यो ब्राह्मणायावगुरेत्तं शतेन यातयादित्यनेन ब्राह्मणावगोरणशतयातनयोः साध्यसाधन-भावग्रहवत् यागस्वर्गयोरपि साध्यसाधनभावावगमसंभवात् नापूर्वस्य वाच्यता कल्प्या । अन्यथा दुरिता-पूर्वमपि तद्वाच्यं स्यात् । न च तत्र कारणत्वबोधो न भवति । अपि तु नियतपौर्वापर्यमात्रबोधो भवतीति वाच्यम् । हेतुहेतुमतोर्लिङिति कार्यकारणभावे लिङोऽनुशासनात् । कारणत्वबोधाभावे ब्राह्मणावगोरणान्निवृत्त्यभावापाताच्च । दुरितापूर्वकल्पनाऽभावापाताच्च ।

याऽपीयं प्रक्रिया । 'आदौ यागविषयकं कार्यमिति बोधः । पश्चात् स्वर्गकामस्य मम यागविषयकं कार्यमिति द्वितीयो बोधः । एवं च अपूर्वे बोधद्वये जातेऽपि न प्रवृत्तिः । तस्य नित्यपरोक्ष-तया प्रवृत्त्यविषयत्वात् । एवं चापूर्वस्य प्रथमप्रवृत्तिकृतिसाध्यतार्थानिर्वाहाय प्रवृत्त्यर्थं यागविषयक-कार्यताज्ञानमवश्यं भवतीति वाच्यमि'त्यादिनोक्ता । साऽप्यनुपपन्ना । नित्यपरोक्षत्वात् प्रवृत्त्यविषयतया विज्ञातेऽपूर्वे परम्परया कृतिसाध्यताघटकोपस्थितिं विना कार्यताबोधायोगात् । अन्यथा यागेऽपि परम्पराघटकानुपस्थितितिवेलायां स्वर्गसाधनत्वबोधः स्यात् ॥ छ ॥ **इति अपूर्वस्य प्राभाकरोक्त-लिङ्वाच्यत्वभङ्गः ॥**

ननु न यागस्य चिरविनष्टस्य स्वर्गसाधनत्वोपपत्त्यर्थव्यापारत्वेनापूर्वं कल्प्यम् । कल्पकस्य याग-ध्वंसस्यैव व्यापारत्वसंभवात् । न च यागध्वंसस्य कारणत्वे यागस्य कारणताऽनुपपत्तिः । प्रतियोगि-तदभावयोरेकत्र कारणताऽनुपपत्तेः इति वाच्यम् । यागध्वंसकारणतायाः उपजीव्यविरोधप्रसङ्गेन यागकारणत्वाविघातकत्वात् । यदा हि अग्निहोत्रहोमं प्रति उदयस्य कारणता, अनुपजीव्यमप्यनुदयस्य कारणत्वं, स्वोपजीव्यस्य उदिते जुहोतीति वाक्यस्याप्रामाण्यप्रसञ्जकत्वात्, न बाधते तदा किं वाच्यं

ध्वंसकारणता स्वोपजीव्यं यागकारणत्वं न बाधत इति । अत एव यागस्य कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकतापत्तिरित्यपि परास्तम् । कारणीभूताभावप्रतियोगित्वेऽपि कारणत्वात् । अन्यथा उदयस्यापि कारणीभूतानुदयप्रतियोगित्वात् प्रतिबन्धकत्वं स्यात् इति ।

**अत्राह मणिकारः** । न यागध्वंसस्तद्व्यापारः । प्रतियोगिध्वंसयोरेकत्राजनकत्वात् । न हि नियमतो यद्ध्वंसेन यद्भवति । तत्तत्र कारणम् । न च संसर्गाभावत्वेन हेतुत्वे तथेति वाच्यम् । व्यभिचाराभावेन ध्वंसत्वेनापि कारणत्वस्य प्रतियोगिकारणत्वाभावप्रयोजकत्वात् । अथ शब्दाद्यागकारणता, व्यापारं विना तदनुपपत्तेस्तज्जन्यध्वंसस्य कारणत्वकल्पनमित्युभयमपि जनकमन्यत्र तु नानाभावान्न तथेति चेन्न । तत्र यागध्वंसस्य यागजन्यस्वर्गं प्रति जनकत्वस्य प्रमाणान्तरविरोधेनार्थापत्त्याऽप्यकल्पनात् इति ॥ तन्न ॥ अन्यत्र प्रतियोगितदभावयोरेकत्राकारणत्वेऽपि प्रकृते ध्वंसकारणतायाः प्रतियोगिकारणतानिर्वाहार्थत्वात् अविरोधित्वेनोभयोरपि कारणत्वसंभवात् ।

ननु यागे कारणतानिर्वाहार्थं न यागध्वंसस्य व्यापारत्वकल्पनं युक्तम् । स्वर्गो न यागध्वंसजन्यः यागजन्यत्वात् इत्यनुमानविरुद्धत्वादिति चेत् । न । अपूर्वस्याप्यकल्प्यत्वापातात् । यागकारणताविरोधियागध्वंससमानकालीनत्वात् । कारणताविरोधिसद्भावे उपाधिशतैरपि कारणतानिर्वाहासंभवात् । अथ तद्ध्वंसो न कारणताविरोधी । हन्त तर्हि कृतमपूर्वकल्पनया कारणताऽनुपपत्तेरभावात् । अथ भवत्येव ध्वंसः कारणताविरोधी । अपूर्वं तूत्तेजकतया कल्प्यत इति चेत् । न । अपूर्वस्य स्वर्गसाधनत्वाभावप्रसङ्गात् । न ह्युत्तेजकं दाहकारणं येनापूर्वं स्वर्गसाधनं स्यात् । तथा च व्यापारो न स्यात् । दृश्यते खल्वन्ननाशश्च देहपुष्टिहेतुः । न चान्नमात्रं कारणम् । अजीर्णस्यापि तद्धेतुतापातात् । अथ जीर्णता सहकारिणीति चेत् । अङ्गीकृतं तर्हि ध्वंसस्य व्यापारत्वम् । जीर्णताया ध्वंसानतिरेकात् ।

**पक्षधरस्तु** । फलान्वयव्यतिरेकाभ्यामनुविहितान्वयव्यतिरेकित्वं लिङ्गर्थः । तेन यागान्वये फलं यागाभावे फलाभाव इति प्रतीतं यागाभावे फलं इति ज्ञानं विरुणद्धि । तथा च नोभयोरेकत्र जनकत्वं प्रत्येतुं शक्यमिति एकत्रान्यथासिद्धाववश्यं कल्प्यायामन्यथासिद्धिरभावे कल्प्यते । किं च लोके कारणीभूतध्वंसप्रतियोगित्वे प्रतिबन्धकत्वं अन्यथा कारणत्वं व्यवहरन्तीति न तयोरेकत्रहेतुत्वम् । अत एव तयोरव्यवहितपूर्ववर्तित्वमसिद्धम् । कार्योत्पत्त्यननुगुणध्वंसक्षणान्तरित्वात् प्रतियोग्यधिकरणक्षणस्येत्याह ।

**स स्थूलदृश्वा** । लिङ्बोधितस्य, स्वोचितकाले यागान्वये फलं, तदा यागाभावे फलाभावः, इति अन्वयव्यतिरेकित्वस्य यागध्वंसे फलमिति ज्ञानेनाबाधात् । न हि लिङा, फलाव्यवहितपूर्वकाले यागसत्त्वे फलं तदा तदभावे फलाभाव, इति गृहीतम् । येन यागध्वंसे फलमिति ज्ञानं विरुद्धं स्यात् । अन्यथा विध्यप्रामाण्यं स्यात् । यागस्य फलाव्यवहितपूर्ववृत्तित्वरूपकारणस्य बाधितत्वात् । किं च यागकारणतानिर्वाहायापूर्वं कल्पयन् यागध्वंसानन्तरं फलं संभवतीति जानाति न वा ? नेति पक्षे अदृष्ट-कल्पना वैयर्थ्यम् । आद्ये कथं तवापि लिङ्बोधितयागे सति फलं तदभावे फलाभाव इति अर्थस्य न बाधः । यदपि, नोभयोरेकत्र जनकत्वं प्रत्येतुं शक्यं इत्येकत्रान्यथासिद्धाववश्यं कल्प्यायामन्यथा-सिद्धिरभावे कल्प्यत, इत्युक्तम् । तदपि न । यागध्वंसकारणत्वस्य यागकारणतामुपजीव्य प्रवृत्तत्वेन तत्समकक्ष्यत्वाभावात् । अन्यथासिद्धिकल्पनात्पुरैव यागकारणत्वनिर्वाहकत्वासंभवादेव तद्ध्वंस-कारणत्वस्य त्याज्यत्वेन एकत्रान्यथासिद्धावश्यकल्प्यायामन्यथासिद्धिरभावे कल्प्यत इत्युक्त्ययोगात् ।

यदपि कारणीभूतध्वंसप्रतियोगित्वे प्रतिबन्धकत्वमन्यथा कारणत्वं व्यवहरन्तीति तदयुक्तम् । लोके तथा व्यवहारस्यैवाभावात् । लौकिका हि प्रतिबन्धकत्वे सिद्धे तदभावं कारणमित्युच्चरन्ति । न तु कारणीभूताभावप्रतियोगिनं प्रतिबन्धकत्वेन व्यवहरन्ति । गृहदाहेष्टौ गृहदाहस्य कारणत्वेऽपि तत्प्रतियोगिनि प्रतिबन्धकत्वव्यवहारादर्शनात् । तथा पितृमरणस्य श्राद्धादिकर्मनिमित्तत्वेऽपि पितरि तत्प्रतिबन्धकत्वव्यवहारादर्शनाच्च । किं च कारणीभूताभावप्रतियोगिनः प्रतिबन्धकत्वमिति रिक्तं वचः । सति पुष्कलकारणे यत्सद्भावात्कार्यविलम्बः तदुच्यते प्रतिबन्धकमिति । न च प्रतिबन्धकाभावस्य कारणत्वपक्षे प्रतिबन्धकवेलायां पुष्कलकारणमस्ति । प्रतिबन्धकत्वेनाभिमताभावस्य कारणस्याभावात् ।

यदपि, अत एव तयोरव्यवहितपूर्ववर्तित्वमसिद्धम् । कार्योत्पत्त्यननुगुणध्वंसक्षणान्तर्गतत्वात् प्रतियोग्यधिकरणक्षणस्येति । तदपि न । ध्वंसस्याव्यवहितपूर्ववर्तित्वस्य सत्त्वेन द्वयोरसिद्धमित्युक्त्य-योगात् । विनाप्ययागकारणतावादिना यागे अव्यवहितपूर्वक्षणवृत्तित्वस्यानङ्गीकृतत्वेन तदसिद्ध्यभिधाना-योगाच्च । अपूर्वव्यापारवादिमतेऽपि अव्यवहितपूर्ववृत्तित्वस्यालाभाच्चेति ॥ **वयं तु ब्रूमः, ॥** न ध्वंसो यागव्यापारः । नित्यत्वात् । 'यद्यप्यनेवंविन्महत्पुण्यं करोति तद्धास्यां ततः क्षीयत एवे'ति पुण्यशब्दाभिधेयस्य यागादिव्यापारस्य क्षयाभिधानात् । न च यागादिसत्कर्मानित्यत्वपरमेवेदं वाक्यं न तु तद्व्यापारानित्यत्वपरमिति वाच्यम् । यागाद्यनित्यत्वस्यानुभवादिसिद्धत्वेन तदभिधानवैयर्थ्यात् । 'य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयत' इति वाक्यस्यापि कर्मनित्यतापरत्वप्रसङ्गेन बाभिन्न-विषयत्वप्रसङ्गाच्च ॥ **इति यागध्वंसस्य व्यापारत्वभङ्गः ॥**

**श्रीरस्तु**। ननु अस्तु देवताप्रीतिरेव व्यापारः। अपूर्वं कल्पयताऽपि देवताप्रीतिः स्वर्गादिहेतुतया वक्तव्यत्वात्। न हि देवताप्रीत्यभावे अपूर्वमात्रेण स्वर्गादिसिद्धिः। 'प्रसादादस्यमात् विष्णोः स्वर्गलोकः प्रकीर्तितः' इत्यादिना स्वर्गादेरीश्वरप्रसादजन्यत्वाभिधानात्। दृश्यते खलु लोके शुश्रूषोर्विनीतस्य शिष्यस्य प्रसन्नादेव गुरोर्विद्याप्राप्तिः। अल्पयाऽपि सेवया प्रसन्नश्चेद्राजा महाफलप्राप्तिः। अन्यथा महत्याऽपि सेवया तदप्राप्तिः। न च देवताप्रसादोऽपूर्वं चेति द्वयमपि व्यापार इति वक्तुं शक्यम्। प्रसादेनैवोपपत्तावपूर्वकल्पनावैयर्थ्यात्। अन्यथा राजसेवादावप्यपूर्वकल्पनाप्रसङ्गो दुर्वारः। न चापूर्वाभावे 'अनेनेवंविन्महत्पुण्यं करोति तद्धास्यां ततः क्षीयत एवे'ति श्रुत्यप्रामाण्यपात इति वाच्यम्। ईश्वरप्रसादो नश्यतीत्यर्थत्वात् इति।

**अत्राह मणिकारः**। न देवताप्रीतिर्यागव्यापारः। यागस्य तद्धेतुत्वे मानाभावात्। गङ्गास्नानादौ देवताविरहेण तदसंभवात्। न च तत्रापि तत्प्रीतिः। तस्य तत्प्रीतिहेतुत्वे मानाभावात्। लाघवात्कर्तृभोक्तृव्यापारकल्पनाच्चेति। तन्न। 'अग्निमारुत्या यजति यथाभागं तद्देवताः प्रीणाति प्रीणाति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति यथाभागं तद्देवताः प्रीणाती'त्यादिश्रुत्या यागस्य देवताप्रीतिसाधनत्वावगमात्। यदपि गङ्गास्नानादौ देवताविरहेण तदसंभवादिति। तदपि न। 'किञ्चिदभ्युदिते भानौ रटन्त्यापो दिवानिशम्। अप्युग्रपापिनं वाऽपि प्रातःस्नानात्पुनीमहे। तिस्रः कोट्योऽर्धकोट्यश्च तीर्थानि भुवनत्रये। निरीक्ष्य माघमासं तु प्रातः प्रातर्जलाशये। अस्नातं पापिनं मूढं शापं दत्वा व्रजन्ति चे'ति प्रमाणबलेन तत्रापि तीर्थाभिमानिदेवतासद्भावस्य गङ्गास्नानादेरपि तत्प्रीतिहेतुत्वस्य अस्नानादेतत्कोपहेतुत्वस्य चाङ्गीकर्तव्यत्वात्। यदपि लाघवात्कर्तृभोक्तृव्यापारकल्पनमिति। तदपि न। व्यधिकरणस्यापि देवताप्रसादस्य कृतिहेतुतानिर्वाहकत्वस्य भोगोपपादकस्य च प्रमितत्वेन लाघवात् कर्तृभोक्तृव्यापारकल्पनमित्युक्त्ययोगात्। न हि परमेश्वरप्रसादाभावे सव्यापारोऽपि यागादिः स्वसाध्यसाधनायालम्। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'ति वचनेन कर्मादेरीश्वराधीनत्वाभिधानादिति।

वयं तु ब्रूमः। भवेदीश्वरप्रसादो यागव्यापारः यदि यागानन्तरमेवोत्पद्येत। न चैवं किन्तु कालान्तरभावी। न च यागानन्तरमेवेश्वरप्रसादो वक्तुं युक्तः। महता कर्मणा फलानुदये ईश्वरप्रसादस्य मोघत्वापातात्। एवं विकर्मानन्तरमेव कोपोदयाङ्गीकारे प्रायश्चित्तादिना तन्नाशे ईश्वरकोपस्य मोघत्वं स्यात्। अन्यथा प्रायश्चित्तविधेर्वैयर्थ्यं स्यात्। किं च कर्मानन्तरमेवेश्वर-

प्रसादोत्पत्तिपक्षे तदानीमेव स्वर्गः स्यात् । फलजनने अन्यानपेक्षस्येश्वरप्रसादरूपकारणस्य सद्भावात् । तस्मात् यागोत्पत्त्युत्तरक्षण एवोत्पन्नं अपूर्वं फलाव्यवहितपूर्वक्षणे प्रसादद्वारा स्वर्गजनकयागव्यापार इत्येव युक्तम् । स्मृतिसिद्धं चापूर्वम् । 'अपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे भगवति वासुदेव एव भावयान' इत्यादिवचनात् । **इति देवताप्रसादस्य यागव्यापारतानिरासः ।**

नन्वथाप्यपूर्वं न यागव्यापारः पितृकृतजातेष्टिजन्यापूर्वस्य पितृसमवेतस्य पुत्रसमवेतपूतत्वादि-फलजनकत्वानिर्वाहकत्वात् । न हि पितृसमवेतं अदृष्टं देशव्यवहितफलसाधनतानिर्वाहकम् । स्वस्यापि यागवत् विप्रकृष्टत्वेन असमर्थत्वात् । अथ देशविप्रकर्षो न साधनत्वविरोधि । हन्त तर्हि काल-विप्रकर्षोऽपि न साधनत्वविरोधी स्यात् । कालविप्रकृष्टस्यासाधनत्ववत् देशविप्रकृष्टस्यापि असाधन-तादर्शनात् । अथ तत्रापूर्वातिरिक्तं कारणतानिर्वाहकमभ्युपगम्यते । तर्हि तदेव कालान्तरभावि-स्वर्गादिसाधनतानिर्वाहकमित्यपूर्ववैयर्थ्यम् । न च जातेष्टिजन्यमपूर्वं पुत्र एवोत्पद्यते इति वक्तुं शक्यम् । विहितक्रियायाः कर्तर्येवादृष्टजनकत्वनियमात् । अन्यथा देशान्तरगतापूर्वजनकतानिर्वाहाया-पूर्वान्तरमभ्युपेयमित्यनवस्था स्यात् । एवं गयाश्राद्धादेरपि नापूर्वं व्यापार इति ।

**अत्रोच्यते** । न वयं तार्किकवत् धर्माधर्मावात्मसमवेतौ गुणावभ्युपगच्छामः । किं नाम धर्मा अधर्माश्च प्रत्येकं चेतनाः स्वकर्मफलभोगिनः अचेतनशरीराश्च । ततश्च क्रियाकर्तर्युत्पन्नाः धर्मादयः ईश्वरनियोगानुसारेण प्रायस्तत्रैव फलमुत्पादयन्ति । तद्यथा गृहे समुत्पन्नो देवदत्तः पाटलिपुत्रं धावति कर्म करोति तत्रत्यान् पीडयति सुखयति वा स्वकर्मक्षये नश्यति । अन्यस्तु पाटलिपुत्रे समुत्पन्न-स्तत्रत्यानेव पीडयति नान्यत्र धावति नान्यान् पीडयति सुखयति वा । एवं च कर्मणो देशव्यवधानेऽपि अपूर्वस्य देशव्यवधानाभावात् कारणतानिर्वाहकत्वम् । न च कर्मणां चेतनत्वं अन्यत्र धावनं स्वकर्म-भोक्तृत्वं चाप्रामाणिकमिति वाच्यम् । 'ब्रह्महत्या हते तस्मिन् आससाद वृषाकपिम् । तां ददर्शानु-धावन्तीं चण्डालीमिव रूपिणीम् । जरया वेपमानाङ्गीं यक्ष्मग्रस्तामसृक्पटाम् । विकीर्य केशान् पतितान् तिष्ठ तिष्ठेति भाषिणीम् । मीनगन्ध्यसुगन्धेन कुर्वतीं मार्गदूषणमि'ति भागवते चेतनत्वाद्यभिधानात् । कर्मणामचेतनतावादस्तु तच्छरीरस्याचेतनत्वाभिप्रायेण । न तु सर्वात्मनाऽचेतनत्वात् । 'कर्माणि तानि च पृथक् चेतनान्येव सर्वशः । अचेतनशरीराणि स्वकर्मफलभांजि चे'ति वचनात् । अत एव धर्मदानमप्युपपद्यते । तद्यथा कश्चिन्मेधावी धर्मात्मा स्वां दुहितरं वराय प्रयच्छति । सा च तद्गृहं गत्वा तदुपभोग्या भवति । एवं धारापूर्वं दत्तो धर्मः प्रतिगृहीतुरुपभोग्यो भवति । क्रीतोऽपि

धर्मः अश्वादिवदुपभोग्यो भवति । पित्रादीनामदानेऽपि पित्रादीनां धर्माधर्मावुपभोग्यौ भवतः । तेषां स्वामित्वात् 'स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाण' इति श्रुतेः । ततश्च विनष्टस्य यागादिकर्मणः क्वचिदानाद्यसंभवात् तत्सिद्ध्यर्थमवश्यमपूर्वमभ्युपेयमिति स्थितम् ॥ छ ॥ **इति अपूर्वस्य देशान्तरस्थफलहेतुतानिर्वाहकत्वसमर्थनम् ॥**

**मणिकारस्तु** । ननु कर्तृगत एव व्यापार इत्ययुक्तो नियमः । पुत्रकृतगयाश्राद्धादिना पितरि पितृकृतजातेष्ट्यादिना पुत्रे इष्टोत्पत्तेः । न च तत्र कर्तृसमवेतमेवादृष्टमिति वक्तुं शक्यम् । इष्टोपपादकापूर्वस्य इष्टाश्रय एव कल्प्यत्वात् । कल्पकस्य फलस्य स्वाश्रय एवोपपादकानुमापकत्वात् । ततश्च जातेष्ट्यादेः व्यधिकरणव्यापारस्यावर्जनीयत्वात् । अर्धजरतीयानुसरणे कारणाभावात् । सर्वत्रापि व्यधिकरणो देवताप्रसादो व्यापारोऽस्तु किमपूर्वकल्पनयेत्याक्षिप्य विहितक्रियया कर्तृगतद्वारा कालान्तरभाविफलं जन्यत इत्युत्सर्गः । स च बलवता बाधकेनापोद्यते । प्रकृते च बाधकं नास्ति । यथा शास्त्रदर्शितं फलमनुष्ठानरीत्युत्सर्गः पुत्रकृतगयाश्राद्धस्य पितृस्वर्गं प्रति पितृकृतजातेष्टेः पुत्रपूतत्वादिकं प्रति हेतुत्वस्य शास्त्रेण बोधितत्वात् इति समादधौ । तन्न ॥

गयाश्राद्धादिकर्मणा देशान्तरगते पितरि, पितृकृतजातेष्ट्या च पुत्रे इष्टोपपादकापूर्वस्य त्वन्मते असमवायिकारणासंभवेनोत्पादायोगात् । न च पुत्रादिकृतं श्राद्धादिकर्मैवासमवायिकारणम् । समवायिकारणप्रत्यासत्त्यभावात् । अन्यस्यानिरूपणात् । न च पितृसमवेतपूर्वादृष्टं आत्ममनःसंयोगो वा असमवायिकारणमिति वाच्यम् । तस्य तज्जनकत्वे मानाभावात् । नापि श्राद्धादिक्रियायाः पित्रादिनिष्ठादृष्टनिमित्तत्वम् । त्वन्मते आत्मनो विभुत्वेऽपि कार्यप्रदेशे अदृष्टस्योत्पत्तव्यत्वेन पुत्रस्य भौमशरीरक्रियायाः देशव्यवहितत्वेन स्वर्गावच्छिन्ने पितरि अदृष्टजनकत्वासंभवात् । अथ देशव्यवधानं न कारणताविरोधि । हन्त तर्हि कालव्यवधानमपि तथैवेति ध्वस्तस्य यागस्य कालान्तरभाविस्वर्गजनकत्वसंभवादपूर्ववैयर्थ्यम् । तस्मात् गयाश्राद्धादिजन्यमपूर्वं कर्तर्येवेति नियमात् विहितक्रियया कर्तृगतव्यापारद्वारा कालान्तरभाविफलं जन्यत इत्यौत्सर्गिकत्वकथनमयुक्तम् ॥ **इति अदृष्टस्य मण्युक्तौत्सर्गिकत्वभङ्गः ॥**

**जैमिनीया मन्यन्ते** । विध्यर्थवादमन्त्रात्मकः समस्तः आम्नायः कार्यनिष्ठ एव न वस्तुतत्त्वनिष्ठः । अनेकपदात्मकवाक्यश्रवणादनेकार्थप्रतीतावपि वाक्यस्य तावदेकत्र तात्पर्यं कल्प्यम् । अन्यथैकवाक्यता-

ऽसंभवात् । वाक्यतात्पर्यविषयश्च स एव यत्प्रतिपादनेन वाक्यपर्यवसानम् । यत्प्रतिपादनाय च पदार्थान्तरम् । तथाभूतश्च कार्यात्मैव । न हि गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पर्यवसितमनुभूयते । किं तु देवदत्त गामानयेत्यादि कार्यनिष्ठमेव । अतः कार्यमेव सर्वत्र वाक्यार्थः । तत्र लिङादिप्रत्ययः साक्षात्कार्यताऽभिधार्या । पदान्तराणि तु तत्प्रतीतये तदन्वितस्वार्थानभिदधति तत्परण्येव । एवं कार्यान्तरविधुराणि वाक्यान्तराण्यपि तदेकवाक्यतामापद्यन्ते । अनेनैव न्यायेन आम्नायोऽप्यशेषः कार्यताबोधपर्यवसितः ।

किं च प्रत्याय्यप्रत्यायकभावसंबन्धग्रहणलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थमवबोधयतीत्यविवादम् । अन्वयव्यतिरेकाभ्यां तथाऽवगमात् । व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव । वृद्धव्यवहारश्च कार्यप्रतिपत्ति-निबन्धन इति कार्यप्रतिपादकतैव युक्ता । तथा हि । चैत्र जलमाहरस्वेति प्रयोजकवृद्धवाक्यश्रवणात् प्रयोज्यवृद्धस्य जलाहरणविषयां प्रवृत्तिं दृष्ट्वा पार्श्वस्थो बाल एवमाकलयति । अस्य प्रवृत्तिः बुद्धिपूर्विका स्वतन्त्रप्रवृत्तित्वात् । मदीयस्तनपानादिप्रवृत्तिवत् । सा च बुद्धिः मम बुद्धिविषय-विषया । प्रवृत्तिहेतुभूतबुद्धित्वात् । मद्बुद्धिवत् । पुनरेवं विमर्शो भवति । सा बुद्धिः प्रयोजक-वृद्धवाक्यजन्या तद्भावभावित्वात् । यद्यद्भावभावि तत्तज्जन्यम् । यथा घट इति । मम तु प्रमाणान्तरेण सा बुद्धिर्जायत इत्यावयोर्विशेषः इति । पुनश्च कोऽसौ प्रवृत्तिहेतुभूतोऽर्थः योऽनेन शब्देन बोध्यत इति जिज्ञासायां स्वात्मन्यनुसन्धत्ते । न तावदहं क्रियामात्रं फलमात्रं क्रियाफल-संबन्धमात्रं वा बुद्ध्वाप्रवृत्तः । किं तु ममेदं कार्यमिति कार्यतां बुद्ध्वैव प्रवृत्त इति कार्यतायाः प्रवृत्ति-हेतुभूतार्थत्वं निश्चित्य प्रयोजकवृद्धवाक्यस्य कार्यताऽवगतिं कुर्वन्ति । पदान्तराणि च तदन्वितान् स्वार्थानवगमयन्तीत्यावापोद्धाराभ्यामवगच्छति । ततश्च अर्थवादानां स्वार्थे तात्पर्याभावात् । अपूर्वस्य चेतनात्मकत्वसिद्धये 'तां ददर्शानुधावन्तीमि'त्याद्यर्थवाक्योदाहरणमयुक्तमिति ।

**अत्रोच्यते** । युक्तमेवापूर्वचेतनत्वसिद्धये अर्थवादोदाहरणम् । अर्थवादस्य स्वार्थेऽपि तात्पर्यसद्भावात् । अन्यथा स्रुक्स्रुवादिवाक्यानां अपि स्वार्थे तात्पर्याभावप्रसङ्गेन तदसिद्ध्या यागाद्य-सिद्धिः स्यात् । न हि स्रुक्स्रुवाहवनीयादिस्वरूपं प्रत्यक्षगम्यम् । तेषां मान्त्रिकत्वात् । यदपि वाक्यतात्पर्यविषयश्च स एव यत्प्रतिपादनेन वाक्यपर्यवसानम् । यत्प्रतिपादनाय च पदार्थान्तरम् । तथाभूतश्च कार्यात्मैव । न हि गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पर्यवसितमनुभूयते । किं तु देवदत्त गामानयेत्यादिकार्यनिष्ठमेव । अतः कार्यमेव सर्वत्र वाक्यार्थ इति । तन्न । देवदत्तः

किं करोतीति पृच्छकं प्रति देवदत्तः पचतीति वाक्यस्य पर्यवसितत्वात् । देवदत्त गामानयेत्युक्त्यनन्तरमपि कुत इत्याकाङ्क्षोदयदर्शनेन तस्याप्यपर्यवसानाच्च । न हि गवानयनप्रयोजनमजानमानाः गामानयेत्युक्ते निराकाङ्क्षाः भवन्ति । येन तत्पर्यवसितं स्यात् । किं च यथा गामित्युक्त्वोपरमे वाक्यापर्यवसानमनुभूयते । तथा आनयेत्युक्त्वा उपरमेऽपि अपर्यवसानमनुभूयत एव । न च विशेषो दृश्यत इति अयुक्तम् तस्य पर्यवसानहेतुत्वाभिधानम् । यदपि लिङादिप्रत्ययः साक्षात्कार्यताभिधायी । पदान्तराणि तु तत्प्रतीतये तदन्वितस्वार्थानभिदधति तत्पराण्येवेति । तदयुक्तम् । लिङादिप्रत्ययार्थस्य तत्प्रकृतिधात्वर्थान्वितत्वेन घटादिपदार्थस्य तदन्वयायोगात् । राजपुरुष इत्यत्र राजपुरुषपदयोः पृथक् पृथक् कार्यान्वितस्वार्थाभिधेयित्वेन असमर्थत्वेन समासाभावप्रसङ्गात् ।

यदपि, 'किञ्च प्रत्याय्यप्रत्यायकभावसंबन्धग्रहणलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थमवगमयती'त्यादि तत्र प्रष्टव्यम् । किं वृद्धव्यवहारदर्शनमेव व्युत्पत्तिहेतुः उतान्यदपीति । नाद्यः । यथा गौस्तथा गवय इत्युपमानात् , सक्थिनि कर्णे वा गृहीत्वा प्रयुक्तात् अयं गौरित्याप्तवाक्यात् , सास्नादिमान् गौरिति लक्षणात्, अभिधानात् च व्युत्पत्तेर्बहुलमुपलम्भात् । द्वितीये तु व्युत्पत्तिप्रकारनिरूपणप्रयासवैयर्थ्यम् । प्रकारान्तराद्व्युत्पन्नस्य सिद्धार्थपरादपि वाक्यादर्थावगमसंभवात् । यावती सिद्धार्थपरादपि वाक्याद्व्युत्पत्तिः सा सर्वाऽपि प्रथमभाविकार्यव्युत्पत्त्यनन्तरभावित्वात् कार्यव्युत्पत्तिरेवेति चेत् । अत्र वक्तव्यम् । किमनेन सिद्धार्थपरादपि वाक्याज्जायमाना व्युत्पत्तिः कार्ये व्युत्पत्तिरित्युपचर्यते । आहोस्वित् अभ्यासपाटवात् कार्ये व्युत्पत्तिरुपजायत इत्युच्यते । नाद्यः । वैयर्थ्यात् । न सिंह इत्युक्तो देवदत्तः सिंहो भवति । येनोपचारस्य वैफल्यं न स्यात् । द्वितीये सिद्धार्थवाक्यप्रयोक्तुरपि एवमेवेति सिद्धार्थपरं वाक्यमेव न स्यात् । ततश्च सिद्धार्थपरादपीति रिक्तं वचः स्यात् । न हि प्रयोक्तुरपि श्रोतुरभ्यासो गरीयान् । येनाभ्यासपाटवाभावात् सिद्धार्थपरमपि वाक्यं प्रयुञ्जीत । ततश्च सर्वेषां पदानां कार्ये व्युत्पत्त्ययोगेन सिद्धेऽपि व्युत्पत्तेरादरणीयत्वेनार्थवादस्य प्रामाण्यं युक्तम् ॥ छ ॥ इति **जैमिनीयोक्तकार्यव्युत्पत्तिभङ्गः** ।

ननु यदि न जैमिनीयोक्तो व्युत्पत्तिप्रकारः । कथं तर्हि व्युत्पद्यत इति चेत् । उच्यते । पिता स्वाङ्क उपविष्टं बालमन्यमनस्कं छोटिकावादनादिनाऽभिमुखीकृत्य, तत्कर्णं हस्ते गृहीत्वा, कर्ण इति बहुवारमुच्चार्य कालान्तरे पुनस्तथैवोच्चारयति । एवमनेकवारमुक्ते अस्यायं शब्द इत्यवगच्छति । शब्दं चाभ्यसति । तदनन्तरं कस्यचित्कर्णदर्शने शब्दं स्मृत्वा कर्ण इति व्यवहरति ।

एवमवयवान्तरेषु व्युत्पद्यते । तस्य तस्यावयवस्य दर्शने पुनस्तं तं शब्दं स्वयमेवोच्चारयति । अन्येन कर्णादिशब्देषु प्रयुक्तेषु तं तमर्थं स्मृत्वा जाताह्लादो तं तमवयवं स्पृशति । एवमन्नादिशब्देषु व्युत्पद्यते । एवं कतिपयपदव्युत्पत्त्यनन्तरं वाक्यार्थबोधोपयोगिनीं पदानां योग्यान्विते स्वार्थे व्युत्पत्तिं जनयितुं छोटिकावादनादिना अभिमुखीकृत्य अंगुलीप्रसारणादिना अपूपानदन्तं तद्भ्रातरं प्रदर्श्य देवदत्त तव भ्राताऽयमपूपानत्तीति व्युत्पादको वाक्यं बहुवारं प्रयुंक्ते । तेन पदसमुदायस्यार्थसमुदाय-संबन्धितामवगच्छति । कालान्तरे पुनस्तस्यैव प्रयोगे तमर्थसमुदायं स्मरति । स्वयं च तमर्थसमुदायं दृष्ट्वा देवदत्त तव भ्राताऽयमपूपानत्तीत्येव शब्दान् प्रयुंक्ते । तवेति न वक्तव्यं एवं देवदत्तेत्यपि न वक्तव्यम् । किं तु यज्ञदत्त मम भ्रातेति वक्तव्यमिति बोधितः देवदत्तशब्दो ममैव । मत्संबन्ध्यर्थबोधने ममेति वक्तव्यम् । परसंबन्ध्यर्थबोधने तवेति वक्तव्यमित्याद्यवगच्छति । अनन्तरं गामानयेति अन्विताभिधायिपदसमुदायश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तिं पश्यन् गौरश्वः पुरुषो हस्तीत्यनन्वितवाक्या-त्प्रवृत्तिमपश्यन् वाक्ययोर्वैलक्षण्यमाकलयति । पुनरेवं विचारयति किं तद्वैलक्षण्यं येनेदं प्रवर्तयति येनेदं न प्रवर्तयतीति । ततः पुनरेषा बुद्धिरुपजायते । वाक्यद्वयेऽपि गोवाचकपदं तावदस्ति आनयेति पदं तावदिहैवास्ति । तत्र नास्ति । ततो मन्ये आनयेति पदसहकृतमेव गोपदं प्रवर्तकं नान्यदिति । ततो गां बधानेति वाक्यादपि प्रवृत्तिं पश्यति । ततः पुनरेषा बुद्धिरुपजायते । गोपदस्य नानयेतिपदेनैव साहित्यनियमः । किं तु योग्येनेतरेणेति । ततश्च मया व्युत्पन्नानि सर्वाणि पदानि व्युत्पत्स्यमानानि च योग्येतरस्वार्थाभिधानसमर्थानीत्यवगच्छति । एवं भाषाशब्देषु व्युत्पन्नः संस्कृतशब्दं उच्चार्य भाषाशब्देन व्याख्याने बहुवारमभ्यसन् संस्कृतेषु शब्देषु व्युत्पद्यते । एवं तावल्लोके व्युत्पन्नः वर्षणशासनादिलिङ्गेन यज्ञभुजो देवाननुमाय वज्रहस्तत्वादितत्तदसाधारणधर्मैः इन्द्रादिशब्दानां पुरन्दरादिषु शक्तिमवगच्छति ॥ छ ॥ **इति शब्दानां व्युत्पत्तिप्रकारनिरूपणम् ।**

अत्र **जैमिनीया मन्यन्ते** । नेन्द्रादयो देवता नाम शब्दातिरेकेण सन्ति । चतुर्थ्यन्ताः शब्दा एव देवताः । विग्रहाद्युपेतचेतनदेवताऽङ्गीकारे नानादेशे युगपत्क्रियमाणयागेषु युगपत्सान्निध्या-योगेन असन्निहितानां च हविःस्वीकारासंभवेन यागानां निष्फलत्वप्रसङ्गात् । अग्निदेवताके कर्मणि अग्नये स्वाहेत्यग्निपदप्रयोगनियमो न स्यात् । न हि विग्रहवत्या देवतायाः अग्निशब्देनेव वह्न्यादि-शब्देनापि वाच्यायाः अग्निशब्दमुच्चार्य हविर्दाने प्रीतिर्भवति न वह्निशब्दोच्चारण इत्यत्र मानमस्ति । येन होमकाले अग्न्यादिशब्दोच्चारणनियमः स्यात् । विग्रहादिमद्देवतासद्भावे प्रमाणाभावाच्च । न च श्रुतिस्तत्र प्रमाणम् । अर्थवादमन्त्रात्मकवेदस्य कार्यतापरत्वेन स्वार्थे तात्पर्याभावादिति ।

तत्र । चतुर्थ्यन्तशब्दस्य देवतात्वे आग्नेयोऽष्टाकपाल इत्यादेरपशब्दत्वापातात् । न हि अग्नय इति शब्दो अग्निशब्दः । येनाग्नेर्ढगिति अग्निशब्दाद्विहितो ढक्प्रत्ययो अग्नये इत्येकारान्ताच्छब्दात्स्यात् । न चाग्नय इति शब्दो अग्निशब्द एव । अग्निशब्दाच्चतुर्थ्येकवचनोत्पत्तौ अग्नये इति रूपनिष्पत्त्यङ्गीकारादिति वाच्यम् । विशिष्टस्यान्यत्वात् । अन्यथा आग्नेयशब्दोऽप्यग्निशब्दः स्यात् । अग्निशब्दनिष्पन्नत्वसाम्यात् । न चाग्निशब्दस्याग्नय इति शब्दोऽर्थः । ततश्च ढक्प्रत्ययोपपत्तिरिति वाच्यम् । स्वं रूपं शब्दस्य शब्दसंज्ञेति नियमितत्वेन अग्नयेशब्दे असङ्केतितस्य अग्निशब्दस्य तदुपस्थापकत्वायोगात् । अन्यथा तरप्तमपौ घ इति शब्दसंज्ञाकरणं व्यर्थं स्यात् । किं च । इन्द्राय स्वाहेत्यादिरपशब्दः स्यात् । इन्द्रशब्दस्यादेवतात्वेन स्वाहाशब्दयोगाभावेन चतुर्थीप्राप्त्यभावात् । इन्द्रायेति शब्दस्य चतुर्थ्यन्तप्रतिरूपकाव्ययत्वाङ्गीकारे तु स्वाहायोगे चतुर्थीविधानमनर्थकं स्यात् । एवमिन्द्रायाहीति प्रार्थनावाक्येषु इन्द्रेत्यादिसंबोधनमयुक्तं स्यात् । इन्द्रायेति संबोधनीयत्वात् । आगमनं प्रार्थनं चानुपपन्नं स्यात् । अचेतनस्याप्रार्थ्यत्वात् । आगमनायोगाच्च । एवं 'विष्णुरुपांशु यष्टव्यो ऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाये'त्याद्यनुपपन्नं स्यात् । विष्णवे उपांशु यष्टव्यः प्रजापतये उपांशु यष्टव्यः अग्नीषोमाभ्यां उपांशु यष्टव्य इति वक्तव्यत्वात् । अग्नीषोमाभ्यामित्यव्ययवाच्याया देवताया एकत्वात् ।

यदपि विग्रहवती देवतेति पक्षे नानादेशीययज्ञेषु सान्निध्यासंभवचोदनं तदपि न । इन्द्रादिदेवानां ईश्वरानुग्रहासादितशक्त्या नानादेशेषु सान्निध्यसंभवात् । तदुक्तम् । 'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः । अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ता' इति ।

यदपि देवताया विग्रहवत्त्वपक्षे अग्न्यादिशब्दनियमो न स्यादिति । तदपि न । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । सूर्यो ज्योतिः ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोतीत्यादिवाक्ये अग्न्यादिशब्दघटितमन्त्रविशेषोच्चारणेन होमस्य विहितत्वेन ईषद्व्यत्यासे फलव्यत्यासप्रसङ्गेन वह्न्यादिशब्दस्यानुच्चार्यत्वात् । तदुक्तम् । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति ।

यदपि विग्रहादिमद्देवतासद्भावे प्रमाणाभाव इति । तदपि न । 'चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यामाविवेशे'ति अग्नेः, 'सहस्र-

शीर्षा पुरुषः सहस्राक्षः सहस्रपादि'ति विष्णोर्विग्रहादिमत्त्वश्रवणात् । एवमन्येषामपि श्रुतिसिद्धो विग्रहो बोध्यः । किं च 'अथ ह्यग्नयः समूदिरे । गार्हपत्योऽनुशशासे'त्यादौ अग्न्यादीनां वक्तृत्वादिकमुच्यते । तथा 'प्रयाजान्मे अनूयजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागमि'त्यादिना हविषो याचना श्रूयते । न चैतत्सर्वं विग्रहाभावे संभवति । अभिमतं च जैमिनेर्देवताया विग्रहादिमत्त्वम् । बादरायणेन 'मन्त्रादिष्वसंभवादनधिकारं जैमिनिरि'ति मन्त्रादिविद्यासु देवतानां अनधिकारं जैमिनिराहेत्यभिधानात् । न हि भवान् भगवदवताराज्जैमिनिगुरोर्बादरायणादपि अतिशयेन जैमिन्यभिप्रायज्ञः । येन त्वदुक्तं जैमिनिमतं स्यात् ।

यच्चोक्तं अर्थवादमन्त्राणां स्वार्थे तात्पर्याभाव इति । तदपि न । स्वार्थे तात्पर्याभावे यूपावहनीयाद्यसिद्धिप्रसङ्गात् स्वार्थतात्पर्याङ्गीकारे बाधकाभावाच्चेति ॥ **इति विग्रहाद्युपेतदेवतासमर्थनम् ॥**

**मणिकारस्तु** । विग्रहवर्ती देवतामङ्गीकृत्यापि अदृष्टावच्छिन्नस्यैव देवतात्वं नादृष्टशून्यस्येश्वरस्य देवतात्वम् । अदृष्टाभावेन हविःसंबन्धायोगात् । याऽपीयं ईश्वरायाहुतिः साऽपीशानायैव । ईशानस्तु ईशाद्भिन्न एव सादृष्ट इत्याह ।

तन्न ॥ 'कृष्णो मुक्तैरिज्यते वीतमोहैरि'ति । अदृष्टशून्यस्य कृष्णशब्दनिर्दिष्टस्येज्यत्वश्रवणात् । न चायं कृष्णः परमेश्वरादन्य एवेति वाच्यम् । प्रसिद्धार्थपरित्यागे कारणाभावात् । अदृष्टशून्यस्य हविःसंबन्धायोगो बाधक इति चेत् । न । अदृष्टशून्यस्य कारणत्वायोगेन जगत्कारणत्वाभावप्रसङ्गात् । अथ तत्प्रमाणबलादङ्गीक्रियते । हन्त तर्हि तत एव यज्ञभोक्तृत्वमप्यस्तु ॥ **इति सादृष्टस्यैव यज्ञभोक्तृत्वमिति मण्युक्तनियमभङ्गः ॥**

**श्रीरस्तु ॥ मणिकारस्तु मन्यते** । घटादिशब्दानां घटाद्यर्थेष्वेव शक्तिः । नान्वये । तस्यान्यलभ्यत्वात् । तथा हि । घटादिशक्तत्वेन ज्ञातं पदं स्वार्थस्मरणद्वाराऽऽकाङ्क्षादिसहकारिवशात् समभिव्याहृतपदार्थेन सह स्वार्थस्यान्वयमनुभावयति स्वभावादित्यन्यथैवान्वयज्ञानलाभान् किं शक्त्या । अन्वयमात्रशक्तावपि अन्वयविशेषार्थमाकाङ्क्षादेरवश्यमपेक्षणात् इति ।

तत्र वक्तव्यम् । किं पदानामन्वयानुभवायैवाकाङ्क्षादिकमपेक्षितम् । उत पदार्थानुभवायापि । नाद्यः । पदान्तरसमभिव्याहारात् प्राक् घटादिपदार्थानुभावकत्वप्रसङ्गात् । न च तदिष्टम् । पदार्थस्मरणद्वारेति तेषां स्मारकत्वाभिधानात् । द्वितीये अन्वयवत् पदार्थस्याप्यन्यलभ्यत्वात् पदार्थे शक्ति-

र्नान्वय इति वैजात्यकल्पनाऽयोगः । न च त्वन्मते पदार्थानुभवो अन्यः पदजन्यः, अन्यस्तु अन्वयानुभव इत्यस्ति । येन पदशक्त्यैव पदार्थानुभवस्य जातत्वात् पदार्थे शक्तिः, शक्तिं विनैवाकाङ्क्षादिसहकारिवशात् अन्वयबुद्धिः पदजन्येति नान्वये शक्तिरिति कल्पना स्यात् । न च पदेन पदार्थस्मृत्यर्थं पदार्थे शक्तिरङ्गीक्रियते इति वाच्यम् । धूमशब्दोच्चारणेन वह्नेः, घटमित्युच्चारणे आनयेतिशब्दस्य, हस्तिदर्शने हस्तिपस्य, छात्रदर्शने उपाध्यायस्य स्मृतिदर्शनेन, धूमादिशब्दानां वह्न्यादौ शक्तिप्रसङ्गात् । अथ तत्र शक्तिं विनाऽपि स्मारकत्वं, इहापि तथा संभवेन शक्तिकल्पनवैयर्थ्यम् । यद्यर्थानुभवाय शक्तिकल्पनं तर्ह्यन्वयेऽपि शक्तिकल्पनमवर्जनीयम् ।

अपि च गौः कर्मत्वमानयनं कृतिरिति वाक्यादप्यन्वयबोधः स्यात् । न चाकाङ्क्षादिसहकारिविरहादन्वयाननुभव इति वाच्यम् । गामित्युक्त्या प्रतीतार्थस्यैव गौः कर्मत्वमित्यनेनापि प्रतीतत्वात् आकाङ्क्षाद्यनुदये कारणाभावात् । ननु प्रत्ययेनैव गवि कर्मत्वोपस्थितिर्भवति न कर्मत्वमितिपदेनेति चेत् । अङ्गीकृतं तर्हि प्रत्ययस्यान्विताभिधाने शक्तिरिति । नन्वङ्गीक्रियत एवान्वयेऽपि शक्तिः । किं नामान्वयबोधे स्वरूपसती सा व्याप्रियते न तु ज्ञाता । पदार्थबोधे तु ज्ञाता व्याप्रियत इति चेत् । न । व्युत्पत्तिग्रहसमये, व्यवहारानुमिते इतरान्वितपदार्थज्ञाने पदस्य कारणताग्रहेण, तदुपपत्तये इतरान्वितेऽर्थे पदस्य शक्तेर्गृहीतत्वेन, अन्वयांशे स्वरूपसती व्याप्रियते, पदार्थांशे तु ज्ञातेत्युक्त्ययोगात् ।

यदत्रोक्तं प्रथमं अन्वये गृहीताऽपि शक्तिरग्रे परित्यज्यते । अन्यलभ्यत्वप्रतिसन्धानादिति । तत्र वक्तव्यम् । किमन्वये शक्त्यभाववेदनं तत्परित्यागः । आहोस्वित् केदारप्रविष्टगर्दभादीनां बहिर्निःसरणवत् निःसरणम् । न तावत् द्वितीयः । अशक्यत्वात् । नापि प्रथमः । विद्यमानायाः विदिताया अभाववेदनासंभवात् । अभाववेदनप्रयोजनाभावाच्च । न हि स्वरूपसदेव कारणं ज्ञातं चेदकारणं भवति । येन तदभाववेदनमर्थवत्स्यात् ।

यदपीतरान्वितस्वार्थे शक्त्यङ्गीकारे क्रियाकारकपदयोः प्रत्येकं इतरान्वितस्वार्थबोधकत्वेन वाक्यार्थद्वयधीप्रसङ्ग इति उक्तम् । तत्र वक्तव्यम् । घटमानयेत्यत्र घटपदेनेतरान्वितस्य घटस्य, आनयेतिपदेन च इतरान्वितस्यानयनस्य बोधः स्यादित्यापाद्यते । उत घटमितिपदेनानयनान्वितो घटः, आनयेतिपदेन च घटान्वितमानयनमिति बोधः स्यादित्यापाद्यते । नाद्यः । इष्टत्वात् । कथमन्यथा घटमिति श्रवणानन्तरं किमित्यन्वयप्रतियोग्याकाङ्क्षा स्यात् । सामान्यज्ञानाभावे विशेषजिज्ञासाऽयोगात् ।

न चेतरान्विते स्वार्थे शक्त्यङ्गीकारे इतरत्रापि शक्तिः प्राप्तेति क्रियाकारकादिपदानां पर्यायत्वं स्यादिति वाच्यम् । घटशब्दस्य घटत्वप्रतीतिजनकत्वेन तत्र शक्तत्ववत्, घटत्वशब्दस्य घटस्य भावो घटत्वमिति घटप्रतीतिजनकत्वेन घटे शक्तत्वेऽपि घटघटत्वशब्दयोरपर्यायत्वोपपत्तेः । न च घटपदस्य घटमात्रशक्तत्वेऽपि घटशब्दाद्धटे बोधिते आक्षेपात्क्रियासामान्यबोधे विशेषाकाङ्क्षेति युक्तम् । शब्दस्यैव तत्र व्यापारकल्पनयोपपत्तौ प्रमाणान्तरस्य तत्र व्यापारकल्पनायां गौरवात् । न द्वितीयः । क्रियाकारकपदगतयोः सामान्यतोऽन्वयाभिधानशक्त्योः संभूयैव विशेषान्वयाभिधान-सामर्थ्यं न केवलयोरित्यङ्गीकारात् । अत एव विशेषान्वयो वाक्यार्थः । सर्वपदशक्तिगम्यत्वात् । न क्रियाकारकसामान्यान्वयः एकैकपदबोध्यत्वात् । न हि संसर्गस्य यावत्पदशक्तिगम्यत्वातिरिक्त-वाक्यार्थत्वनियामकमस्ति । न चैवं विशेषान्वये शक्त्यङ्गीकारप्रसङ्गः । सामान्यबोधशक्त्यैव सह-कारिवशात् विशेषरूपेण बोधोपपत्तौ शक्त्यन्तरकल्पनावैयर्थ्यात् । तद्यथा वह्नित्वावच्छिन्नव्याप्त्या पक्षधर्मतावशात् विशेषबोधः । एवमिहापि क्रियापदेन कारकपदेन वा विशेषाकारेण प्रतियोग्युपस्थितेः पूर्वं क्रियाऽन्वितं कारकं कारकान्विता च क्रियेति बोध उपजायते । पदान्तरसमभिव्याहारेण तदुपस्थितौ तु प्रतियोगिविशेषालिङ्गित एव बोध उपजायते ।

किं च । यद्यन्वये शक्तिर्न स्यात् तर्हि अन्वयबोधाय पदप्रयोगो न स्यात् । यदत्रोक्तम् । अन्वयबोधार्थमेव पदानां पदार्थे शक्तिकल्पनात् अन्वयबोधाय पदप्रयोगो नानुपपन्न इति । तदपि न । अन्वयबोधार्थमन्वये शक्तेः कल्प्यत्वेन पदार्थे शक्तिकल्पनस्यायुक्तत्वात् । न हि देवदत्तस्य पीनत्वोपपत्त्यर्थं यज्ञदत्तस्य रात्रिभोजनं कल्पयन्ति । येनेह तथा स्यात् ।

यदपि चोक्तं पदं करणं पदार्थस्मरणमवान्तरव्यापारः । आकाङ्क्षादिसहकारिवशात् स्मारितार्था-न्वयानुभवः फलमिति । तदपि न । अनुभूयमानपदार्थान्वयानुभवस्यैव फलत्वेन स्मारितेतिविशेषण-वैयर्थ्यात् । किं च अन्वयस्य शब्दवृत्त्यविषयत्वे शाब्दत्वं न स्यात् । वृत्तिं विना शाब्दत्वा-निर्वाहात् । वृत्त्यविषयस्य शाब्दत्वे अतिप्रसङ्गात् ।

**पक्षधरस्तु** । अन्वये शक्तिः किं तत्स्मरणार्थमुतानुभवार्थम् । नाद्यः । संसर्गस्य पूर्वा-ज्ञातस्यैव भाने स्मरणाभावात् । नान्त्यः । विशेषणविशेष्यभानसामग्रीत एव तदनुभवसंभवात् । ज्ञायमानकरणे ज्ञानोपयोगिसंबन्धस्य स्वविषयप्रतियोगिसंसर्गबोधकत्वनियमात् । न हि वह्निप्रतियोगिक-

व्याप्तिवत् वह्निवैशिष्ट्यव्याप्तिरपि तद्बोधाङ्गम् । अपि तु सैव । तद्वदत्रपदार्थे शक्तिरेव तद्बोधिका । तद्विषयकत्वेनैव ज्ञाता तद्बोधिकेति यावत् । अतः सामान्यत एव तथासामर्थ्याच्छक्तिरूपसंबन्धेऽपि तथेत्याह ।

तदसत् । सामान्यलक्षणप्रत्यासत्त्या इतरान्वितानामेव सर्वव्यक्तीनामनुभूततया व्यक्तिवदन्वयस्यापि स्मरणोपपत्तेः । न चान्वयस्यापूर्वत्वाभावप्रसङ्गः । विशिष्याज्ञातत्वेनापूर्वत्वसंभवात् । अन्यथा संसर्गपदशक्तिग्रहवेलायां संसर्गत्वेन सर्वसंसर्गाणामुपस्थितत्वेनापूर्वत्वाभावप्रसङ्गो दुर्वारः स्यात् ।

यदपि विशेषणविशेष्यभानसामर्थ्यात एवान्वयानुभवसंभवात् न तदनुभवार्थमन्वये शक्तिरिति । तदपि न । विशेषणविशेष्यसंबन्धित्वेन ज्ञातयोः पदशक्त्योः अन्वयज्ञानजनकत्वायोगात् । अन्यथा घटसंबन्धित्वेन ज्ञातायाः शक्तेः तदन्यबोधकत्वप्रसङ्गो दुर्वारः । यदपि, 'ज्ञायमानकरणे ज्ञानोपयोगिसंबन्धस्य स्वविषयप्रतियोगिसंसर्गबोधकत्वनियमात् । न हि वह्निप्रतियोगिकव्याप्तिवत् वह्निवैशिष्ट्यव्याप्तिरपि तद्बोधाङ्गम् । अपि तु सैव । तद्वदत्र पदार्थशक्तिरेव तद्बोधिके'ति । तदपि न । व्याप्तेरपि वह्निवैशिष्ट्यसंबन्धितया ज्ञाताया एव वह्निवैशिष्ट्यबोधकत्वनियमात् । अन्यथा धूमेन पर्वतादौ वह्निसमवायसिद्धिः स्यात् । इयांस्तु विशेषः । व्याप्तिः साक्षात् वह्निसंबन्धितया प्रतीयते । साध्यतावच्छेदकसंबन्धेन तु परम्परयेति । एवं च पदशक्तेरपि पदार्थतदन्वयोभयसंबन्धित्वेन ज्ञाताया एवोपयोग इति उभयसंबन्धित्वेन ज्ञानमावश्यकमिति ॥ छ ॥ **इति मण्युक्तपदार्थमात्रशक्तिभङ्गः ॥**

**अत्र प्राभाकराः** । पदानां जातावेव शक्तिः न व्यक्तौ व्यक्तीनामानन्त्येन शक्तिग्रह एव पुरुषायुषपर्यवसानप्रसङ्गात् । किं च गोशब्दोच्चारणे योऽर्थो नियमेन दृश्यते स तत्र शक्त इति वक्तव्यम् । अन्यथा गोशब्दोच्चारणसमये पटादीनामपि सद्भावेन तत्र शक्तिग्रहः स्यात् । न च तथास्त्वीत्यव्यभिचारिणि शक्तिग्रहो वक्तव्यः । न च व्यक्तेरव्यभिचारोऽस्ति । गोशब्दोच्चारणसमये कदाचिच्छुक्लायाः, कदाचित्कृष्णायाः, कदाचित्पिङ्गलायाः, कदाचित्कपिलायाः, दर्शनेन कस्या अपि व्यक्तेरव्यभिचाराभावात् । किं च व्यक्तिमात्रस्य गोशब्दार्थत्वे गां दद्यादिति शास्त्रस्य सर्वगोप्रदानमर्थः स्यात् । ततश्चाशक्यानुष्ठेयार्थत्वेन वाक्यमनुपादेयं स्यात् । प्रत्येकं गोशब्दशक्तिपर्यवसानात् गोप्रदानस्य नाशक्यानुष्ठानत्वमिति चेत् । न । शक्तिग्रहासंभवानिस्तारात् । एवं सर्वथा व्यक्तिशक्तिपक्षासंभवात् जातिशक्तिपक्ष आश्रयणीयः । जातेरेकत्वेन शक्तिग्रहसंभवात् । जातिवाचकेन पदेन एकैकव्यक्तेरुपस्थित्या गां दद्यादित्यादिशास्त्रस्य अशक्यानुष्ठानार्थत्वप्रसङ्गाभावाच्च । न च घटादिशब्दानां

जातिमात्रे शक्त्यङ्गीकारे, सर्वशब्दानां साङ्कर्यापत्त्या जातीनामानन्त्येन शक्तिग्रहासंभवाच्च, जातिविशेषे शक्तिर्वक्तव्या। जातौ च विशेषो व्यक्तिरेवेति नागृहीतविशेषणान्यायेन व्यक्तौ शक्तिरापततीति वाच्यम्। जातेः स्वत एव व्यावृत्तत्वेन व्यक्तीनां जातिव्यावर्तकत्वरूपजातिविशेषत्वाभावात्। अन्यथा इतरव्यावृत्ता व्यक्तिर्जातिव्यावर्तिका। इतरव्यावृत्ता च जातिर्व्यक्तिव्यावर्तिकेति अन्योन्याश्रयः स्यात्। अत एव किञ्चिद्वस्तु स्वत एव विलक्षणमित्याहुः। न च व्यक्तिबोधकाभावात् व्यक्त्यलाभः। जातिशक्तत्वेन विज्ञातस्यैव पदस्य व्यक्तिबोधकत्वात्। न च व्यक्तौ शक्त्यभावे व्यक्तिबोधकत्वं निर्वोढुमशक्यमिति वाच्यम्। सर्वथा व्यक्तौ शक्तेर्नैत्यनङ्गीकारात्। किं तु जाताविव व्यक्तौ शक्तिर्ज्ञाता नोपयुज्यते। जातिशक्तित्वेन ज्ञानमात्रेणैव समानसंवित्संवेद्यतया व्यक्तिबोधसंभवे व्यक्तिशक्तत्वेन ज्ञानस्याप्युपयोगाङ्गीकारे गौरवादिति।

तन्न। गोशब्दोच्चारणे व्यक्तिबोधाभावप्रसङ्गात्। व्यक्तावपि शक्तिसद्भावात् बोध इत्युक्तमिति चेत् सत्यमुक्तम्। दुरुक्तं तत्। ज्ञाताया एव शब्दशक्तेः शब्दसहकारित्वेन स्वरूपसत्यास्तदसहकारित्वात्। अन्यथा शक्तिग्रहशून्यस्यापि बालस्य शाब्दबोधप्रसङ्गः। न सर्वथाऽज्ञाता शक्तिः शब्दसहकारिणी किंतु जातिविषयत्वेन विज्ञातेति चेत् एवं तर्हि जातिबोध एव स्यान्न व्यक्तिबोधः। शक्तेर्व्यक्तिसंबन्धितया अज्ञातत्वात्। जातिशक्तिज्ञाने व्यक्तिशक्तिज्ञानं विना व्यक्तिबोधविलम्बाभावाद् तज्ज्ञानमतन्त्रमिति चेत्। न। गोगोत्वशब्दयोः पर्यायत्वभ्रमवतः व्यक्तिशक्तिज्ञानविलम्बप्रयुक्तव्यक्तिबोधविलम्बदर्शनात्। यावद्गोव्यक्तिषु नानुगतं गोत्वं नामास्तीति मन्यमानानामाविपालगोपालानां व्यक्तिधीर्न स्यात्। न ह्याविपालाः सर्वगोषु रज्जुरिवानुगता जातिरस्तीति मन्यन्ते। येन तत्र शब्दशक्तिं गृहीत्वा शब्दादर्थं जानीयुः। अत एव व्यक्तिग्रहासंभवोऽपि परास्तः। न ह्यनुभवसिद्धस्य सार्वजनीनस्य शक्तिग्रहस्यासंभवो नामास्ति। किं नाम तदुपपत्तये कारणं मृग्यम्। न तु तस्यैवापलापः कार्यः। अन्यथा धूमाग्न्योः व्याप्तिग्रहासंभवात् वह्निना स्वरूपसती वह्नित्वेन तु विज्ञाता व्याप्तिरनुमितिहेतुरिति स्यात्। किं च यदि सर्वथा न व्यक्तिषु शक्तिग्रहसंभवः। तर्हि व्यक्तौ शक्तिरिति रिक्तं वचः। न ह्यज्ञायमानशक्तिसद्भावे किञ्चिन्मानम्। येन त्वद्वाक्यं रिक्तं न स्यात्। किं च गोत्वशब्दादिव गोशब्दादपि प्राधान्येन जातिबोधः स्यात्। गोगोत्वशब्दयोः जातिशक्तिसाम्ये तत्साध्यबोधवैचित्र्यायोगात्।

अपि च गोशब्दाद्गोविशेष्यको बोधो न स्यात्। न हि संभवति यत्संबन्धितया शक्तिर्विज्ञाता तमप्राधान्येन बोधयति यत्संबन्धितया न ज्ञाता तं प्राधान्येन बोधयतीति। एतेन जातिशक्तिज्ञाना-

जातिर्धार्मेभवन्ती व्यक्तिमपि विषयीकरोति । व्यक्तिं विना जातेरज्ञानात् । यो येन विना न भासते तद्धीहेतुस्तेन सहैव बोधयति । यथा ज्ञानर्धीहेतुस्तद्विषयम् । तस्माज्जातिज्ञानार्थं क्लृप्ता शक्तिः व्यक्तिमपि बोधयत्येकवित्तिवेद्यतानियमात् इति परास्तम् । जातिविशेषणकव्यक्तिविशेष्यकबोधस्या-निर्वाहात् । न हि जातिशक्ततया विज्ञातो गोत्वशब्दः व्यक्तिं विना जातिर्न भासत इति जाति-विशेषणकव्यक्तिविशेष्यकबोधमुपजनयति । येन गोशब्दस्तथाविधं बोधमुपजनयेत् । न च व्यक्तिशक्तिपक्षे गां दद्यादित्यादिशास्त्रस्याशक्यानुष्ठेयार्थता । एकस्या एव गोपदशक्तेः परमते गोत्वस्येव प्रतिव्यक्ति-पर्यवसानाङ्गीकारात् । न च तावता नानार्थता । शक्तिभेदानङ्गीकारात् । सैन्धवादिशब्दानां नानार्थत्वे शक्तिभेदस्यैव प्रयोजकत्वात् । कथमन्यथा सैन्धवशब्दात् विचित्रबोधः । कार्यवैजात्यस्य कारण-वैजात्याधीनत्वात् । अन्यथा त्वत्पक्षेऽपि गवादिशब्दानां नानार्थत्वप्रसङ्गो दुष्परिहरः । त्वयाऽपि अनन्तासु व्यक्तिषु शक्तेरङ्गीकृतत्वात् ॥ छ ॥ **इति प्राभाकरोक्तशक्तिभङ्गः ।**

**भाट्टास्तु मन्यन्ते ।** गौरित्यादिशब्दानां जातावेव शक्तिः । न तु व्यक्तिषु । व्यक्ती-नामानन्त्येन शक्तिग्रहासंभवात् । व्यभिचारादपि शक्तिग्रहासंभवो बोध्यः । किं च व्यक्तिशक्तिपक्षे शक्त्यानन्त्यं प्रसज्यते । अन्यथा गामित्युच्चारणे सर्वव्यक्त्युपस्थितिः स्यात् । ततश्च एकत्वा-नन्वयप्रसङ्गः । बहुष्वेकत्वाभावात् । सर्वे च गोशब्दादयः त्रिशब्दवत् बहुवचनान्ताः प्रसज्येरन् । सर्वत्र शौक्ल्याभावात् शुक्लो गौरिति विशेषणविशेष्यभावो न स्यात् । पशुना यजेतेति शास्त्रार्थस्यानुष्ठातुमशक्यत्वात्तदप्रामाण्यापत्तिः । न चैकस्यैव जातिशक्त्योपपत्तौ अनन्तशक्ति-कल्पना युक्ता । शक्त्यानन्त्याङ्गीकारेऽपि गोशब्दान्निर्विकल्पकबोधो दुर्वारः । गोत्वोपलक्षितेषु शक्तिग्रहाङ्गीकारेऽपि निर्विकल्पकबोधप्रसङ्गो दुर्वारः । यदि कश्चिदपवरकस्थितं अक्षत्रयं तत्स्थित्योपलक्ष्य कं चिदाह य एतेऽपवरकस्थितास्त अक्षशब्दाभिधेया इति । तत्र यद्यपि व्युत्पत्तिसमये अपवरकस्थितिर्नामिकं उपलक्षणं लभ्यते । तथाऽपि व्यवहारसमये उपलक्षणं परित्यज्यैव शब्दस्यार्थबोधकत्वदर्शनात् । गोत्वविशिष्टेषु शक्त्यङ्गीकारे तु गोत्वे शक्तिरापन्ना । ततश्च नयेवोपपत्तौ न व्यक्तिशक्तिकल्पना युक्ता । व्यक्तिशक्त्यभावे कथं व्यक्तिलाभ इति चेत् । पदेन जातिबोधे तदत्यन्ताविनाभूतव्यक्तेः सिद्धिर-विनाभावबलेनैवेति ब्रूमः । किं च गोशब्दे उच्चारिते व्यक्तिषु संशयो भवति । न कस्यां चिन्निर्णयः । यत्र संशयो न तस्याभिधेयता । शब्दस्य निश्चयजनकत्वात् । सामान्यं तु निर्णीयत इति भवत्यभिधेयम् । किं च विचित्राः खण्डमुण्डाद्याः व्यक्तय इति विचित्रा गोशब्दोच्चारणे बुद्धिः

स्यात् । एकाकारा तूत्पद्यते । अतोऽभिधेया जातिः । ननु कथं तर्हि 'व्रीहीनवहन्ति । व्रीहीन्प्रोक्षति । पशुं संज्ञपयन्ति । सोममभिषुणोति । सोमेन यजेत । पशुना यजेत । व्रीहिभिर्यजेते'त्यादिवाक्यबोधितकर्मत्वकरणत्वाद्यन्वयबोधः स्यात् । जातेरयोग्यत्वादिति चेत् । न । जातेरमूर्तत्वेऽपि व्यक्तिपरिच्छेदकत्वेन करणत्वान्वयसंभवात् । कर्मत्वाधिकरणत्वसंप्रदानत्वादिकं तु व्यक्त्यभेदं लक्षणां वाऽऽश्रित्य समर्थनीयम् । उक्तं हि । तेन 'तल्लक्षितव्यक्तशक्तेः क्रियासंबन्धचोदना । जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षित' इति । ततश्च व्यक्तिशक्तिपक्षे बाधकसद्भावात् । जातिपक्षे साधकसद्भावात् । बाधकाभावाच्च जातिरेव वाच्या न व्यक्तिरिति ।

तन्न । अविपालगोपालादिभिर्व्यक्तावेव शक्तेर्गृहीतत्वेन व्यक्तौ शक्तिग्रहासंभवाभावात् । जानाति हि सर्वोऽपि जनः यावान् सास्नादिमान् पिण्डः अतीतः अनागतः स सर्वोऽपि गोशब्दवाच्य इति । तथा व्यवहारात् । न च व्यक्तिशक्तिग्रहस्यासंभावितत्वे सर्वोऽपि सास्नादिमान् पिण्डः गोशब्दवाच्य इति विज्ञानं संभवति । अन्यथा व्यक्तिशक्तिनिराकरणवैयर्थ्यं स्यात् । अप्रसक्तनिषेधायोगात् । न हि व्यक्तिशक्तिग्रहस्य सर्वथाऽसंभवे व्यक्तिशक्तिप्रसक्तिरस्ति । भ्रान्त्या व्यक्तिशक्तिप्रसक्तिरस्तीति चेत् । तत् किं व्यक्तौ कस्यचित् शक्तिभ्रमोऽङ्गीक्रियते । अद्धेति चेत् । किं प्रमयाऽपराद्धम् । आनन्त्यव्यभिचारयोर्ज्ञानप्रतिबन्धकत्वस्य त्वयैव त्याजितत्वात् । उत्पन्नस्य ज्ञानस्य विषयबाधाभावेन प्रमात्वसंभवात् ।

यदपि चोक्तम् । शक्त्यानन्त्यप्रसङ्ग इति । तदपि न । एकस्या एव जातेः प्रतिव्यक्ति पर्यवसानवत् एकस्या एव शक्तेः प्रतिव्यक्तिपर्यवसन्नत्वात् एकैकबोधसंभवेन शक्त्यानन्त्यस्याकल्प्यत्वात् । न च गोशब्दस्य सर्वव्यक्तिविषयकैकशक्त्यङ्गीकारे गामितिसकृदुच्चारणे सर्वव्यक्त्युपस्थितिः स्यादिति वाच्यम् । प्रत्यर्थं शब्दनिवेशाङ्गीकारात् । ततश्च एकस्य शब्दस्योच्चारणे एकस्या एव व्यक्तेः लाभः न तु व्यक्त्यन्तरस्य ।

कथं तर्हि गाव इति बहुवचनान्तशब्दोच्चारणे बहुव्यक्तिलाभ इति चेत् । न । अनेकशब्दत्वात् । गाव इति नैकः शब्दः । किं तु गौश्च गौश्च गौश्चेत्येनेकशब्दानामेकशेषः । ततश्चानेकस्थानापन्नो बहुवचनान्तः शब्दः अनेकोपस्थापको भवति । उक्तं च, महाभाष्ये । 'प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् । प्रत्यर्थं शब्दाः अभिनिविशन्ते । किमिदं प्रत्यर्थमिति । अर्थमर्थं प्रति प्रत्यर्थम् ।

प्रत्यर्थं शब्दनिवेशादेतस्मात्कारणान्नैकेन शब्देनानेकस्यार्थस्याभिधानं प्राप्नोति। तत्र को दोषः। तत्रानेकार्थाभिधाने, नैकशब्दत्वम्। तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्नोति। इष्यते चैकेनापि अनेकस्याभिधानं स्यादिति। तच्चान्तरेण यत्नं न सिध्यति। तस्मादेकशेष इति।'

ननु यदि प्रत्यर्थं शब्दनिवेशः। तर्हि 'पशुना यजेत' 'न सुरां पिबेत्' 'ब्राह्मणो न हन्तव्य' इत्यादिवाक्यान्तर्गतपश्वादिशब्दाः एकमेवार्थं वदेयुः। तेषामेकशेषाभावेनानेकशब्दस्थानापन्नत्वा-भावात्। ततश्च एकस्यैव यज्ञः साङ्गः स्यात्। अन्यस्य तु विध्यनुशिष्टपश्वभावेन साङ्गो न स्यात्। तथैकां सुरामपीत्वा एकं ब्राह्मणमहत्वा कृती स्यात्। सुरान्तरपानस्य ब्राह्मणान्तरवधस्य चानिषेधात् इति चेत्। उच्यते। पशुना यजेतेतिश्रुतिस्तावत् एकमेव पशुं यज्ञसाधनत्वेनाभिधत्ते। प्रयोगसमये एकस्यैव पशोरुपादानदर्शनात्। किं नाम नैकदैकमधिकृत्य प्रवृत्ता। अपि तु सर्वानधिकृत्यास-कृत्प्रवृत्ता। ततश्च पुनः पुनः प्रवृत्ता पुनः पुनरभिदध्यात्। अयमेव हि प्रत्यर्थं शब्दनिवेशः। यदेकदा प्रवृत्तः एकमर्थं, पुनः पुनः प्रवृत्तौ पुनरन्यमन्यमर्थमभिदध्यादिति। न सुरां पिबेदित्यादावपि सुरादयः शब्दाः नैकैकशब्दाः किं तु अनेकस्थानापन्नाः। या या सुरा सा न पेया। यो यो ब्राह्मणः स न हन्तव्य इत्याद्यर्थे न सुरां पिबेदित्यादेः प्रवृत्तत्वात्। अवश्यं चैतदेवं विज्ञेयम्। अन्यथा गर्गाः शतं दण्डयन्तामित्यादाविव समुदाये वाक्यपर्याप्तिः स्यात्। ततश्च तत्र यथा गर्गकुलसमुदाये शतदण्डः पर्यवसन्नः। तथाऽत्रापि समुदायस्यैव हननादिनिषेधः स्यात्। न त्वेकस्येति। अत एव पशुना यजेतेति शास्त्रस्याप्रामाण्यापत्तिरिति परास्तम्।

यदपि व्यक्तिशक्तिपक्षे गोशब्दान्निर्विकल्पकबोधः स्यादिति। तदपि न। जातिविशिष्टव्यक्तौ शक्त्यङ्गीकारात्। यदपि जातिशक्त्यैवोपपत्तौ न व्यक्तिशक्तिकल्पना युक्तेति। तन्न। जातिशक्तेः व्यक्तिबोधानुपपादकत्वात्। जातिशक्तात् पदात् जातिबोधे तदत्यन्ताविनाभावबलात् व्यक्तिबोध इत्युक्तमिति चेत्। अत्र वक्तव्यम्। किं व्यक्तेरविनाभावबलात् शब्दानुल्लेखिनी व्यक्तिधीर्भवती-त्युच्यते। उत गौरितिशब्दोल्लेखिनी धीर्भवतीति। नाद्यः तदनन्तरं गौरानीतेत्यादिव्यवहाराभाव-प्रसङ्गात्। अतच्छब्दोल्लेखिन्या बुद्धेस्तच्छब्दोल्लेखिव्यवहाराकारणत्वात्। न द्वितीयः। शब्दस्य व्यक्त्यसंबन्धित्वेन नियमेन तदुल्लेखिबुद्ध्युदये कारणाभावात्। अन्यथा धूमशब्दात् धूमे विज्ञाते अविनाभावबलेन जाताया वह्निबुद्धेरपि धूमशब्दोल्लेखित्वं स्यात्। जातिव्यक्त्योरविनाभावोऽप्यसिद्धः। यत्र गोत्वं तत्र गौरिति यदा गोत्वं तदा गौरिति दैशिकस्य कालिकस्य वा असामानाधिकरण्य-व्यभिचाराभ्यां निरूपयितुमशक्यत्वात्।

अथ मतं, गोत्वं व्यक्त्याश्रितं जातित्वात् । या जातिः सा व्यक्त्याश्रिता । यथा घटत्वमित्यनुमानेन पक्षधर्मताबलात्, अर्थापत्तेर्वा व्यक्तिविशेषसिद्धिरिति । तन्न । अनुमानबलेन जातेर्व्यक्त्याश्रितत्वबोधलाभेऽपि व्यक्तेर्गोत्वप्रकारकबोधालाभात् । व्यक्तेरानयनान्वयाभावप्रसङ्गाच्च । व्यक्तेर्जात्यन्वितत्वात् । न हि राजपुरुषमानयेत्यत्र पुरुषान्वितस्य राज्ञः क्रियाऽन्वयो भवति । येनेह तथा स्यात् । न च जात्यानयनमेवेष्टं व्यक्त्यानयनं तु लम्बकर्णमानयेत्यादौ कर्णयोरिवावर्जनीयतया भवतीति वाच्यम् । अनभिमतव्यक्त्यानयनेनापि कृतार्थत्वप्रसङ्गात् । मन्वादिप्रलयेषु व्यक्तिं विनाऽपि जातेः सत्त्वात् । अनुपपत्त्यभावेनार्थापत्तेरप्यनवकाशात् । गोत्वमित्युच्चारणे व्यक्तिबोधप्रसङ्गाच्च ।

**मण्डनमिश्रस्तु** । जातिवाचकाद्गोशब्दात् लक्षणया व्यक्तिबोध इत्याह । तदुक्तम् । 'जातावस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति । नित्यत्वाल्लक्षणीयायाः व्यक्तेस्ते हि विशेषणे' इति । तन्न । मुख्यार्थानुपपत्तिप्रतिसन्धानपुरःसरं बोधाभावात् । गोशब्दात् प्राधान्येन जातेरबोधाच्च । गोशब्दस्य गवीव जातौ बहुलप्रयोगाभावाच्च ।

**मणिकारस्तु** । स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा । तीरत्वेन ज्ञाते गङ्गापदस्येव । न चेह गोत्वादन्येन रूपेण व्यक्तिरुपस्थितिः किन्तु गोत्वेनैव । व्यक्तित्वेन सास्नादिमत्त्वेन वोपलक्ष्यत्वे गोपदाद्व्यक्तित्वादिरूपेण धीः स्यात् इति दूषणमाह । तन्न । लक्षणायां स्वार्थसंबन्धितया लक्ष्यार्थविज्ञानस्यैव प्रयोजकत्वेन स्वार्थादन्येन रूपेण ज्ञानस्याप्रयोजकत्वात् । अन्यथा तीरत्वे घोष इति वाक्यात् तीरे घोष इत्यन्वयबोधो न स्यात् । स्वार्थादन्येन रूपेण तीरस्यानुपस्थितत्वात् । यदपि गोशब्दे उच्चारिते व्यक्तिषु संशयो भवति न कस्यचिन्निर्णयः । यत्र च संशयः न तस्याभिधेयता । शब्दस्य निश्चयजनकत्वात् । सामान्यं तु निर्णीयत एवेति भवत्यभिधेयमिति । तदपि न । व्यक्तिसंदेहाभावात् । न हि गौरस्तीत्युक्त्यनन्तरमपि व्यक्तिरस्ति न वेति संदेहो दृश्यते । येन व्यक्तेरनभिधेयत्वं स्यात् । व्यक्तिविशेषसंदेहो दृश्यत इति चेत् । दृश्यताम् । न नो हानिः । न ह्यस्माभिः विशेषरूपेण व्यक्तिर्वाच्याऽभ्युपगता । किं तु सामान्यरूपेणैव शब्दशक्त्या । ततो गोशब्दात् गोत्वावच्छिन्ना व्यक्तिरस्तीति निर्णयो भवति । न तु व्यक्तिविशेषनिर्णयः । ततः विशेषसंदेहो नानुपपन्नः । अन्यथा धूमाद्वह्निनिश्चयानन्तरमपि तृणपर्णजन्यवह्निसंदेहदर्शनात् न धूमस्य वह्निव्यक्त्या व्याप्तिः । अपि तु वह्नित्वेनैवेति स्यात् ।

किं च अत्र गौरस्तीतिवाक्यश्रवणानन्तरं भूतले गोव्यक्तिविशेषसंशयवत् गोत्वसामान्यव्यतिरेक-निश्चयसद्भावात् सामान्यं वाच्यमित्ययुक्तं स्यात्। एतेन व्यक्तीनां वैचित्र्यात् गोशब्दोच्चारणेऽपि विचित्रा बुद्धिः स्यादिति परास्तम्। खण्डत्वादिप्रकारे शक्त्यभावेन तद्बोधप्रसक्तेरभावात्। 'व्रीहीनवहन्ति व्रीहीन् प्रोक्षति' 'सोमेन यजेत' व्रीहिभिर्यजेते'त्यादिवाक्यबोधितकर्मत्वकरणत्वाद्यन्वयानुपपत्तिश्च जाति-शक्तिपक्षे। यदत्रोक्तं जातेः द्रव्यपरिच्छेदकतया करणत्वान्वयः संभवति। कर्मत्वाद्यन्वयस्तु जातावसंभवात् जातिवाचकपदलक्षितव्यक्तावेव, जातिव्यक्त्योरभेदविवक्षया जातावेव वा संभवतीति। तन्न। व्यक्तावेव शक्त्यङ्गीकारेण कर्मत्वकरणत्वादीनां मुख्यान्वयसंभवे जघन्यपक्षाश्रयणस्यायुक्तत्वात्। अमूर्तस्य द्रव्यपरिच्छेदे करणत्वान्वयवत् कर्मत्वाद्यन्वयस्यापि वक्तुं शक्यत्वेन वैजात्यकल्पनाऽयोगाच्चेति।
**इति भाट्टोक्तजातिमात्रशक्तिभङ्गः ॥**

ननु व्यक्तिशक्तिपक्षे व्यक्तीनामानन्त्येन शक्तिग्रहासंभवात् अज्ञातायाः शक्तेः शब्दसह-कारित्वाभावात् न शब्दो बोधकः स्यात् इति चेत्। न। वृद्धव्यवहारोपदेशोपमानादीनां शक्तिग्रह-कारणानां सद्भावेन शक्तिग्रहासंभवाभावात्। न च तेषां शक्तिग्रहहेतुत्वे विवदितव्यम्। व्युत्पादकैः सार्वत्रिकव्युत्पत्तिजननाय उपदेशोपमानादीनां उपादानात्। न हि यदर्थं प्रेक्षावन्तो यदुपाददति न तत्साधनमिति संभवति। मृत्पिण्डादीनां घटादिकारणत्वाभावप्रसङ्गात्। कतिपयव्यक्तिविषयाणां उपदेशादीनां कथं सार्वत्रिकव्युत्पत्तिग्रहहेतुतेति चेत्। अनुभवसिद्धे व्युत्पत्तिहेतुत्वे काऽनुपपत्तिशङ्का। अन्यथा आतंचनादेः क्षीरादीनां दध्यादिभावहेतुता कथमिति पृष्टो भवान् व्याचष्टाम्। अनुभवसिद्धे कार्यकारणभावे न प्रश्नो युक्त इति चेत्। मोच्चैर्वोचः। परोऽपि श्रोष्यति। तस्मादकामेनापि गोमयादेर्वृश्चिकादिहेतुत्ववत् ईश्वरशक्त्यैव कतिपयविषयाणामुपदेशादीनां सार्वत्रिकशक्तिग्रहहेतुत्वमनु-भवसिद्धमभ्युपगन्तव्यम्।

अयमत्र विवेकः। प्राथमिकव्युत्पत्तिः वृद्धव्यवहारेणोपदेशेन वा जायमाना न सर्वोपसंहारेण भवति। किं तु यां व्यक्तिं स्पृष्ट्वा गौरिति उपदिशति। तत्रैव वाच्यवाचकभावसंबन्धं गृह्णाति। पुनर्व्यक्त्यन्तरे चोपदेशे जाते तामपि गोशब्दवाच्यां प्रत्येति। पूर्वगृहीतं शुक्लत्वाद्यवच्छेदकं व्यभिचारादपोह्यानुगतं पशुत्वादिसादृश्यमवच्छेदकमवगच्छति। पुनरश्वादिषु नायं गौरिति निषेधं पश्यन् पूर्वगृहीतं पशुत्वादिसादृश्यमपोह्य लक्षणभूतं गोत्वेन सादृश्यं शक्त्युपधानमवगच्छति। ततश्च अयं गौरित्युपदेशवाक्यस्यायमेतत्सदृशाश्च गोशब्दवाच्या इति व्याप्तिपरत्वं अवगच्छति। ततो यं

अनुभूतपिण्डसदृशपिण्डं पश्यति तं सादृश्यलिङ्गेन गोशब्दवाच्यं प्रत्येति । तदुक्तं 'शक्तिः सादृश्यगा यत' इति । प्रमाणपद्धतावपि 'समयप्रतिपत्तौ सादृश्यमुपधानमित्याचार्या' इत्युक्तम् । एतदेव हि शक्तेः सादृश्यगत्वम् । यत्तद्व्यापकतया तदधीनप्रतीतिकत्वम् । तथा समयप्रतिपत्तौ सादृश्यस्योपधानत्वमपि व्याप्यतया तज्ज्ञानजनकत्वमेव नान्यत् । एवं कतिपयव्यक्तिव्युत्पत्त्यनन्तरं प्रतिपत्त्राऽनुसंधीयमानं अयं गौरित्युपदेशवाक्यं कतिपयव्यक्तिव्युत्पत्तिलक्षणसहकार्याहितशक्त्यन्तरं, दावदहनेन आहितशक्त्यन्तरं वेत्रबीजं कदलीकाण्डमिव, सर्वोपसंहारेण शक्तिज्ञानं जनयति । यदा तु वृद्धव्यवहारेण व्युत्पद्यते तदाऽपि आदावेकत्रैव व्युत्पद्यते अनन्तरं भूयो भूयोव्यवहारदर्शनात् बहुषु गोपिण्डेषु व्युत्पद्यते । तदनन्तरं पुनर्व्यवहारदर्शने कतिपयव्यक्तिषु व्युत्पत्तिग्रहाहितशक्त्यन्तरो वृद्धव्यवहारः सर्वोपसंहारेण शक्तिज्ञानमुपजनयति । सर्वव्यक्त्युपस्थितिश्च अनुभूयमानगोगतगवान्तरप्रतियोगिकसादृश्यलक्षणसहकार्याहितशक्त्यन्तरेण प्रत्यक्षेण भवति । यथा योगजधर्माहितशक्त्यन्तरेण योगीन्द्रियेणातीतानागतसर्ववस्तुज्ञानम् । न चैवं सति अन्यविषयकवृद्धव्यवहारादेः अन्यत्र व्युत्पत्तिग्रहहेतुत्वासंभवशङ्का भवति । कतिपयलक्ष्यविषयकस्य धनुर्विद्याऽभ्यासस्य हस्ते सार्वत्रिकलक्ष्यवेधोपयोगिशक्त्यन्तराधायकत्वदर्शनात् । न हि यल्लक्ष्यं विध्वा विध्वाऽभ्यसति युद्धकाले तल्लक्ष्याभावात् लक्ष्यं शत्रुं न विध्यति । नापि स्रुघ्नात्पाटलिपुत्रमहरहर्गच्छन् पदातित्वेन गमनाभ्यासवान् अनभ्यासान्मथुरां न गच्छतीति दृष्टचरम् । येनान्यविषयकस्य वृद्धव्यवहारादेः कार्यकारित्वं न स्यात् ।

ननु गवादिशब्दानां व्यक्तिमात्रवाचित्वे कथं गवादिशब्दस्य व्यक्तिविशेषे प्रयोगः । कथं वा तेन तत्प्रत्यय इति चेत् । न । शक्तेः प्रतिव्यक्तिपर्यवसन्नत्वात् । प्रयोक्त्रा व्यक्तिविशेषे प्रयुज्यते । तत्र प्रयुक्तश्च शब्दः तस्यैव बोधं जनयति नान्यस्य । तद्यथा उग्रपुत्रः उग्रं धनुरधिज्यं कृत्वा यं हन्तुमिच्छति तस्मिन् शरं निक्षिपति । स च तमेव हिनस्ति नान्यम् । एवं व्यक्तिविशेषे प्रयुक्तो गोशब्दः गोत्वेन रूपेण व्यक्तिविशेषबोधमुपजनयतीति सुवचत्वात् । न चैवं गोशब्दे उच्चारिते व्यक्तिविशेषसंदेहो न स्यात् । शब्देनैव तस्य ज्ञातत्वात् इति वाच्यम् । गोत्वेन रूपेण ज्ञातत्वेऽपि गोविशेषत्वेनाज्ञातत्वात् संशयोपपत्तेः । इदंत्वेन पुरोवर्तिनिश्चयेऽपि स्थाणुर्वा पुरुषो वेति संशयदर्शनात् । गोशब्दात्सामान्याकारेण व्यक्तिविशेषस्यैव बोधो भवतीत्ययुक्तम् । 'गोशब्दात् भवत्येव सर्वगोप्रतिपत्तिः । किं तु लिङ्गप्रकरणादिबलात् । पिण्डविशेषे कार्यप्रतिपत्तिरि'ति सुधाविरुद्धत्वात् इति चेत् । मैवम् । भावानवबोधात् । न हि गोशब्दात् सर्वगोप्रतिपत्तिर्भवतीति सुधाऽभिप्रायः । येन तद्विरोधः । किं नाम गोशब्दाद्गोत्वेन रूपेण व्यक्तिविशेषोपस्थितौ खण्डमुण्डादिगोषु गोशब्दशक्ति

जानतः अनुभूतानां गवां स्मरणे, निर्णायकाभावात् किं खण्डो गौरनेनोक्तः किं मुण्डो गौः उतान्ये इति तादात्म्यावगाहिनी संशयरूपा प्रतिपत्तिर्भवतीत्याशयः । अवश्यं चैतदेवं विज्ञेयम् । गामानयेति शब्दरूप-करणस्य व्यक्तिविशेषविषयत्वात् । न ह्यन्य एव करणविषयः, अन्य एव फलीभूतज्ञानविषय इति संभवति । अतिप्रसङ्गात् । वाक्यस्यैव सर्वगोव्यक्तिविषयकत्वे अप्रामाण्यप्रसङ्गः । अर्थस्य बाधितत्वात् । शब्दस्य वक्तृविवक्षितार्थबोधकत्वादेव गङ्गायां घोष इति वाक्यात् गङ्गामपहाय तीरस्यैव घोषान्वयप्रतीतिः । अन्यथा वक्तृतात्पर्यविज्ञानेऽपि मुख्यार्थबाधदर्शनेऽपि प्रवाहे घोष इत्येव प्रतीतिः स्यात् । ततश्च वाक्यप्रयोगवैयर्थ्यं स्यात् । स्वाभिमतार्थबोधकत्वात् । तथा शुक्लां गामानयेति वाक्ये गोशब्देन यावद्व्यक्त्युपस्थित्यङ्गीकारे शुक्लपदेनापि गोपदवत् वक्तृविवक्षामतिक्रम्य गोतदितरयावच्छुक्लोपस्थितिः स्यात् । ततश्च इतरव्यावृत्ततया गोप्रतिपत्तिर्न स्यात् इति । **इति शब्दस्य व्यक्तिग्रहे बाधकोद्धारः ॥**

**मणिकारस्तु मन्यते ।** गोत्वसामान्यलक्षणया प्रत्यासत्त्या ज्ञाते सर्वत्र गवि गोत्वमादाय शक्तिग्रह इति । तन्न । शक्तिग्राहकस्य वृद्धव्यवहारस्य, शृङ्गे कर्णे वा गृहीत्वा अयं गौरिति उपदेश-वाक्यस्य च असार्वत्रिकत्वेन सार्वत्रिकशक्तिग्रहायोगात् । न हि संबन्ध्युपस्थितिमात्रं संबन्धग्रहहेतुः । येन सामान्यलक्षणप्रत्यासत्त्या सर्वव्यक्त्युपस्थितिकथनं उपयुक्तं स्यात् । असर्वविषयकस्यापि उपदेशादेः सामान्यलक्षणप्रत्यासत्त्योपस्थितेषु शक्तिग्राहकत्वे अश्वादावपि गोशब्दशक्तिग्रहः स्यात् । गोत्वप्रत्या-सत्त्या सर्वगवामिव द्रव्यत्वप्रत्यासत्त्या अश्वादीनामप्युपस्थितिसद्भावात् । न ह्युपस्थितिसाम्ये व्युत्पादकस्य वृद्धव्यवहारस्य पुरोवर्तिमात्रनिष्ठत्वे तेन वृद्धव्यवहारेण गोष्वेव शक्तिग्रहो भवति नाश्वादाविति राज्ञामाज्ञाऽस्ति येन गोष्वेव शक्तिग्रहः नाश्वादाविति स्यात् । तस्मात् शक्तिग्रहाय सामान्यलक्षण-प्रत्यासत्त्या यावद्व्यक्त्युपस्थितिकथनमयुक्तमिति ॥ छ ॥ **इति मण्युक्तव्यक्तिशक्तिग्रहभङ्गः ॥**

**श्रीमध्वहृत्कमलविलासिने रामाय नमः । श्रीरस्तु ।** शब्दस्य शब्दविषया अर्थप्रत्याय-नोपयोग्यर्थसंबन्धो वृत्तिः । सा द्विविधा । मुख्यामुख्यभेदात् । मुख्या द्विविधा । रूढियोगश्चेति । यद्यपि योगो रूढिरेव । तथाऽपि अवयवस्यैव रूढिः । समुदायस्य तु न रूढिरिति योग इत्युच्यते । नन्वेवमपि न योगरूपवृत्तिसिद्धिः । यौगिकत्वेनाभिमतानां पदानां वाक्यवत् अवयवरूढ्यैवार्थो-पस्थापकत्वेन वृत्त्यनपेक्षणात् । अन्यथा वाक्येऽपि वाक्यावयवपदरूढिः योगः स्यात् । अविशेषादिति चेत् । न । यौगिकपदानां विभक्त्यन्तत्वेन विशेषात् । अस्ति तावत् यौगिकपदेषु विभक्तिः । कुम्भकारो नगरकार इति श्रवणात् । न चावाचकेभ्यो विभक्तिः संभवतीति विभक्त्युत्पत्त्ये

वाचकत्वं अभ्युपेयं वाचकत्वं च वृत्त्या विना न संभवतीति अवयवरूढिरेव समुदायस्य योगात्मना वृत्तिरित्यभ्युपेयम् । वाक्ये तु तदभावात् नावयवरूढेः वृत्तित्वमभ्युपेयमिति । तत्र केचन शब्दाः रूढ्यैवार्थोपस्थापकाः । ते च घटपटादयः शब्दाः । अन्ये पुनर्योगेनैव । ते च पाचकः पाठको दण्डी कुण्डलीत्यादयः । अन्ये पुनरुभाभ्यां अर्थप्रत्यायकाः । ते च पङ्कजादयः शब्दाः । पङ्कजशब्दात् पङ्कजनिकर्तृ पद्ममित्यनुभवात् । न चायमनुभवः योगमात्रेण वा रूढिमात्रेण वोत्पत्तुमर्हतीति उभे अपि तद्धेतू । तद्यथा इमौ घटपटाविति शाब्दबोधे घटपटशब्दौ संभूय कारणे ।

यस्तु पङ्कजादिशब्दानां योगमात्रं जानीते । तस्य कुमुदादौ सर्वत्र पङ्कजनिकर्तरि प्रयोग-प्रत्ययौ । यस्तु रूढिमात्रं जानीते । तस्य पद्म एव प्रयोगप्रत्ययौ ।

परे तु पद्मत्वप्रकारक एव बोधो न तु पङ्कजनिकर्तृ पद्ममिति बोधः । न च पङ्कजशब्दस्य रूढिसद्भावे मानाभावः व्याकरणकोशाद्यभिज्ञवृद्धव्यवहारस्यैव तन्मानत्वात् । अन्यथा तदवयवानां कर्दमादिप्वर्थेषु रूढिर्न स्यात् । ननु रूढिज्ञानवतोऽपि योगात् कुमुदे प्रयोगप्रत्ययौ कुतो न स्यातामिति चेत् । अत्र कश्चित् आह । रूढिज्ञानेन प्रतिबन्धात् न कुमुदे प्रयोगप्रत्ययाविति । तन्न । पद्मे पङ्कजनिकर्तृत्वबोधाभावप्रसङ्गात् । रूढिप्रतिबद्धस्य योगस्य स्वार्थानुभवजनकत्वायोगात् । रूढिर्न स्वविषये योगं प्रतिबध्नाति । अपि तु अन्यत्र । ततश्च पद्म पङ्कजनिकर्तृत्वप्रकारकबोधो नानुपपन्न इति चेत् न । पद्मे तात्पर्याभावनिश्चयदशायां कुमुदप्रयोगप्रत्ययदर्शनेन रूढिज्ञानस्य प्रतिबन्धकत्वाङ्गीकारायोगात् । किं च गङ्गाशब्दस्य प्रवाहे रूढिविज्ञानेऽपि तीरे तत्प्रयोगो दृश्यते । ततस्तत्प्रत्ययश्च । तदा काऽनुपपत्तिः पङ्कजशब्दस्य योगेन कुमुदादिबोधने । न हि योगादपि लक्षणा गरीयसी येन लक्षणायाः रूढिर्न प्रतिबन्धिका योगस्य प्रतिबन्धिकेति स्यात् ।

**मणिकारस्तु मन्यते** । नियमतो रूढ्या स्मृतं पद्ममेव व्यक्तिवाचकडप्रत्ययेन पङ्कजनि-कर्तृतयाऽनुभाव्यते । बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात् । यथाग्नेयीघटा-दिपदेन प्रकरणादिना सन्निहिता दिक् घटादिव्यक्तिर्बोध्यते । एवं सर्वत्र पद्मानुभवसामग्र्येवेति न कुमुदधीर्न वा तदर्थप्रयोग इति ॥ तन्न ॥ वक्तुः पङ्कजनिकर्तृमात्रतात्पर्यदशायां कुमुदे पङ्कजशब्द-प्रयोगस्य तेन पङ्कजनिकर्तृत्वेन तद्बोधस्य च दर्शनात् । न हि वक्त्रा तीरविवक्षया लाक्षणिको गङ्गाशब्द एव प्रयोक्तव्यः । न तु पङ्कजनिकर्तृमात्रविवक्षया यौगिकोऽपि पङ्कजशब्दः प्रयोक्तव्य इति राज्ञामाज्ञाऽस्ति । येन सर्वत्र पद्मानुभवसामग्र्येवेति स्यात् ।

वयं तु ब्रूमः । यदि पङ्कजशब्दस्य पद्मे रूढिं जानतः पङ्कजनिकर्तृत्वबोधेच्छया कुमुदे पङ्कज-शब्दप्रयोगः । तेन च तत्प्रकारको बोधश्च कुतो न स्यात् इति पृच्छसि । तदा स्यादेवेत्युत्तरम् । यदि च कुमुदत्वबोधेच्छया प्रयोगः तेन च तत्प्रत्ययः किं न स्यादिति पृच्छसि । तदा पङ्कजपदा-वयवानां कुमुदत्वे शक्त्यभावादित्युत्तरमिति । ननु पङ्कजादिशब्दाः योगरूढिभ्यामर्थप्रत्यायका इत्यनुपपन्नम् । योगरूढेः स्वतन्त्रवृत्तित्वेन वृत्तिद्वयसमाहारात्मकत्वाभावात् । तथात्वे रूढेः शीघ्र-गामित्वेन पङ्कजशब्दात् पद्मोपस्थित्यनन्तरं मन्थरगामिना योगेन पश्चात् पङ्कजनिकर्तृत्वबोध इत्यापातात् । अन्यथा रूढेर्योगापहारित्वं न स्यात् । किं चैवं सति रूढोपचाररूढलक्षणे अपि समाहारवृत्ती स्याताम् । न च तदिष्टम् । रूढ्यैवोपपत्तौ उपचारादिस्वीकारवैय्यर्थ्यप्रसङ्गात् । उक्तं च सुधायां 'न हि योग-रूढ्योः समाहारो योगरूढिरिति ब्रूमो येन विरोधः स्यात् । किं नाम, रूढलक्षणा लक्षणामात्रात्, रूढ-गौणी च गौणीमात्रात् प्रयोगप्राचुर्येण भिद्यते, तथा प्रवृत्तिनिमित्तापेक्षत्वात् रूढिमात्रात् , प्रयोगबाहुल्येन योगमात्राच्च, भिन्ना तृतीयेयं वृत्तिरि'ति । तस्मात् योगरूढिभ्यामित्ययुक्तमिति चेत् । अत्र वक्तव्यम् । योगरूढिभ्यां व्यतिरिक्तेयं वृत्तिः किं पङ्कजपदेऽङ्गीक्रियते । उत पङ्कादितदवयवेषु । आद्ये रूढिरेव स्यात् न योगरूढिः । अखण्डशक्तित्वाविशेषात् । अन्यथा मृदङ्गादिशब्दा अपि योगरूढाः प्रसज्येरन् । तेषामपि पङ्कजशब्दवत् विशिष्टार्थप्रत्यायकत्वात् । द्वितीये योग एव स्यात् न योगरूढिः । अवयवशक्तित्वात् । तस्मात् अकामेनापि मृदङ्गकीचकादिशब्दवैचित्र्याय पङ्कजादि-शब्दानां अवयवशक्तिसहकृतसमुदायशक्त्या पङ्कजनिकर्तृ पद्ममित्यादिबोधहेतुत्वमभ्युपेयम् । तदेव शब्दस्य योगरूढत्वम् ।

यदत्रोक्तम् । आदौ पद्मत्वबोधः पश्चात् योगेन पङ्कजनिकर्तृत्वबोध इति बोधद्वयमापाद्यत इति । तन्न । योगस्य रूढिसहकारित्वेन विशिष्टबोधजननाय रूढेर्योगमुखनिरीक्षणस्वभावाङ्गीकारात् । अन्यथा संस्कारादपि प्रत्यक्षसामग्र्याः बलवत्त्वेन आदावयमिति प्रत्यक्षं स्यात् तदनन्तरं स इति स्मरणमेव स्यात् न तु सोऽयमिति प्रत्यभिज्ञाप्रत्यक्षम् । पुनः प्रत्यक्षसामग्रीसद्भावे प्रत्यक्षधारैव स्यात् । तत्र प्रत्यक्षसामग्र्या सहकारिमुखनिरीक्षणस्वभावाङ्गीकारे च इहापि तथाऽस्तु ।

यदपि चोक्तं रूढोपचाररूढलक्षणे अपि समाहारवृत्ती स्यातामिति । तदपि न । रूढलक्षणा-स्थले लक्षणावृत्तिलभ्यार्थातिरिक्तार्थभानाभावेन लक्षणारूढिसमाहारस्वीकारप्रयोजनाभावात् । प्रकृते च योगालभ्यस्य पद्मत्वस्य, रूढ्यलभ्यस्य पङ्कजनिकर्तृत्वस्य च भासमानत्वेन तदन्यथानुपपत्त्या समाहारस्य सिद्धत्वेन तत्प्रतिबन्दीग्रहणायोगात् । रूढलक्षणा रूढोपचार इत्याद्युक्तिस्तु लक्षणोपचारयोरभ्यस्तत्वाभि-

प्रायेण । अत एव सुधायां, अनभ्यस्तलक्षणा लक्षणामात्रं, अभ्यस्तलक्षणा रूढलक्षणेत्यभिप्रायं मनसि निधाय 'रूढलक्षणा लक्षणामात्राद्भिद्यत' इत्युक्तम् । अन्यथा रूढलक्षणा लक्षणातो भिद्यत इत्यवक्ष्यत् ।

नन्विदं सुधाविरुद्धम् । तथा हि । 'विमताः शब्दाः हरौ रूढाः बहुलातिप्रयोगवत्त्वा-दि'त्यनुमाय । 'न च रूढयोगे रूढोपचारे रूढलक्षणायां च व्यभिचारः । तत्रापि रूढिसद्भावेन सपक्षत्वात् । समाहारवृत्तयो हि ता' इत्युक्तत्वादिति चेत् । न । भावानवबोधात् । न हि सुधा मार्गशब्दः पुरुषे, रूढ्या लक्षणया च प्रवर्तते । सिंहशब्दश्च लिखितसिंहे रूढ्योपचारेण च प्रवर्तत इत्यभिप्रायेण प्रवृत्ता । येनोक्तदोषः स्यात् । किं नाम रूढयोगे रूढोपचारे रूढलक्षणायां च वृत्तिशब्दस्य रूढिरित्याशयेन प्रवृत्ता ।

अयमत्र सुधावाक्यार्थो द्रष्टव्यः ।

ननु बहुलातिप्रयोगतः शब्दानां विष्णौ रूढत्वसाधनमयुक्तम् । यो यत्र बहुलातिप्रयोगवान् स तत्र रूढ इति सामान्यव्याप्ते रूढयोगादिवृत्त्याभासेषु वृत्तिशब्दस्य बहुलातिप्रयोगसद्भावेऽपि तत्र रूढत्वाभावेन व्यभिचारात् । न हि वृत्त्याभासेषु वृत्तिशब्दस्य रूढिरिति वक्तुं शक्यम् । वह्न्याभासे गुञ्जापुञ्जादौ वह्निशब्दस्यापि रूढिप्रसङ्गात् । नापि रूढियोगादेर्वृत्तित्वमेव नाभासत्वमिति वक्तुं शक्यम् । रूढिर्योगश्चेति द्वे एव मुख्यवृत्ती लक्षणादयस्त्वमुख्यवृत्तय इति विद्वत्प्रसिद्धिविरोधात् इति मन्यमानस्य शङ्कां लेशतोऽनूद्य निषेधति । **न चेति** । रूढयोगादिवृत्तौ प्रयुज्यमाने वृत्तिशब्दे न व्यभिचार इत्यर्थः । एतेन, बहुलातिप्रयोगवत्त्वस्य हेतोः शब्द एव व्यभिचारः शङ्कनीयः न तु रूढ-योगादिवृत्तौ । हेतोरेवाभावादिति, परास्तम् । वृत्तिशब्दे व्यभिचारचोदनस्येहाभिमतत्वात् । कुतो नेत्यत आह **तत्रापीति** । तत्रापि रूढयोगादावपि रूढिसद्भावेन वृत्तिशब्दस्य सपक्षत्वादित्यर्थः । ननु वृत्याभासेषु कथं वृत्तिशब्दस्य रूढिरित्यत आह । **समाहारवृत्तयो हि ता इति** । अत्र वृत्तयो हि ता इत्येव वक्तव्यम् । तावन्मात्रस्यैवोपयुक्तत्वात् । तथाऽपि रूढयोगस्य समाहारवृत्तित्वात् तत्र परकीयव्यभिचारचोदनमत्यन्तायुक्तमिति द्योतनाय छत्रिन्यायेन समाहारवृत्तय इति उक्तम् । ततश्च परकीयः वृत्याभासत्वाभिमानः निर्मूलः । लौकिकानां लक्षणादिष्ववृत्तित्वव्यपदेशस्यालपस्वे निःस्व-व्यवहारवत् उपपन्नत्वादिति भावः । एतेन रूढयोगस्य समाहारवृत्तित्वेऽपि रूढोपचाररूढलक्षणयोः समाहारवृत्तित्वाभावात् 'समाहारवृत्तयो हि ता' इत्ययुक्तमिति परास्तम् । छत्रिन्यायेन तथाऽभिधानात् ।

॥ छ ॥ **इति सुधार्थनिरूपणम् ।**

यदत्रोक्तं, 'न हि योगरूढयोः समाहारो योगरूढिरिति भ्रमः' इति सुधाविरोध इति । तन्न । सुधायाः यस्मिन् पङ्कजशब्दसमुदाये रूढिरस्ति तत्रैव योगोऽस्तीति न भ्रमः । येनावयवनिष्ठस्य योगस्य समुदायनिष्ठत्वे विरोधः स्यात् । किं नाम रूढलक्षणा यथा रूढ्यसमानाधिकरणाऽपि प्रयोगप्राचुर्यसहकारेणार्थबोधकत्वाल्लक्षणामात्राद्भिन्नजातीया, रूढगौणी च प्रयोगप्राचुर्येणार्थबोधकत्वात् गौणीमात्राद्भिजातीया एवं असमानाधिकरणे अपि योगरूढी संभूय ज्ञानजनकत्वात् स्वातन्त्र्येण बोधजननाद्योगमात्रात् तादृशरूढिमात्राच्च भिन्ने एवेति योगरूढी द्वे वृत्ती अवयवसमुदायगते इत्याशयेन प्रवृत्तत्वात् । **इति स्वमते योगरूढिसमर्थनम् ॥**

**मीमांसका मन्यन्ते** । पङ्कजादयः शब्दाः यौगिका एव न योगरूढाः । योगेनैव, पङ्कजपदप्रयोगविषये नियमतः पद्ममित्यनुभवजनितसंस्कारसहकृतेन, पङ्कजनिकर्तृ पद्ममिति बोधसंभवात् । न च नियमतः पद्म एव पङ्कजपदप्रयोगार्थं रूढिकल्पना । पूर्वप्रयोगमपेक्ष्य प्रयोगनियमोपपत्तेः । पूर्वप्रयोगोऽपि तत्पूर्वप्रयोगमपेक्ष्यैवेत्यनादिरेवायं नियम इति ।

तन्न । घटादिशब्दानामपि घटादिशब्दप्रयोगविषये घटोऽयमित्यनुभवजन्यसंस्कारसहकृतेन व्यक्तिमात्रवाचकेनैव घटपदेन घटत्वप्रकारको बोधो भवतीति वक्तुं शक्यतया तेषामपि घटत्वादौ शक्त्यभावापातात् । प्रयोगनियमोऽपि पूर्वप्रयोगमपेक्ष्यैव शक्त्या विनाऽपि भवतीति वक्तुं शक्यत्वात् । अथाव्युत्पन्नस्य घटपदात् घटत्वप्रकारकबोधादर्शनात् तस्य तत्र शक्तिरिति । हन्त तर्हि रूढिज्ञानविधुरस्य पङ्कजपदात् पद्मत्वप्रकारकबोधादर्शनात् पङ्कजपदस्य पद्मत्वे रूढिः स्यात् । न च पङ्कजशब्दस्य पद्मे समुदायशक्त्यभावेऽपि अवयवशक्तिसद्भावात् संस्कारसहकृतस्य पद्मत्वप्रकारानुभवजनकत्वमुपपन्नम् । घटादिशब्दानां तु वृत्तिमात्रवैधुर्येण संस्कारलक्षणसहकारिसम्पत्तावपि नानुभावकत्वमिति शक्तिरभ्युपगन्तव्येति वाच्यम् । घटादिपदानां व्यक्तौ शक्तिमङ्गीकृत्य जातौ शक्तिर्न स्यादित्यापादितत्वात् । न च नियमतः स्मृतं पद्ममेव व्यक्तिवाचकडप्रत्ययेन पङ्कजनिकर्तृतया अनुभाव्यते । बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात् । तथा च पङ्कजपदस्य न पद्मत्वे शक्तिरिति वाच्यम् । पङ्कजनिकर्तृ पद्ममिति पद्मत्वप्रकारानुभवाव्युत्पादनात् । न हि घटादिपदेन सन्निहितव्यक्तिपरेण छिद्रेतरत्वप्रकारकबोधो भवति । येन पद्मत्वप्रकारकबोधः पङ्कजशब्देन स्यात् । किं तु घटत्वेन रूपेण छिद्रेतरघटबोधो भवति छिद्रेतरत्वप्रकारकबोधस्योद्देश्यत्वे तु लक्षणैवेति ॥ छ ॥ **इति पङ्कजादिपदानां मीमांसकोक्तकेवलयौगिकत्वभङ्गः ॥**

**मणिकारस्तु मन्यते** । अस्ति व्युत्पन्नस्य पदज्ञानानन्तरं नियमतोऽन्वयप्रतियोगिपद्मस्मृति-रतस्तद्धेतुसंस्कारोद्बोधकं प्रतिबन्धकं विना पदज्ञानमेव । गवादिपदेषु दृष्टान्वयव्यतिरेकित्वादनुगतत्वा-ल्लाघवाच्च । न तु प्रतिपदार्थस्मृति तत्कालोत्पन्नमनन्तमदृष्टचरमनिर्वचनीयं कल्पनीयम् । गौरवात् । अतः पद्मस्मृतावपि गृहीतसंबन्धं पङ्कजपदमपि तथेति संबन्धत्वेन शक्तिसिद्धिरिति ।

अत्र वक्तव्यम् । त्वयोपन्यस्तः शक्तिग्रहः प्रामाणिकप्रयोगादिमूलको न वा । आद्ये सार्व-जनीनशक्त्यनुभवादेव शक्तिसिद्धिरित्यनभिधाय नियतस्मृत्यन्यथानुपपत्त्या शक्तिसाधनमनुपपन्नम् । नेति पक्षे न नियतस्मृत्याऽपि शक्तिसिद्धिः शक्तिभ्रमवतां पामराणां नियतस्मृतिविषयेऽर्थे शक्त्य-दर्शनात् । यदपि संबन्धत्वेन शक्तिसिद्धिरिति । तदपि न । संस्कार एव स्मारकः पदज्ञानं तु संस्कारोद्बोधकमिति वदता संस्कारेणैव पदानां संबन्धस्य वक्तव्यत्वेनार्थेनावक्तव्यत्वात् । न ह्युद्बोध्येनोद्बोधकस्य संबन्धमनभिधाय अन्येन संबन्धाभिधानं युक्तिमत् । अन्यथा संस्कारोद्बोधकादृष्टादेरपि संबन्धः सिध्यन्न शक्तित्वेन सिध्येत् । अदृष्टादीनां अर्थसंबन्धाभावेऽपि संस्कारोद्बोधकत्वे पदज्ञानस्यापि तथास्तु ॥ छ ॥ **इति मण्युक्तयोगरूढिसमर्थनभङ्गः ॥**

यत्तु मणौ पङ्कजकुमुदमित्यत्र समुदायेनैव पङ्कजन्मकर्तृत्वमशक्यं स्वार्थपद्मसंबन्धि लक्ष्यते । कुमुदे साधुत्वात्कथं तत्र लक्षणेति चेन्न । समुदायस्य तत्रासाधुत्वात् । यत्तु तत्र पद्मत्वमयोग्यतया नान्वेति । योगादेव मुख्यया वृत्या कुमुदे पङ्कजन्मकर्तृत्वमनुभूयत इति । तन्न । कुमुदेऽवयवशक्तेः ज्ञातया समुदायशक्त्या प्रतिबन्धात् तथैव तदवगमात् इत्युक्तम् । तन्न । कुमुदे अवयवशक्त्यैव पङ्कजनिकर्तृत्वस्य बोधसंभवेन तदर्थं समुदायलक्षणाऽङ्गीकारायोगात् । मुख्यवृत्त्यसंभव एव अमुख्यवृत्तेः स्वीकार्यत्वात् । मुख्यार्थसंबन्धाभावे लक्षणाऽयोगाच्च । न हि कुमुदनिष्ठस्य पङ्कजनिकर्तृत्वस्य पद्म-संबन्धोऽस्ति । यदत्रोक्तं समुदायेनैव पङ्कजनिकर्तृत्वं स्वार्थपद्मसंबन्धि लक्ष्यत इति । तन्न । कुमुद-संबन्धिन एव पङ्कजनिकर्तृत्वस्य लक्ष्यत्वेन पद्मसंबन्धिनस्तस्यालक्ष्यत्वात् । यदपि कुमुदे पङ्कजपदस्य योगसंभवान्न लक्षणेत्याशङ्क्य समुदायस्य तत्रासाधुत्वादिति समुदायस्य तत्र शक्त्यभावकथनम् । तदपि न । तत्र पङ्कजपदसमुदायस्य रूढेरभावेऽपि योगसद्भावात् । न हि रूढिरेव समुदायवृत्तिः न योग इति साम्प्रतम् । अवयववृत्तेर्योगत्वाभावप्रसङ्गात् । अवयववृत्तेरवयवान् प्रति रूढित्वात् । यदपि, 'यत्तु तत्र पद्मत्वमयोग्यतया नान्वेति योगादेव मुख्यया वृत्या कुमुदे पङ्कजन्मकर्तृत्वमनुभूयते' इति । तन्न । 'कुमुदेऽवयवशक्तेः समुदायशक्त्या ज्ञातया प्रतिबन्धात्' । इत्यन्तेन पङ्कजशब्दसमुदा-

यस्य योगेन कुमुदबोधकत्वमाशङ्क्य तत्र योगसद्भावेऽपि रूढ्या प्रतिबन्धात् न कुमुदबोधकत्वमिति समाधानं कृतम् । तदपि न । समुदायशक्तेः स्वार्थबाधाभावदशायां योगेन कुमुदादिधीनिवारकत्वेऽपि स्वार्थबाधदशायां तदनिवारकत्वात् । अन्यथा लक्षणयाऽपि तद्बोधो न स्यात् । न हि योगादपि लक्षणा बलवती । येन योगनिवारकत्वमेव न लक्षणानिवारकत्वं रूढेरिति वैषम्यं स्यात् । भवेत् कथञ्चित् पङ्कजपदस्य कुमुदे लक्षणेति यैः रूढ्याऽवयवशक्तेः प्रतिबन्धः स्वीक्रियते । मणिकृन्मते तु न सर्वथा पङ्कजपदस्य कुमुदे लक्षणा युज्यते । यतस्तेन व्यक्तिवचनन्यायात् पद्मस्यैव बोधो भवति न कुमुदस्य । न त्ववयवशक्तिप्रतिबन्धात् इत्यङ्गीक्रियते । एवं च पङ्कजे कुमुदमित्यत्र पङ्कजशब्दादुपस्थिते पङ्कजं पद्ममिति वाक्यार्थेऽयोग्यतया पद्ममपहाय कुमुदपदस्य यौगिकेन पङ्कजपदेन पदैकवाक्यतया पङ्कजनिकर्तृ कुमुदमित्यनुभवजनकत्वसंभवात् ।

यदत्रोक्तं मणिकृता पद्मान्वितत्वेनोपस्थितस्य पङ्कजनिकर्तृत्वस्याश्रयाकाङ्क्षा नास्तीति स्वतन्त्रोपस्थित्यर्थं अवश्यं लक्षणा । यथा पुरोडाशकपालेषु तुषानुपवपतीत्यत्र तुषोपवापान्वयाय पुरोडाशकपालपदेऽधिष्ठानलक्षणेति । तन्न । स्वार्थबाधेन रूढ्युपरमदशायां आश्रयालाभे तदाकाङ्क्षाऽनपायेन आश्रयाकाङ्क्षोत्पादाय स्वतन्त्रोपस्थितेरनपेक्षितत्वात् । स्वतन्त्रोपस्थितेरावश्यकत्वेऽपि योगेनैव तत्संभवेन लक्षणास्वीकारवैयर्थ्याच्च । पुरोडाशकपालपदे तु लक्षणैव नेति । दृष्टान्तोऽप्ययुक्तः । न हि मीमांसकोक्तं सर्वमङ्गीकर्तव्यमिति राज्ञामाज्ञाऽस्ति । तथात्वे मीमांसकैर्विवादायोगेन तर्कसिद्धान्तोच्छेदप्रसङ्गः । यदपि स्थलपद्मे लक्षणैव विजातीयत्वात् । साजात्येऽपि लक्षणैव । पद्मत्वस्य योगार्थगतत्वेनोपस्थित्या निराकाङ्क्षत्वेन स्वतन्त्रोपस्थितये लक्षणाया अवश्यवाच्यत्वादिति । तन्न । स्थलपद्मस्य पद्मत्वजात्यनधिकरणत्वे पद्ममिति व्यवहाराभावप्रसङ्गात् । तदधिकरणत्वे तु पङ्कजपदरूढिविषयत्वानपायात् । शक्यताऽवच्छेदकसद्भावात् । न च स्वतन्त्रोपस्थित्यर्थम् । लक्षणायोगनिवृत्तौ रूढ्यैव स्वतन्त्रोपस्थितिसंभवात् ।

**पक्षधरस्तु** । अत्र डपदेन पद्मत्वं लक्ष्यते न तत्समुदायेनेत्याह । तन्न । डप्रत्ययस्य पदत्वाभावात् । प्रयोक्तुः लक्षणया डप्रत्ययस्यैव बोधकत्वमित्यत्र तात्पर्ये, पङ्कजमिति गुरुभूतशब्दोच्चारणं न स्यात् । प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन पदार्थान्तरान्वयासंभवाच्चेति दिक् ॥ छ ॥ इति **पङ्कजादिपदानां कुमुदादौ मण्युक्तलाक्षणिकत्वभङ्गः ॥**

ननु पङ्कजादिशब्दानां यथा स्वार्थे शक्तिरभ्युपगम्यते तथा गाव्याद्यपभ्रंशानामपि शक्तिरभ्युपगन्तव्या । संस्कृतानामिव अपभ्रंशानामर्थप्रत्यायकत्वात् । न च शक्त्यभावे शक्तिभ्रमादर्थप्रत्यायकता युक्ता । संस्कृतेष्वपि तथात्वापातात् । न च देवदत्तादिशब्दवत् साङ्केतिकत्वं युक्तम् । सङ्केतकर्तुरप्रसिद्धेः । न चापभ्रंशानामपि संस्कृतवच्छक्तत्वे साध्वसाधुविभागो न स्यात् । 'साधुभिर्भाषितव्यं' इति विधिः 'न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा यदेष अपशब्द' इत्यादिनिषेधश्च न स्यादिति वाच्यम् । शक्तत्वसाम्येऽपि पुण्यपापसाधनत्वाभ्यां साध्वसाधुविभागस्य विधिनिषेधयोश्चोपपत्तेः । ततश्चावर्जनीया गावी गोणीत्याद्यपभ्रंशानामपि स्वार्थे शक्तिरिति ।

अत्रोच्यते । साङ्केतिका एवापभ्रंशाः । न तु संस्कृतवत् स्वाभाविकशक्तिमन्तः । 'अनन्याधीनविज्ञानात् अन्याधीनं तथैव च । मृद्योलोहनाम्नां हि ज्ञानात्साङ्केतिकं यथे'ति स्मृतेः । साङ्केतिकं मण्णुमातीत्यादिप्राकृतं नाम संस्कृतनामविज्ञानाद्यथा विज्ञातफलं भवति तथा परमात्मविज्ञानात्सर्वं विज्ञातफलं भवतीति स्मृत्यर्थः । न च गवादिशब्दानामपि साङ्केतिकत्वं युक्तम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति श्रुतौ मण्णुमातीत्यादिशब्दानां अनित्यत्वमुक्त्वा 'मृत्तिकेत्येव सत्यमि'ति मृत्तिकादिशब्दोपलक्षितानां संस्कृतशब्दानां नित्यत्वाभिधानात् । न च नित्यानां साङ्केतिकत्वं युक्तम् । सङ्केतात्प्राक् अबोधकत्वप्रसङ्गेन तद्धटितवेदादीनामप्रामाण्यप्रसङ्गात् । न च भाषाशब्दानां साङ्केतिकत्वे बाधकमस्ति म्लेच्छादिजातिनिर्मात्रा परमेश्वरेण संस्कृतायोग्यानां तेषां व्यवहारप्रसिद्धये भाषाशब्दान्निर्माय तेषु तेष्वर्थेषु सङ्केतस्य कृतत्वेन सङ्केतात्पूर्वं तच्छब्दस्यैवाभावात् । न चार्थप्रत्यायकत्वं शक्तिसाधनायालम् । सङ्केतेनैवान्यथासिद्धत्वात् । नापि वृद्धव्यवहारस्तत्साधकः । वृद्धव्यवहारस्य परमेश्वरसङ्केतेनान्यथासिद्धेः । देवदत्तादिनाम्नां यज्ञप्रवेशस्तु द्वादशेऽहनि पिता नाम कुर्यादिति विधिप्राप्तत्वादुपपन्नः । न च सङ्केतकर्तुरप्रसिद्धिर्दोषः । लोकप्रसिद्ध्यभावेऽपि गिरिदरीविवरवर्त्यङ्कुरादीनां कर्तुरिव 'नामरूपे व्याकरोदि'ति श्रुतिसिद्धत्वात् । न चैषां परमेश्वरसङ्केतयुक्तत्वेन 'म्लेच्छितवै नापभाषितवा इति निषेधानुपपत्तिः । ईश्वरसृष्टाया अपि सुराया 'न सुरां पिबेदि'ति पाननिषेधवदुपपत्तेः । **इत्यपभ्रंशानां साङ्केतिकत्वसमर्थनम् ॥**

**मणिकारस्तु** । एकत्र शक्त्याऽन्यत्र तदारोपात् अर्थप्रतीत्युपपत्तेरेकत्रैव शक्तिर्लाघवात् । अनन्यलभ्यस्यैव शब्दार्थत्वात् । अन्यथा वृत्त्यन्तरोच्छेदः । सा च शक्तिः संस्कृत एव । सर्वदेशे तस्यैकत्वात् नापभ्रंशेषु । तेषां प्रतिदेशमेकत्रार्थे भिन्नरूपाणां तावच्छक्तिकल्पने गौरवात् । एवं शक्त्यारोपादर्थप्रत्ययोपपत्तौ नापभ्रंशे शक्तिरित्याह ।

तन्न । वृद्धव्यवहारेण जातस्य गाव्यादिशब्दशक्तिज्ञानस्य बाधकं विना भ्रमत्वायोगात् । न हि कस्यचित् गावीशब्दो न गवि शक्त इति बाधकप्रत्ययोऽस्ति । येन तज्ज्ञानं भ्रमः स्यात् । यदि प्रत्ययमनुत्पाद्य गाव्याद्यपभ्रष्टशब्दानां शक्तिज्ञानं भ्रम इति ब्रूषे । तर्हि परोऽपि पर्यायेषु संस्कृतेषु एक एव शब्दः शक्तः अन्ये सर्वेऽपि अशक्ता एव । तत्र शक्तिज्ञानं भ्रमः लाघवादिति ब्रूयात् । किं च यथा संस्कृतेषु शब्देषु गौणी लक्षणा दृश्यते । तथा भाषाशब्देष्वपि लक्षणा गौणी च वृत्तिर्दृश्यते । न च सा शक्त्यभावे युक्ता । क्वचिच्छक्तस्यैव लक्षकत्वात् । अन्यथा कचटतपादि-शब्दानामपि लक्षकत्वप्रसङ्गो दुर्वारः । न च भाषाशब्देषु गौण्यादिवृत्तिरेव नास्तीति वक्तुं शक्यम् । मुख्यार्थानुपपत्तिपुरःस्सरं भाषाशब्देभ्योऽर्थप्रतिभासस्य सर्वानुभवसिद्धत्वात् । किं च 'साधूनेव प्रयुञ्जीत नासाधूनि'ति अपशब्दो न प्रयोक्तव्य इति श्रूयते । न च शक्तिविधुरस्य कचटतपादिवन्निरर्थकस्य प्रयोगप्रसक्तिरस्ति । येन तन्निषेधः सार्थकः स्यात् । ततो मन्यामहे अस्त्यपभ्रंशानामपि सङ्केताधीना शक्तिरिति ॥ छ ॥ **इति मण्युक्तापभ्रंशशक्तिनिरासभङ्गः ॥**

**पार्थसारथिस्तु** । प्रयोगप्रत्ययानुपपत्त्या न गाव्याद्यपशब्दानामपि वाचकत्वमित्याशङ्क्य समादधौ । यद्यपि गव्यादिशब्दानामवाचकत्वम् । तथाऽपि वाचकमूलपदोपस्थापनेन प्रत्यायकता भविष्यति । अपशब्दस्मारितसाधुशब्देन अर्थं ज्ञात्वा प्रवृत्तस्य प्रयोज्यवृद्धस्य प्रवृत्तिं पश्यन्तो बालाः अपशब्द एव संज्ञासंज्ञिसंबन्धे शिक्षित्वा तथैव स्वयं व्यवहरन्ति । तच्छाविणोऽन्येऽप्येवमिति प्रयोगप्रत्यययोरुपपत्तौ नापशब्दानां वाचकत्वमभ्युपगन्तव्यम् । संभवति चैवं, नानेकशब्दत्वमेकार्थ-स्याभ्युपगन्तुं न्याय्यम् । अनेकशक्तिकल्पनाप्रसङ्गात् । किं च संस्कृता एव शब्दाः पाणिनि-कात्यायनपतञ्जलिप्रभृतिभिर्महाजनैः परिगृहीताः नापशब्दाः । ततः संस्कृता एव वाचकाः नाप-शब्दा इति ।

तन्न । अपशब्दप्रयोगोत्तरभाविप्रयोज्यवृद्धप्रवृत्त्यनुमितिवाच्यवाचकभावसंबन्धस्य बाधकाभावेन वास्तवत्वात् । यदपि पाणिन्यादिपरिगृहीतत्वात् संस्कृता एव वाचकाः नापशब्दा इति । तदपि न । पाणिन्यादिभिरपशब्दस्वरूपशक्त्याद्यनिरूपणेऽपि वाचकत्वं नेत्यनुक्तत्वात् । म्लेच्छादिभिरभिज्ञैः तेषु-तेष्वर्थेषु अपशब्दानां व्युत्पादितत्वेन शक्तेरङ्गीकार्यत्वात् । यावद्धि पाणिन्याद्युक्तविरुद्धं तावत एव म्लेच्छाद्युक्तस्याग्राह्यत्वम् । अन्यस्य तु ग्राह्यत्वमिति त्वयैवाभिधानात् । न हि म्लेच्छाः पिकनेम-तामरसादिशब्दानामर्थनिरूपण एवाभिज्ञाः नान्यशब्दानामिति नियामकं विना वक्तुं युक्तम् । तदुक्तं

तत्र वार्तिकम् । 'यत्तु वेदतदङ्गेषु पदं दृष्टमविप्लुतम् । म्लेच्छभाषास्तु तद्रूपमर्थे क्व चन चोदितम् । तत्तथैव प्रतीयेत प्रमाणेनाविरोधतः । पिकनेमादि तद्धयेवं निपुणैरवधारितम् । चोदितं ह्युपदिष्टं वा प्रयुक्तं वा क्रियागतम् । म्लेच्छैरवधृतं पूर्वं पश्चादार्यैर्विचारितम् । तादृशं तु प्रतीयेत प्रामाण्येनेति निश्चितमि'ति । ततश्च म्लेच्छनिर्णीतशब्दार्थसंबन्धस्य प्रामाणिकत्वं अभ्युपगम्य अपभ्रंशानां वाचकत्वं नेति वदन् श्लाघनीयप्रज्ञः । किं च शबरस्वामिनाऽपि अपभ्रंशानां सादिसंबन्धाङ्गीकारात् तद्विरोधः । यथाऽऽह । 'तस्मादेकोऽनादिः, अन्येऽपभ्रंशाः, हस्तः करः पाणिरित्येवमादिषु त्वभियुक्तोपदेशाद-नादिरमीषां संबन्ध इती'ति ॥ छ ॥ **इति मीमांसकोक्तापभ्रंशवाचकत्वभङ्गः ॥**

ननु साधूनेव प्रयुञ्जीतेत्युक्तं साधुत्वं दुर्निरूपम् । तथा हि । किं तत्साधुत्वम् । प्रति-पादकत्वमुतानादित्वमाहोस्वित् यज्ञप्रयोगार्हत्वमथ धर्मसाधनत्वमुत वेदस्थत्वं, किं वा व्याकरणव्युत्पाद्यत्वम् । किं वा जातिः । नाद्यः । असाधुशब्देऽपि सत्त्वात् । नापि द्वितीयः । 'शेषोव्यसखि । दाधा-घ्वदाप् । तरप्तमपौघ' इत्यादिव्याकरणविहितघिघुघादिसंज्ञाशब्देष्वव्याप्तेः । नापि तृतीयः । साधुत्वा-ज्ञाने यज्ञप्रयोगार्हत्वस्यैवाज्ञानत्वात् । नापि चतुर्थः । साधुत्वाज्ञाने धर्मजनकत्वस्य ज्ञातुमशक्यत्वात् । नापि पञ्चमः । भाषायां सदवसस्रुव इत्यादि सूत्रोक्तानां उपसेदिवानित्यादिशब्दानां केवलभाषास्थत्वेन तत्राव्याप्तेः । नापि षष्ठः । डित्थडवित्थादिसंज्ञाशब्देष्वव्याप्तेः । नापि सप्तमः । अनुगतजाते-रनङ्गीकारात् इति चेत् ।

अत्र कश्चित् । यः शब्दो यत्रेश्वरेण सङ्केतितः स तत्र साधुरित्युच्यते । तद्यथा या काचिदौषधी नकुलदंष्ट्रास्पृष्टा सा विषं हन्ति । तथा प्रतिपादकत्वाविशेषेऽपि ईश्वरसङ्केतिता एव शब्दाः धर्मोपयोगिनः स्वभावात् । ईश्वरसङ्केतज्ञानं च उपमानप्रसिद्धार्थपदसामानाधिकरण्याप्तोपदेश-वाक्यशेषकोशाभियुक्तेन्द्रपाणिन्यादिप्रणीतशब्दानुशासनेभ्यो भवतीत्याह । तन्न । म्लेच्छादिभाषा-शब्देष्वतिव्याप्तेः । न हीश्वरादन्यः अनन्तपदार्थेषु म्लेच्छादिभाषागतानन्तशब्दानां सङ्केतयिताऽस्ति । येनातिव्याप्तिर्न स्यात् । तीराद्यर्थेषु गङ्गादिशब्दानामसाधुत्वापत्तेश्च । यदपि ईश्वरसङ्केतज्ञानमुपमा-नादिना भवतीति । तदपि न । यथा गौस्तथा गवय इति उपमानस्य संज्ञासंज्ञिसंबन्धमात्रगमकत्वेऽपि परमेश्वरसङ्केतज्ञापकत्वाभावात् । अन्यथा भाषाशब्दघटितोपमानवाक्यस्यापि भाषाशब्देषु ईश्वर-सङ्केतज्ञापकत्वं स्यात् । एवं प्रसिद्धार्थपदसामानाधिकरण्याप्तोपदेशादीनां संज्ञासंज्ञिसंबन्धमात्रज्ञापकत्वमेव न तु ईश्वरसङ्केतज्ञापकत्वमिति द्रष्टव्यम् ।

वयं तु ब्रूमः । देवभाषाशब्दत्वमेव साधुत्वम् । अत एव संस्कृतशब्दानां **गीर्वाणभाषेति** प्रसिद्धिः । चण्डालाद्युपनिबद्धगीर्वाणभाषात्मकगाथापरित्यागस्तु श्वदृतिनिक्षिप्तगोक्षीरवत् द्रष्टव्यः **॥ छ ॥**
**इति संस्कृतशब्दसाधुत्वनिरूपणम् ॥**

**श्रीरस्तु ।** अमुख्यवृत्तिरपि द्विविधा । लक्षणा गौणी चेति । सादृश्यातिरिक्तमुख्यार्थसंबन्धो लक्षणा । सा द्विविधा । अभ्यस्तानभ्यस्तभेदात् । तत्राद्या रूढलक्षणेति गीयते । सा च प्रयोजनाभावेऽपि प्रवर्तते । तद्यथा मार्गाश्चलन्तीति प्रयोगे मार्गशब्दस्य मार्गस्थेषु । द्वितीया प्रयोजनमपेक्ष्यैव प्रवर्तते । यथा गङ्गायां घोष इति प्रयोगे गङ्गाशब्दस्य तीरे । वैशिष्ट्यद्योतमुद्दिश्यैव प्रयोगात् । मुख्यार्थेन सादृश्यरूपसंबन्धो गौणी । सा च पूर्ववदेव द्विविधा ज्ञेया । उभे अपि वृत्ती तात्पर्यानुपपत्तिप्रतिसन्धानेन प्रतिसन्धात्रा प्रतिसन्धीयेते । नत्वन्वयानुपपत्तिप्रतिसन्धानेन । यष्टीः प्रवेशय छत्रिणो गच्छन्तीत्यादौ अन्वयानुपपत्तेरभावात् । गङ्गायामेव घोष इति भ्रान्तवाक्ये अन्वयानुपपत्तिसद्भावेऽपि लक्षणाऽभावाच्च । न च तस्यानाप्तवाक्यत्वान्न तत्र लक्षणेति वाच्यम् । **वादिवाक्ये** लाक्षणिकार्थस्वीकाराभावप्रसङ्गात् ।

**मणिकारस्तु ।** अन्वयपरस्य प्रमाणशब्दस्य मुख्येऽन्वयायोग्यत्वमेव लक्षणाबीजम् । गङ्गायां घोष इत्यादौ लक्ष्ये तात्पर्यग्रहात् पूर्वमेव मुख्यार्थस्यान्वयायोग्यत्वज्ञानेन लक्षणादर्शनात् । अस्तु वा लक्ष्ये तात्पर्यग्रहः । तथाऽपि मुख्येऽन्वयानुपपत्तिरेव लक्षणाबीजम् । प्रथमोपस्थितत्वात् तात्पर्यानुपपत्तिं विनैव लक्षणाबीजत्वसंभवाच्च । यष्टीः प्रवेशयेत्यत्राजहत्स्वार्थायां च मुख्यान्वयानुपपत्तिरेव । तथा हि । प्रकरणादिना प्रवेशयेत्यस्य भोक्तृप्रवेशनपरत्वं, यान्तीत्यस्य छत्रितदितरघटितसमूहकर्तृकगमनपरत्वं, ज्ञातम् , तादृशप्रवेशनगमनयोरन्वयायोग्यावेव यष्टिच्छत्रिणौ इत्याह ॥ तन्न ॥ अनाप्तवाक्ये लक्षणाबीजत्वेन क्लृप्तायास्तात्पर्यानुपपत्तेः प्रमाणवाक्ये लक्षणाबीजत्वसंभवे अन्वयानुपपत्तेः लक्षणाबीजत्वकल्पनाऽयोगात् । मुख्यार्थान्वयायोग्यत्वज्ञानस्य मुख्यार्थपरित्यागहेतुत्वेऽपि लक्षणास्वीकारहेतुत्वाभावाच्च ।

यदपि गङ्गायां घोष इत्यादौ लक्ष्ये तात्पर्यग्रहात्पूर्वमेव मुख्यार्थस्यान्वयायोग्यत्वज्ञानेन लक्षणादर्शनात् इति । तदपि न । मुख्यार्थसंबन्धिनां बहूनां विद्यमानत्वेन नियामकं विना तीरपरिग्रहाभावप्रसङ्गात् । किं च यदनुपपत्त्या यत्कल्प्यते तत्तस्योपपादकं दृष्टम् । गङ्गाशब्दमुख्यार्थस्य

प्रवाहस्य घोषाधारत्वरूपान्वयानुपपत्त्या चेल्लक्षणा कल्प्यते तर्हि कल्पिता लक्षणा प्रवाहस्य घोषाधारत्वरूपान्वयोपपादिका स्यात् । न च तदुपपादिकेति नान्वयानुपत्त्या लक्षणा । तात्पर्यानुपपत्त्या लक्षणाऽङ्गीकारे तु नैष दोषः । लक्षणायास्तदुपपादकत्वात् । न च लक्ष्यार्थबोधे सति तात्पर्यग्रहः । तस्मिंश्च सति तात्पर्यानुपपत्त्या लक्ष्यार्थबोध इति अन्योन्याश्रय इति वाच्यम् । तात्पर्यज्ञानकारणस्य लक्ष्यार्थबोधस्य पदजन्यत्वाभावेन तात्पर्यग्रहाधीनलक्षणावृत्तिज्ञानाधीनत्वाभावात् । संभावनया प्रकरणादिना च तीराधिकरणकघोषतात्पर्यवानयमिति तात्पर्यग्रहानन्तरं गङ्गापदस्य लक्षणावृत्तिग्रहे सति तात्पर्यविषयीभूतस्य संसर्गस्य शब्देन बोध इत्यङ्गीकारात् ।

यदपि यष्टीः प्रवेशयेत्यत्राजहत्स्वार्थायां च मुख्यान्वयानुपपत्तिरेव । तथा हि । प्रकरणादिना प्रवेशयेत्यस्य भोक्तृप्रवेशनपरत्वं, यान्तीत्यस्य छत्रितदितरघटितसमूहकर्तृकगमनपरत्वं ज्ञातम् । तादृशप्रवेशनगमनयोरन्वयायोग्यत्वेव यष्टिच्छत्रिणाविति । तदपि न । वाक्यस्यैव भोजनप्रयोजनकप्रवेशनपरत्वेन प्रवेशयेति पदस्य तत्परत्वाभावात् । अस्तु वा पदस्य तत्परत्वं तथापि पदार्थान्वयानुपपत्तेरभावेन तात्पर्यविषयीभूतपदार्थान्वयानुपपत्त्यभिधानात् वरं तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वाभिधानं उपजीव्यत्वेनावश्यकत्वात् ॥ छ ॥ **इति मण्युक्तलक्षणाबीजभङ्गः ।**

लक्षणास्थले च । घोषपदवत् लाक्षणिकमपि गङ्गापदमनुभावकम् । अत्र कश्चित् । लक्षणास्थले स्मृतशक्यान्वयानुपपत्तिज्ञानानन्तरं गङ्गापदात् पुनः शक्यस्मृतिः स्मृतशक्यात्स्वसंबन्धेन तीरस्य स्मृतिः । शक्तेः शक्यस्मृतौ, प्रवाहस्य स्वसंबन्धेन तीरस्मृतौ सामर्थ्यावधारणात् । अतः शक्यस्मारिततीरस्य इतरपदादेवान्वयबोधः । अत एव लाक्षणिकं नानुभावकम् । अन्वयप्रतियोगिनस्तीरस्य ततोऽनुपस्थितेः । अन्वयप्रतियोग्युपस्थापकत्वेन च पदानामन्वयानुभावकत्वात् । न च गङ्गापदात् स्वशक्यसंबन्धेन प्रथमं तीरस्मृतिरेव । पुनः शक्यस्मरणे गौरवादिति वाच्यम् । पदस्य स्वशक्यसंबन्धेनान्वयप्रतियोगिस्मारकत्वाकल्पनात् । न चेहैव तत्कल्पनम् । क्लृप्तकारणकस्मृतिद्वयादेव तीरोपस्थितिसंभवादित्याह ।

तन्न । लक्षणावृत्तिस्वीकारवैयर्थ्यप्रसङ्गेन लाक्षणिकस्याननुभावकत्वायोगात् । न ह्यनुभावकत्वसिद्धिं विनाऽन्यत् लक्षणावृत्तिस्वीकारस्य प्रयोजनमस्ति । येनाननुभावकत्वेऽपि लक्षणास्वीकारो युक्तः स्यात् । न च लाक्षणिकस्यान्वयप्रतियोग्यनुपस्थापकत्वान्नान्वयानुभावकत्वमिति वाच्यम् । लक्षणा-

न्यथानुपपत्त्यैव तस्यापि वक्तव्यत्वात् । तीरे गङ्गापदनिष्ठसप्तम्यर्थान्वयबोधाभावप्रसङ्गात् । प्रत्ययानां प्रकृत्यर्थान्वितस्यैव स्वार्थस्य बोधकत्वात् ।

**मणिकारस्तु** । प्रकृत्यर्थे विभक्त्यर्थान्वयनियमात् लाक्षणिकमेव पदं शक्यसंबन्धेन लक्ष्यस्मृतिकारणम् । न चैवं गङ्गापदात्साक्षात्तीरोपस्थितौ शक्तिः । तां विनाऽपि तदुपस्थितिसंभवात् । नन्वेवमन्वयप्रतियोग्युपस्थापकतयेतरपदवल्लाक्षणिकमनुभावकं स्यादिति चेत् । न । इतरपदार्थैः सह स्वशक्यान्वयानुभावकत्वेन क्लृप्तादितरपदादेव तीरानुभवसंभवेन लाक्षणिकस्याननुभावकत्वात् । स्वशक्यान्वयानुभवे पदानां कारणत्वावधारणात् इत्याह । तन्न ॥ वृत्त्युपेतं गङ्गापदं विहाय वृत्तिमात्रशून्यस्य घोषपदस्य तीरानुभवहेतुत्वाङ्गीकारायोगात् । न हि तीरसंबन्ध्यपि गङ्गापदं शक्तिरूपसाक्षात्संबन्धवैधुर्यात् न तीरानुभावकम् । घोषपदं तु अनुभावकमिति संभवति । शक्तिवैधुर्यस्यात्रापि सद्भावात् । अन्यथा गामानयेत्यादावपि गोपदाच्छक्यस्मृतिरेव इतरपदार्थैः सह स्वशक्यानुभावकत्वेन क्लृप्तादितरपदादेव गवानुभवः न गोपदादिति स्यात् । गोपदात्स्वार्थान्वयप्रतियोगिस्मरणाभावात् नानुभावकम् । उत्तरपदं तु आद्येनैवान्वयप्रतियोगिनः स्मृतत्वेन तदन्वितस्वार्थान्वयानुभावकमिति वक्तुं शक्यत्वात् । किं च लाक्षणिकस्याननुभावकत्वे तेन सहैकवाक्यत्वेन प्रामाण्यं न स्यात् । तेन संभूय प्रमाकरणत्वाभावात् । न चाप्तोक्तत्वात् गङ्गापदान्तर्भावेनान्वयप्रमाप्रयोजकत्वं, संभूयान्वयबोधप्रयोजकत्वं च गृहीतं तदुभयमपि तीरोपस्थितिद्वारा निर्वहतीति वाच्यम् । आप्तोक्तत्वस्य अन्वयप्रमाकरणत्वव्याप्यत्वेन गङ्गापदान्तर्भावेन प्रमाकरणत्वस्यैव निश्चयात् । अन्वयप्रमाप्रयोजकत्वस्य प्रामाण्यरूपत्वाभावेन तदुपपादनवैयर्थ्यात् च । यच्चोक्तम् । प्रकृत्यर्थे विभक्त्यर्थान्वयनियमात् लाक्षणिकमेव गङ्गापदं शक्यसंबन्धेन लक्ष्यस्मृतिकारणमिति । तन्न । तावताऽपि तीरस्य प्रकृत्यर्थत्वालाभात् । वाक्यार्थे क्लृप्तत्वेन तज्जन्यानुभवविषयत्वस्यैव तदर्थत्वे तन्त्रत्वात् । न हि यद्यस्य स्मारकं स तस्यार्थः । येन तीरं गङ्गापदशब्दार्थः स्यात् । अन्यथैकवाक्यान्तर्गतं पूर्वपदं उत्तरपदस्मारकमिति उत्तरपदं पूर्वपदार्थः स्यात् । यदपि 'न चैवं गङ्गापदात्साक्षात्तीरोपस्थितौ शक्तिः । तां विनाऽपि तदुपस्थितिसंभवादि'ति । तदपि न । शक्तिं विनेव लक्षणां विनापि स्मृतिसंभवेन लक्षणावृत्त्यभावापातात् । किं च यदि शक्तिर्न स्यात् तर्हि शाब्दबोधानुकूलस्मृतिर्न स्यात् । यदि शक्तिकार्यनिर्वाहाय लक्षणाभ्युपगमात् तया स्मृतिसिद्धिः । तर्हि लक्षणयैव शक्तिसाध्यशाब्दानुभवसिद्धिरपि अनिवार्या ।

**पक्षधरस्तु**। अननुभावकमेव लाक्षणिकं पदम्। स्वशक्यान्वयानुभवत्वावच्छेदेन पदानां कारणत्वावधारणात्। न च स्वशक्यानुभवत्वापेक्षया स्वोपस्थाप्यानुभवत्वस्य लघुत्वात्तदवच्छेदेनैव कारणताऽस्तु। लाघवादिति वाच्यम्। अतिप्रसङ्गात्। नापि वृत्त्या स्वोपस्थाप्यानुभवत्वावच्छेदेन कारणतेति वाच्यम्। कार्यतावच्छेदकस्य वृत्तिगर्भत्वाङ्गीकारेऽन्योन्याश्रयात्। शाब्दबोधानुकूलपदार्थोपस्थिति-हेतुसंबन्धस्यैव वृत्तित्वात्। वृत्तिघटितकार्यतावच्छेदकग्रहे तदवच्छेदेन पदानां कारणताग्रहः तद्ग्रहे च शाब्दबोधानुकूलसंबन्धत्वरूपवृत्तित्वज्ञानमित्यन्योन्यसापेक्षज्ञप्तिकत्वात्। किं च ईश्वराभिप्रायत्वेन पदार्थान्तरत्वेन वा शक्तिज्ञानं नानुभवप्रयोजकम्। किं तु अनुभवजनकतावच्छेदकधर्मत्वेन ज्ञानम्। तथा च शक्तिं विनाऽनुभवजनकत्वं, अवच्छेदकं विना जनकत्वमिति पर्यवसितम्। तथा च व्याघातः। तस्माच्छक्तस्यैव जनकतावच्छेदकावच्छिन्नत्वात् अनुभावकत्वं, न तु लाक्षणिकस्येत्याह। **तन्न**॥

शब्दार्थत्वव्यवहारप्रयोजकसंबन्धत्वं वृत्तित्वमित्यङ्गीकारे अन्योन्याश्रयाभावात्। वदन्ति हि गङ्गाशब्दस्य प्रवाहः शक्यार्थः तीरं तु लाक्षणिकार्थ इति। यदपि किं चेत्यादि। तदपि न। घटपदं घटस्य वाचकमिति शक्तिज्ञानविधुरस्य घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्य-वृद्धप्रवृत्तिं पश्यतः घटानयनात्प्राक् घटपदं अनुभवजनकतावच्छेदकधर्मवत् प्रवृत्तिहेतुशब्दत्वात् इत्यनुमि-मानस्य अनुभवजनकतावच्छेदकधर्मत्वेन शक्तिज्ञानसद्भावेऽपि तस्य शाब्दबोधाभावेन शक्तिज्ञानस्य तेन रूपेणाकारणत्वात्। अयमत्र शक्त इत्येवंरूपज्ञानसद्भावे शाब्दबोधः अन्यथा नेत्यन्वयव्यतिरेकाभ्यां विशिष्य शक्तिज्ञानस्यैव कारणत्वावधारणेन शक्तेः कारणतावच्छेदकत्वाभावात्। अन्यथा शक्तिभ्रमेण अशक्तात्पदादनुभवो न स्यात्। अस्तु वा शक्तिः कारणताऽवच्छेदिका। शक्तिं विना पदस्य कारणत्वाङ्गीकारे न व्याघातः। तृणारणिमणिन्यायेनावच्छेदकान्तरेण कारणत्वसंभवात्। न हि अरण्यादौ तृणत्वं नास्तीति अरण्यादिकं न वह्निं प्रति कारणम्। येन शक्तत्वाभावाल्लाक्षणिकमननुभावकं स्यात्। किं च गङ्गायां घोष इति वाक्यात् श्रोतुः तीरे देवदत्तघोष इति बोधो न स्यात्। गङ्गापदवत् घोषपदस्यापि घोषविशेषे लाक्षणिकत्वेनान्वयबोधकाभावात् इति॥ छ॥ **इति लाक्षणिकस्याननुभावकत्वभङ्गः**।

लक्षणा च पदधर्मः वृत्तित्वात् शक्तिवत्। **मीमांसका मन्यते**। गम्भीरायां नद्यां घोष इत्यत्र नैकपदे लक्षणा। पदद्वयार्थस्याप्यनुपपन्नत्वात्। घोषाधिकरणस्य नदीत्वानुपपत्तिवत् गम्भीरत्व-स्याप्यनुपपन्नत्वात्। नापि पदद्वये लक्षणा। नदीशब्देन नदीसंबन्धिनस्तीरस्येव गम्भीरशब्देनापि तस्यैव बोधप्राप्तौ तीरे तीरे घोष इति बोधप्रसङ्गात्। गम्भीरनदीतीरे घोष इति बोधाभावप्रसङ्गाच्च।

तस्माद्गम्भीरनद्योरन्वयबोधानन्तरं वाक्येन स्वज्ञाप्यगम्भीरनद्यास्तीरं लक्ष्यत इत्यभ्युपेयम् । न च वाक्ये शक्त्यभावात् तत्संबन्धं विना न लक्षणेति वाच्यम् । स्वज्ञाप्यसंबन्ध एव हि लक्ष्यस्मृतौ तन्त्रं न तु संबन्धविशेषः शक्तिः । गौरवात् । ज्ञाप्यश्च शक्यवद्वाक्यार्थोऽपि । एवं 'पदपांसुना यूपमनक्ति । सप्तमं पदं गृह्णाती'त्यत्र पदस्य ग्रहणकर्मानर्हत्वेन ग्रहणकर्मार्हेषु अञ्जनसाधनत्वेन निरूढेषु सोमक्रयार्थानीयमानैकहायन्युपलक्षितसप्तमपदपांसुषु सप्तमपदान्वितपदपदार्थान्वयबोधके सप्तमं पदमिति वाक्ये लक्षणेति ।

**अत्रोक्तं मणिकृता ।** पदलक्षणयैवोपपत्तौ न वाक्ये लक्षणा । तथा हि । गम्भीरनद्योरन्वय-बोधानन्तरं नदीपदं गम्भीरपदं वा स्वज्ञाप्यगम्भीरनद्यास्तीरं लक्षयति न वाक्यम् । न च विनिगमकाभावेन पदयोर्लक्षणाद्वयं, वाक्ये चैकैव लक्षणेति युक्तम् । पदे क्लृप्तत्वात् । वाक्यापेक्षया च लघुत्वाच्च पद एव लक्षणा । अन्यथा विनिगमकाभावात् लक्षणाद्वयं पदे वाक्ये चापरा लक्षणेति गौरवं स्यात् । अन्वयबोधपूर्विका प्रत्येकं पदद्वये लक्षणैव । वाक्यलक्षणेति तु परिभाषा । पदवाक्ययो-र्भिन्नत्वात् । वस्तुतस्तु गम्भीरपदात् स्वार्थपरम्परासंबन्धेन लक्ष्योपस्थितौ विलम्बात् नदीपदात् साक्षात्संबन्धेन शीघ्रं तीरोपस्थितिसंभवात् तत्रैव लक्षणेति । सप्तमं पदं गृह्णातीत्यत्रापि सप्तमपदयोरन्वय-बोधानन्तरं सप्तमपदार्थान्वितस्वार्थबोधके पदपदे लक्षणा न तु वाक्य इति ।

**तन्न ।** गम्भीरनदीपदयोरन्यतरलक्षणापक्षे एकस्य पदस्य मुख्यार्थत्वेन तदर्थस्य लक्ष्यार्थे-नान्वयानुपपत्त्या अन्यतरलक्षणाऽयोगात् । पदद्वयलक्षणयोश्च तीरे तीरे घोष इति द्विर्बोधप्रसङ्गेना-युक्तत्वात् । एतेनैव वस्तुतस्त्वित्यादिनोक्तः अन्त्यपदलक्षणानियमपक्षोऽपि निरस्तः । पूर्वपदस्योत्तर-पदेन सह संभूयान्वयप्रतिपादकत्वलक्षणस्यैकवाक्यत्वस्य प्रामाण्यस्य चाभावापातात् ।

**रुचिदत्तस्तु ।** विशेषणविभक्तिः साधुत्वार्थमित्यभ्युपगमात् नदीपदलक्षणायामेव विभक्त्य-र्थान्वय इति विशेष्यवाचिपद एव लक्षणा । किं च शुक्लायां नद्यामित्यादौ शुक्लपदात्स्वार्थपरम्परा-संबन्धेन लक्ष्योपस्थितौ विलम्बात्, इत्युक्तयुक्त्या विशेष्यपद एव लक्षणाकल्पनादन्यत्रापि तथा । न च तत्र शुक्लपदस्य लाक्षणिकत्वेनानुभावकत्वाभावात् स्वज्ञाप्याभावेन न लक्षणेति वाच्यम् । सुतरां तर्हि तत्र विशेष्यपद एव लक्षणाकल्पनम् । वस्तुतस्तु तदप्यनुभावकमेवेत्युक्तमित्यत्र तात्पर्यमित्याह ।

तत्र । विशेषणविभक्तेः साधुत्वार्थत्वेऽपि विशेषणपदस्य स्वशक्यसंबन्धेन लक्ष्यार्थस्मारकत्वान्यायात् । न हि मणिकृता लाक्षणिकपदस्य लक्ष्यार्थस्मारकत्वातिरिक्तो व्यापारोऽङ्गीक्रियते येन साक्षात्स्वार्थसंबन्धेन लक्ष्यार्थस्मारकत्वे विद्यमानेऽपि न लाक्षणिकत्वं स्यात् । न चाधिकरणत्वस्मृत्यसंभवः । प्रातिपदिकेन लक्षणया तीरत्वस्योपस्थितिवत् अधिकरणत्वस्याप्युपस्थितिसंभवात् । लक्षकस्य पदस्य स्वार्थद्वारा तीरत्वावच्छिन्नेन संबन्धवत् अधिकरणत्वावच्छिन्नेनापि संबन्धसद्भावात् । विशेषणविभक्त्या वा लक्ष्यार्थस्याधिकरणत्वान्वयबोधः । न हि विशेषणस्य शक्यार्थपरतायां विभक्तिः साधुत्वार्थेति लक्ष्यार्थपरतायामपि साधुत्वार्थेत्यत्र किञ्चिद्विनिगमकम् । येन विभक्तेः लक्ष्यार्थान्वितस्वार्थानुभावकत्वं न स्यात् । यदपि किं च शुक्लायां नद्यामित्यादौ शुक्लपदात्स्वार्थपरम्परासंबन्धेन लक्ष्योपस्थितावित्यादि । तदपि न । 'गुणे शुक्लादयः पुंसि गुणलिङ्गास्तु तद्वती'ति वचनबलात् शुक्लशब्दस्य शुक्लरूपविशिष्टवस्तुवाचित्वेन परम्परासंबन्धाभावात् । ननु 'आश्रयतो व्यवस्था । तद्यथा गुणवचनानां आश्रयतो लिङ्गवचनानि भवन्ति । शुक्लं वस्त्रं शुक्ला शाटी । शुक्लः कम्बलः । शुक्लौ कम्बलौ । शुक्लाः कम्बलाः । यदसौ द्रव्यं श्रितो भवति गुणः तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवती'ति महाभाष्योक्तेः शुक्लादयः शब्दाः तद्वति लाक्षणिका एवेति चेत् । न । भाष्यस्याभ्युपगमवादेन प्रवृत्तत्वात् । अस्तु वा गुणवाचकशब्दस्य गुणिनि लक्षणा । तथाऽपि नोत्तरपद एव लक्षणेति नियमो घटते । बाधकवशेन शुक्लायां नद्यामित्यत्र लक्षकत्वासंभवेऽपि गम्भीरायां नद्यामित्यत्र लक्षकत्वसंभवात् । बाधकाभावात् । न ह्येकत्र बाधकवशात् त्यक्तं बाधकाभावेऽप्यन्यत्र त्याज्यमिति वचनं युक्तिमत् । अन्यथा गङ्गायां घोष इत्यत्र बाधकवशेन मुख्यार्थस्त्यक्त इति गङ्गायां मत्स्य इत्यत्रापि त्याज्यः स्यात् ।

यदपि । तत्र शुक्लपदस्य लाक्षणिकत्वेनानुभावकत्वाभावात् स्वज्ञाप्याभावेन तत्र लक्षणेत्याशङ्क्य सुतरां तर्हि तत्र विशेष्यपद एव लक्षणाकल्पनमिति समाधानमुक्तम् । तत्र शङ्का तावदयुक्ता । लक्षितलक्षणास्थले स्वज्ञाप्याभावेऽपि लक्षकत्वस्य दृष्टत्वेन स्वज्ञाप्याभावस्याप्रयोजकत्वात् । समाधानमप्ययुक्तम् । असङ्गतत्वात् । न हि शुक्लायां नद्यामित्यत्र शुक्लपदस्य ज्ञाप्याभावेन विशेष्ये पद एव लक्षणेति वदन्तं प्रति सुतरां तर्हि तत्र विशेष्यपद एव लक्षणाकल्पनं इति वचनं युक्तिमत् । येन सङ्गतं स्यात् । ननु त्वदुक्तरीत्यैवोत्तरपदलक्षणासिद्धौ क्लृप्तत्वात् गम्भीरायां नद्यामित्यत्रापि उत्तरपद एव लक्षणेत्यत्र तात्पर्यात् नासङ्गतिरिति चेत् । न । बाधकवशेन शुक्लायां नद्यामित्यत्र लक्षकत्वासंभवेऽपि बाधकाभावस्थले पूर्वपदस्यैव लक्षकत्वसंभवेन तथा तात्पर्यस्यैवायोगात् । यदपि वस्तुतस्तु तदप्यनुभावकमेवेत्युक्तमित्यत्र तात्पर्यमिति । तदपि न । मणिकृता लाक्षणिकमनुभावकं नेत्युक्तत्वेन

तदप्यनुभावकमेवेत्युक्तमित्यत्र तात्पर्यमित्युक्त्ययोगात् । यदपि मणौ सप्तमपदं गृह्णातीत्यत्र पदपद एव लक्षणेत्युक्तं तदप्यत एव निरस्तम् । पांसुषु सप्तमपदसंबन्धित्वरूपविशेषणबोधाभावप्रसङ्गादिति ।

वयं तु ब्रूमः । गम्भीरायां नद्यामित्यत्र नैकपदे लक्षणा नापि वाक्ये । किं तु पदद्वये लक्षणा । पदद्वयस्याप्यनुपपन्नमुख्यार्थत्वेनोभयोर्लाक्षणिकार्थपरत्वात् । आप्तवाक्यान्तर्गतस्यानुपपन्नमुख्यार्थस्यैकस्य लाक्षणिकार्थपरत्वाभावेऽपरस्यापि न स्यात् । अविशेषात् । लक्षणायाः पदधर्मत्वेन वाक्यधर्मत्वाङ्गीकारायोगात् । पदलक्षणयोपपत्तौ वाक्यलक्षणाङ्गीकारायोगाच्च । न च द्वयलक्षणाङ्गीकारे गम्भीरतीरे नदीतीरे घोष इति द्विस्तीरावगाहिबोधप्रसङ्गः । द्वाभ्यामपि पदाभ्यां व्यासज्यवृत्त्यैकलक्षणया संभूयैकदैव तीरावगाहिबोधो भवतीत्यङ्गीकारात् । न च लक्षणायाः व्यासज्यवृत्तित्वानुपपत्तिः । पङ्कजपदरूढेः पङ्कजपदयोर्व्यासज्यवृत्तित्वदर्शनेन लक्षणाया अपि व्यासज्यवृत्तित्वसंभवात् । दृश्यते च, देवानां प्रियः, पुण्यजन, इत्यादौ पदद्वये व्यासज्य रूढिः । न चैवं गम्भीरनदीसंबन्धिनि तीरे घोष इति बोधो न स्यादिति वाच्यम् । गङ्गायां घोष इत्यत्र गङ्गापदस्य तीरलक्षकत्वेऽपि गङ्गाव्यावृत्ततीरबोधजननस्वभाववत् विशेषणविशेष्यभावापन्नपदद्वयलक्षणाया अपि अन्वयबोधपूर्वकत्वेन गाम्भीर्यविशिष्टनदीव्यावृत्ततीरबोधजननस्वाभाव्याङ्गीकारात् । न च पदद्वयलक्षणा नाम वाक्यलक्षणैव । पदसमूहस्यैव वाक्यत्वात् इति वाच्यम् । पदद्वयस्य वाक्यत्वेऽपि गम्भीरपदत्वनदीपदत्वयोरेव लक्षकतावच्छेदकत्वेन लक्षणायाः लक्षकतावच्छेदकावच्छिन्नपदधर्मत्वस्यैवौचित्यात् । अन्यथा, पङ्कजं, देवानां प्रियः, पुण्यजन, इत्यादिपदशक्तीनां पदद्वयवृत्तित्वेन वाक्यशक्तित्वं स्यात् । अथ तत्र वाक्यत्वं न शक्ततावच्छेदकमिति न सा वाक्यशक्तिः हन्त तर्हि इहापि वाक्यत्वं न लक्षकतावच्छेदकमिति लक्षणापि न वाक्यवृत्तिरिति । ननु कुतः पदत्वं लक्षकताऽवच्छेदकमङ्गीक्रियते वाक्यत्वमेव लक्षकताऽवच्छेदकमिति कुतो नाभ्युपेयत इति चेत् । न । लक्षणायाः शक्तिप्रतिनिधित्वात् शक्तेश्च पदत्वावच्छिन्नत्वेन लक्षणाया अपि तथात्वौचित्यात् । एवं सप्तमं पदं गृह्णातीत्यत्र ग्रहणकर्मार्हेषु पांसुषु सप्तमं पदमित्यनयोः पदयोर्लक्षणा । **इति व्यासज्यवृत्तिलक्षणासमर्थनम् ॥**

श्लो: ॥ एवं चित्रगुरित्यादिबहुव्रीहौ पदद्वयस्यैवान्यपदार्थे लक्षणा । न तु समुदायशक्तिः । न चोत्तरपदमात्रे लक्षणा नापि पूर्वपदमात्रे वा । 'अनेकमन्यपदार्थे' इति स्मरणात् । न हि समुदायशक्तिपक्षे समस्यमानानेकपदानां अन्यपरत्वम् । अन्यपदार्थशक्तिविधुराणां तेषां अतिप्रसङ्गेन तत्परत्वायोगात् । समस्यमानानेकपदैरेवान्यपदार्थबोधसंभवे समुदायशक्तिकल्पनावैयर्थ्यप्रसङ्गाच्च । समस्यमानपदैरन्यपदार्था-

प्रतीतावेव समुदायशक्तेः कल्प्यत्वात् । नापि उत्तरपदमात्रलक्षणापक्षे पूर्वपदमात्रलक्षणापक्षे वा अनेक-मन्यपदार्थं इति संभवति । नापि पदद्वये प्रत्येकं लक्षणा । न तु व्यासज्यवृत्तिर्लक्षणेति युक्तम् । द्विर्बोधप्रसङ्गात् । एकलक्षणयैवोपपत्तौ अनेकलक्षणाकल्पनाऽयोगाच्च । ननु व्यासज्यवृत्तिलक्षणापक्षे चित्रगवस्वामीति बोधो न स्यात् । द्वयोः पदयोः साक्षादेवान्यपदार्थबोधकत्वेन परस्परसंबन्धवैधुर्यात् । स्याच्च चित्रस्य गोश्च स्वामीति बोध इति चेत् । न । विशेषणविशेष्यवाचिपदवृत्तिव्यासज्यवृत्तिलक्षणाया विशेषणावच्छिन्नविशेष्यसंबन्धिबोधजनकत्वस्वाभाव्यात् । नन्वस्ति नियमतोऽन्यपदार्थे तात्पर्यम् । न च नियततात्पर्यं शक्त्या विना संभवति । नियततात्पर्यस्य शक्तिनिर्वाह्यत्वात् । दृश्यते खलु घटादिपदानां शक्यार्थे नियतं तात्पर्यम् । न दृश्यते च लक्षकानां गङ्गादिपदानां तीरादौ नियतं तात्पर्यम् । गङ्गायां मत्स्य इत्यादौ तीरे तात्पर्याभावात् । गङ्गायां घोष इत्यादौ शक्येप्यर्थे न तात्पर्यं दृश्यते इति चेत् । मा दर्शि । तथाऽपि शक्तस्य शक्ये औत्सर्गिकं तात्पर्यमित्यस्याबाध एव । गङ्गापदस्योत्सर्गतोऽतीरे बाधके तीरे तात्पर्यमित्यस्य सार्वजनीनत्वादिति चेत् न । गङ्गायां घोष इति समुदायनिष्ठस्य तीराधिकरणकघोषविषयकनियततात्पर्यस्य अवयवलक्षणया निर्वाहवत् बहुव्रीहावपि अन्यपदार्थे नियततात्पर्यस्य अवयवलक्षणयैवोपपन्नत्वात् ।

ननु मा भूत् नियततात्पर्यानुपपत्त्या शक्तिसिद्धिः । नियमेनान्यपदार्थप्रतीत्यन्यथानुपपत्त्या नु शक्तिसिद्धिः स्यादेव । तथा हि । यजमानपञ्चमा ऋत्विजः । लोहितोष्णीषाः ऋत्विजश्चर-न्तीत्यादौ नान्यपदार्थे तात्पर्यम् । किं तु विधेयत्वात् यजमानपञ्चमत्वलोहितत्वयोरेव तात्पर्यम् । प्रतीयते च नियमेनान्यपदार्थः । यजमानपञ्चमा ऋत्विजः लोहितोष्णीषाः ऋत्विज इति ऋत्विग्वाचक-पदसामानाधिकरण्यस्यानुभवात् । न च वृत्त्या विनाऽन्यपदार्थबोधकतोपपद्यते । वृत्त्यैव पदानां बोधकत्वात् । न च लक्षणया अन्यपदार्थबोधः । अन्यपदार्थे तात्पर्याभावेन तात्पर्यानुपपत्तिरूपलक्षणा-बीजाभावात् । ततश्च परिशेषाच्छक्तिरिति चेत् । न । यजमानपञ्चमा इत्यादावपि अन्यपदार्थे तात्पर्यसद्भावात् । अन्यथा यजमानपञ्चमा ऋत्विज इति वाक्यार्थे अन्यपदार्थस्य समन्वयो न स्यात् । तात्पर्याविषयस्य वाक्यार्थे समन्वयायोगात् । ननु बहुव्रीहौ समुदाये रूढिरङ्गीकार्या । 'तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किं च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तमि'ति श्रुत्या बहुव्रीहिप्रातिपदिकस्य विश्वामित्रशब्दस्य आचक्षत इति प्रयोगाभिधानेन रूढेः सूचनात् । तथा 'आपो नारा इति प्रोक्ताः आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति । स्मृत्या बहुव्रीहिप्रातिपदिकस्य नारायणशब्दस्य रूढिसूचनादिति चेत् । स्यादयं दोषः । यदि विश्वामित्रशब्दो

बहुव्रीहिरेव स्यात् । न चैवम् । किं नाम विश्वस्य मित्रमिति तत्पुरुषोऽपि । न च तद्यदस्येदं विश्वं मित्रमासीदित्येवंरूपेणापि वाक्येन विश्वस्यायं मित्रं इत्यर्थस्य लाभात् कुत एवं विग्रहवाक्यस्य तात्पर्यं कल्प्यते । यथाश्रुतार्थपरमेव किं न स्यादिति चेत् । 'तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किं च, तस्माद्विश्वामित्र' इत्युक्त्या गङ्गासंबन्धात्तीरं गङ्गेत्युक्त्या गङ्गाशब्दलक्ष्यत्ववत् भगवतोऽपि मित्रीभूत-जगत्संबन्धेन विश्वामित्रशब्दलक्ष्यत्वापत्त्या प्रायपाठविरोधात् । 'विश्वस्य ह वै मित्रं विश्वामित्र आस, विश्वं हास्य मित्रं भवति य एवं वेदे'ति समाख्यानाच्चेति ब्रूमः । न चैव सति 'परवलिङ्गं द्वन्द्व-तत्पुरुषयोरिति स्मरणात् विश्वामित्रमिति नपुंसकमेव स्यात्, न पुलिङ्गमिति वाच्यम् । लोकानु-सारित्वाल्लिङ्गस्येति महाभाष्योक्तेः लिङ्गस्य प्रयोगाधीनत्वात् । उक्तं च महाभाष्येऽन्यत्रापि । बहुलं तणि । किमिदं तणीति । संज्ञाछन्दसोः तणीति संज्ञेति । स्मृतेरपि नारायणशब्दस्य नाराणां अयनं नारायण इति योगेन विष्णुवाचकस्य, बहुव्रीह्याश्रयणेन निरूढलक्षणयाऽपि भगवति प्रवृत्तिरित्यभिप्रायेण प्रवृत्तत्वात् । न तयाऽपि बहुव्रीहौ रूढिसिद्धिः । लक्षणया प्रवृत्त्यभिधानं तु विशिष्य प्रलयार्णवशायित्व-लक्षणगुणलाभाय । न च नारायणशब्दवाच्ये तस्मिन् नारायणशब्दस्य लक्षणाऽयोगः । नारशब्द-वाच्यमुक्ताश्रयत्वरूपगुणेन नारायणशब्दवाच्यस्यापि प्रलयार्णवशायित्वरूपेण बोधाय तच्छब्दलक्ष्यत्व-संभवात् । घटशब्दवाच्यस्यापि घटस्य छिद्रेतरत्वेन बोधाय तच्छब्दलक्ष्यत्वदर्शनात् ।

ननु बहुव्रीहौ लक्षणेत्ययुक्तम् । मुख्यार्थानुपपत्तिप्रतिसन्धानपूर्वकमवयवार्थसंबन्धिनोऽप्रतीतेरिति चेत् न । यष्टीः प्रवेशयेत्यादाविव तात्पर्यानुपपत्तेः तत्प्रतिसन्धानस्य च भावात् । न हि सदश्वमानयेत्यादौ तात्पर्यानुपपत्तिप्रतिसन्धानशून्यस्याश्वारूढप्रतीतिर्भवति । ननु चित्रगुर्व्यूढोरस्कः द्विमूर्धः व्याघ्रपात् प्रज्ञुः संज्ञुरित्यादौ तात्पर्यानुपपत्तिप्रतिसन्धानमन्तरैव झटित्यर्थप्रतीतेर्न लक्षणेति चेत् । न । बहुव्रीहि-लिङ्गोपेतानां व्यूढोरस्कादिशब्दानां अन्यपदार्थलक्षकत्वेऽपि निरूढत्वेन मार्गाश्चलन्तीत्यादाविव झडिति तात्पर्यानुपपत्तिबोधपूर्वकं तत्रापि लक्ष्यार्थोपस्थितिसद्भावात् । अन्यथा धूमदर्शनात् झडित्येव वह्निप्रतिसन्धानं भवतीति व्याप्त्यनुसन्धानं विनैव धूमाद्वह्निज्ञानं भवतीति स्यात् । न च बहुव्रीहावन्यपदार्थे समुदायशक्त्यङ्गीकारो युक्तः । 'अनेकमन्यपदार्थे' इति पाणिनीयसूत्रविरोधात् । समुदायशक्तिपक्षे समस्यमानानेकसुबन्तस्यान्यपदार्थवृत्तित्वाभावात् । तस्यैवान्यपदार्थवृत्तित्वे समुदायशक्त्यङ्गीकारोऽयुक्तः । अनन्यलभ्यस्यैव शब्दार्थत्वात् । लक्षणाया अवर्जनीयत्वाच्च । न हि व्यासज्यवृत्तिलक्षणामन्तरा समस्यमानानेकसुबन्तस्यान्यपरत्वं संभवति । किं च समुदायशक्तिपक्षे अन्यपदार्थ इत्ययुक्तं प्राप्नोति ।

बहुव्रीहिलभ्यार्थस्य समुदायशक्यत्वात् । समुदायस्य च समस्यमानानेकान्यत्वाभावात् । ननु समुदायस्या-नेकावयवगर्भितत्वात् अवयवस्यापि परम्परयाऽन्यपदार्थबोधकत्वेनान्यपदार्थवृत्तित्वम् । न हि चित्रगो-पदयोरभावे चित्रगोस्वामिलाभः । सूत्रोक्तान्यपदार्थत्वं च समासारंभकवर्तिपदार्थापेक्षयेति समुदायोऽन्य-पदार्थवृत्तिरेवेति न सूत्रविरोध इति चेत् । न । समुदायान्तर्गतानामनेकावयवानां अन्यपदार्थे लक्षणा-वृत्त्यभावे परम्परया अन्यपदार्थबोधकत्वस्यान्यपदार्थवृत्तित्वस्य चायोगात् । अन्यथा पङ्कजशब्दावयवा-नामपि परम्परया अन्यपदार्थबोधकत्वस्यान्यपदार्थवृत्तित्वस्य चापातेन तत्रापि बहुव्रीहिः स्यात् । पङ्कपदज-पदयोरभावे पद्मबोधस्याभावादिति वक्तुं शक्यत्वात् ।

यत्तु सूत्रोक्तान्यपदार्थत्वं समासारम्भकवर्तिपदार्थापेक्षयेति समुदायोऽन्यपदार्थवृत्तिरेवेति न सूत्रविरोध इति । तन्न । समुदायान्ययच्छब्दबोध्यार्थपरत्वस्यैव सूत्रोक्तान्यपदार्थवृत्तिशब्दार्थत्वात् । अन्यथा विग्रहवाक्ये अन्यपदार्थबोधनाय चित्रा गावो यस्येति यच्छब्दप्रयोगो न स्यात् । अन्यपदार्था-भिधाने अनुप्रयोगानुपपत्तेरभिहितत्वात् । 'अन्यपदार्थाभिधाने अनुप्रयोगानुपपत्तिः प्राप्नोति' । चित्रगुणा-भिहितः सोऽर्थ इति कृत्वा चित्रगुः कः देवदत्तः इत्यनुप्रयोगानुपपत्तिः प्राप्नोतीत्याशङ्क्य 'न वा एष दोषः अनभिहितत्वात्' । न वा एष दोषः । किं कारणम् । अनभिहितत्वात् । चित्रगुशब्देन सोऽर्थो-ऽनभिहित इति कृत्वाऽनुप्रयोगो भविष्यति । चित्रगुर्देवदत्त इति । 'कथमनभिहितः। सामान्याभिधाने विशेषानभिधानं' सामान्येऽभिधीयमाने विशेषः अनभिहितो भवति । तत्रावश्यं विशेषार्थिना विशेषोऽनु-प्रयोक्तव्यः । चित्रगुः कः देवदत्त इतीति समादधता भाष्यकृता चित्रग्वादिसमुदायातिरिक्तदेवदत्ताद्यन्य-पदार्थत्वस्य सौत्रान्यपदार्थशब्दार्थतयाऽभिहितत्वेन तद्विरोधाच्च ।

ननु मा भूत्तर्हि समुदायशक्तिः । किं तर्हि समासान्तानां पजादीनामेवान्यपदार्थे शक्तिः । यत्र न समासस्तत्रापि चित्रगुरित्यादौ ह्रस्वादिरूपविकारोऽस्त्येव । भवति च विकारेणाप्यर्थभेदः । यत्र विकारोऽपि न, तत्राप्यर्थपरः स्वरविशेषोऽस्त्येव । भ्रातृव्यादिपदेषु स्वरविशेषेणैव सपत्नाद्यर्थ-प्रतीतेः । इन्द्रशत्रुरिति पदे स्वरेणैवान्यपदार्थोक्तेश्चेति चेत् । न । घटादीनां सर्वेषामन्यपदार्थत्वेन परमसक्थः विशालाक्ष इत्यादिसमासान्तषचा घटादीनामपि बोधप्रसङ्गात् । न च नान्यपदार्थमात्रे शक्तिः किं तु समस्यमानपदार्थसंबन्धिन्यन्यपदार्थविशेषे शक्तिरिति वाच्यम् । विशालाक्षशब्देन कदाचित्पुरुषस्य कदाचित्पशोः कदाचिन्मृगस्य बोधेन षचोऽनेकशक्तिकल्पनाप्रसङ्गात् । न च संबन्धित्वं शक्यतावच्छेदकं अतो नानेकार्थतेति वाच्यम् । अवयवार्थसंबन्धेनान्यपदार्थबोधसंभवे पजादिशक्ति-

कल्पनावैयर्थ्यात् । अवयवानां समाससिद्धये लक्षणाया वक्तव्यत्वाच्च । अन्यपदार्थपरत्व एव समासविधानात् । अत एवावयवार्थसंबन्धिनोऽर्थस्य स्वरविकाराद्यर्थत्ववर्णनमपास्तम् । समस्यमानपदतात्पर्यविषयस्यान्यपदार्थत्वस्यैव वक्तव्यत्वेन स्वराद्यर्थत्वस्यावक्तव्यत्वात् । अत एवा-नेकमन्यपदार्थे इत्युक्तम् । अन्यथा अनेकमन्यपदाद्यर्थे इत्यवक्ष्यत् ।

यदपि भ्रातृव्यादिपदेषु स्वरविशेषेणैव सपत्नाद्यर्थप्रतीतेः इन्द्रशत्रुरितिपदे स्वरेणैवान्यपदार्थोक्ति-श्चेति । तदपि न । स्वरविशेषस्य व्यन्नन्तत्वबहुव्रीहित्वनिर्णायकत्वेऽपि अर्थप्रतीत्यजनकत्वात् । 'भ्रातृशब्दात् व्यन्प्रत्ययो भवति । समुदायेन चेत् सपत्न उच्यते' । इति काशिकोक्तेः । 'स्वरितत्वब-शब्दान्तं बहुव्रीहित्वमेष्यती'तिभगवत्पादोक्तेश्च । 'येनेन्द्रशत्रुः स्वरतोऽपराधादि'ति वाक्यं तु स्वरतोऽपराधे बहुव्रीहित्वप्राप्तौ इन्द्रशत्रुरितिपदं अनभिहितार्थाभिधायीत्यर्थकमिति न तद्बलेन स्वरस्य वाचकता । ननु बहुव्रीहौ शक्त्यभावे बहुव्रीहौ 'सक्थ्याक्ष्णोः स्वाङ्गात् षजि'ति षविधानं 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वत्व-विधानं च न स्यात् । षजादिकमन्तरैव लक्षणया समस्यमानपदाभ्यां अन्यपदार्थाभिधानसंभवात् । न हि गङ्गापदेन लक्षणया तीराभिधानार्थं प्रत्ययो विकारो वा विधीयते । येनेह तदर्थवत्स्यादिति चेत् । न । शब्दसाधुत्वार्थमेव तद्विधानात् ।

ननु लक्षकस्य लक्षणीयपदलिङ्गाग्राहकत्वनियमेन विशेष्यलिङ्गग्राहिणो बहुव्रीहेर्न लाक्षणिक-त्वमिति चेत् । न । अवयवयोरेव लक्षणाऽङ्गीकारेण बहुव्रीहेर्लक्षणाऽनङ्गीकारात् । कथं तर्हि बहुव्रीहे-र्विशेष्यपदलिङ्गनियम इति चेत् । न । विशेष्यपदलिङ्गग्राहकत्वे विशेषणपदत्वस्यैव तन्त्रत्वेन नियमतो विशेषणपदस्य बहुव्रीहेर्नियमतो विशेष्यलिङ्गग्राहकत्वोपपत्तेः ।

ननु 'अदृश्यत्वादिगुणको धर्मोक्तेरि'तिसूत्रे यत्तदद्रेश्यमगोत्रमवर्णमित्यादिश्रुतिगतानां अगोत्रमित्या-दिबहुव्रीहिशब्दानां समन्वयः प्रतिपाद्यते । समन्वयः शक्तितात्पर्यलक्षणः संबन्ध इत्युक्तम् । निषिद्धं च 'न च लक्षणया समन्वयोऽभिधीयत' इति समन्वेतव्यशब्दानां भगवति लाक्षणिकत्वम् । ततोऽ-कामेनापि बहुव्रीहिशब्दस्य शक्तिरभ्युपगन्तव्या । अन्यथा अपसिद्धान्तः स्यादिति चेत् । उच्यते । सत्यमगोत्रादिशब्दानां समन्वयोऽभिधीयत इति । तथाऽपि न समन्वयीयमानानां अगोत्रादिशब्दानां लाक्षणिकत्वहानिः । लक्षणावृत्तिलभ्यगुणलाभायैव समन्वयस्य प्रक्रान्तत्वात् । न हि व्यसनतया समन्व-योऽभिधीयते । येन गुणलाभोपयुक्तां लक्षणां परित्यजेत् । गुणलाभानुपयुक्तां शक्तिं स्वीकुर्यात् ।

'न च लक्षणया समन्वयोऽभिधीयत' इत्याद्युक्तिस्तु येषां शब्दानां वचनवृत्त्या गुणलाभः तेषां शक्त्या समन्वयः न लक्षणयेत्येवंपरेति न तद्विरोधः । अत एव सूत्रकृता अगोत्रादिशब्दानां शक्त्या समन्वया-भावेऽपि लक्षणया गुणलाभस्तु भवतीति द्योतनाय अदृश्यत्वादिगुणक इति गुणग्रहणं कृतम् ।

ननु बहुव्रीहिशब्दानां लाक्षणिकत्वाभिधानं मुधाविरुद्धम् । तथा हि । 'जातमोतं हरौ यस्मात् ज्योतिषः प्राणरूपत' इत्यनुव्याख्याने 'किं ब्रह्मणि वाक्यानामन्वय उत पदानामिति । तत्र तावत्पदानामिति ब्रूमः । न च वृत्त्यसंभवः । योगसद्भावादित्यभिप्रेत्य निर्वक्ती'त्यवतार्य 'जिर्जातं जनेरौणादिको डिप्रत्ययः ओतिरोतं अवतेः क्तिः । जातं जगदोतं प्रविष्टं यस्मिन्नसौ ज्योतिरि'ति ज्योतिरादिशब्दानां बहुव्रीहित्वा-भिधानात् इति चेत् । न । मुधाकृता ज्योतिःशब्दस्य भगवति लक्षणयैवं समन्वयमभिप्रेत्य ज्योतिष-शब्दस्य संबुद्ध्यन्तस्य 'जोतिषायजेते'ति श्रुत्यन्तर्गतस्य योगो भगवता भाष्यकृतोच्यत इत्यभिधानात् । न हि ज्योतिःशब्दस्यैव योग उक्तः । येन तद्विरोधः स्यात् । अभिमतं च भाष्यकारस्य बहुव्रीह्य-वयवपदानां अन्यपदार्थलक्षकत्वम् । 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इति सूत्रभाष्ये 'ततोऽप्रयोजकत्वं शास्त्रस्य नापद्यते । कृतप्रयत्नापेक्षत्वात् तत्प्रेरकत्वस्यादिशब्देनावैषम्यादी'ति अवैष-म्यादेरन्यपदार्थस्य आदिशब्दार्थत्वाभिधानात् । अन्यथा बहुव्रीहिणा अवैषम्यादि संगृहीतमित्यवक्ष्यत् । नन्वथापि आदिपदेनावैषम्यादि संगृहीतमिति भाष्यमनुपपन्नम् । आदिशब्दवत् पदान्तरस्यापि लक्षकत्वादिति चेत् । सत्यम् । बहुव्रीह्यवयवसर्वपदानामन्यपदार्थलक्षकत्वमिति । तथाप्यादिपदे-नावैषम्यादीत्युक्तिर्घटते । तद्यथा देवदत्तपुत्रस्य देवदत्तापुत्रत्वे देवदत्तस्यायं पुत्र इति व्यपदिश्यते । न चोच्यतेऽयुक्तमेवायं ब्रवीतीति । इति **बहुव्रीहौ व्यासज्यवृत्तिलक्षणासमर्थनम्** ॥ छ ॥

**मणिकारस्तु मन्यते ।** बहुव्रीहौ चित्रगोपदयोरन्वयबोधानन्तरं गोपदं स्वज्ञाप्यचित्रगोस्वामि-लक्षकम् । स्वज्ञाप्यचित्रगोसंबन्धेन तत्स्वामिस्मारकत्वात् । चित्रापदं गवान्वितस्वार्थबोधकतया मुख्यार्थमेव । कर्तव्यान्वयबोधानुकूलत्वेन न वाक्यभेदोऽपि । न चैवमेकस्यैव गोपदस्यान्यपदार्थे वृत्तौ समासो न स्यात् । अनेकस्यान्यपदार्थे वर्तमानस्य समासानुशासनादिति वाच्यम् । चित्रा-पदस्यापि परम्परया अन्यपदार्थबोधकत्वात् । अस्तु वा चित्रापदेऽपि लक्षणा । चित्रापदार्थस्य परम्परया चित्रगोस्वामिसंबन्धात् । न चैवं बहुव्रीहौ अन्यपदार्थे नियततात्पर्यानुपपत्तिः । लक्षकस्य लक्ष्ये नियततात्पर्यादर्शनात् । अतः समुदाये शक्तिरेवेति वाच्यम् । बहुव्रीहौ न वाक्ये लक्षणा । किं तु पदे । तस्य च क्वचिच्छक्येऽपि तात्पर्येणान्यपदार्थे तात्पर्यनियमाभावात् । अथास्ति बहुव्रीहिस्थ-

पदद्वयस्यान्यपदार्थतात्पर्यनियमः ततोऽन्यत्राप्रयोगनियमात् । अतस्तन्निर्वाहिका पदद्वये शक्तिः । सैव न वाक्ये । वाक्यस्य पदद्वयात्मकत्वादिति चेत् । अस्तु तर्हि बहुव्रीहिस्थपदेषु निरूढलक्षणा । तयैवान्यपदार्थे तात्पर्यनियमोपपत्तौ समुदायशक्तौ मानाभावात् ।

ननु बहुव्रीहावन्यपदार्थस्य लक्ष्यत्वे नियमतो लक्षणीयपदलिङ्गत्वं न स्यात् । लाक्षणिकस्य पदस्य लक्षणीयपदलिङ्गाग्राहकत्वनियमात् । स्वलिङ्गापरित्यागाच्च । अतोऽन्यपदार्थे शक्तिरेवेति चेत् । अत्र ब्रूमः । बहुव्रीहेर्लाक्षणिकत्वेन विशेषणपदत्वनियमात् नियमतो लक्षणीयविशेष्यपदलिङ्गत्वम् । यद्यपि मैत्रस्य पत्न्याः स्वमित्यत्र पत्नीपदविशेषणस्यापि मैत्रपदस्य न विशेष्यपदलिङ्गकत्वं तथाऽपि समानाधिकरणस्य विशेषणपदस्य विशेष्यपदलिङ्गत्वमस्त्येव । पदयोः सामानाधिकरण्यं च एकधर्मिवाचित्वम् । मैत्रपचतिपदयोः सामानाधिकरण्येऽपि न पचतिपदस्य विशेष्यपदलिङ्गत्वमिति चेत् । न । समानाधिकरणस्य समानविभक्तिकस्य विशेष्यलिङ्गत्वाङ्गीकारात् । सुप्तिङ्विभक्त्योश्च समानत्वानङ्गीकारात् । अथ नियमतो विशेष्यपदलिङ्गेनैव विशेषणपदस्य बहुव्रीहेः शक्तिं विना न निर्वहतीति चेत् । न । विशेषणपदत्वमेव हि विशेष्यपदलिङ्गत्वे तन्त्रं न तु शक्तत्वे सति । गौरवात् । दण्डयादिवाक्यस्याशक्तस्यापि पुरुषादिविशेष्यलिङ्गकत्वात् । इति ।

तन्न । समस्यमानगोपदस्य गोपरत्वाभावात् चित्रापदस्य तत्र स्वार्थसमर्पकत्वायोगेन चित्रापदं गवान्वितस्वार्थबोधकतया मुख्यार्थमेवेत्युभयायोगात् । समभिव्याहृतविशेषणपदानां विशेष्यपदार्थ एव स्वार्थसमर्पणस्वाभाव्यात् । अन्यथा नीलोत्पलमित्यत्र नीलपदं घटादिपदार्थे स्वार्थसमर्पकं स्यात् । यच्चोक्तम् । बहुव्रीहौ चित्रगोपदयोरन्वयबोधानन्तरं गोपदं स्वज्ञाप्यचित्रगोस्वामिलक्षकमिति । तत्र शोभां बिभर्ति । आदौ चित्रगोपदयोरन्वयबोधः पश्चाच्च गोपदात् स्वामिबोध इति क्रमिकबोधद्वयस्याननुभाविकत्वात् । ननु कथं तर्हि चित्रगुमिति बहुव्रीहिणा चित्रगोसंबन्धित्वेनान्यपदार्थप्रतीतिः । चित्रगोपदयोरभेदान्वयाभावेन गवां वैचित्र्यवैशिष्ट्यबोधकाभावात् इति चेत् । गङ्गापदस्य तीरलक्षकत्वेऽपि स्वार्थसंबन्धित्वेन तीरोपस्थापनस्वभाववत् संभूय लक्षकयोर्विशेषणविशेष्यपदयोर्विशेषणावच्छिन्नविशेष्यव्यावृत्ततया लक्ष्यार्थबोधजनकत्वस्वभावात् इति ब्रूमः । ननु गङ्गापदं तीरत्वेनैव तीरमुपस्थापयति न तु गङ्गासंबन्धित्वेन । संबन्धांशे शक्तिलक्षणयोरभावादिति चेत् । न । अनुभवविरोधात् । अन्यथा चित्रगुमित्यत्र स्वामित्वेनैव स्वामिबोधः स्यात् न तु चित्रगोसंबन्धित्वेन । ततश्च चित्रगोपदयोरन्वयबोधानन्तरं गोपदं स्वज्ञाप्यचित्रगोस्वामिलक्षकमित्युक्तमयुक्तं स्यात् । न हि लक्ष्यार्थे गोसंबन्धित्वस्यैवाभावे गवां चित्रत्ववैशिष्ट्यबोधप्रयोजनमस्ति । येन प्राथमिकान्वयबोधकल्पनं सार्थकं स्यात् ।

यत्तु चित्रापदं गवान्वितस्वार्थबोधकतया मुख्यार्थमेवेति । तन्न । चित्रापदेन संभूयार्थप्रतिपादकस्य गोपदस्य तेन सह समासाभावप्रसङ्गात् । अनेकमन्यपदार्थ इति संभूयान्यपदार्थपरगणामेव बहुव्रीहिविधानात् । गोपदस्य मुख्यार्थत्वमन्तरा विशेषणीभूतचित्रापदस्य मुख्यार्थपरत्वायोगाच्च । न हि संभवति गोपदं न स्वार्थपरम् । तद्विशेषणं तु चित्रापदं गवान्वितस्वार्थपरमिति । उन्मत्तवाक्यत्वप्रसङ्गात् । यदत्रोक्तं चित्रापदस्यापि परम्परया अन्यपदार्थबोधकत्वात्समास इति । तन्न । स्वार्थबोधनेनान्यथासिद्धस्य अन्यपदार्थबोधकत्वाभावात् । सुबन्तानां अन्यपदार्थवृत्तेरेव समासप्रयोजकत्वेन बोधोपयोगित्वमात्रेण समासाङ्गीकारायोगाच्च । यदपि अस्तु वा चित्रपदेऽपि लक्षणा । चित्रपदार्थस्य परम्परया चित्रगोस्वामिसंबन्धात् । न चैवमेकपदलक्षणायामितरपदवैय्यर्थ्यम् । इतरपदमहिम्नैव विशेषस्य लक्षणीयत्वादिति । अत्र वक्तव्यम् । किमस्तु वेत्यनेन चित्रापद एव लक्षणा न गोपद इति पक्षोऽङ्गीक्रियते । उत चित्रापदे गोपदे चेत्युभयत्रापि लक्षणेति पक्षोऽङ्गीक्रियते । नाद्यः । चित्रापदेऽपीत्यपिशब्दवैय्यर्थ्यप्रसङ्गात् । गोपदेन समासाभावप्रसङ्गाच्च । अनेकयोः सुबन्तयोः अन्यपदार्थपरत्वस्य समासप्रयोजकस्याभावात् । त्वन्मते चित्रापदस्य गुणवाचित्वात् मुख्यार्थसंबन्धाभावेन लक्षणाऽयोगाच्च । गोपदस्योपसर्जनत्वाभावेन गोस्त्रियोरुपसर्जनस्येत्युक्तह्रस्वत्वाभावप्रसङ्गाच्च । नापि द्वितीयः । इतरपदमहिम्नैव विशेषस्य लक्षणीयत्वात् इत्युत्तरग्रन्थविरोधात् । न हि पदद्वयलक्षणाऽभावे समासः संभवति येनेतरपदवैय्यर्थ्यपरिहाराय इतरपदमहिम्नाऽपरपदस्य विशेषलक्षकत्वाभिधानमर्थवत्स्यात् ।

अत्राह कश्चित्तु: । अस्तु वेत्यभ्युपगमवादः । वस्तुतः साक्षात्संबन्धेनोपस्थापकत्वाद्गोपद एव लक्षणा । अत एव 'न चैवमि'त्यादिग्रन्थः गोपदलक्षणादूषणपरिहारार्थः प्रवृत्त इति । तन्न । बहुव्रीहौ चित्रगोपदयोरन्वयबोधानन्तरं गोपदं स्वज्ञाप्यचित्रगोस्वामिलक्षकमिति प्रागेव गोपदलक्षणापक्षे चित्रापदवैय्यर्थ्यस्य परिहृतत्वात् । अन्यथा पूर्वग्रन्थवैय्यर्थ्यं स्यात् । प्रयोजनान्तराभावात् । न चैवमिति एवंशब्दप्रयोगात् अस्तु वेति प्रागुक्तपक्ष एव वैय्यर्थ्यशङ्कानिरासार्थकत्वस्य प्रतीयमानत्वेन गोपदलक्षणापक्षे दूषणपरिहारपरतया ग्रन्थयोजनाऽयोगाच्च । यदपि 'ननु बहुव्रीहावन्यपदार्थस्य लक्ष्यत्वे नियमतो लक्षणीयपदलिङ्गत्वं न स्यात् । लाक्षणिकस्य पदस्य लक्षणीयपदलिङ्गाग्राहकत्वनियमात् । स्वलिङ्गापरित्यागाच्च । अतोऽन्यपदार्थे शक्तिरेवेति चेत् । अत्र ब्रूमः । बहुव्रीहेर्लाक्षणिकत्वेन विशेषणपदत्वनियमात् । नियमतो लक्षणीयविशेष्यपदलिङ्गकत्वं समानाधिकरणस्य समानविभक्तिकस्य च विशेषणपदस्य विशेष्यलिङ्गकपदत्वनियमादि'ति । तत्र शङ्का तावदयुक्ता । लक्षकगोपदस्य लक्षणीयपदलिङ्गत्वाभावेन लक्षणीयपदलिङ्गत्वं न स्यादित्यापादनायोगात् । न हि गोपदं लक्षणीयपदलिङ्गकम् ।

येनेदमापादनं युक्तं स्यात् । किं तु बहुव्रीहिप्रातिपदिकम् । नापि तत्रापादकमस्ति । बहुव्रीहिप्रातिपदिकस्य लक्षकत्वानङ्गीकारात् । अत एव लक्षणीयपदलिङ्गाग्राहकत्वनियमात् स्वलिङ्गापरित्यागाच्चेति हेतुद्वयमसङ्गतम् । बहुव्रीहिप्रातिपदिकस्यालाक्षणिकत्वेन लाक्षणिकस्वभावकथनस्योपयोगादर्शनात् । समाधानमप्यनुपपन्नम् । बहुव्रीहेर्लाक्षणिकत्वाभावेन असिद्धेन तेन विशेषणपदत्वसाधनायोगात् । अवयवगतेन लाक्षणिकत्वेनावयविनः विशेषणपदत्वं साध्यत इति चेत् । न । तत्पुरुषे व्यभिचारेण व्याप्त्यभावात् । राजपुरुष इत्यादौ पूर्वपदे त्वया षष्ठ्यर्थलक्षणाङ्गीकारात् । यदपि दण्ड्यादिवाक्यस्याशक्तस्य पुरुषादिविशेष्यलिङ्गकत्वादिति । तदपि न । दण्डीत्यस्यैकपदत्वेन पदसमुदायत्वरूपवाक्यत्वाभावात् ॥ छ ॥ **इति बहुव्रीहौ मण्युक्तान्त्यपदलक्षणानियमभङ्गः ॥**

**श्रीरस्तु** । राजपुरुष इत्यादितत्पुरुषे न पूर्वपदस्य षष्ठ्यर्थे लक्षणा । औपगवशब्दादिव राजपुरुषशब्दादपि योगेनैव षष्ठ्यर्थभानसंभवात् । योगवृत्तेः खल्वयं महिमा यत् एकावयवार्थसंबन्धित्वेनापरावयवार्थधीहेतुत्वम् । अन्यथौपगव इत्यत्रोपगवित्यस्य तत्संबन्धिनि लक्षणा स्यात् । एवं पङ्कजशब्देऽपि पङ्कपदस्य सप्तम्यर्थे लक्षणा स्यात् । न चेष्टापत्तिः । यौगिकत्वाभावप्रसङ्गात् । न च अवयववृत्त्या बोधकत्वात् यौगिकत्वमिति वाच्यम् । अवयवमुख्यवृत्तिमपेक्ष्य बोधकस्यैव यौगिकत्वेन तल्लक्षणावृत्तिमपेक्ष्य बोधकस्यायौगिकत्वात् । अन्यथा योगवृत्तेर्मुख्यवृत्तित्वं न स्यात् । न च द्विरेफमुखमित्यस्य यौगिकत्वं न स्यात् । पूर्वावयवस्य द्विरेफपदस्य भ्रमरे लाक्षणिकत्वात् इति वाच्यम् । मार्गाश्चलन्ति मञ्चाः क्रोशन्तीत्यादिप्रयोगस्थमञ्चादिशब्दानां रूढाभासत्ववत् द्विरेफमुखशब्दस्य यौगिकाभासत्वेन यौगिकत्वाभावात् । एवं राज्ञः पुरुष इति वाक्येऽपि राज्ञ इति षष्ठ्यन्तपदस्य राजसंबन्धिनि लक्षणा स्यात् । न च राज्ञि संख्यावबोधार्थमेव राजप्रातिपदिकस्य विभक्त्यर्थे लक्षणा । शब्दानुसन्धानस्यैव बोधहेतुत्वेनानुसंहितलुप्तविभक्त्यैव बोधसंभवे लक्षणाकल्पनाऽयोगात् । अन्यथा वाक्यान्तिमपदस्यैव वाक्यार्थलक्षकत्वं स्यात् । त्वन्मते अन्तिमपदश्रवणकाले पूर्वपदानां विनष्टत्वेन बोधकत्वाभावात् । अथ तत्रानुसंहितानामेव पदानां बोधकत्वान्न लक्षणा, हन्त तर्हि इहापि अनुसंहितविभक्तेरेव बोधकत्वान्न लक्षणेत्यस्तु । एवं ग्रामं गतः इत्यादितत्पुरुषेऽपि पूर्वपदस्य कर्मादिगतसंख्यायां न लक्षणा । अनुसंहितविभक्तिभिरेव तद्बोधसंभवात् । न च लुप्तविभक्त्यनुसन्धाननियमाभावाल्लक्षणैवाङ्गीकर्तव्येति युक्तम् । विभक्त्यनुसन्धानाभावदशायां ग्रामगत इत्यादौ कर्मसंख्यातात्पर्यस्य ज्ञातुमशक्यत्वेन लक्षणाया अपि स्वीकर्तुमशक्यत्वात् । न हि राजपुरुषः ग्रामगतः शङ्कुलाखण्ड इत्यादिसमासपदेष्वव्युत्पन्नस्य, राज्ञः पुरुष इत्यादिविग्रहबोध्येष्वर्थेषु, तात्पर्यग्रहो भवति । येनानुसंहित-

विभक्तेर्बोधकत्वमपहाय लक्षणास्वीकारो युक्तः स्यात् । न च स्मृतविभक्तिबोधकत्वे समासस्य विग्रहस्मारकत्वेनैवोपयोगः स्यात् । न तु बोधकत्वमिति वाच्यम् । स्मृतविभक्तिसहकारेण समस्यमानपदानामेव बोधकत्वसंभवे स्मृतविग्रहवाक्यस्यैव बोधकत्वमिति कल्पनाऽयोगात् । अन्यथा स्मृतविभक्तिसहकारेण दधि पश्येति वाक्यस्थदधिशब्दस्य बोधकत्वं न स्यात् । न च क्रियाकर्मभावेनान्वयबोधे द्वितीयान्तपदजन्यपदार्थोपस्थितेर्हेतुत्वस्य घटः कर्मत्वमानयनमित्यत्रान्वयबोधनिरासायाङ्गीकर्तव्यत्वात् तत्र विभक्तिस्मरणमावश्यकम् । न समास इति वाच्यम् । राजा संबन्धः पुरुषमित्यत्रान्वयबोधनिरासाय स्वस्वामिभावादिनान्वयबोधेऽपि विभक्त्यन्तशब्दजन्यपदार्थोपस्थितेरावश्यकत्वात् । भाषाशब्देष्वपि घटादिशब्दप्रतिनिधेरिव विभक्तिप्रतिनिधेरपि सद्भावात् न विभक्तिं विनाऽन्वयबोधः । न च घटो नास्तीत्यत्रापि स्मृता षष्ठ्येव बोधिकेति प्राप्तम् । बोध्यमानाभावस्य घटसंबन्धित्वेन प्रतियोग्यनुयोगिभावेनान्वयस्य वक्तव्यत्वादिति वाच्यम् । घटो नास्तीत्यत्र अभावनिष्ठसत्तायोगित्वेन घट एव प्रतीयते । न तु घटस्याभाव इत्यत्रेव घटप्रतियोगिकाभावः सत्तायोगित्वेन प्रतीयत इत्यङ्गीकारात् । वक्ष्यते चैतन्नञर्थवादे । उक्तं च सुधाकृता तत्पुरुषस्य यौगिकत्वम् । तत्र प्रवृत्तिनिमित्तापेक्षा वृत्तिर्योगः । यथा कुम्भकारः । औपगवः । राजपुरुष इतीति । एवं अर्धपिप्पलीत्यादितत्पुरुषोऽपि यौगिक एव । इयांस्तु विशेषः । राजपुरुष इत्यादिः उत्तरपदार्थं प्राधान्येन बोधयति । अर्धपिप्पलीत्यादिस्तु पूर्वपदार्थं प्राधान्येन बोधयतीति ॥ छ ॥ **इति तत्पुरुषस्य यौगिकत्वसमर्थनम् ॥ श्रीरस्तु ॥**

**मणिकारस्तु मन्यते ।** तत्पुरुषे राजपुरुष इत्यादौ पूर्वपदस्य षष्ठ्यर्थसंबन्धे निरूढलक्षणयैव राजसंबन्धिपुरुषबुद्ध्युपधेयत्वेन समासे शक्तिः । अनन्यलभ्यस्य शब्दार्थत्वात् । नन्वनुपपत्तिं विना कथं षष्ठ्यर्थलक्षणेति चेत् । यदि षष्ठ्यर्थो न लक्ष्येत । तदा राजपुरुषादौ लाघवादिना झडितिसामानाधिकरण्यावगमात् राजत्वविशिष्टपुरुषस्यैकविभक्तिकोऽन्वयबोधः स्यात् । राजवाहनमानयेत्यादौ वाहनपदे वाहनवल्लक्षणा स्यात् । अथ राजत्वविशिष्टे नासदादावनयनान्वयो योग्य इति चेत् । तर्ह्यन्वयैवानुपपत्त्या तात्पर्यानुपपत्त्या वा षष्ठ्यर्थे लक्षणा । विभक्त्यर्थापेक्षो हि सर्वत्र नामार्थान्वयः । अतः श्रुतविभक्त्यर्थासंभवात् विभक्त्यर्थलक्षणैवोचिता । ननु विभाषेति सूत्रेण वाक्यसमासयोस्तुल्यार्थता दर्शिता । वाक्ये च मुख्या वृत्तिः । अतः समासेऽपि सैव वृत्तिः । अन्यथाऽतुल्यार्थतापत्तेः । वाचकस्यैवानुशासनाच्च । यथा लिङादेः । अन्यथा गात्र्यादेरप्यनुशासनापत्तेरिति चेत् । उच्यते । साधुशब्दस्यानुशासनं व्याकरणम् । तस्य साधुत्वज्ञापकत्वेनैव प्रामाणिकप्रसिद्धिसिद्धत्वात् । अत एव न गात्र्यादीनामनुशासनम् । भवति च समासः साधुः । अतो युक्तं तस्य साधुत्वानुशासनम् । साधुता

च लाक्षणिकपदेऽपि संभवति । पदवाचकता चार्थानन्यलभ्यत्वादवगम्यते । न तु वाचकत्वानुशासनं व्याकरणम् । अवाचकानामपि टाप्ङीबादीनामनुशिष्टत्वादिति । तन्न । पूर्वपदस्य लक्षणां विना लुप्तषष्ठीस्मरणसहकृतपूर्वपदसहकृतोत्तरपदेनैव राजकीयः पुरुष इति बुद्धिसंभवे पूर्वपदस्य लक्षणाभिधानायोगात् । किं च । विभक्त्यर्थस्य नामार्थत्वे भेदेनान्वये विभक्त्यन्तरापेक्षा स्यात् । नामार्थयोर्भेदेनान्वयस्य विभक्त्यर्थसापेक्षत्वात् । 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इत्यत्र लुब्वाचकपदाभावात् । षष्ठीदर्शनात् । किं च षष्ठ्यर्थलक्षकाद्राजपदात् विभक्त्यभावे राजपुरुष इति समासो न स्यात् । सुप्सुपेति सुबन्तयोरेव समासानुशासनात् । भावे च लक्षणाऽयोगः । दधि पश्येत्यादाविव लुप्तविभक्तेरेव बोधकत्वसंभवात् । किं च 'सुपो धातुप्रादिपदिकयोरि'ति समासावयवसुपो लुग्विधानमयुक्तं स्यात् । वाचकमपहाय लक्षकपदाश्रयणायोगात् । शब्दगौरवादपि प्रतिपत्तिगौरवस्य जघन्यत्वात् । अन्यथा व्यासेऽपि विभक्तिलोपं विदध्यात् । एतेन राजपुरुष इति तत्पुरुषे पूर्वपदस्य न संबन्धिनि लक्षणा । अपि तु राजसंबन्धे । तयोश्च धर्मधर्मिभावेनान्वयः । अन्वयप्रतियोगिराजसंबन्धोपस्थित्यर्थं च राजपदे लक्षणेति रुचिदत्तोक्तं निरस्तम् । राज्ञः पुरुष इति व्यासे राजपुरुषयोरेवान्वयभानेन समासेपि राजपुरुषयोरेवान्वयभानस्याभ्युपगन्तव्यत्वात् ।

**पक्षधरस्तु** । राजपुरुष इत्यत्र पूर्वपदस्य राजसंबन्धिन्येव लक्षणा । राजपुरुष इति समासश्रवणे राजसंबन्धी पुरुष इति अनुभवस्य जायमानत्वात् । न च तथाऽनुभवे कारणाभावः । विरुद्धविभक्त्यनवरुद्धयोः प्रातिपदिकयोरेव तद्धेतुत्वात् । अत एव नीलोत्पलमित्यादिनाऽभेदबोधः । न च देवदत्तस्य पत्न्याः धनमित्यत्रापि देवदत्तपत्न्योरभेदान्वयबोधः स्यादिति वाच्यम् । व्यधिकरणषष्ठ्योर्विरुद्धविभक्तित्वेन विरुद्धविभक्त्यनवरुद्धप्रातिपदिकाभावादित्याह । तन्न । राज्ञः पुरुष इति विग्रहस्य समासार्थावबोधकत्वाभावप्रसङ्गात् । विरुद्धविभक्त्यवरुद्धस्य तस्याभेदान्वयबोधकत्वाभावात् । किं च राजपुरुष इत्यादौ कर्मधारय एव स्यात् । न तु षष्ठीतत्पुरुषः । कर्मधारयार्थाभेदबोधकस्य कर्मधारयत्वौचित्यात् । तथा च षष्ठीसमासविधायकं षष्ठीतिसूत्रमनर्थकं स्यात् । यदत्रोक्तं 'न च राजपदादेः संबन्धिपरत्वे कर्मधारयापत्तिरिति वाच्यम् । समासात्पूर्वं राजपदस्य संबन्धिपरत्वाभावादि'ति । तन्न । पूर्वं राजसंबन्धिपरत्वाभावे पश्चादपि संबन्धिपरत्वानुपपत्तेः । समासार्थनात्पर्यशून्ययोः पदयोः समासानुपपत्तेश्च । समर्थयोरेव सुबन्तयोः समासविधानात् । यत्तु राजपुरुष इत्यनेन राजसंबन्धी पुरुष इति बोधो भवतीति । तन्न । आदौ राजपुरुषयोः संबन्धबोधस्यैव जायमानत्वात् । राजसंबन्धी पुरुष इति बोधस्तु अयमस्य पुत्र इति शब्दश्रवणानन्तरं अयमस्य पितेति जायमानबोधवत् मानसः । यत्तु विरुद्ध-

विभक्त्यनवरुद्धयोः प्रातिपदिकयोः अभेदान्वयबोधे सामर्थ्यमिति । तन्न । विरुद्धविभक्त्यनवरुद्धत्वापेक्षया लाघवेन समानविभक्त्यवरुद्धत्वस्यैवाभेदान्वयबोधे तन्त्रत्वात् । न चैवं देवदत्तस्य पत्न्याः स्वमित्यत्राभेदान्वयबोधापत्तिः । स्त्रीपुंसयोर्भेद इति भेदानुसन्धानप्रतिरुद्धत्वात् । तदनुसन्धानाभावे चाभेदबोधस्त्विष्ट एव । अत एव देवदत्तस्य जामातुः फलमित्यत्र व्यधिकरणषष्ठ्यन्तपदाभ्यामभेदभ्रमो भवति । न च समानविभक्तिकत्वाभावान्नीलोत्पलमित्यत्राभेदान्वयबोधानुपपत्तिः । तत्रापि लुप्तविभक्तेरनुसन्धानवशेन बोधसहकारित्वाभ्युपगमात् । अपि च राजसंबन्धिपुरुषः इत्यनेनापि पुरुषे राजसंबन्धान्वयधीः स्यात् । अन्वयप्रतियोग्युपस्थापकसद्भावात् । अपि च यदि तत्पुरुषे पूर्वपदे लक्षणां विना न बोधः तर्हि कृत्तद्धितसमासाश्चेति सुब्लोपं न विदध्यात् । स्थितमपि वाचकशब्दं विहाय लक्षणाऽऽदरणायोगात् । शब्दलाघवादपि प्रतिपत्तिगौरवस्य जघन्यत्वात् । अन्यथा व्यासेऽपि विभक्तिलोपं विदध्यात् ।

यदपि अनुपपत्तिं विना कथं षष्ठ्यर्थलक्षणेत्याशङ्क्य यदि षष्ठ्यर्थो न लक्ष्येत तदा राजपुरुष इत्यादौ लाघवादिना झडिति सामानाधिकरण्यावगमात् राजत्वविशिष्टपुरुषस्यैकविभक्तिकोऽन्वयः स्यात् । राजवाहनमानयेत्यादौ राजवाहनपदे वा वाहनवल्लक्षणा स्यात् इति समाधानम् । तदपि न । लुप्तस्मृतषष्ठ्या षष्ठ्यर्थबोधस्यैव जातत्वेन सामानाधिकरण्येनान्वयबोधनिवृत्त्युपपत्तेस्तदर्थं लक्षणाकल्पनाऽयोगात् । यत्तु 'अथ राजत्वविशिष्टे नास्मदाद्यानयनान्वयो योग्य इति चेत् । तर्हि अन्वयैवानुपपत्त्या तात्पर्यानुपपत्त्या वा षष्ठ्यर्थे लक्षणे'ति । तदपि न । संबन्धलक्षणायाः राजत्वविशिष्टस्यास्मदाद्यानयनानुपपादकत्वेन अनयानुपपत्त्या संबन्धलक्षणास्वीकारायोगात् । स्मृतषष्ठ्यैव राजसंबन्धोपस्थित्या तात्पर्योपपत्तौ तदर्थं राजपदस्य षष्ठ्यर्थलक्षणाऽङ्गीकारायोगाच्च । यदपि साधुत्वानुशासनं व्याकरणम् । भवति च समासः साधुः । अतो युक्तं तस्य साधुत्वानुशासनम् । साधुता च लाक्षणिकपदेऽपि संभवतीति । तदपि न । साधुतयाऽनुशिष्टस्य समासपदस्य लाक्षणिकत्वाभावेन साधुता च लाक्षणिकपदेऽपीत्युक्तेरसङ्गतत्वात् । **इति तत्पुरुषे मण्युक्तपूर्वपदलक्षणाभङ्गः ॥**

एवं नीलोत्पलमित्यादिकर्मधारयेऽपि लुप्तस्मृतविभक्तिसहकृतपदाभ्यामेवाभेदान्वयबोधसंभवात् षष्ठीतत्पुरुषवद्योग एव । इयांस्तु विशेषः । अभ्यासपाटवात् प्रथमं नामार्थयोरभेदो बोध्यते । तदसंभवे च स्वस्वामिभावकार्यकारणभावादिलक्षणान्वयो बोध्यते । ततश्च शीघ्रोपस्थितिकत्वात्कर्मधारयो बलवान् । तद्यथा अक्षादिशब्दानां इन्द्रियादिषु रूढिसाम्येऽपि अभ्यासपाटवात् शीघ्रोपस्थितिहेतुत्वेन

इन्द्रियेषु रूढिर्बलवती । षष्ठीतत्पुरुषाद्यर्थभेदान्वयस्तु अभेदान्वयबाधोत्तरं प्रतीयत इति षष्ठीतत्पुरुषः यौगिकोऽपि ततो दुर्बलः । तद्यथा अक्षशब्दस्य शकटावयवादौ रूढिः. रूढित्वेऽपि इन्द्रियरूढितो दुर्बला । बहुव्रीहिस्तु लाक्षणिकत्वात्ततो दुर्बलः ।

**मणिकारस्तु** । नीलोत्पलमित्यादौ कर्मधारये विभक्तिं विनैव नामार्थयोरन्वयबोधानन्तरं विशिष्टस्य कर्मत्वेन क्रियान्वयः । कर्मधारये न शक्तिर्न वा लक्षणा । ताभ्यां विनाऽपि विवक्षितार्थान्वय-बोधोपपत्तेः । ननु नीलघटयोः सामानाधिकरण्यप्रतीतिस्तत्र लक्षणैव । अन्वयप्रकारकत्वादिना च तस्य भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथाऽस्तु । अत्र ब्रूमः । कर्मधारये सामानाधिकरण्यं नामार्थयोरन्वयो भेदो वा गुणगुणिनोः समवायो वा अनुभूयते । स चान्वय एव नान्वयप्रतियोगी । अतोऽन्वयप्रतियोगिनोरुपस्थितिर्नामपदाच्छक्त्यैवेति न तदर्थं लक्षणा । राजपुरुष इत्यत्र तु राज-संबन्धिपुरुषयोरन्वयोऽनुभूयते । राजसंबन्धिनश्चान्वयप्रतियोगिन उपस्थितिर्न राजपदे षष्ठ्यर्थलक्षणां विना । राज्ञः पुरुषं राजसंबन्धिनं पुरुषं राजपुरुषमानयेत्यादौ पर्यायत्वात् राजसंबन्धिनः पुरुषान्वयो भासते । राजसंबन्धी तु अन्वयप्रतियोगित्वेन । एवं च बहुव्रीहौ सर्वत्रान्यपदानां, षष्ठीतत्पुरुषे पूर्वपदस्यान्यपरतया लाक्षणिकत्वात्ताभ्यां कर्मधारयो बलवान् । तत्र सर्वेषां पदानां स्वार्थपरतया मुख्य-त्वादित्याह । **तन्न** । कृष्णगामानय नीलोत्पलमानयेत्यादौ विशेषणपदस्य विभक्तिशून्यत्वेन तादात्म्ये-नान्वयबोधाभावस्य, कृष्णाम् गामानय नीलमुत्पलमानयेत्यादौ विभक्तिसमभिव्याहारवशात् तादात्म्ये-नान्वयबोधस्य दर्शनेन, भेदेनान्वयबोधवत् अभेदान्वयबोधस्यापि विवक्षितविभक्तिसापेक्षत्वेन विभक्तिं विनाऽन्वयबोधायोगात् । ननु विशेषणविभक्तिः साधुत्वार्था द्वितीयादिविभक्तेः कर्मत्वाद्यर्थत्वस्य प्रमितत्वात् । विशेषणे च विशेष्यकर्मत्वादीनामभावात् । विशेषणावच्छिन्नविशेष्यस्यैवानयनादि-क्रियाकर्मत्वात् । न च विशेषणविभक्तेरभेदार्थकत्वं वक्तुं युक्तम् । तदर्थकत्वे मानाभावात् । नीलोत्प-लमित्यादौ विशेषणविशेष्ययोरभेदस्य संसर्गीभूय भासमानत्वेनानन्यलभ्यत्वाभावाच्च । अन्यथा नीलाभिन्नस्यान्वयप्रतियोगित्वेन नीलाभिन्नाभिन्नमुत्पलमिति प्रतीतिप्रसङ्ग इति चेत् न । विशेषणपदार्थ-स्यापि विशेष्यवत् कर्मादिरूपत्वेन तद्विभक्तेरपि कर्मत्वाद्यर्थकत्वानपायात् । विशेषणपदस्य विशेषणा-वच्छिन्नधर्मिवाचित्वात् । धर्मिणश्च विशेष्याभिन्नत्वात् । न हि तदेव कर्मादिरूपमतद्रूपं चेति संभवति । विशेषणपदस्य विशेषणावच्छिन्नधर्मिवाचित्वाभावे अभेदान्वयबोध एव न स्यात् । स्याच्च दण्डः पुरुष इति प्रयोगेण, दण्डी पुरुष इति प्रयोगेणवाभेदबोधः । न च विशेष्यविभक्त्यैव कर्मत्वादे-र्बोधितत्वात् विशेषणविभक्तिवैयर्थ्यम् । विशेषणविशेष्यपदार्थयोरभेदबोधनाय कर्मत्वादेर्बोधनीयत्वात् ।

अन्यथा कर्मत्वावच्छिन्नेन कर्मत्वशून्यस्य नाभेद इति बुद्धिः स्यात् । भावाभावयोर्विरुद्धधर्मत्वात् । अभेदबोधनाय हि एकधर्मावच्छिन्नतया पदार्थौ प्रतिपादयन्ति । भेदबोधनाय च विरुद्धधर्माधिकरणतयेति सुप्रसिद्धम् । किं च विशेषणविभक्तेः साधुत्वार्थकत्वे विशेषणात् द्वितीयादिर्न स्यात् । कर्मणि द्वितीयेत्यादिना कर्माद्यर्थ एव द्वितीयादेरनुशासनात् । न च विशेषणविशेष्यविभक्त्योः कर्माद्यर्थकत्वे कर्मत्वादेर्द्विर्बोधप्रसङ्गः । इन्द्रियार्थसन्निकर्षचक्षुषोः संभूयैकप्रतीतिजनकत्ववत् विशेषणविशेष्यविभक्त्योः संभूय कर्मत्वादिविषयैकप्रतीतिजनकत्वाङ्गीकारात् । नापि नीलमुत्पलमानयेत्युक्ते पृथगन्वयधीप्रसङ्गो बाधकः । एकविभक्त्यवरुद्धानां पदानां बाधकाभावे अभेदान्वयबोधजनकत्वस्य व्युत्पत्तिसिद्धत्वात् । पृथगन्वयतात्पर्यविज्ञाने च पृथगन्वयबोधस्येष्टत्वात् । न च खट्वा मालेत्यादौ स्त्रीत्वाद्यर्थे विहितानां टाबादीनां अर्थाभावेऽपि प्राप्तिवत् विशेषणपदात् कर्मत्वादिविहितद्वितीयादिविभक्तिप्राप्तिरिति वाच्यम् । लिङ्गानुशासने तेषां टाबाद्यन्तानामेवानुशिष्टत्वेन तदन्यथाऽनुपपत्त्यैव टाबादिप्राप्तेः । इह च तदभावात् । यदुक्तम् । नीलोत्पलाभेदस्य संसर्गीभूय भासमानत्वात् नाभेदो विशेषणविभक्त्यर्थ इति तदिष्टमेव । विशेषणविभक्तेरपि कर्मत्वाद्यर्थत्वात् । अभेदस्य सामानाधिकरण्यबललभ्यत्वाङ्गीकारात् । अत एव नीलाभिन्नाभिन्नमितिबोधप्रसङ्ग इति दूषणं परास्तम् । अभेदस्य संसर्गीभूय भासमानत्वेनान्वयप्रतियोगिप्रकारतया भानानङ्गीकारात् । यत्तु कर्मधारये न शक्तिर्न वा लक्षणा । ताभ्यां विनाऽपि आनयनादिप्रतियोगिनो विशिष्टस्य बोधोपपत्तेरिति । तन्न । अन्वयप्रतियोगिनो विशिष्टस्य बोधायैव योगस्य वक्तव्यत्वात् । अन्यथा मण्डपशब्दस्यापि मण्डपानकर्तरि योगो न स्यात् । यदपि 'कर्मधारये प्रतीयमानं सामानाधिकरण्यं नामार्थयोरभेदो वा गुणगुणिनोः समवायो वा । स चान्वय एव नान्वयप्रतियोगी । अतोऽन्वयप्रतियोगिनोरुपस्थितिर्नामपदाच्छक्त्यैवेति न तदर्थे लक्षणा । राजपुरुष इत्यत्र तु राजसंबन्धिपुरुषयोरन्वयोऽनुभूयते । राजसंबन्धिनश्चान्वयप्रतियोगिन उपस्थितिर्न राजपदे षष्ठ्यर्थलक्षणां विना । राज्ञः पुरुषं, राजसंबन्धिनं पुरुषम् राजपुरुषमानयेत्यादौ पर्यायत्वात् राजसंबन्धिनः पुरुषान्वयो भासते । राजसंबन्धीत्यन्वयप्रतियोगित्वेने'ति वैषम्योपपादनम् । तदपि न । राज्ञ एवान्वयप्रतियोगित्वेन राजसंबन्धिनोऽन्वयप्रतियोगित्वाभावात् । राजसंबन्धस्यैव षष्ठ्यर्थत्वात् राजसंबन्धिनः षष्ठ्यर्थत्वाभावेनान्वयप्रतियोग्युपस्थित्यर्थं षष्ठ्यर्थलक्षणाऽङ्गीकारायोगाच्च । राजपुरुषं राजसंबन्धिनं पुरुषं इत्यनयोः समानार्थत्वाभावेऽपि राजपुरुषयोरन्वयबोधानन्तरं मनसा नियमेन राजसंबन्धी पुरुष इति बोधस्य जायमानत्वेनैव पर्यायत्वस्योपपन्नत्वेन तदन्यथानुपपत्त्याऽपि राजपुरुषमित्यत्र राजसंबन्धिनः पुरुषान्वयप्रतियोगित्वस्य वक्तुमशक्यत्वात् ।

यत्तु कर्मधारये प्रतीयमानसामानाधिकरण्यं नामार्थयोरभेदो वा गुणगुणिनोः समवायो वेति । तदपि न । समवायस्य सामानाधिकरण्यरूपत्वाभावेन गुणगुणिनोः समवायप्रतीतेः सामानाधिकरण्यप्रतीतित्वोपपादनायोगात् । अन्यथा घटरूपमिति तत्पुरुषाज्जायमानाऽपि प्रतीतिः सामानाधिकरण्यप्रतीतिः स्यात् । त्वन्मते नीलोत्पलमित्यत्र नीलनामार्थस्य गुणत्वेनाभेदोऽन्वयनया भासत इत्यभिधानायोगाच्च । अभेदोपचारस्तत्राङ्गीक्रियत इति चेत् । न । उपचारस्य व्यवहारमात्रत्वेन तेनाभेदप्रतीत्यभिधानायोगात् । न हि सिंहो माणवकः अग्निर्माणवक इत्यभेदोपचारेणाभेदं प्रतियन्ति । येनात्राभेदोपचारेणाभेदप्रतीतिः स्यात् । किं तु सादृश्यमात्रं प्रतियन्ति । अत एव बहुव्रीहौ सर्वत्रान्यपदानां, षष्ठीतत्पुरुषे पूर्वपदस्यान्यपरतया लाक्षणिकत्वात्ताभ्यां कर्मधारयो बलवान् इत्येतदपि निरस्तम् । बहुव्रीहौ पदद्वयस्य लाक्षणिकत्वेन उत्तरपदमात्रलक्षणाभिधानस्यायुक्तत्वात् । षष्ठीतत्पुरुषे च स्मृतषष्ठीविभक्तेरेव बोधकत्वेन पूर्वपदलक्षणाऽभावात् । **इति तत्पुरुषकर्मधारययोर्मण्युक्तवैपम्यभङ्गः ॥**

**श्रीरस्तु ।** एवं अर्धपिप्पली अर्धकौशातकीत्यादितत्पुरुषेऽपि योग एव । पिप्पल्या अर्धमित्यर्थस्यावयवशक्तिलभ्यत्वात् । इयांस्तु विशेषः । राजपुरुष इत्यादितत्पुरुष उत्तरपदार्थप्रधानः । अर्धपिप्पलीत्यादितत्पुरुषस्तु पूर्वपदार्थप्रधानः । तथाऽनुभवात् । अतिखट्वः अतिमाल इत्यादितत्पुरुषेऽपि पूर्वपदार्थप्रधानो योग एव । तेन खट्वां अतिक्रान्त इत्याद्यर्थप्रतीतेः अत्याद्युपसर्गाणां अतिक्रान्ताद्यर्थत्वं उपसर्गवादे वक्ष्यते । एवं अधिकुमारि उपकुम्भं सुमद्रमित्याद्यव्ययीभावेषु पूर्वपदार्थप्रधानो योग एव । कुमारीष्वधिकृत्येत्यध्यर्थस्य प्रवृत्ता कथेत्यनेनान्वयप्रतीतेः । उपकुम्भमित्यनेन कुम्भस्य समीपे इत्यर्थस्य सुमद्रमित्यनेन मद्राणां समृद्धिरित्यर्थस्य प्रतीतेः । अधीत्याद्यव्ययस्य 'अव्ययं समीपसमृद्धी'ति सूत्रेणैव विभक्त्याद्यर्थत्वस्योक्तत्वात् विभक्त्याद्यर्थानां समस्यमानाव्ययार्थत्वं द्रष्टव्यम् । **इति अर्धपिप्पलीत्यादियोगसमर्थनम् ॥**

अब्राह्मणमित्यत्र नञा भिन्नप्रतीतेः । असुरा अविद्येत्यादौ नञा विरुद्धप्रतीतेः । घटो नास्तीतिनञा अभावप्रतीतेः । मृगं न भीममित्यादिनञा सादृश्यप्रतीतेः । अन्यविरुद्धाभावसादृश्यानि नञर्थाः । ननु अब्राह्मणमिति समासान्तर्गतनञोऽन्यवाचित्वाभिधानमयुक्तम् । न ब्राह्मण इति विग्रहाभावप्रसङ्गात् 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्त' इति सूत्रेणान्यपर्याययोगे पञ्चमीविधानात् । अन्यथाऽन्यः कृष्णादित्यत्रैव पञ्चमी स्यात्, भिन्नः कृष्णादित्यत्र न स्यादिति

चेत् न । 'अन्यारादितरर्ते' इति सूत्रे अन्यग्रहणस्य पर्यायार्थत्वेऽपि इतरग्रहणं कुर्वता सूत्रकृता अन्यपदेन न यावत्पर्यायग्रहणं किं तु कतिपयपर्यायग्रहणमित्यर्थस्य सूचितत्वेन नञा योगे पञ्चम्य-प्राप्तेः । अन्यथा अन्यग्रहणेनैव कृतत्वेनेतरग्रहणं व्यर्थं स्यात् । ततश्चोपपदविभक्तिप्राप्त्यभावात् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे'ति प्रथमायाः प्राप्तिसद्भावादन्योन्याभावनिरूपणस्य विरोधितादात्म्यप्राप्तिप्रदर्शनपूर्वकत्वात् तादात्म्यप्राप्तेश्च प्रतियोग्यधिकरणपदयोरेकविभक्त्यन्तत्वमन्तराऽ-योगात् । अधिकरणपदस्य प्रथमान्तत्वात् तत्सामानाधिकरण्याय तस्या आवश्यकत्वाच्च न ब्राह्मण इत्येव विग्रहो युक्तः । न तु न ब्राह्मणादिति । न च नञोऽन्यार्थत्वसिद्धौ सूत्रकारस्य नञ्व्यतिरि-क्तान्यपर्यायग्रहणाभिप्रायसिद्धिः । तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इति वाच्यम् । अब्राह्मण इति पदेन ब्राह्मणादन्य इति अवभासान्यथानुपपत्त्याऽन्यवाचित्वसिद्धेः । न च नञा लक्षणयाऽपि तत्प्रतीतिसिद्धिः । मुख्यानुपपत्तिप्रतिसन्धानमन्तरा झडिति तत्प्रतीतेः । मुख्यार्थसंबन्धित्वेनाप्रतीतेश्च । घटो नेत्येवोक्तौ किमनेन घटो नेत्युच्यते उत घटो न भवति पट इत्युच्यत इति सन्देहान्यथानुपपत्त्या च नञोऽन्यवाचित्वसिद्धेः । नह्यभावान्ययोर्नञ्वाच्यत्वविशेषाभावे सन्देहो युज्यते । नञ्वाच्य-संसर्गाभावनिर्णयस्यैवौचित्यात् । न च न ब्राह्मण इति सामानाधिकरण्यात् ब्राह्मणेन नञर्थस्या-भेदान्वयबोधापत्तिः । प्रतियोग्युपस्थापनमन्तरा नञर्थस्य निरूपयितुमशक्यत्वेन प्रतियोग्युपस्थापने व्यापृतस्याभेदान्वयबोधाननुकूलत्वात् । न हि भेदप्रतियोगी अभिन्नश्चेति संभवति विरुद्धत्वात् । अत एवासुरा अविद्येत्यादौ विरुद्धार्थकनञर्थेन न सुरादिशब्दार्थस्याभेदबोधः । ननु घटो नास्तीत्य-त्राभाववाची नञ् इत्ययुक्तम् । तथा सति घटस्याभाव इत्यत्रेव घटशब्दात् षष्ठीप्रसङ्गेन प्रथमा-ऽभावापातात् । किं चास्तीत्यस्य घटपदेनान्वये व्याघातः । नेति निषिध्य पुनः सत्त्वविधानात् । नञन्वयपक्षे तु प्रथमप्रतीतौ अस्तीत्युपलभ्यमानत्वेन नञर्थस्य भावत्वापातः । प्रथमप्रतीतौ अस्तीत्यु-पलभ्यमानस्य भावत्वाङ्गीकारात् । न हि घटोऽस्तीति प्रतीतिः, घटस्यास्तित्वप्रतीतिः । नास्तीति-प्रतीतिस्तु अभावस्यास्तित्वप्रतीतिर्नेति संभवति । घटधर्मतया सत्त्वोल्लेखवत् अभावधर्मतया सत्त्वोल्लेख-साम्यात् । कथमन्यथाऽभावोऽस्तीत्यपि अभावस्यास्तित्वप्रतीतिरिति चेत् ।

उच्यते । अभाववाच्येव नञ् । तथाऽपि घटो नास्तीति वाक्येन न घटाभावः सत्तया प्रतीयते । किं तु प्रतियोग्येव प्रतियोग्यनुयोगिभावरूपपरम्परासंबन्धेनाभावनिष्ठसत्तायोगितया प्रतीयते । अत एव तिङा कर्तुरभिहितत्वात् । कर्तृत्वोपचारविषये घटे प्रथमा । अत एव घटस्याभावोऽस्तीत्यत्रेव घटो नास्तीत्यत्र घटपदे न षष्ठीप्रसङ्गः । अभावस्तु निषेधरूपतया प्रतीयते । तदुक्तम् । 'स्वरूपेण

हि भावाभावौ विधिनिषेधात्मानौ रूपान्तरेण तु निषेधविधिरूपौ । तत्रापातजायां संविदि स्वरूपमेव भासत' इति । न च घटो नास्तीतिज्ञानात् घटार्थिनः प्रवृत्त्यापत्तिः । स्वसत्तायोगित्वज्ञानस्यैव प्रवृत्तिहेतुत्वेन स्वाभावसत्तायोगित्वज्ञानस्य निवृत्तिहेतोः प्रवृत्त्युपयोगित्वाभावात् । न च घटेन्द्रिय-सन्निकर्षाभावात् प्रत्यक्षेण घटो नास्तीतिप्रतीत्यभावापत्तिः । घटस्मृतिसहकृतायाः घटानुपलब्धेरेव प्रत्यासत्तित्वात् । अत एव 'घटो हि प्रतीयमानः अस्तीति वा नास्तीति वा प्रतीयते । विधि-निषेधावबभूय प्रत्ययायोगादि'ति प्राचां प्रवादोऽप्युपपन्नः । अन्यथा अस्तीतिप्रतीतेरेव घट-प्रतीतित्वात् । अस्तीति वा नास्तीति वा प्रतीयत इति प्रवादोऽनुपपन्नः स्यात् । अयं च नञ् प्रसज्य-प्रतिषेध इत्युच्यते । भूतले घट इति प्रतियोगिप्रसक्तावेव प्रवृत्तत्वात् । घटो न पट-इत्यत्रत्यो नञ् पर्युदासः । तादात्म्यप्रसक्तिपूर्वकत्वेऽपि प्रतियोगिप्रसक्तिपूर्वकत्वाभावात् । एवं 'न पलाण्डुं भक्षयेदि'त्यत्र नञः पलाण्डुभक्षणगोचरभावनानिषेधोऽर्थः । तेनेष्टसाधनमपि पलाण्डुभक्षणं न भावयेदित्यर्थप्रतीतिः । देवदत्तो न पचतीत्यनेन तु देवदत्तः पाककर्ता न भवतीति अन्योन्याभाव एव प्रतीयते । देवदत्त पाककर्तृत्वाभावस्तु पश्चाज्ज्ञायते । यथा अयमस्य पुत्र इति शब्दात् पुत्रत्वेन ज्ञाते पश्चात् पितृत्वं ज्ञायते । यजतिषु येयजामहं करोति नानुयाजेष्वित्यनेनानुयाजभिन्नेषु यागेषु येयजामह इति मन्त्रं उच्चारयेदित्यर्थो बोध्यः । नानुयाजेष्वित्येकपदम् । 'नलोपो नञ' इति नलोपाभावश्छान्दसः । एतेनानुयाजपदोत्तरसप्तम्याः नञर्थसमवेतार्थबोधकत्वमनुपपन्नमिति परास्तम् । तस्याः समासोत्तरविभक्तित्वेन अनुयाजशब्दविभक्तित्वाभावात् । न च 'मृगं न भीममि'त्यत्र लक्षणयाऽपि सादृश्य-बोधसंभवात् न नञः सादृश्ये शक्तिरिति वाच्यम् । सादृश्यस्य मुख्यार्थानुपपत्तिप्रतिसन्धानमन्तरा झडित्येव प्रतीयमानत्वेन तत्र लक्षणाऽयोगात् । न च नञः सादृश्यार्थकत्वाभिधानं कर्मनिर्णय-विरुद्धम् । तत्र असद्द्विलक्षणमित्यत्राभावान्यविरोधिनां मध्ये नञः कोऽर्थ इत्युक्तत्वादिति वाच्यम् । चतुर्षु नञर्थेषु त्रयाणां प्रसिद्धत्वा(भावा)भिप्रायेण त्रयाणामेव सङ्कीर्तनात् । अनुक्तरदोषत्वात् । **इति स्वमते नञर्थनिरूपणम् ॥**

**मणिकारस्तु** । उपकुम्भमित्याद्यव्ययीभावः अर्धपिप्पलीत्यादिश्च तत्पुरुषः । पूर्वपदार्थप्रधान एव कुम्भस्य समीपे, पिप्पल्यर्धे च तात्पर्यात् । अतस्तत्रोत्तरपदे षष्ठ्यर्थलक्षणा । न तु समासे शक्तिः । नञ्समासेऽब्राह्मणमानयेत्यत्र पर्युदासे. पूर्वपदे नञि उत्तरपदार्थसदृशक्षत्रिये लक्षणा । अघटः पट इत्यादौ च नञि सामानाधिकरण्याभावादन्योन्याभाववल्लक्षणा । व्यासेऽपि न घटः पट इत्यादौ अन्योन्याभाववल्लक्षणा । यथा शुक्लः पट इत्यत्र शुक्लवल्लक्षणा । न पचतीत्यादौ नञ् प्रसज्यप्रतिषेधः ।

देवदत्तः पचतीतिपदाभ्यां देवदत्ते पाकक्रियां प्रसज्य नेति प्रतिषेधात्। अस्मिश्च पाकक्रियासंसर्गाभावे नञ् मुख्यः। एवं भूतले न घट इत्यनेन प्रतीयमाने घटसंसर्गाभावे नञ् मुख्यः। यजतिषु ये यजामहं करोति नानुयाजेष्वित्यत्र पर्युदासे नञ्। तेनायमर्थः। यजतिषु यागेषु। नानुयाजेष्वनुयाजव्यतिरिक्तेषु 'ये यजामह' इति मन्त्रं करोतीति। नानुयाजेष्विति पदद्वयम्। न समासः। अन्यथा अननुयाजेष्वितिप्रयोगः स्यादित्याह। तन्न। लुप्तायाः षष्ठ्या एव स्वार्थबोधकत्वेनोपकुम्भमित्यादौ उत्तरपदे षष्ठ्यर्थलक्षणाऽभावात्। यदपि न तु समासे शक्तिरिति, तदपि न। समासे योगरूपशक्तेर्विद्यमानत्वात्। यदपि नञ्समासेऽब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदे नञि उत्तरपदार्थसदृशक्षत्रिये लक्षणेति। तदपि न। नञः भेदे सादृश्ये च शक्तिसद्भावेन द्वाभ्यां शक्तिभ्यां संभूय ब्राह्मणभिन्नः ब्राह्मणसदृश इति बोधसंभवे सदृशलक्षकत्वाङ्गीकारायोगात्। त्वन्मते वृत्तिद्वयविरोधाभावात्। भाष्यकृता 'नञा युक्तमिव युक्तं च तदन्यस्मिन् तत्सदृशे वर्तते तथा ह्यर्थगतिरि'ति समासस्य भिन्ने सदृशे च योगस्याभिधानाच्च। यदपि अघटः पट इत्यादौ च नञि सामानाधिकरण्याभावादन्योन्याभाववल्लक्षणेति। तदपि न। अन्योन्याभाववति नञः शक्तत्वात्। अत एव व्यासेऽपि नञः अन्योन्याभाववति लक्षणेति परास्तम्। यत्तु न पचतीत्यत्र नञ् प्रसज्यप्रतिषेध इति। तन्न। घटो न पट इत्यादाविवान्योन्याभावस्यैव प्रतीयमानत्वेन पाकसंसर्गाभावपरत्वाङ्गीकारायोगात्। अन्यथा घटो न पट इत्यादावपि नञो पटत्वसंसर्गाभावपरत्वं न स्यात्। यदपि नानुयाजेष्वित्यत्र पदद्वयं न समास इति। तदपि न। अनुयाजपदोत्तरसप्तम्यर्थस्य नञर्थगतत्वेन भानाभावप्रसङ्गात्। सुपां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। **इति मण्युक्तनञर्थभङ्गः। श्रीरस्तु ॥ शिरोमणिस्तु।**

संसर्गाभावोऽन्योन्याभावश्च नञर्थः। तत्र चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम्। प्रतियोगिनि या प्रतियोग्यनुयोगिभावेनाभावान्वयिता तदवच्छेदकस्यैव घटत्वादेः प्रतियोगितावच्छेदकत्वानुभवात्। अत एव नीलघटवति घटान्तराभावसद्भावेऽपि घटो नास्तीति न प्रत्ययः। प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगिनो भावात्। रक्तघटो नेति प्रत्ययस्तु भवत्येव। प्रतियोगितावच्छेदकीभूतरक्तघटत्वावच्छिन्नस्य तत्राभावात्। अपचति चैत्रे पाकानुकूलयत्नत्वावच्छिन्नतदनुकूलयत्नाभावादेव चैत्रो न पचतीति पाकानुकूलयत्नसंसर्गाभावः प्रतीयते। न तु पाकानुकूलयत्नवति। प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगिनः सत्त्वात्। एवं नीलो घटो न घट इति न प्रत्ययः। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितादात्म्यस्य भासमानत्वात्। नीलो घटो रक्तघटो नेति प्रत्ययस्तु भवत्येव। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितादात्म्यस्य तत्राभावात्।

ननु चैत्रो न पचतीत्यत्र यत्नसंसर्गाभावोऽर्थ इत्ययुक्तम् । अनुयोगिवाचिनि शब्दे, **मूतले** न घट इत्यादौ, सर्वत्र सप्तमीदर्शनात् । अनुयोगिवाचिनि सप्तमीनियमानङ्गीकारे च **घटो न पट** इत्यादावपि संसर्गाभावप्रत्ययः स्यादिति चेत् । उच्यते । प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ । तथा च यत्पदोपस्थापितस्य प्रतियोगिनः सप्तमीं विनैवानुयोगिनि आधाराधेयभावरूपसंबन्धबोधः तत्र तत्पदार्थान्वयिनो नञर्थस्यापि सप्तमीं विनैवानुयोगिन्याधाराधेयभावेनान्वयबोधः । देवदत्तः पचतीत्यत्र पाकानुकूलयत्नस्य सप्तमीं विनैव देवदत्तेनाधाराधेयभावान्वयबोधात् । न पचतीति शब्द-बोध्याभावस्यापि सप्तमीं विनैवाधाराधेयभावेनान्वयबोधः । एवं चैत्रस्येदं वस्तु इत्यनेन संबन्धानु-योगिनि वाचिनि सप्तमीं विनैव चैत्रसंबन्धस्याधाराधेयभावप्रतीतेः नेदं चैत्रस्येतिसंबन्धाभावस्यापि सप्तमीं विनैव पुरोवर्तिन्यनुयोगिन्याधाराधेयभावः प्रतीयते । षष्ठ्याश्च वस्तुनिष्ठं स्वत्वमेवार्थः । न तु चैत्रनिष्ठं स्वामित्वम् । स्वामित्वस्य धनाद्यवृत्तित्वेन चैत्रीयेपि धने नेदं चैत्रस्येति व्यवहारप्रसङ्गात् । ननु चैत्रीये धने नेदं चैत्रस्येति न व्यवहारप्रसङ्गः । षष्ठ्यर्थस्वामित्वस्य निरूपकतासंबन्धेन धने सत्त्वादिति चेत् । न । स्वामित्वनिषेधे विशेषणताविशेषस्यैव प्रतियोगितावच्छेदकसंबन्धत्वेन निरूपकत्वस्य प्रतियोगितावच्छेदकसंबन्धत्वाभावात् । तथा च निरूपकतासंबन्धेन स्वामित्वस्य धनवृत्तित्वेऽपि विशेषणताविशेषेण स्वामित्वस्य तत्राभावात् । चैत्रीयेऽपि धने नेदं चैत्रस्येति प्रयोगप्रसङ्गो दुर्वार इत्येषा दिक् । यत्र चाधाराधेयभावो न संसर्गमर्यादाबललभ्यः तत्रानुयोगिपदे सप्तम्यपेक्षा । यथा चैत्रे पाककृतिश्चैत्रे न पाककृतिः, भूतले घटः भूतले न घट इति । अत्र च तात्पर्यवशात् कदाचिद्भूतलादौ घटाद्यभावः कदाचिच्च घटादौ भूतलादिवृत्तित्वाभावः प्रतीयते । अत एव पृथिव्यां गन्धो न जल इत्यादौ प्रतीतेरेकविशेष्यकत्वानुभवः । यत्र च विशेषणविशेष्य-योरभेदान्वयो व्युत्पन्नस्तत्रान्योन्याभावो नञा बोध्यते । यथाऽयं घटो नीलो, नायं घटो नील इति । अत्र च विशेषणविशेष्ययोः समानविभक्तिकत्वं विरुद्धविभक्तिविरहो वा तन्त्रं इत्याह ।

**तन्न** । संसर्गाभाव इव केवलान्योन्याभावे नञः प्रयोगाभावेन संसर्गाभाववदन्योन्याभावस्य नञर्थत्वाभिधानायोगात् । यत्तु चैत्रो न पचतीत्यत्र यत्नसंसर्गाभावो नञर्थ इत्युक्तं तदयुक्तम् । तिङा यत्नाभानात् । भाने वा धात्वर्थानुकूलयत्नवानित्येव भानेन अस्याङ्गीकर्तव्यत्वेन नञः तदेकदेशेन यत्नेनान्वयायोगात् । पदार्थः पदार्थेनान्वेतीति नियमस्य बाधकं विना त्यागायोगात् । देवदत्तोऽन्न पचतीत्यनेन देवदत्तः पाककर्ता नेत्यन्योन्याभावस्यैव प्रतीयमानत्वाच्च । संसर्गाभावप्रतिपादनस्थले संसर्गाभावानुयोगिवाचिनि सप्तमीनियमादिह तदभावेनात्रत्यनञः संसर्गाभावपरत्वाभिधानायोगात् ।

न च प्रतियोगिनः सप्तमीं विनैवाधाराधेयभावप्रतीतेः तदभावस्यापि सप्तमीं विनैवाधाराधेय-भावबोधः संभवतीत्युक्तमिति वाच्यम् । देवदत्तः पचतीत्यनेन देवदत्तयत्नयोराधाराधेयभावेनान्वय-प्रतीतेरजननात् । शब्देन देवदत्तपाककर्त्रोरभेदबोधानन्तरं मनसैव तद्बोधस्य जायमानत्वात् । अन्यथा घटो न पट इत्यपि पटत्वसंसर्गाभावप्रत्ययः स्यात् । प्रतियोगिनः पटत्वस्य घटेन सह संसर्गविषये-वाधाराधेयभावप्रतीतेः तदभावस्यापि सप्तमीं विनैव तत्प्रतीतिरिति वक्तुं शक्यत्वात् । यत्तु चैत्रस्येदं धनमित्यादौ षष्ठ्याः धननिष्ठं स्वत्वमेवार्थ इति । तन्न । षष्ठ्यर्थस्य संबन्धत्वेनासंबन्धरूपस्य स्वत्वमात्रस्य षष्ठ्यर्थत्वाभावात् । अत एव चैत्रीयेऽपि धने, नेदं चैत्रस्येति व्यवहारप्रसङ्ग इति परास्तम् । षष्ठीबोध्यस्य व्यासज्यवृत्तेः स्वस्वामिभावसंबन्धस्य घने सद्भावात् । ननु यदि संसर्गा-भावानुयोगिवाचके सप्तमीनियमात् देवदत्तो न पचतीत्यत्र संसर्गाभावो न प्रतिपाद्य इत्युच्यते । तर्हि नेदं चैत्रस्येत्यत्र चैत्रसंबन्धसंसर्गाभावो न प्रतिपाद्यः स्यात् । अभावानुयोगिवाचिर्नेदंशब्दे सप्तम्यभावादिति चेत् न । वैषम्यात् । देवदत्तः पचतीत्यत्र यत्नरूपप्रतियोगिनः सप्तमीं विनाऽऽधा-राधेयभावस्य भानाभावेन न पचतीत्यत्र संसर्गाभावस्य बोध्यत्वासंभवेऽपि चैत्रस्येदमित्यत्र संबन्धरूप-प्रतियोगिनोऽनुयोगिना सप्तमीं विनैवाधाराधेयभावस्य भातत्वेन नेदं चैत्रस्येत्यनेन संबन्धाभावस्यानु-योगिना सप्तमीं विनैवाधाराधेयभावबोधसंभवात् । प्रतियोग्यभावयोस्तुल्ययोगक्षेमत्वात् ।

यदपि भूतले न घट इत्यादौ तात्पर्यवशात् कदाचित् भूतलादौ घटाद्यभावः कदाचिद्घटादौ भूतलवृत्तित्वाभावः प्रतीयत इति । तदपि न । घटे भूतलवृत्तित्वाभावबोधस्य शाब्दबोधोत्तरभावि-मानसबोधत्वात् । अस्य वाक्यस्य तदर्थबोधोपयोगिपदशून्यत्वात् ।

अत्र केचित् । यदा भूतले घटाभाव इति बोधः तदा नञः प्रथमान्तस्य च घटपदेनान्वयः । सप्तम्यर्थश्चाधेयता । ततश्च भूतले घटाभाव इति बोधस्य शाब्दत्वमुपपन्नम् । यदा तु घटे भूतल-वृत्तित्वाभावः प्रतीयते । तदा सप्तम्यर्थे नञर्थान्वयः । तथा च भूतलवृत्तित्वाभाववान् घट इति बोधस्य शाब्दत्वमुपपन्नमिति वदन्ति । तन्न । घटो नास्तीति प्रतीतेः घटविशेष्यकत्वानुभवेनाभाव-विशेष्यकत्वाभिधानायोगात् । घटो नास्ति घटाभावोऽस्तीति प्रतीत्योर्वैलक्षण्यानुभवात् । अत एव घटो नास्ति किं तु घटाभावोस्तीति वक्तारो भवन्ति । अन्यथा घटो नास्तीत्युक्त्यैव घटाभावोऽ-स्तीत्यर्थस्य लब्धत्वात् घटाभावोऽस्तीतिशब्दवैयर्थ्यं स्यात् । यत्तु भूतले घटो नेत्यनेन भूतलवृत्ति-त्वाभाववान् घट इति बोधो भवतीति प्रतिज्ञाय तदुपपत्तये नञर्थस्य सप्तम्यर्थान्वयकथनं तदपि न ।

एतद्बोधस्य मानसत्वेनैतच्छब्दजन्यत्वाभावात् । नञर्थस्य सप्तम्यर्थान्वये सप्तम्यर्थाधिकरणात्वाभावबोधप्रसङ्गेन घटे भूतलवृत्तित्वाभावबोधायोगात् । अभाववानिति मतुबर्थबोधायोगाच्च । **अपरे** तु भूतले न घट इत्यादौ सप्तम्यर्थस्य नञर्थान्वयः । तस्य च प्रतियोगिनि विशेषणत्वेनान्वयः । तेन भूतलवृत्त्यभावप्रतियोगी घट इति घटविशेष्यक एवान्वयबोध इत्याहुः । तन्न । अस्तीत्यस्यानन्वयप्रसङ्गात् । अभावप्रतियोग्यस्तीत्यस्य व्याहतत्वादिति । **इति शिरोमण्युक्तनञर्थभङ्गः** ।

**श्रीरस्तु** । द्वन्द्वो द्विविधः । इतरेतरद्वन्द्वः समाहारद्वन्द्व इति । उभयत्रापि समस्यमानपदानां चार्थे लक्षणैव । 'चार्थे द्वन्द्व' इति सूत्रकृता चार्थे वर्तमानानां सुबन्तानां द्वन्द्वानुशासनात् । तत्रेतरेतरयोगे धवखदिरावित्यादौ पूर्वोत्तरपदयोः चार्थोपसर्जनकस्वार्थे लक्षणा । च्छिदिक्रियायाः धवखदिरस्वरूपद्वयेऽन्वयात् । ननु धवखदिरावित्यत्र चार्थस्य भानमेव नेति न लक्षणेति चेत् । अत्र वक्तव्यम् । किं धवखदिराविति पदात् अव्युत्पन्नस्य चार्थभानं नेत्युच्यते उत व्युत्पन्नस्य नेति । नाद्यः । तत्प्रतीत्यभावस्याबाधकत्वात् । न द्वितीयः । चार्थे द्वन्द्व इति सूत्रार्थाभिज्ञस्य द्वन्द्वपदश्रवणे चार्थभाननियमात् । अन्यथा अनेकमन्यपदार्थ इति सूत्रार्थाभिज्ञस्याज्ञवत् चित्रगवादिशब्दश्रवणेऽन्यपदार्थभानं न स्यात् । अयमेव हीतरेतरयोगो नाम यत् समस्यमानपदार्थयोः परस्परसादृश्यम् । तच्च च्छिदिक्रियायोग्यत्वादिरूपमनेकविधम् । तच्चेतरेतरयोगत्वास्यसामान्यरूपेणैव प्रतीयते । न तु विशेषरूपेण । न च लक्षणाबीजाभावान्नेतरेतरयोगे लक्षणेति वाच्यम् । इतरेतरयोगे तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात् । लक्षणाऽनङ्गीकारे च द्वन्द्वो न स्यात् । अनेकयोः सुबन्तयोः चार्थे वर्तमानत्वरूपद्वन्द्वप्रयोजकाभावात् । न च चैत्रमैत्रौ साध्वसाधू इत्यत्र द्वन्द्वो न स्यात् । चैत्रमैत्रयोरितरेतरसादृश्यरूपेतरेतरयोगाभावेन तद्विवक्षाऽसंभवादिति वाच्यम् । तत्रापि गङ्गातीरवासित्वादिना तुल्यावपि देवदत्तयज्ञदत्तौ साध्वसाधू इति बोधस्य जायमानत्वेनेतरेतरयोगसद्भावात् । अत एव साध्वसाधू इति द्वन्द्वोऽपि न निमित्तशून्यः । समस्यमानपदार्थयोः साध्वसाध्वोः सादृश्यरूपेतरेतरयोगसद्भावेन तद्विवक्षासंभवात् । भेरीपटहमित्यादिसमाहारद्वन्द्वेऽपि तु समस्यमानपदयोः समाहाररूपेऽर्थे व्यासज्यवृत्तिलक्षणैव । समाहारस्यैकत्वादेकवचनम् । न च भेरीपटहमित्यादौ धर्मप्राधान्ये क्रियान्वयानुपपत्तिः । अरुणया पिङ्गाक्ष्येत्यत्रारुण्यादीनां धर्मिद्वारा क्रयान्वयवत् भेरीपटहं वादयेत्यादौ समाहारस्य धर्मिद्वारा वादनक्रियाऽन्वयसंभवात् । पितराविति नित्यद्विवचनान्तशब्दस्य मातापित्रोः शक्तिरेव । मातापितरौ पितरौ मातृपितरावित्यभिधानात् । तद्यथा एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरावित्यभिधानात् पुष्पवन्ताविति नित्यद्विवचनान्तः शब्दः दिवाकरनिशा-

करयोः शक्तः । एकवचनद्विवचनबहुवचनान्तस्तु पितृशब्दः जनकमात्रवाचकः । अत एव पाणिनिः मातापितरावित्यस्य पितरावित्यादेश इत्यभिप्रेत्य पिता मात्रेति विरूपैकशेषमभाणीत् । एवं सर्वत्र विरूपैकशेषे द्रष्टव्यम् । एवं सरूपैकशेषे घटौ घटाः इत्यादौ शक्तिरित्यविवादम् । पिता मात्रेत्यादि-सूत्राणि न मातृपितरावित्यादिशब्दानां आदेशविधायकानि । अपि तु मात्रादिशब्दानां लोपविधाय-कानीति पक्षे लुप्तमात्रादिशब्दस्मरणसहकृताः पित्रादिशब्दा एव मातापित्रादीनां बोधकाः । समस्यमान-पदानां च शब्दातिरिक्तसमस्यमानपदान्यपदार्थपरत्वे बहुव्रीहिः । चार्थपरत्वे तु द्वन्द्व इति भेदो द्रष्टव्यः । **इति स्वमते द्वन्द्वे लक्षणासमर्थनम् ।**

**श्रीरस्तु ॥ अन्ये मन्यन्ते ।** इतरेतरयोगद्वन्द्वे धवखदिरौ छिन्धीत्यादौ विभक्त्युपनीतद्वित्वस्य धवखदिरयोः प्रत्येकं न योग्यत्वम् । न वा साकाङ्क्षत्वमिति पदशक्त्ये द्वित्वान्वयानुपपत्याऽन्वययोग्य-खदिरसहितधवोपस्थितये धवपदे प्राथम्यात् साहित्ये लक्षणा । न च साहित्यस्यैकत्वादेकवचनापत्तिः । साहित्यस्य लक्ष्यतावच्छेदकत्वेन साहित्याश्रययोरेव लक्ष्यत्वात् । तयोश्चैकत्वाभावात् । न च घटौ घटावित्यत्र द्विवचनबहुवचनान्वयाय घटशब्देऽपि साहित्यलक्षणप्रसङ्ग इति वाच्यम् । इष्टत्वात् । अत एव सरूपाणामेकशेष एकविभक्ताविति द्वन्द्वापवादकं एकशेषं पाणिनिरभाणीत् । उक्तं च । 'सहभावविवक्षायां वृचिद्वन्द्वैकशेषयोः । क्रमेणार्थप्रतीतौ न स्याद्द्विवचनादिकमि'ति । न चैवं धवपदे-नैव पूर्णत्वात् खदिरपदवैयर्थ्यम् । खदिरपदं विना नियमेन खदिरानुपस्थितेरितरसाहित्याश्रयद्वितीय-विशेषज्ञापनार्थत्वात् । खदिरपदाभावे च घटावित्यनेन घटद्वयधीरिव धवद्वयधीः स्यात् इति ।

**तन्न ।** अवयवशक्तिसहकृतेन द्वन्द्वप्रातिपदिकेनैव धवखदिरयोर्युगपदुपस्थितिसंभवेन द्वित्वान्वय-सिद्ध्यर्थं धवपदलक्षणाऽङ्गीकारायोगात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन केवलधवपदस्य समासोत्तरद्विवचनप्रकृतित्वाभावेन द्वित्वान्वयाय धवपदे लक्षणाभिधानायोगाच्च । खदिरपदवैयर्थ्य-प्रसङ्गाच्च । यदत्रोक्तम् । खदिरपदं विना न नियमतः खदिरोपस्थितिः अतः साहित्याश्रयद्वितीय-विशेषज्ञापनाय खदिरपदमावश्यकमिति । तन्न । विशेषलक्षणयैव साहित्याश्रयखदिरोपस्थितिसंभवे इतरसहितधवे लक्षणामङ्गीकृत्य साहित्यप्रतियोगिनिरूपणाय वक्त्रा खदिरपदप्रयोगस्याकर्तव्यत्वात् । न च धवपदस्य खदिरसहितधवे तात्पर्यज्ञापनाय खदिरपदप्रयोग इति वाच्यम् । खदिरपदस्य चार्थ-परत्वाभावेन धवपदस्य तेन सह द्वन्द्वाभावप्रसङ्गात् । तात्पर्याङ्गीकारे च धवपदवत् खदिरपदेऽपि लक्षणा स्यात् । ननु द्वित्वान्वयितावच्छेदकावच्छिन्ने प्रातिपदिकार्थे द्वित्वान्वयो भवति । तदन्वयि-

तावच्छेदकं च रूपं साहित्यमिति तदुपस्थितये लक्षणा आश्रयणीयेति चेत् । न । पदार्थताऽवच्छेदकयो-र्धवत्वखदिरत्वयोरेव विभक्त्यर्थान्वयितावच्छेदकत्वेन साहित्यस्यानवच्छेदकत्वात् । किं च यदि साहित्योपस्थितिमन्तरा द्वित्वसंबन्धबोधासंभवः । तर्हि द्वित्ववत् साहित्यस्यापि व्यासज्यवृत्तित्वात् तत्संबन्धबोधार्थं व्यासज्यवृत्तिधर्मान्तरबोधो वक्तव्यः स्यात् । तस्याप्येवं तस्याप्येवमित्यनवस्थाप्रसङ्गः । नन्वेवमपि विभक्त्यर्थान्वये नामार्थत्वं तन्त्रम् । न च धवखदिरपदयोर्मिलितयोर्नामत्वम् । अतः धवखदिरयोः नामार्थत्वसिद्ध्यर्थं धवपदस्योभयलक्षकत्वमिति चेत् । न । समासोत्तरविभक्तिं प्रति संभूयैव प्रातिपदिकत्वेन धवशब्दमात्रस्य प्रातिपदिकत्वाभावेनोभयोर्धवपदार्थत्व एव नामार्थत्वाभाव-प्रसङ्गात् । न च शब्दद्वये शक्त्यभावात् मिलितयोर्न धवखदिरोपस्थापकत्वमिति वाच्यम् । देवदत्त-यज्ञदत्तयोर्व्यासज्यवृत्तिशक्त्यभावेऽपि संभूय कार्यकारित्ववत् चक्षुषः घटाद्यनेकवृत्त्येकसन्निकर्षाभावेऽपि अनेकसन्निकर्षेण समूहालम्बनज्ञानजनकत्ववच्च पृथक् पृथक् स्वशक्तिवशादेव मिलितयोर्धवपदखदिरपदयोः धवखदिरोपस्थापकत्वसंभवेनोभयोरपि नामार्थत्वसंभवात् । ननु यदि पृथक् पृथक् पदोपस्थाप्ययोरपि द्वित्वान्वयस्तर्हि 'चन्द्रे कलङ्कः सुजने दरिद्रता विकासलक्ष्मीः कमलेषु चञ्चला । सुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितमि'त्यत्रैतानीत्यध्याहारो न स्यात् । कलङ्कादिपदोपस्थापिता-नामेव कथयन्तीत्यनेनान्वयसंभवादिति चेत् । न । इष्टत्वात् । उपस्थितानेकैकत्वानां बहुत्व-संख्याविरोधाभावेन उपस्थितानेकैकत्वाधिकरणेषु बहुत्वान्वयसंभवात् । अन्यथा एतानीतिबहुवचने-नान्वयसिध्यर्थं पदान्तरमध्याहार्यं स्यात् । तथा चानवस्था । यत्तु अध्याहारप्रदर्शनं तत्तु सुबोधार्थ-मित्यदोषः । अध्याहारं विनैव व्याख्यातुः बोधस्य जातत्वात् । अन्यथा अध्याहारे सत्येव तस्यान्वय-बोधः । अन्वयबोधानन्तरं पदान्तरपरित्यागेन विवक्षितपदाध्याहार इत्यन्योन्याश्रयः । ननु विभक्तेः पदा-र्थतावच्छेदकसमनियतसंख्याबोधकत्वनियमात् तदनुरोधेन द्वन्द्वेऽपि द्वित्वादिसंख्यासमनियतस्य साहित्यस्य पदार्थतावच्छेदकत्वसिद्धये धवपदस्य लक्षणेति चेत् । न । प्रथमप्रतीतधवत्वखदिरत्वरूपपदार्थतावच्छेदक-समनियतसंख्याबोधकत्वसिद्धये द्विवचनस्यैव धवत्वखदिरत्वसमनियतैकत्वद्वयलक्षकत्वस्वीकारस्यौचित्यात् । प्रधानप्रातिपदिकानुसारेण प्रधानविभक्तेर्नेयत्वात् । यत्रैतद्विभक्तिबोध्यं द्वित्वं तत्र धवखदिरपदार्थता-वच्छेदकम् । यत्र चैतत्पदार्थतावच्छेदकम् तत्रैव द्वित्वमिति नियमस्य लक्षणाविरहेऽपि परित्यागा-भावेन लक्षणावैयर्थ्याच्च । द्विवचनादिकं पदार्थतावच्छेदकाधिकरणपर्याप्त्यधिकरणकसंख्याबोधकमिति नियमस्त्वप्रामाणिकः । ननु योग्यतावच्छेदकरूपेणोपस्थित एव शब्दार्थे इतरशब्दार्थान्वयो भवति । द्वित्वान्वयितावच्छेदकं च रूपं साहित्यमेवेति तदुपस्थितये लक्षणेति चेत् । न ।

योग्यताज्ञानस्य शाब्दबोधाहेतुत्वात् । अन्यथाऽयोग्यात् अग्निना सिञ्चेदिति वाक्यादन्वयबोधो न स्यात् । न चेष्टापत्तिः । निराकरणाभावप्रसङ्गात् । यदपि घटौ घटा इत्यादावपि साहित्यलक्षण-प्रतिपादनम् । तदपि न । शक्त्या घटद्वयोपस्थित्यैव द्विवचनान्वयसंभवे साहित्यबोध-प्रयोजनाभावात् । न हि घटशब्द एकस्यामेव व्यक्तौ शक्तः । न व्यक्त्यन्तर इति संभवति । घटान्तरे घटशब्दव्यवहाराभावापातात् । अनेकव्यक्तिषु का शक्या का नेति निर्णयासंभवेन घटशब्दव्यवहारविलोपापाताच्च । **इति द्वन्द्वे मीमांसकोक्तपूर्वपदलक्षणभङ्गः ।**

**श्रीरस्तु ॥ वैय्याकरणा मन्यन्ते ।** प्लक्षन्यग्रोधाविति द्वन्द्वे पूर्वोत्तरे द्वे अपिपदे द्व्यर्थे । प्लक्षन्यग्रोधधवखदिरपलाशा इत्यादिद्वन्द्वे सर्वाण्यपि पदानि बह्वर्थानि । न च प्लक्षन्यग्रोधाविति द्वन्द्वे 'बहुषु बहुवचनमि'ति बहुवचनप्रसङ्गः । बहुत्वाभावात् । किमुच्यते बहुत्वाभावादिति । यावतेदानीमेवोक्तं पूर्वोत्तरे द्वे अपि द्व्यर्थे इति । याभ्यामेवैको द्व्यर्थस्ताभ्यामेवापरोपि द्व्यर्थः । नत्वपराभ्याम् । एवं च कृत्वाऽर्थबहुत्वाभावात् बहुवचनाभावः । न चैकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः । उक्तार्थानां प्रयोगकृत्याभावादिति वाच्यम् । अनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधपदप्रयोगः । कथमनुक्तः । यावता इदानीमेवोक्तं प्लक्षोपि द्व्यर्थः न्यग्रोधोऽपि द्व्यर्थ इति । सहभूतावेवान्योन्यस्यार्थमाहतुः । न पुनः पृथग्भूतौ । किं पुनः कारणम् । स्वभावस्य तथाविधत्वादिति ।

**तन्न ।** प्लक्षन्यग्रोधपदयोः स्वार्थमात्रशक्तत्वेन द्व्यर्थत्वायोगात् । नन्वजहत्स्वार्थलक्षणया एकैकस्य द्व्यर्थत्वं संभवतीति चेत् । न । एकेनैवपदेनोभयोक्तिसंभवेन पदान्तरवैय्यर्थ्यप्रसङ्गात् । यदत्रोक्तम् । सहभूतावेवान्योन्यस्यार्थमाहतुः । न पुनः पृथग्भूताविति । तदपि न । काकेभ्यो दधि रक्ष्यतामित्यत्र मार्जालादिपदासहितस्यापि काकपदस्य लक्षकत्वदर्शनात् । प्लक्षन्यग्रोधावित्यत्र प्लक्षश्च न्यग्रोधश्चेति विग्रहाभावापाताच्च । न चेदमिष्टापादनम् । प्लक्षौ च न्यग्रोधौ चेत्येव विग्रहाङ्गी-कारादिति वाच्यम् । सहभूतावेवान्योन्यस्यार्थमाहतुरिति त्वयैवाभिधानेनासहभूतयोः विग्रह-वाक्यस्थयोः प्लक्षन्यग्रोधपदयोः द्व्यर्थत्वाभावेन द्विवचनान्तत्वायोगात् । अन्यथा प्लक्षो न्यग्रोधश्चास्तीति प्रयोगो न स्यात् । ननु मातरौ च पितरौ चेति स्थिते द्वन्द्वापवादकं पितरावित्येकशेषं पाणि-निरभाणीदित्यभ्युपेयम् । अन्यथा माता च पिता चेति स्थिते 'पिता मात्रे'ति सूत्रं एकशेपविधायकं स्यात् । न चेष्टापत्तिः । एकवचनावरुद्धपितृशब्दस्य द्विवचनान्तत्वाभावप्रसङ्गात् । तथा च तत्र

मातरौ च पितरौ चेति स्थितिरङ्गीकार्येति धवखदिरावित्यत्र धवौ च खदिरौ चेति विग्रहः । घटपटः स्तम्भा इति बहुवचनान्तसमासे घटाश्च पटाश्च स्तम्भाश्चेति विग्रहोऽङ्गीकार्यः । वैरूप्ये कारणाभावादिति चेत् न । मातापितराविति प्रयोगप्रसङ्गे पितरावित्यपि प्रयोगः साधुः इत्यभिप्रेत्य सूत्रकृता पिता मात्रेत्येकशेषस्याभिहितत्वेन वस्तुतः मातरौ च पितरौ चेति स्थिते एकस्य मातरावित्यस्य लोपः पितरावित्येतद्द्विवचनान्तस्य अवशेषो भवतीत्यर्थस्य सूत्रकारानभिमतत्वात् । **इति वैय्याकरणोक्तद्वन्द्वार्थभङ्गः ॥**

**मणिकारस्तु ।** इतरेतरयोगद्वन्द्वे एकस्मृत्यारूढपदद्वयात् स्वस्वशक्त्या स्वस्वार्थयोरेकस्मृतिसंभवात् अनेकस्मृत्यर्थं न साहित्यलक्षणा । एवं च पदद्वयादुपस्थिते धवखदिरस्वरूपे द्वित्वान्वयो बोध्यते । यथेन्द्रियसन्निकृष्टे धवखदिरस्वरूपे प्रत्यक्षेण द्वित्वं बोध्यते । न च तत्र तयोः स्वरूपातिरिक्तं तुल्यद्वारत्वादिकमस्ति ज्ञायते वा । समाहारद्वन्द्वे पाणिपादं पञ्चफलीत्यादौ तावद्वृत्त्येकधर्माभिधानं लक्षणयैव । तदेकत्वादेकवचनम् । तदाहुः 'समाहरणं समाहारः । अनेकस्यैकीकरणं एको धर्म इति यावत् । स चैको धर्मः सेनादाविव द्विबहुत्वसंख्या । अपेक्षाबुद्धिविशेषविषयत्वं वा । विरूपैकशेषे तु पितरावित्यत्र एकस्य पितृद्वयाभावात् अगत्या पितृपदे जनकदाम्पत्यलक्षणम् । विभक्त्युपनीतं च द्वित्वं विरूपयोरेव मातापित्रोरवगम्यते । एवं ब्राह्मणौ श्वशुरौ भ्रातरौ शिवावित्यादिविरूपैकशेषमात्रे लक्षणे'ति।

**तन्न ।** द्वन्द्वावयवानां इतरेतरयोगे चार्थे शक्तिलक्षणयोरन्यतराभावे द्वन्द्वाभावप्रसङ्गात् । चार्थे द्वन्द्व इति चार्थे वर्तमानानां सुबन्तानां द्वन्द्वाभिधानात् । द्वित्वान्वयाय एकस्मृत्यारूढपदद्वयस्य संभूय स्वार्थानुभावकत्वस्यैव वक्तव्यत्वेनैकस्मृत्यभिधानायोगात् । न च स्मर्यमाणयोर्द्वित्वान्वयो बोध्यः । येनैकस्मृत्यभिधानं युक्तं स्यात् । किंत्वनुभूयमानयोः । न च युगपदनुभावकत्वसिध्यर्थमेवार्थद्वयगोचरैकस्मृत्यभिधानमिति वाच्यम् । पदयोरेकस्मृत्युपारूढत्वमात्रेण तत्संभवात् । यदपि समाहारद्वन्द्वे पाणिपादं पञ्चफलीत्यादौ तावद्वृत्त्येकधर्माभिधानं लक्षणयैवेति । तत्र वक्तव्यम् । किं सर्वेषां पदानां तावद्वृत्त्येकधर्माभिधाने लक्षणा । उतैकस्य । आद्येऽपि लक्षणा किं प्रत्येकं पदेषु पर्याप्ता । उत व्यासज्य वर्तमाना । नाद्यः । पदान्तरवैय्यर्थ्यप्रसङ्गात् । न द्वितीयः । अपसिद्धान्तात् । नापि द्वितीयः । पदान्तरवैय्यर्थ्यप्रसङ्गात् । यदपि पितरावित्यत्र विरूपैकशेषे जनकदाम्पत्ये लक्षणेति । तदपि न । पितराविति नित्यद्विवचनान्तशब्दस्य पुष्पवन्ताविति शब्दस्य दिवाकरनिशाकरयोरिव मातापित्रोः शक्तत्वात् । अत एव मातापितराविति प्रयोगप्रसङ्गे तत्समानार्थत्वात् पितरावित्यपि प्रयोगः साधुरिति ज्ञापनाय पिता मात्रेति पाणिनिरेकशेषमभाणीत् । अन्यथा छत्रिणो गच्छन्ति काकेभ्यो दधि-

रक्ष्यतामित्यादावपि काकादिपदानामेकशेषमभिदध्यात्। वैषम्ये कारणाभावात्। **इति मण्युक्तद्वन्द्वार्थभङ्गः ॥**

अक्षादिशब्दवदाख्यातो नानार्थः। तथा हि। देवदत्तः पचतीत्यादौ कर्तृवाचकत्वस्य, पच्यते तण्डुलो देवदत्तेनेत्यत्र कर्मवाचकत्वस्य, सुप्यते आस्यते देवदत्तेनेत्यादौ भाववाचकत्वस्य, 'लः कर्मणि भावे चाकर्मकेभ्य' इति स्मृतिसिद्धत्वात्। आख्यातामिधेयश्च कर्ताऽनेकप्रकारः। धात्वर्थानुकूलव्यापारवान्, धात्वर्थाश्रयः, धात्वर्थप्रतियोगी चेति। पचतीत्यनेन पाकानुकूलव्यापारवत्त्वस्य, रथो गच्छति, देवदत्तो जानातीच्छति यतते द्वेष्टि निद्रातीत्यादिना धात्वर्थभूतगत्याद्याश्रयत्वस्य, नश्यतीत्यनेन नाशरूपधात्वर्थप्रतियोगित्वस्य प्रतीतेः। न च कृतिरेवाख्यातार्थः। रथो गच्छतीत्यादौ च आख्यातो लक्षणयैव धात्वर्थाश्रयत्वादिकमाचष्ट इति नाश्रयत्वादौ शक्तिरिति वाच्यम्। प्रयोगसाम्ये एकत्र शक्तिः अन्यत्र लक्षणेति बाधकं विना कल्पनाऽयोगात्। न चात्र मुख्यार्थानुपपत्तिप्रतिसन्धानपूर्वकं आश्रयत्वादिप्रतिपत्तिरित्यस्ति। येनाख्यातस्याश्रयत्वादौ लक्षणेति प्रतीमः। आख्यातस्य कृत्यर्थकत्वे मानाभावाच्च। न च पचतीति प्रयोगाज्जायमानकृत्यनुभव एव तत्र मानम्। कृत्यनुभवस्य तत्प्रयोगजन्यत्वासिद्धेः। धात्वर्थानुकूलव्यापाराश्रयत्वे ज्ञाते तेन लिङ्गेन यत्नानुभव इत्यङ्गीकारात्। न च लिङ्गेन यत्नानुभवाङ्गीकारे यत्ने वर्तमानत्वान्वयो न स्यात्। अपदार्थत्वात् इति वाच्यम्। इष्टत्वात्। यत्ने वर्तमानत्वबोधस्यैवासिद्धेः। भावे वा प्रत्यक्षेण पाकानुकूलव्यापारविज्ञानानन्तरं अनुमिते यत्ने मनसा वर्तमानत्वपरिच्छेदवत् शब्देन व्यापारबोधानन्तरमनुमिते यत्ने मनसा वर्तमानत्वपरिच्छेदसंभवात्। अत एव किं करोति देवदत्तः। पश्येति नियोगोऽप्युपपन्नः। व्यापाराश्रयत्वस्य प्रत्यक्षयोग्यत्वात्। अत एव प्रात्यक्षिकपाकानुकूलव्यापाराश्रयत्वविज्ञानस्य पचतीत्याकारत्वमुपपन्नम्। अन्यथा तज्ज्ञानं मूकविज्ञानवत् शब्दानुल्लेखि स्यात्। अत एव पाकानुकूलव्यापारसमाप्तिविज्ञानेनापाक्षीदिति प्रयोगः। अत एव तस्य भावित्वविज्ञानात् पक्ष्यतीति प्रयोगः। न च, रथः किं करोति पश्येति-नियुक्तेन गच्छतीति प्रयोगात् गत्यनुकूलव्यापाराश्रयत्वमेव गम्युत्तराख्यातार्थः स्यात्। एवं यतत इत्यादावपि धात्वर्थानुकूलव्यापाराश्रयत्वमेवाख्यातार्थ इति वाच्यम्। रथः किं करोतीति करोतिना रथः किंविधक्रियाश्रय इति प्रश्ने गच्छतीति गत्याश्रयत्वाभिधानस्यैवोत्तरत्वसंभवात्। निद्रातीत्यादिना निद्राद्याश्रयत्वस्यैव भानाच्च। न च करोतेर्यत्नार्थत्वात् करोतिना क्रियाविषयकप्रश्नोऽनुपपन्न इति वाच्यम्। क्तिनन्तकृधातोरेव यत्नपरत्वेन कृधातुमात्रस्य यत्नपरत्वाभावात्। अन्यथा कृधातुप्रकृतिकयोः क्रियाकृत्या-

पदयोर्येलार्थकत्वं स्यात् । अत एव डुकृञ् करण इति धातुव्याख्यानम् । अन्यथा डुकृञ् कृतावित्य-वक्ष्यत् । यदा तु किं करोतीतिप्रश्ने नश्यतीत्युत्तरं तदा न किमपि करोति अपि तु नाशवानित्ये-वोत्तरार्थः । धात्वर्थानुकूलव्यापाराश्रयस्य, धात्वर्थाश्रयस्य, धात्वर्थे प्रतियोगिनश्च कर्तृशब्दार्थत्वाङ्गीकार एव देवदत्तः पचति, रथो गच्छति, घटो नश्यतीत्यादिप्रयोगानां कर्तरि प्रयोगत्वं लोकसिद्धं सिद्धं भवति । कर्तृवाचकानां देवदत्तादिपदानां च तिङन्तेन सामानाधिकरण्यं चोपपन्नं भवति । कर्तरि शबिति कर्तरि विहिताः शब्दादिप्रत्ययश्चोपपन्ना भवन्ति । ननु यदि धात्वर्थाश्रयः कर्ता स्यात् तर्हि तण्डुलः पचती-तिप्रयोगः स्यात् । तण्डुलस्य पाकाश्रयत्वेन कर्तृत्वात् इति चेत् । न । स्थाल्यधःसंतपनस्यैव धात्वर्थत्वेन श्रपणनिष्ठस्य तस्य तण्डुलनिष्ठत्वाभावात् । अन्यथा तण्डुलस्य परसमवेतक्रियाजन्यफलाश्रयत्वाभावे तत्कर्मत्वं न स्यात् । उत्सर्गतः कर्मणः परसमवेतक्रियाजन्यफलशालित्वात् । तण्डुले पाक इत्यादि-प्रयोगस्तु पाकपदस्य पाकफले लाक्षणिकत्वेनोपपन्नः । यत्र च कर्मणः धात्वर्थाश्रयत्वं तत्र कर्मण्यपि कर्तृत्वविवक्षया प्रयोगो नानुपपन्नः । मामहं जानामीति प्रयोगस्य सर्वलोकसिद्धत्वात् । यदि काष्ठे कर्तृत्वविवक्षा तर्हि काष्ठं पचतीति प्रयोगो न निवार्यते । घटं करोतीत्यत्र घटोत्पत्त्यनुकूलक्रियायाः धात्वर्थत्वात् तदाश्रयः कुलालः कर्ता । घटो जायत इत्यत्र जन्याश्रयत्वाद्घट एव कर्ता । ननु देवदत्तः पचतीत्यादिप्रयोगाः कर्तृवाचकत्वान्न कर्तृप्रयोगा इत्युच्यन्ते । अपि तु कर्तृसंख्यावाचकत्वात् । अत एव शबादयोऽप्युपपन्ना भवन्ति । कर्तृवाचकदेवदत्तादिपदस्य आख्यातस्य च भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थाभिधायकत्वलक्षणसामानाधिकरण्यमसिद्धमेव । पचतीत्यनेन कर्तृसंख्यामात्रप्रतीतेः । अन्यादृशं त्वप्रयोजकम् । तस्य कर्तरि शक्त्यनुपपादकत्वात् इति चेत् । न । कर्त्रादिवाचकदेवदत्तादिशब्दोत्तर-सुबुक्तसंख्यावरुद्धेन कर्त्रा अनन्विताया: संख्यायाः कर्तृसंख्यात्वायोगात् । न च सुबाख्याताभ्यामेकस्या एव कर्त्रादिसंख्यायाः अभिधानेन नान्वयाभावप्रयुक्तः कर्त्रादिसंख्यात्वाभाव आख्यातोक्तसंख्याया इति वाच्यम् । पचतीत्युक्ते एकः पाककर्तेत्यनुभवस्य जायमानत्वात्तदनुसारेण आख्यात एव संख्या-विशिष्टं कर्तारमाचष्ट इत्येव कल्पनस्योचितत्वेन तस्य संख्यामात्रवाचकत्वकल्पनाऽयोगात् । देवदत्तस्तण्डुलं पचतीत्याख्यातोक्तसंख्यायाः कर्तुरिव कर्मणोपि धर्म्याकाङ्क्षापूरकत्वेन कर्त्रैवान्वयः न कर्मणेति नियमा-भावप्रसङ्गाच्च । देवदत्तः पचतीत्यत्र सुबाख्यातयोः सामानाधिकरण्यानुरोधात् आख्यातोक्तसंख्यायाः कर्त्रैवान्वयो न कर्मणेति चेत् । अत्र वक्तव्यम् । किं तत्सुबाख्यातयोः सामानाधिकरण्यम् । किमेकसंख्याऽभिधायकत्वम् । उत भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थवाचिप्रकृत्युत्तरत्वम् । नाद्यः । साध्यावैशिष्ट्यात् । न द्वितीयः । आख्यातप्रकृतिभूतस्य धातोः कर्तृवाचित्वाभावात् । ननु चैत्रः पचतीत्यत्राख्यातोक्तभावनायाः कर्त्रन्वयात् तदुक्तसंख्याऽपि कर्त्रैवान्वेति । न कर्मणा । यं यं

भावनाऽनुधावति तं तं संख्याऽपीति नियमादिति चेत्। न। पचतीत्याख्यातोक्तभावना कर्तारमेवानुधावति, पच्यत इत्याख्यातोक्तभावना कर्मैवानुधावतीत्यत्र नियामकस्य वक्तव्यत्वात्। ननु भावना हि व्यापारः स च कर्मत्वाद्यनवरुद्धं धर्मिणमाकाङ्क्षति। कर्मत्वाद्यनवरुद्धो धर्म्यपि क्रियान्वयाय व्यापारमाकाङ्क्षति। ततश्च चैत्रस्तण्डुलं पचतीत्यत्र प्रथमान्तपदोपस्थापितश्चैत्रः कर्मत्वाद्यनवरुद्ध इति भावना चैत्रमनुधावति न तण्डुलम्। तस्य द्वितीयोक्तकर्मत्वावरुद्धत्वात्। एवं चैत्रेण पच्यते तण्डुल इत्यत्र कर्मत्वाद्यनवरुद्धं प्रथमान्तपदोपात्तं तण्डुलमेवानुधावति। आकाङ्क्षावशात्। न कर्तारम्। तस्य चैत्रेणेति तृतीयोक्तकर्तृत्वावरुद्धत्वात् इति चेत्। न। भावनायाः व्यापारत्वेन धर्म्याकाङ्क्षित्वे चैत्रेण पच्यते तण्डुल इत्यत्रापि भावनाया कर्त्रैवान्वयापातात्। न च तृतीयया कर्तृत्वस्योक्तत्वात् न कर्तारमाकाङ्क्षतीति वाच्यम्। कर्तुरेवाश्रयत्वेन कर्तृत्वोक्तौ सुतरां तदाकाङ्क्षित्वस्यौचित्यात्। ननु भावनाया धर्मिमात्राकाङ्क्षित्वेऽपि न चैत्रस्य भावनाकाङ्क्षा। चैत्रेणेति तृतीयोक्तकर्तृत्वान्तर्गतकृतिरूपभावनाऽवरुद्धत्वात्। कर्मणश्च धात्वर्थान्वयाय भावनाऽऽकाङ्क्षित्वात्। विषयविषयिभावेन कर्मणैवान्वय इति चेत्। न। प्रथमाख्याताभ्यां एकसंख्याभिधानवत् तृतीयाख्याताभ्यां मिलित्वा एकभावनाऽभिधानसंभवात्। अन्यथा धात्वर्थविषयकाख्यातोक्तभावनाऽन्वयरहितस्य धात्वर्थान्वयितृतीयोक्तभावनान्वयिनश्चैत्रस्य धात्वर्थान्वयो न स्यात्। किं च चैत्रेण पच्यते तण्डुल इत्यत्राख्यातोक्तभावनायाः कर्मणा आश्रयाश्रयिभावेनान्वयाभावात् आख्यातोक्तसंख्याया अपि कर्मणा आश्रयाश्रयिभावेनान्वयो न स्यात्। संख्यान्वयस्य भावनान्वयानुसारित्वात्। न च भावनानुसारित्वात्संख्यायाः कर्मान्वये प्राप्ते पश्चाद्योग्यताबलात् आधाराधेयभावेनान्वयो भवति। तद्यथा कान्तारे समुपस्थिते सहायेन गच्छतः सार्थस्य तदत्यये स्वेच्छाविहार इति वाच्यम्। भावनायाः कर्त्राप्यन्वयसद्भावेन पच्यत इत्याख्यातोक्तसंख्यायाः कर्त्राऽप्यन्वयापातात्। अथ भावनाविशेष्ये संख्याऽन्वयो भवति। चैत्रः पचतीत्यत्र चैत्रो भावनाविशेष्यः। तण्डुलनिष्ठविक्लित्यनुकूलव्यापारजनककृत्याश्रय इति चैत्रस्य विशेष्यत्वेन बोधात्। अतस्तत्रैव संख्याऽन्वेति। चैत्रेण पच्यते तण्डुल इत्यत्र तण्डुलो भावनाविशेष्यः चैत्रनिष्ठकृतिजन्यव्यापारजन्यफलाश्रयस्तण्डुल इति तण्डुलस्य परम्परया भावनाविशेष्यतया बोधात्। संख्यान्वय इति चेत्। न। अतस्तत्रैव संख्याभावनयोरेकप्रत्ययोपात्तत्वप्रत्यासत्तेः तुल्यत्वेन भावनाविशेष्य एव संख्यान्वयः न तु विशेषण इति निर्बन्धस्य नियामकविशेषाभावेनायोगात्।

किं च तिङः कर्तृकर्मवाचकत्वाभावे पचतीत्यत्र शप् पच्यत इत्यत्र यक् च न स्यात्। तयोः कर्त्रादिवाचके सार्वधातुके विहितत्वात्। देवदत्तः पचतीत्यत्र अनभिहिताधिकारीया तृतीया पच्यते

तण्डुल इत्यत्र अनभिहिताधिकारीया द्वितीया च स्यात् । न च कर्त्रादिसंख्यायां तिङाचनमिहितायां 'कर्तृकरणयोस्तृतीया' 'कर्मणि द्वितीयेति' सूत्राभ्यां तृतीयाद्वितीययोरभिधानात् प्रकृते च तिङा कर्मकर्तृसंख्ययोरभिधानात् कर्तृप्रयोगे कर्तरि न तृतीया, कर्मप्रयोगे च न कर्मणि द्वितीयेति वाच्यम् । कृत्तद्धितसमासानां संख्याऽनभिधायकत्वेन तत्समभिव्याहारात् तिङ्कृत्तद्धितसमासैरनुक्ते कर्तरि तृतीया अनुक्ते कर्मणि द्वितीयेति कर्तृकरणयोस्तृतीया कर्मणि द्वितीयेति सूत्रयोरर्थस्य वक्तव्यत्वात् । अन्यथा कृतः कटः शत्यः कटः शतिकः कट इत्यादौ कृत्तद्धिताभ्यां कर्मसंख्याया अनभिहितत्वेन कृतः कटं शत्यः कटं इत्यादिप्रयोगप्रसङ्गः । किं च पचतीत्युक्ते क इति कर्तृविशेषजिज्ञासा पच्यत इत्युक्ते किमिति कर्मविशेषजिज्ञासा च न स्यात् । तिङा कर्तृकर्मणोः सामान्येनानभिधानात् । ननु न कर्तृकर्मणोर्लकारवाच्यत्वमभ्युपगन्तुं शक्यम् । ओदनकामः पचेतेति विधिलिङ्बोध्येष्टसाधनत्वस्य कर्तृनिष्ठतया बोधप्रसङ्गात् । एकप्रत्ययोपात्तत्वप्रत्यासत्या कर्तुरेवान्तरङ्गत्वात् । धात्वर्थपाकादौ इष्टसाधनत्वबोधो न स्यात् । तथा च प्रवृत्तिर्न स्यादिति चेत् । न । आत्मेष्टसाधनत्वस्य सिद्धत्वेन तद्बोधने तात्पर्यविरहात् तात्पर्यानुसारेण यागगतेष्टसाधनत्वस्यैव लिङा बोधनात् । अन्यथा कर्त्रादिसंख्यैवाख्यातबोध्येति वादिनो मतेऽपि यत्र संख्याऽन्वयः तत्रैवेष्टसाधनत्वान्वयः स्यादिति यागादीनामिष्टसाधनत्वबोधो न स्यात् ।

नन्वथापि कर्तृकर्मणी नाख्यातशक्ये । तयोर्देवदत्ततण्डुलादिपदलभ्यत्वात् । अनन्यलभ्यस्यैव शब्दार्थत्वादिति चेत् न । देवदत्तत्वादिरूपेणान्यलभ्यत्वात्तेन रूपेण शक्यत्वाभावेऽपि कर्तृत्वादिरूपेण शक्यत्वस्य वक्तव्यत्वात् । तेन रूपेणान्यलभ्यत्वाभावात् । अन्यथा चित्रगुर्देवदत्त इत्यत्र अन्यपदार्थे त्वदुक्ता लक्षणा न स्यात् । अन्यपदार्थस्य स्वामिनः, चित्रगुर्देवदत्त इति प्रयोगान्तर्गतदेवदत्तपदलभ्यत्वात् । सङ्ख्याऽप्याख्याताभिधेया न स्यात् । तस्या अपि नामोत्तरसुब्लभ्यत्वात् । न चाख्यातस्य यदि व्यापारविशिष्टे शक्तिः तर्हि यागस्य विषयतया साध्यतया वा व्यापारान्वयो न स्यात् शब्दार्थस्यान्यविशेषणतया विज्ञातेन शब्दार्थैकदेशेनान्वयायोगात् इति चेत् । न । पदान्तरव्युत्पत्तितो विलक्षणयाऽऽख्यातव्युत्पत्त्याऽन्यविशेषणतया विज्ञातेन शब्दार्थैकदेशेनापि अन्वयबोधसंभवात् । देवदत्तस्य नप्तेत्यत्र नप्तृपदार्थस्पुत्रपुत्रैकदेशेन पुत्रविशेषणेनापि पुत्रेण देवदत्तस्यान्वयदर्शनात् । देवदत्तादन्यो यज्ञदत्त इत्यत्र यज्ञदत्तविशेषणतया विज्ञातपदार्थैकदेशं भेदं प्रति देवदत्तस्य प्रतियोगित्वेनान्वयदर्शनाच्च । एवं च देवदत्तस्तण्डुलं पचतीत्यस्य तण्डुलकर्मकपाककर्ता देवदत्त इत्यर्थः । पाककर्तृदेवदत्तयोरभेदान्वयबोधात् । देवदत्तेन पच्यते तण्डुल इत्यस्य देवदत्तकर्तृकपाककर्म तण्डुल

इत्यर्थः । तण्डुलपाककर्मणोरभेदान्वयबोधात् । देवदत्तेन सुप्यत इत्यस्य देवदत्तकर्तृकः स्वाप इत्यर्थः । सङ्ख्या त्वनन्वितैव । स्वापस्य द्विबहुत्वेऽपि सुप्यत इत्येव प्रयोगात् । एकवचनं तु प्रयोगसाधु । अचेतने मध्यमोत्तमप्रयोगौ न भवतः युष्मदस्मच्छब्दाविषयत्वात् । यदा चेतने उपचारेण युष्मदस्मच्छब्दप्रयोगौ भवतः । तदा तदनुबन्धिनौ मध्यमोत्तमप्रयोगावप्युपचारेण भवतः ॥ **इत्याख्यातनिरूपणम् ॥**

**श्रीरस्तु ॥ उदयनस्तु ।** आख्यातस्य यत्नवाचकत्वात् रथो गच्छतीत्यादिप्रयोगान्तर्गताख्यातस्य व्यापारे लक्षणा । आख्यातस्य यत्नवाचित्वमेव कुत इति चेत् । उच्यते । पचतीत्युक्त्वा पाकं करोतीति यत्नार्थककरोतिनाऽऽख्यातविवरणात् । असति बाधे वृद्धव्यवहारवत् विवरणस्यापि व्युत्पत्तिहेतुत्वात् । किं च, किं करोतीति पृष्टाः, पचतीति प्रतिवक्तारो भवन्ति । न चाख्यातस्य यत्नवाचित्वाभावे किमनुकूलवानित्यभिप्रायकस्य किं करोतीति प्रश्नस्य पचतीत्युत्तरं युज्यते । पाकानुकूलयत्नप्रतिपादकत्वादित्याह ।

**तन्न** । देवदत्तः यज्ञदत्तं जानाति, तिष्ठति देवदत्त इत्यादौ आख्यातेन यत्नस्याप्रतीयमानतया तस्य यत्नार्थत्वायोगात् । न चात्र नाख्यातो मुख्यार्थः, किं तु निरूढलक्षणया ज्ञानाद्याश्रयत्वाद्यर्थक इति वाच्यम् । मुख्यार्थानुपपत्तिप्रतिसन्धानपूर्वकमप्रतीयमानत्वात् । यदपि रथो गच्छतीत्यादौ आख्यातस्य व्यापारे लक्षणेति । तत्र वक्तव्यम् । किं रथनिष्ठो गमनरूपव्यापार एवाख्यातेन लक्ष्य उत गमनानुकूलोऽन्यः । नाद्यः । धातुनैव तस्यावगतत्वेन लक्षणावैयर्थ्यात् । नापि द्वितीयः । रथे प्रयत्नवत् गमनानुकूलव्यापारस्याप्यभावात् । अथ तत्र गमनानुकूलः परिस्पन्दरूपो व्यापारोऽभ्युपगम्यते । तर्हि रथः परिस्पन्दते इति प्रयोगसिद्धये तत्रापि परिस्पन्दानुकूलो व्यापारोऽभ्युपगन्तव्यः स्यात् । तत्राप्येवमित्यनवस्था । अथ तत्र परिस्पन्दत इत्यत्र प्रकृत्यर्थ एवाख्यातार्थ इति चेत् न । यक्प्रसङ्गात् । शबभावप्रसङ्गाच्च । 'सार्वधातुके यगि'ति सूत्रेण भावकर्मवाचिनि सार्वधातुके यको विधानात् । यदपि पचतीत्युक्त्वा पाकं करोतीति यत्नार्थककरोतिनाऽऽख्यातविवरणात् आख्यातस्य यत्नार्थकत्वमिति । तदपि न । पाकं करोतीति करोतिना पाककर्मकक्रियाश्रयत्वस्यैवाभिधानेन यत्नस्यानभिधानात् । पाकानुकूलव्यापारं दृष्ट्वैव पाकं करोतीति प्रयोगात् । यदपि किं करोतीति प्रश्नस्य पचतीति प्रतिवचनान्यथानुपपत्त्या आख्यातस्य कृतिवाचकत्वमिति । तदपि न । किं करोतीति प्रश्नस्य किंविधक्रियाश्रय इत्यर्थत्वेन पाकानुकूलव्यापाराश्रय इत्युत्तरसंभवात् । अत एव किं करोति

पश्येति वक्तारो भवन्ति । न हि तत्पक्षे किं करोतीत्याख्यातार्थस्य पश्येति उक्तिः संभवति । परकीययत्नस्यातीन्द्रियत्वात् । ननु घटाङ्कुरयोः क्रियाजन्यत्वे समानेऽपि घटः कृतः, अङ्कुरो न कृत इति व्यवह्रियते । न च तत् वैलक्षण्यमन्तरा संभवतीति यत्नजन्यत्वाजन्यत्वाभ्यामेव वैलक्षण्यं वाच्यमिति कृञो यत्नार्थकत्वसिद्धिः । किं च कृञो यत्नार्थकत्वाभावे कर्तृपदं क्रियाश्रयमात्रमभिदध्यात् । ततश्च कारकान्तरेऽपि कर्तृपदप्रयोगः स्यात् । न चैवमिति कर्तृपदं कृत्याश्रयाभिधायकमित्यभ्युपेयम् । ततश्च कृञो यत्नार्थकत्वमवर्जनीयमिति तेन सर्वाख्यातविवरणात् आख्यातस्य यत्नार्थकत्वमिति चेन् न । यत्नाभावेऽपि बीजेनाङ्कुरः कृतः नगादिना मुखं कृतं इति प्रयोगदर्शनेन यत्नजन्यत्वाजन्यत्वाभ्यां कृताकृतव्यवहारविभागाङ्गीकारायोगात् । कर्तृपदस्य कृत्याश्रये रूढेरङ्गीकर्तुं शक्यत्वेन तद्बलात् कृञो यत्नार्थकत्वाङ्गीकारायोगाच्च ॥ **इत्युदयनोक्ताख्यातार्थनिरूपणभङ्गः ॥**

**भाट्टास्तु मन्यन्ते ।** आख्यातस्य धात्वर्थानुकूलो व्यापारो वाच्यः । चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारसद्भावात् । देवदत्तो गच्छतीत्यादाविव रथो गच्छतीत्यादावपि आख्यातो मुख्य एव । न च पथि श्रमशयानेऽपि पचतीति प्रयोगः स्यात् । श्रमशान्तिद्वारा शयनस्य पाकानुकूलत्वादिति वाच्यम् । व्यापारविशेषस्यैवाख्यातवाच्यत्वाङ्गीकारात् । न चैवं सति पचतीत्युक्ते पाकानुकूलप्रयत्नप्रतीतिर्न स्यादिति वाच्यम् । धात्वर्थविशेषेण तदाक्षेपसंभवात् । न च पचतीत्युक्त्वा पाकं करोतीति विवरणात् यत्न एवाख्यातार्थ इति वाच्यम् । आक्षेपलब्धस्य प्रयत्नस्य विवरणं करोतिना क्रियत इत्यङ्गीकारात् इति ।

**तन्न** । 'लः कर्मणि च भावे चाकर्मकेभ्य' इति स्मृतिविरुद्धत्वात् । स्मृतौ कर्तृकर्मभावानां आख्यातवाच्यत्वस्य विस्पष्टमुक्तत्वात् । रथो गच्छतीत्यादौ धात्वर्थानुकूलव्यापाराभावाच्च । न हि रथगमनानुकूलो व्यापारो दृश्यते । येन तत्प्रतिपादनेनाख्यातस्य मुख्यार्थत्वं स्यात् । किं च घटो जायत इत्यत्र घटे जन्यनुकूलव्यापाराभावेन जायत इत्याख्यातप्रयोगो न स्यात् । न ह्यनुत्पन्नो घटः जन्यनुकूलव्यापारवान् । येन तत्प्रतिपादनेनाख्यातो मुख्यार्थः स्यात् । गौणोऽयं प्रयोग इति चेत् । रथो गच्छतीत्यपि तथाऽस्तु । किं चाख्यातस्य नानार्थत्वमपहाय सर्वत्रापि धात्वर्थानुकूलव्यापारस्यैवाख्यातार्थत्वाङ्गीकारे पचतीत्यादौ शप्, पच्यत इत्यादौ यगिति विभागश्च न स्यात् । देवदत्त इति प्रथमा च न स्यात् । तिङा कर्तुरनभिधानात् । **इति भाट्टोक्ताख्यातार्थभङ्गः ।**

**श्रीरस्तु ॥ मणिकारस्तु मन्यते** । चैत्रः पचतीत्यत्र पाकानुकूलयत्नानुभवात्स एवाख्यातार्थः । लाघवात् । न त्वनुकूलो व्यापारः । यत्नत्वापेक्षया व्यापारत्वस्योपाधित्वेन गुरुत्वात् न चाचेतनेष्वा-ख्यातस्य मुख्यत्वार्थमनुगतो व्यापार एव शक्यः । मुख्यत्वसंभवे तस्यागायोगादिति वाच्यम् । शक्तिग्राहकेण लघुनि शक्तिपरिच्छेदात् । न च रथो गच्छतीत्यादावाख्यातेनाचेतने व्यापारावगमात् व्यापारस्यैव वाच्यत्वमिति वाच्यम् । गौणतया शक्तिभ्रमेण वा तत्राख्यातात् व्यापारावगमोपपत्तेः । यत्नविगमदशायां तज्जन्यव्यापारकाले पचतीत्यत्र वर्तमानव्यापाराभिधानमाख्यातेन लक्षणया रथो गच्छतीत्यत्रेव । तस्माल्लडाख्यातं यत्नवाचकं आख्यातत्वात् लिङाख्यातवत् । पचति पक्ष्यत्यपाक्षीत्यादौ अतीतानागतवर्तमानयत्नप्रतीतेश्च यत्न एवाख्यातवाच्यः । तेन यत्नस्य वर्तमानत्वादिकमाख्यातेना-भिधीयते प्रकारान्तरेण तदलाभात् इति ।

**तन्न** । चैत्रः पचतीत्यनेन चैत्रः पाकानुकूलव्यापारवान् इत्यनुभवस्य सर्वानुभवसिद्धत्वेनाख्या-तस्य यत्नानुभवजनकत्वाद्यत्ने शक्तिरित्युक्त्ययोगात् । किं च पचतीत्याख्यातेन यत्नः यत्नत्वेन प्रतीयते उत व्यापारत्वेन । नाद्यः । लाघवोपन्यासवैयर्थ्यात् । आख्यातेन व्यापारत्वस्याप्रतीत्या तस्याख्यात-शक्यतावच्छेदकत्वप्रसक्त्यभावात् । नापि द्वितीयः । व्यापारत्वेन यत्नप्रतीतौ लाघवस्य शक्य-तावच्छेदकताऽसाधकत्वेन लाघवोपन्यासवैयर्थ्यात् । न हि येन शब्देन यन्न प्रतीयते तल्लघुभूतमित्ये-तावता तच्छक्यतावच्छेदकं भवति । किं चाख्यातस्य यत्नार्थत्वे पचतीत्यत्र शप् न स्यात् । कर्तु-स्तिङानभिहितत्वेन देवदत्त इति प्रथमा न स्यात् । अपि तु तृतीया स्यात् । पच्यत इत्यत्रापि यक् न स्यात् । तण्डुल इत्यत्र प्रथमा न स्यात् । कर्मणस्तिङाऽनभिधानात् द्वितीया स्यात् । ननु पचतीत्यत्राख्यातेन कर्तृसंख्योच्यते । पच्यत इत्यत्र कर्मसंख्योच्यते । तत एव पचतीत्यत्र शप् । पच्यत इत्यत्र यक् । कर्तरि देवदत्ते प्रथमा । तृतीयाऽभावः । तण्डुले कर्मणि प्रथमा । द्वितीयाभाव-श्चोपपन्न इति चेत् । न । देवदत्तपदवाच्यस्य सुब्विभक्तिबोध्यसंख्यावरुद्धत्वेनाख्यातस्य तद्गत-संख्याऽभिधायकत्वायोगात् । न च नीलमुत्पलमित्यत्र नीलपदोत्तरविभक्तेः उत्पलशब्दार्थसमवेतसंख्या-भिधायकत्ववत् उपपत्तिरिति वाच्यम् । नीलपदोत्तरविभक्तेः नीलपदार्थगतसंख्याबोधकत्वेन वैषम्यात् । संख्याविशिष्टनामार्थयोः परस्परमभेदबोधेन संख्ययोरप्यैक्यात् न तत्र संख्याद्वयप्रसङ्गः । यदपि लडाख्यातं यत्नवाचकं आख्यातत्वात् लिङाख्यातवत् इति । तदपि न । लिङाख्यातस्यापि भावना-परपर्यायव्यापारमात्रवाचित्वात् । यदपि चैत्रेण पच्यते तण्डुलः रथेन गम्यते ग्राम इत्यत्र तण्डुलग्रामौ कर्मणी प्रतीयेते । अस्ति च तयोः क्रियाफलशालित्वलक्षणं कर्मत्वम् । तच्चाख्यात-

वाच्यमेव । तण्डुलं पचतीत्यत्र द्वितीयात इवान्यतः कर्मत्वालाभात् । तस्मात्कर्मत्वमेव लकारवाच्यम् । न तद्धर्मिमूर्तं कर्म । तस्यान्यत एव लाभादित्युक्तम् । तदपि न । प्रकृत्या प्रत्ययेन वा धर्मिणो ऽनुक्तौ प्रत्ययार्थस्य कर्मत्वस्यानन्वयापातात् । किं च पच्यत इत्यनेन सामान्यतः कर्मानुक्तौ किमिति कर्माकाङ्क्षा न स्यात् । आख्यातोक्तं कर्मत्वं कुत्रेत्याकाङ्क्षा स्यात् । **इति मण्युक्ताख्यातार्थभङ्गः ॥**

**श्रीरस्तु ॥ शिरोमणिस्तु ।** आख्यातस्य यत्नो वाच्यः । पचति पाकं करोतीति यत्नार्थककरोतिना सर्वाख्यातविवरणात् । व्यवहारादिवत् बाधकं विना विवरणादपि व्युत्पत्तेः । किं करोतीति यत्नप्रश्ने पचतीत्युत्तरस्य यत्नार्थकत्वं विनाऽनुपपत्तेश्च । रथनिष्ठगमनानुकूलव्यापारवति नेतरि गच्छतीत्यप्रयोगात् । गच्छति जानातीच्छति यतते द्वेष्टि म्रियते निद्रातीत्यादौ क्रियानुकूलकृतिव्यापारयोरप्रतीतेः गत्यादिमत्त्व-मात्रप्रतीतेश्चाश्रयत्वे निरूढलक्षणा । तच्चाश्रयत्वं धात्वर्थेनान्वेति । ततश्च जानातीत्यादेः ज्ञानाद्याश्रय-त्वमर्थः । नश्यतीत्यादौ चाख्यातस्य प्रतियोगित्वे निरूढलक्षणा । ततश्च नश्यतीत्यस्य नाशप्रतियोगी-त्यर्थः । कृञो यत्नाभिधायकत्वमेव कुतः येन करोतिना सर्वाख्यातविवरणात् । आख्यातस्य यत्नोऽर्थः स्यादिति चेत् । उच्यते । अस्ति तावत् पटांकुरयोः कृताकृतत्वव्यवहारः । न चासौ क्रियाजन्यत्वाजन्य-त्वाभ्यामुपपद्यते । उभयोरपि क्रियाजन्यत्वात् । विद्येते च यत्नजन्यत्वाजन्यत्वे पटांकुरयोः । अतस्त-त्प्रयुक्त एवायं व्यवहार इति कृञो यत्नवाचित्वम् । आश्रयपरतृजन्तज्ञात्रादिपदवत् कर्तृपदस्य कृत्या-श्रयबोधकत्वाच्च कृञो यत्नवाचकत्वम् । अन्यथा कारकमात्रे कर्तृपदप्रयोगः स्यादित्याह ।

**तन्न** । किमयं घटं करोति उत घटोत्पत्तये यतते इति प्रश्नान्यथानुपपत्त्या, न यतते, अपि तु घटं करोत्येवेति प्रतिवचनबलाच्च करोतेः कृतिवाचित्वाभावेन करोतिना क्रियमाणविवरणवशेनाख्यातस्य कृतिवाचित्वाङ्गीकारायोगात् । किं च करोतेर्यदि यत्नार्थकत्वं स्यात् । तर्हि रथो गच्छतीत्याख्यातस्य करोतिना विवरणं न स्यात् । न हि अग्निर्माणवक इति गौणप्रयोगस्य माणवको वह्निरिति विवरणं क्रियते । किन्तु अग्निसदृश इति । येनेह करोतेर्यत्नार्थकत्वे यत्नाप्रतिपादकाख्यातविवरणं करोतिनोप-पन्नं स्यात् । किं च करोतेराख्यातस्य च यत्नार्थकत्वे करोतीति प्रयोगो न स्यात् । आख्यातस्य धात्वर्थरूपभाववाचित्वेनात्मनेपदस्य यकश्च भाव्यत्वात् कुरुतः कुर्वन्तीति द्विवचनबहुवचने न स्याताम् । सकर्मकत्वं च न स्यात् । अकर्मकादेव भावे लकारविधानात् । न च करोतीत्यत्राख्यातस्य न यत्नार्थत्वं अपि तु कर्तृसङ्ख्यामात्रवाचित्वमेव । अतो नोक्तदोष इति वाच्यम् । कर्तुं यतत इति प्रयोगात् कृञो यत्नार्थकत्वाभावेन तत्संरक्षणाय कृञुत्तराख्यातस्य प्रयोगसाधुत्वाङ्गीकारायोगात् । सङ्ख्यान्वयाभावा-

पाताच्च । आख्यातोक्तसङ्ख्यायाः भावनाविशेष्यान्वयित्वस्य त्वयाऽङ्गीकारायोगात् । किं च पचतीत्याख्यातस्य कर्तृवाचित्वाभावे देवदत्तपदे तृतीयाप्रसङ्गः । पच्यत इत्यत्र कर्मवाचकत्वाभावे तण्डुलपदे द्वितीयाप्रसङ्गश्च स्यात् । तयोरनभिहिताधिकारीयत्वात् । न च पचति पच्यत इत्यत्र कर्तृकर्मणोरनभिधानेऽपि तत्सङ्ख्याभिधानान्न तृतीयाद्वितीयाप्रसङ्ग इति वाच्यम् । देवदत्त ओदनं पचतीत्याख्यातेन कर्तृसङ्ख्यैवोक्ता न कर्मसङ्ख्येति कारणविशेषमन्तरा नियमायोगात् ।

अत्र वदन्ति केचित् । भावनाविशेष्ये सङ्ख्याऽन्वयः । उभयोरप्याख्यातोक्तत्वात् । देवदत्तः पचतीत्यत्र देवदत्तो भावनाविशेष्यः । तण्डुलनिष्ठविक्लित्यनुकूलपाकविषयकभावनाश्रयो देवदत्त इति प्रत्ययात् । अतः पचतीत्यत्रोक्ता सङ्ख्या देवदत्तेऽन्वेति । पच्यत इत्यत्र तण्डुलो भावनाविशेष्यः । मैत्रनिष्ठभावनाविषयपाकजन्यफलशाली तण्डुल इति प्रतीतेः । अतः सङ्ख्या तण्डुलेऽन्वेतीति तदसहमानाः नव्यास्तु । चैत्रेण पच्यते तण्डुल इत्यत्र भावना आख्यातलभ्या । आधेयत्वं तृतीयार्थः । भावनाविषयपाकास्तु धातुलभ्य इति चैत्रनिष्ठभावनाविषयपाक इति शाब्दबोधसंभवेऽपि पाकजन्यफलशाली तण्डुल इति बोधः कथं भवेत् । फलप्रत्यायकाभावात् । पच्यत इत्यात्मनेपदार्थः फलमिति चेत् । तत्र वक्तव्यम् । किं भावनायाः फलेऽन्वयः । उत क्रियायाः । नाद्यः । पाकविषयकमैत्रनिष्ठा भावनाजन्यफलशाली तण्डुल इत्येव शाब्दबोधप्रसङ्गेन क्रियाजन्यत्वबोधाभावप्रसङ्गात् । नापि द्वितीयः । तिङुपस्थापितभावनायां क्रियायाः विशेषणत्वेनान्यत्र क्लृप्तान्वयनियमभङ्गप्रसङ्गात् । तस्मात् मैत्रनिष्ठभावनाविषयपाकजन्यफलशाली तण्डुल इति शाब्दबोध एवमुपपादनीयः । कर्तरि प्रयोगे भावना आख्यातोक्ता । कर्मणि प्रयोगे तु कर्तृवाचकप्रातिपदिकोत्तरतृतीयोक्ता । न च सुपः भावनावाचित्वं नेति वाच्यम् । कृत्यनभिधायकभावकृद्योगे चैत्रस्य पाक इति षष्ठ्याः चैत्रेण पक्वास्तण्डुला इत्यत्र तृतीयायाः भावनाशक्तेः क्लृप्तत्वात् । अन्यथा चैत्रपाकयोरन्वयबोधो न स्यात् तदन्वयस्य भावनाद्वारकत्वात् । ततश्च चैत्रनिष्ठभावनाविषयकपाकजन्यफलशाली तण्डुल इति बोध उपपन्नः । सुबर्थकृतेः क्रियायां विशेषणत्वेनैवान्वयस्य व्युत्पन्नत्वात् । न च यदि कर्मणि प्रयोगेनाख्यातोक्ता भावना तर्ह्याख्यातोक्तसङ्ख्यायाः कर्मान्वयो न स्यात् । सुबुक्तभावनाया आख्यातोक्तसङ्ख्यायाश्चैकप्रत्ययोपात्तत्वप्रत्यासत्तेरभावेन सुबुक्तभावनाविशेष्ये सङ्ख्यान्वयो भवतीत्यस्याङ्गीकर्तुमशक्यत्वात् इति वाच्यम् । तिङुपस्थाप्यभावनाया इव तिङुपस्थापितसङ्ख्याया अपि प्रथमान्तपदोपस्थाप्येनैवान्वय इति व्युत्पत्तिबललभ्यत्वात् इति वदन्ति ।

**तन्न** । कर्मणि प्रयोगे आख्यातेन सङ्ख्यामात्राभिधाने तण्डुलादौ कर्मणि द्वितीयाप्रसङ्गात् । तस्यानभिहिताधिकारित्वात् । फलाभिधानानभिधानाभ्यां द्वितीयादिनियमस्य कर्मणि द्वितीयेत्यादि-स्मृतिविरुद्धत्वात् । तण्डुलशब्दे प्रथमाया एवायोगेन प्रथमान्तपदसापेक्षाख्यातोक्तसङ्ख्याया अन्वय-वैधुर्यापाताच्च ॥ **इति शिरोमण्युक्ताख्यातार्थभङ्गः** ॥

**श्रीरस्तु** । प्रायः क्रिया धात्वर्थः । भूवादयो धातव इति धातूनां क्रियावाचित्वस्मरणात् । क्वचिद्द्रव्यमपि धात्वर्थः । गडि वदनैकदेशे इति धातुव्याख्यानात् । तथा हि पचेः सन्तपनविशेषः । गमेः ग्रामादिप्राप्तिसाधनीभूतचलनात्मिका क्रिया । पतेरधःसंयोगहेतुभूता चलनात्मिका क्रिया । त्यजेः विभागसाधनीभूता चलनात्मिका क्रिया । हन्तेर्मरणानुकूलखड्गादिघातरूपो व्यापारोऽर्थः । यजेस्तु मन्त्रपूर्वकः दैवतोद्देश्यको मानसस्त्यागो । जुहोतेस्तु दैवतोद्देशेन मनसा त्यक्तस्य हविषोऽग्नौ प्रक्षेपोऽर्थः । ददातेस्तु द्रव्यस्य परस्वत्वापादनहेतुभूता क्रिया । रजकाय वस्त्रं ददाति । खण्डिको-पाध्यायः छात्राय चपेटिकां ददातीत्यादिप्रयोगस्तु गौणः । एवमन्येषामपि धातूनामर्थोऽभ्युपगन्तव्यः । ननु पचादेः विक्लत्त्याद्यनुकूलसन्तपनादिरर्थो वा । उत सन्तपनादिमात्रम् । नाद्यः । नागृहीत-विशेषणान्यायेन विक्लत्त्यादेरेव धात्वर्थत्वापातात् । अन्यथा गौरवम् । न द्वितीयः । रजकादिना क्रियमाणस्य आतपे वस्त्रप्रसारणादेरपि पच्यर्थत्वप्रसङ्गात् । न च विक्लत्त्यादिफलोपलक्षितसन्तपनादेरेव पच्याद्यर्थत्वान्न दोष इति वाच्यम् । उपलक्ष्यतावच्छेदकरूपापरिचये पुनरुक्तातिप्रसङ्गानिवारणादिति चेत् न । सन्तपनान्तरादिव्यावृत्तानुभवसिद्धविशेषावच्छिन्नसन्तपनादेरेव पच्यादिधात्वर्थत्वाङ्गीकारात् । जानाति, इच्छति, यतते, विद्यते, तिष्ठतीत्यादौ ज्ञानेच्छाप्रयत्नसत्तागतिनिवृत्तिरेव धात्वर्थः । ज्ञा अवबोधने, इषु इच्छायां, यती प्रयत्ने, विद सत्तायां, ष्ठा गतिनिवृत्ताविति धातुव्याख्यानात् । प्रयोग-वशात् अनेकार्था अपि धातवः प्रत्येतव्याः । गत्याद्यर्थानां ज्ञानाद्यर्थत्वदर्शनात् । उक्तं च । 'क्रियावाचित्वमाख्यातुं एकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इति ॥ **इति धात्वर्थनिरूपणम्** ॥

**मण्डनमिश्रस्तु** । फलमेव धात्वर्थः । तथा हि । पच्यर्थो विक्लित्तिः । लाघवात् । न तु विक्लित्तिफलकोऽधःसन्तपनादिव्यापारः । गौरवात् । गमेरुत्तरसंयोगः । पतेरधःसंयोगः । त्यजेः विभागोऽर्थः । न तु तत्तत्फलानुकूलः स्पन्दः । हन्तेरपि मरणमर्थः । न तु तत्फलकः खड्गघातादि-व्यापारः । यजेरपि देवतोद्देश्यकत्यागफलं स्वत्वध्वंस एवार्थः । जुहोत्यर्थस्तु त्यागफलं प्रक्षेपः ।

ददात्यर्थस्त्यागफलं स्वत्वध्वंसः परस्वत्वं च । न तु तत्फलकस्त्यागः गौरवात् । न चैवं व्यापार-विगमफलदशायां पचति, गच्छति, ददातीत्यादिप्रयोगः न ह्यपाक्षीदित्यादि व्यापारकाले च पचती-त्यादिप्रयोगो न स्यादिति वाच्यम् । धात्वर्थानुकूलव्यापारवर्तमानत्वादेराख्यातार्थत्वेन व्यापारकाले पचतीत्यादिप्रयोगो भवति, नान्यदेत्युक्तिसंभवात् । न च फलस्य धात्वर्थत्वे क्रियाजन्यफलशालित्वा-भावात् तण्डुलादेः कर्मत्वं न स्यादिति वाच्यम् । परसमवेतव्यापारफलशालित्वं हि कर्मत्वम् । स च व्यापारो धात्वर्थ आख्यातार्थो वेति उभयथापि परसमवेतव्यापारफलशालिनः तण्डुलादेः कर्मत्वसंभवादित्याह ।

**स स्थूलदृश्वा ।** फलस्यैव धात्वर्थत्वे विक्लित्तिसंयोगविभागमरणादीनामकर्मकत्वेन पचि-गमि-त्यजि-हन्यादीनां धातूनामकर्मत्वापातात् । न च तदिष्टम् । पच्यते, गम्यते, त्यज्यते, हन्यते इत्यादिप्रयोगाभावापातात् । 'लः कर्मणि च भावे चाकर्मकेभ्य' इति सकर्मकेभ्य एव धातुभ्यः कर्मणि लकारो नाकर्मकेभ्य इति नियमितत्वात् । यदपि पच्यर्थो विक्लित्तिरित्यादि । तदपि न । फलं पक्वमित्यादौ पक्वशब्देन फलस्य पचिकर्मताया, ग्रामो गम्यः गत इत्यादिना ग्रामस्य गतिकर्मतायास्त्यक्तं निषिद्धमित्यादिना निषिद्धस्य त्यजिकर्मताया, हतो देवदत्त इत्यादौ देवदत्तस्य हनिकर्मतायाः, प्रतीय-मानत्वेन विक्लित्यादेः पच्यादिधात्वर्थजन्यफलत्वेन धात्वर्थत्वायोगात् । अन्यथा तज्जन्यफलशालिन एव तत्कर्मत्वेन तण्डुलादेः पच्यादिकर्मत्वाभावप्रसङ्गः ।

यदपि परसमवेतव्यापारफलशालित्वं हि कर्मत्वम् । स च व्यापारो धात्वर्थ आख्यातार्थो वेत्युभयथापि परसमवेतव्यापारफलशालिनस्तण्डुलादेः कर्मत्वं संभवतीति । तदपि न । उक्तविधया तण्डुलस्य कर्मत्वमात्रव्युत्पादनेऽपि पचिकर्मत्वाव्युत्पादनात् ॥ **इति मण्डनमिश्रोक्तधात्वर्थनिरूपण-भङ्गः ॥**

प्रादयो गताद्यर्थाः । 'प्रादयो गताद्यर्थे प्रथमये'ति स्मृत्या गताद्यर्थे वर्तमानानां प्रादीनां समासविधानात् । प्राचार्य इत्यनेन समासेन गत आचार्य इत्यर्थप्रतीतेः । अत्यादयः क्रान्ताद्यर्थाः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'ति क्रान्ताद्यर्थे वर्तमानानामत्यादीनां द्वितीयान्तेन समासविधानात् । अतिखट्व इत्यनेन खट्वामतिक्रान्त इत्यर्थप्रतीतेः । अवादयः क्रुष्टाद्यर्थाः । 'अवादयः क्रुष्टाद्यर्थे तृतीयये'ति क्रुष्टाद्यर्थे वर्तमानानामवादीनां समासविधानात् । अवकोकिलो वसन्त इत्यनेन अवक्रुष्टः

कोकिलया वसन्त इत्यर्थप्रतीतेश्च । पर्यादयो ग्लानाद्यर्थाः । 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्ये'ति ग्लानाद्यर्थे वर्तमानानां पर्यादीनां समासविधानात् । पर्यध्ययन इत्यनेन परिग्लानोऽध्ययनायेत्यर्थप्रतीतेश्च । निरादयः क्रान्ताद्यर्थाः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'ति क्रान्ताद्यर्थे वर्तमानानां निरादीनां समासविधानात् । निष्कौशाम्बिरित्यनेन निष्क्रान्तः कौशाम्ब्या इत्यर्थप्रतीतेश्च । प्रजपति प्रपचतीत्यादौ धात्वर्थगतप्रकर्षप्रतीतेरुपसर्गप्रयोगान्वयव्यतिरेकानुविधायित्वात्प्रकर्षोऽपि प्रादेरर्थः । प्रहारआहारसंहारविहारपरिहारा हरतेरर्थाः । धातूनामनेकार्थत्वात् । उपसर्गाणामपि त एवार्थाः । न च पौनरुक्त्यम् । एको द्वौ बहव इत्यादौ प्रकृतिप्रत्ययाभ्यां संख्यागोचरैकप्रतीतिजननादपौनरुक्त्यवदिहापि धातूपसर्गाभ्यां प्रहारविषयैकप्रतीतिजननेनापौनरुक्त्यसंभवात् । इदमेव हि पौनरुक्त्यस्य दूषकताबीजम् । यज्ज्ञातज्ञापकत्वम् । न चेह तदस्ति । उभाभ्यां मिलित्वैकस्यैव जननात् । अन्यथा आस्यते देवदत्तेन एको द्वौ बहव इत्यादावपि पौनरुक्त्यं स्यात् । एवं स्थाधातुराराच्छब्दो दूरसमीपयोरिव गतितन्निवृत्त्योर्वाचकः । प्रोपसर्गस्याप्यनेकार्थत्वाद्गतिरर्थः । ततश्च प्रतस्थ इत्यादौ धातूपसर्गौ मिलित्वैकां बुद्धिं जनयतः । अत एवाख्यातस्य धात्वर्थगत्यन्वितस्वार्थबोधकत्वमप्युपपन्नम् । न चान्यतरवैयर्थ्यम् । सहभूतयोरेव गतिबुद्धिजननस्वाभाव्यात् । एवमन्यत्रापि द्रष्टव्यम् । ननूपसर्गा वाचका इत्ययुक्तम् । 'अनर्थकस्य निपातस्य प्रातिपदिकसंज्ञा वक्तव्ये'ति वार्तिकेण प्रातिपदिकसंज्ञाविधानात् । अन्यथा 'अर्थवदधातुरप्रत्ययः प्रातिपदिकमि'त्यनेन निपातानामपि प्रातिपदिकसंज्ञासिद्धिसंभवेन वार्तिकमिदमनारंभणीयं स्यात् । निपातानां निरर्थकत्वे तु सूत्रेण प्रातिपदिकसंज्ञाऽप्रसङ्गाद्वार्तिकमिदमर्थवदिति चेन्न । केषाञ्चिदुपसर्गाणां निरर्थकत्वपक्षमङ्गीकृत्य वार्तिकस्य प्रवृत्तत्वात् । अवश्यं चैतदेवं विज्ञेयम् । वार्तिककृतैवानर्थकस्येति निपातविशेषणोपादानात् । उपसर्गमात्रस्य निरर्थकत्वे तु व्यावर्त्याभावात् अनर्थकस्येति विशेषणमनर्थकं स्यात् । अन्यथा प्रत्ययानामपि निरर्थकत्वं स्यात् । प्रकृतेरेवार्थविशेषे शक्तिः । प्रत्ययास्तु तच्छक्ततावच्छेदका इति वक्तुं शक्यत्वात् । न 'चाधिपरी अनर्थकावि'ति सूत्रेणाधिपर्योरनर्थकत्वाभिधानादुपसर्गाणां निरर्थकत्वमिति वाच्यम् । सूत्रस्यानर्थान्तरवाचिनौ अधिपरी कर्मप्रवचनीयसंज्ञौ भवत इत्यर्थत्वेन सर्वथा निरर्थकत्वस्यानभिमतत्वात् । उक्तं च महाभाष्ये । नेमावेवानर्थकौ किं तर्ह्यनर्थकावित्युच्येते अनर्थान्तरवाचिनावनर्थकौ धातुनोक्तां क्रियामाहतुः । तद्यथा शङ्खे पयो गोस्तनगतमेव, नान्यत् । यद्येवं तर्हि धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति । उक्तार्थानामप्रयोग इति । उक्तार्थानामपि प्रयोगो दृश्यते । अपूपौ द्वावानयेति । ननूपसर्गाणां वाचकत्वं सुधाविरुद्धम् । 'अतिक्रमं वदन्तं तमुपशब्दो निवारयेदि'ति मूलव्याख्यानसुधायामुपपूर्वस्य क्रमेः प्राप्त्यर्थत्वादिति धातोरेवोपसर्गोपसन्दानेनार्थान्तरशक्तेरनभिधानादिति चेन्न । धातूपसर्गयोः

**संभूय** प्राप्तिविषयकैकबोधजनकत्वस्य सुधाकृदभिमतत्वात् । धातवो हि केचित्कस्यचिदर्थस्य स्वातन्त्र्येणाभिधानसमर्थाः । यथा जानाति सञ्जानातीति । उपसर्गेऽसत्यपि स्वार्थाभिधानसमर्थो जानातिः । अन्ये पुनरुपसर्गं विनाऽर्थान्तराभिधानसमर्था अप्यर्थविशेषस्योपसर्गेण सहैवाभिधानसमर्थाः । तद्यथा प्रतिष्ठत इति । स्थाधातोः स्वातन्त्र्येण गतिनिवृत्त्यभिधायकत्वेऽपि प्रोपसृष्टस्यैव गत्यभिधायकत्वस्यानुभवसिद्धत्वात् । दृश्यते हि लोके भारविशेषोद्वहने समर्थोऽपि देवदत्तो भारविशेषोद्वहने परसापेक्ष इति । कथमन्यथा समन्वयाधिकरणे सौत्रसंशब्दार्थः सम्यगित्यभिदध्यात् । तदुक्तं भगवत्पादैः । 'समिति ह्युपसर्गेण परमुत्स्यार्थतोच्यत' इति । 'उपसंक्रमणं चैव द्वितीयोद्देशितं प्रति । अतिक्रमं वदन्तं तमुपशब्दो निवारयेदि'ति च । उक्तं च सुधायां, 'संशब्दार्थः सम्यगिती'ति ॥ **इति उपसर्गार्थनिरूपणम्** ॥

**श्रीरस्तु ॥ मणिकारस्तु** । द्योतका एवोपसर्गाः न वाचकाः । द्योतकत्वं च धातोरर्थविशेषे तात्पर्यग्राहकत्वम् । धातोरर्थविशेषे तदुपसन्दानेन शक्तिर्वा । धात्वर्थस्योपसर्गेणाप्यभिधाने पौनरुक्त्यापातात् । किं च प्रतिष्ठत इत्यत्रोपसर्गस्य प्रकर्षार्थत्वे प्रकृष्टगतिनिवृत्तिबोधः स्यात् । न स्याच्च गतिबोधः । न चानेकार्थत्वादुपसर्गाणां गतिः प्रोपसर्गार्थ इति युक्तम् । धातुवैयर्थ्यापातात् । न च साधुत्वार्थं धातुप्रयोग इति वाच्यं युक्तम् । आख्यातस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन आख्यातार्थस्योपसर्गार्थगत्यनन्वयापातात् । एवं च प्रोत्तरस्थात्वेन गमने शक्तिरिति प्रशब्दः शक्त्यवच्छेदको न शक्त इत्यौपसन्दानकी शक्तिरेव । अथवा प्रतिष्ठत इत्यत्र विरोधिलक्षणया धातोर्गमनोपस्थितिः । तात्पर्यग्राहकः प्रशब्दः । अनन्यलभ्यस्य शब्दार्थत्वात् । प्रजयतीत्यादावपि विशेष्यवाचकस्य धातोर्विशिष्टे लक्षणैव । विशेष्याद्विशिष्टस्यान्यत्वात् । प्रादेस्तात्पर्यग्राहकत्वम् । न हि शक्तिं विनापि धातुतः प्रतीतिसंभवे तत्कल्पनमर्हम् । अनन्यलभ्यस्य शब्दार्थत्वादित्याह । स स्थूलदृश्वा । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इति स्मृत्युक्तस्योपसर्गाणां वाचकत्वस्य निषेधात् ।

यदपि तदुपसन्दानेन धातोरर्थविशेषे शक्तिर्वेति । तदपि न । उपसर्गस्य शक्त्युपसन्दानशक्तिकल्पनापेक्षया आवापोद्वापसिद्धवाचकत्वकल्पनस्यैवोचितत्वात् । अन्यथा विभक्त्युपसन्दानेन प्रातिपदिकस्यैव कर्मत्वादौ शक्तिः न विभक्तेरिति स्यात् । यदपि धात्वर्थस्योपसर्गेणाप्यभिधाने पौनरुक्त्यापात इति । तदपि न । एको द्वौ बहव इत्यादौ प्रकृत्यर्थस्यैकत्वादेः प्रत्ययेनाभिधानेऽप्यपौनरुक्त्यवत् इहापि धातूपसर्गाभ्यां एकार्थविषयकैकप्रतीतिजननेनापौनरुक्त्यसंभवात् । यदपि

प्रतिष्ठत इत्यत्र प्रेत्युपसर्गस्य गत्यर्थकत्वे आख्यातार्थानन्वय इति । तदपि न । धातोरपि गतिवाचकत्वेन धात्वर्थस्य गतेः आख्यातार्थान्वयसंभवात् । अधात्वर्थेनापि कर्त्रादिना आख्यातार्थसंख्याया अन्वयस्य त्वयैवाभिधानाच्च । यदपि । प्रतिष्ठत इत्यत्र स्थाधातोरेव विरोधिलक्षणया गमनोपस्थापकत्वमिति । तदपि न । मुख्यार्थानुपपत्तिप्रतिसन्धानपूर्वकं गतिप्रतीतेरजननात् । 'प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इति वचनबलेन शक्तेरेवाभ्युपगन्तुं शक्यत्वात् । न च तिष्ठतीत्युक्ते गतिप्रतीत्यापत्तिः । प्रोपसृष्टस्यैव स्थाधातोः गतिप्रत्यायकत्वस्वभावाङ्गीकारात् । न चानन्यलभ्यस्यैव शब्दार्थत्वात् स्थाधातोर्गतौ लक्षणैव न शक्तिरिति युक्तम् । स्थाधातुना गतिबोधनाय प्रवृत्तेन नियमतः प्रोपसर्गोपादानाभावप्रसङ्गात् । अत एव प्रजयतीत्यादौ विशेष्यशक्तस्य जिधातोर्विशिष्टे लक्षणैवेत्यपि निरस्तम् ।

**पक्षधरस्तु** । उपसर्गस्य वाचकत्वे 'निपातस्यानर्थकस्ये'ति सूत्रं न क्रियते । अर्थवदादिसूत्रेणैव प्रातिपदिकत्वलाभात् प्रपञ्चकत्वकल्पनायां गौरवादिति आह । स स्थूलदृश्वा । वार्तिकस्य सूत्रत्वाभिधानात् । वार्तिकेणापि अनर्थकस्येति निपातविशेषणमहिम्ना उपसर्गेष्वपि सार्थकत्वानर्थकत्वविभागस्य लाभेन निपातमात्रस्यानर्थकत्वालाभाच्च । अर्थवदधातुरितिसूत्रस्य निपातस्यानर्थकस्येति वार्तिकस्य च विरुद्धार्थत्वेन प्रपञ्च्यप्रपञ्चकभावप्रसक्त्यभावेन अप्रसक्तप्रपञ्च्यप्रपञ्चकभावमाशङ्क्य निषेधाच्च । अविद्यमानगौरवस्योपन्यासाच्च । न हि प्रपञ्च्यप्रपञ्चकभावस्थले गौरवमस्ति प्रत्युत एकस्यैव शास्त्रस्य विधित्वेन लाघवमेवास्तीति गौरवाभिधानमेव भ्रममूलकम् । **इति मण्युक्तोपसर्गावाचकत्वभङ्गः ॥**

ननु सङ्केतबलाच्छब्दादिवच्चेष्टातोऽप्यर्थानुभवदर्शनात् शब्दवच्चेष्टाऽपि प्रमाणमेव । ततश्च त्रीण्येवानुप्रमाणानीत्ययुक्तमिति चेत् । उच्यते । भवत्येव चेष्टातोऽप्यर्थावगतिः । तथाऽपि न सा पृथक् प्रमाणं किं तु अनुमानमेव । तथा हि । काश्चिच्चेष्टा अर्थे सङ्केतिता भवन्ति । ताश्च तत्कर्त्रभिप्रायानुमापिकाः । अयं देवदत्तः, देशविशेषस्थघटबुद्धिमान् । घट-देशविशेष-तत्रवर्तमानत्वेषु सङ्केतितचेष्टासमूहकारित्वात् यो यत्सङ्केतितचेष्टाकारी स तद्बुद्धिमान् यथाऽहमिति । ततश्च घटस्तद्देशस्थः तत्रस्थत्वेनाप्तबुद्धिविषयत्वात् । इत्यनुमाय तत्र प्रवर्तते । काश्चिच्चेष्टास्तु वर्णेषु सङ्केतिताः । ताश्च लिपिवत् वर्णाननुमापयन्ति । विमतो देवदत्तः घटादिवर्णज्ञापनेच्छुः तत्सङ्केतितचेष्टाकारित्वात् । यो यत्सङ्केतितान् करोति स तज्ज्ञापनेच्छुः । यथा लेखक इति । एवमिच्छावच्छेदकतया वर्णसिद्धौ अनुसंहितैर्वर्णसमूहैरर्थं ज्ञात्वा प्रवर्तते । अर्थे सङ्केतितास्तु चेष्टाः एडमूकानामपि

अर्थज्ञानहेतुत्वात्प्रवर्तिकाः । वर्णसङ्केतितास्तु तद्व्यतिरिक्तानामेव । तेषां वर्णज्ञानस्य तदनुसन्धानजन्यार्थज्ञानस्य वाऽयोगात् । ननु यदि चेष्टा लिङ्गतया बोधिका तर्हि सङ्केतग्रहो व्यर्थः । लिङ्गस्य सङ्केतग्रहानपेक्षत्वात् । अतः पृथगेव सा प्रमाणमिति चेत् । न । चेष्टामात्रस्य अर्थादिभिर्व्याप्यभावेन सङ्केतिताया एव चेष्टायाः अर्थादिव्याप्तत्वेन हेतुविशेषणसङ्केतग्रहस्यावश्यकत्वात् । न च दैवात् सङ्केतितचेष्टाकारिणो बालादेरर्थादिज्ञानविधुरत्वान्नायं सद्धेतुरिति वाच्यम् । घटादिप्रसङ्गे तदुत्तरत्वेन तत्सङ्केतितचेष्टाकारित्वस्य विवक्षितत्वात् । ऐतिह्यं त्वागमभेद इति त्रीण्येवानुप्रमाणानीति सिद्धम् ॥ छ ॥ **इति अनुप्रमाणत्रैविध्यबाधकोद्धारः ॥**

**मणिकारस्तु** । ननु सङ्केतग्रहे चेष्टातोऽप्यर्थानुभवाच्छब्दवत्, साऽपि प्रमाणमतः कथं चत्वारि प्रमाणानीति चेत् ॥ उच्यते । शब्देन चेष्टायां सङ्केतग्रहालिपिवत्, तच्छब्दस्मृत्युपयोगिनी चेष्टा नत्वर्थे प्रमाणम् । शब्द एवार्थे प्रमाणं क्लृप्तत्वात् । नन्वेवं कथं एडमूकस्य व्यवहारस्तस्य शब्दास्मरणादिति चेत् । मूकस्य शब्दज्ञानाभावात् न शब्देन चेष्टायां तस्य सङ्केतग्रहः । नापि मानान्तरेण सङ्केतग्रहः । समयाग्रहाच्छब्दवत् चेष्टाऽपि तं प्रति कूटैव । एडमूकस्य प्रवृत्तिनिवृत्तिलक्षणव्यवहारस्तु कशांकुशाभिघातादिना करितुरगादेरिव चेष्टालिङ्गकाभिप्रायानुमानेन भवति । न च कृतसमयाऽपि चेष्टाऽभिप्रायानुमापिकाऽस्तु किं शब्दस्मरणेनेति वाच्यम् । अविनाभावाभावात् । अथवा चेष्टा पदार्थानेव स्मारयतु । न तु शब्दान् । तथाऽपि न प्रमाणम् । चेष्टया पदार्थमात्रस्मृतावपि अन्वयप्रकारकर्मत्वादेरुपस्थापकाभावेनान्वयबोधानुत्पादात् । न च पदैकदेशविभक्तिविशेषादिवच्चेष्टैकदेशविशेषात् तदुपस्थितिरिति वाच्यम् । पदेषु विभक्तिरूपैकदेशवत् चेष्टायाः कर्मत्वाद्युपस्थापकैकदेशाभावात् । कथं तर्हि चेष्टातो व्यवहारः । संशयप्रतिभयोरन्यतरस्मात् । तस्मात् न चेष्टा प्रमाणम् । ऐतिह्यं चोक्तित्वेन शब्द एवान्तर्भूतम् । अर्थापत्त्यनुपलब्ध्योश्च यथायथमन्तर्भावः प्रागेव चिन्तितः । अतः सिद्धं चत्वारि प्रमाणानीत्युपरम्यत इत्याह ।

**स स्थूलदृश्वा** । अनया चेष्टया अयमर्थो बोद्धव्यः, अनया इयं क्रिया बोद्धव्या इत्येवंविधस्य चेष्टासङ्केतग्राहकशब्दस्य प्रवृत्तिहेतुज्ञानजनकात् घटमानयेति शब्दादन्यत्वेन तत्स्मरणस्यानपेक्षितस्यैवाभिधानात् । चेष्टायाः सङ्केतग्राहकशब्दस्मारकत्वसिध्यर्थं लिपिदृष्टान्ताभिधानायोगाच्च । न हि लिपिः सङ्केतग्राहकशब्दस्मारिका येन तद्दृष्टान्ताभिधानं युक्तं स्यात् किं तु सङ्केतविषयशब्दस्मारिका । ननु मयाऽपि लिपिवत् शब्दसङ्केतितचेष्टायाः शब्दस्मारकत्वमुच्यते । न तु अर्थसङ्केतित-

चेष्टायाः शब्दस्मारकत्वमतो नोक्तदोष इति चेत् । न । मौढ्यापरिहारात् । न हि अर्थे सङ्केतितायाश्चेष्टायाः सङ्केतबलात् शब्दवत् अर्थानुभावकत्वात्पृथक्प्रामाण्यमिति शङ्कमानं प्रति शब्दसङ्केतितायाश्चेष्टायाः पृथक् प्रामाण्यं नास्तीति वचनं युक्तिमत् । येन मौढ्यं न स्यात् । शब्द एव प्रमाणमर्थे क्लृप्तत्वादिति वाक्यस्यासङ्गतत्वप्रसङ्गाच्च । न हि चेष्टायाः शब्दे सङ्केतग्रहपक्षे अर्थप्रामाण्यप्रसक्तिरस्ति येन शब्द एवार्थे प्रमाणं क्लृप्तत्वादित्युक्तिः सङ्गता स्यात् । अथवा चेष्टा पदार्थानेव स्मारयतु न तु शब्दानित्युक्त्ययोगप्रसङ्गाच्च । शब्देन सह गृहीतसङ्केतायाः चेष्टायाः अर्थेन सङ्गतिग्रहशून्यायाः शब्दास्मारकत्वस्य अर्थस्मारकत्वस्य च स्वीकारायोगात् । यदपि न च कृतसमयाऽपि चेष्टाऽभिप्रायानुमापिकाऽस्तु किं शब्दस्मरणेनेत्याशङ्क्य अविनाभावाभावादिति समाधानमुक्तम् । तदपि न । एडमूकस्याप्यनुमानाभावप्रसङ्गात् ।

**यदत्रोक्तं रुचिदत्तेन ।** एडमूकस्यानन्यगत्या भ्रमादिकमपि कल्प्यमिति । तदयुक्तम् । एडमूकव्यवहारस्य भ्रममूलकत्वे नियमेन संवादाभावप्रसङ्गात् । यदपि, अथवा चेष्टा पदार्थानेव स्मारयतु न तु शब्दान् । तथाऽपि न प्रमाणम् । चेष्टया पदार्थमात्रस्मृतावपि अन्वयप्रकारकर्मत्वादेरुपस्थापकाभावेनान्वयबोधानुत्पादात् इति । तदपि न । अन्वयबोधकविभक्त्यादिशून्यत्वेऽपि प्रत्यक्षानुमानवत् संसृष्टार्थप्रत्ययजनकत्वेनैव प्रामाण्यसंभवात् । न हि पूर्वपक्षिणा चेष्टायाः शब्दत्वेन प्रामाण्यमभ्युपगतं येनान्वयबोधाजनकत्वेन प्रामाण्यं विहन्येत । यदपि पदैकदेशविभक्तिविशेषादिवच्चेष्टैकदेशविशेषात्तदुपस्थितिरित्याशङ्क्य पदैकदेशविभक्तिविशेषवत् चेष्टैकदेशाभावादिति समाधानमुक्तम् । तदपि न । चेष्टाया एकदेशाभावेऽपि कर्मत्वादिविशिष्ट एव चेष्टाविशेषस्य सङ्केतसंभवेन कर्मत्वाद्युपस्थितिसंभवात् । यदपि कथं तर्हि चेष्टातो व्यवहार इत्याशङ्क्य संशयप्रतिभयोरन्यतरस्मादिति समाधानमुक्तम् । तदपि न । चेष्टातो निष्कम्पप्रवृत्तिदर्शनेन संशयप्रतिभयोरन्यतरस्मादित्यवधारणायोगात् । चेष्टातोऽनुमिनोमीति व्यवहारदर्शनाच्च । यदपि चत्वारि प्रमाणानीति तदप्ययुक्तम् । अर्थापत्त्यादीनामिवोपमानस्यापि पृथक्प्रामाण्याभावात् । उपमानस्यानुमानान्तर्भावस्तु प्रागेव दर्शितः ॥

इति श्रीमत्सत्यनिधितीर्थश्रीचरणचरणाराधकश्रीमत्सत्यनाथयतिविरचिते

**॥ अभिनवताण्डवे शब्दखण्डः समाप्तः ॥**

॥ श्रीरामवेदव्यासार्पणमस्तु ॥

# ॥ अथ अनुमानखण्डः ॥

॥ श्री गुरुराजो विजयते ॥

नमामि सर्वेष्टदमिष्टसिद्धये श्रीरामचन्द्रं परिपूर्णसद्गुणम् ।
निरन्तरं दूरनिरस्तदूषणं भूमण्डलस्याभिनवं विभूषणम् ॥ १ ॥
दुःशासने निपतिते सार्थितार्थो रणाजिरे ।
वन्दे तं भीमसेनं यः चक्रेऽभिनवताण्डवम् ॥ २ ॥
ज्ञानवैराग्यभक्त्यादेः मेने सत्यव्रतो गुरुः ।
सत्यलोकनिधिं भक्त्या तं सत्यनिधिमाश्रये ॥ ३ ॥

अथ अनुमानं निरूप्यते । व्याप्यं अनुमानम् । न च असिद्धे अतिव्याप्तिः । तस्यापि लक्ष्यत्वात् । कुतः तर्हि ततः प्रमानुदयः ? इति चेत् पक्षधर्मतारूपसहकारिविरहात् इति ब्रूमः । ननु असिद्धस्यापि लक्ष्यत्वाभिधानं अयुक्तम् । तस्य हेत्वाभासप्रभेदत्वात् । न च हेत्वाभासः सद्धेतुः इति संभवति व्याघातात् इति चेत् । उच्यते । सत्यं असिद्धो हेत्वाभासः । तथापि अनैकान्तिकादिवत् न स्वतः हेत्वाभासः । किंनाम स्वयं सद्धेतुरेव । दुष्टपुरुषसंसर्गात् हेत्वाभासः भवति । तद् यथा निशातं असिं आकाशे प्रयुञ्जानः पुरुष एव दुष्यति । तत्संबन्धात् साधुरपि असिः स्वकार्यसाधनाक्षमो भवति । न च सहकारिविरहात् कार्याक्षमस्य हेतोः सद्धेतुत्वमेव न भवति । असेः अपि असाधुत्व-प्रसङ्गात् ।

ननु असिद्धेः पुरुषद्वारा हेतुदोषत्वाभिधानमयुक्तम् । 'साक्षादुपपत्तेरेव दोषौ विरोधासङ्गती' इति प्रमाणपद्धतौ हेतुविरोधप्रभेदासिद्धेः साक्षात् दोषत्वाभिधानात् इति चेत् मैवम् । असिद्धेः साक्षाद्दोषत्वाभावेऽपि साक्षाद्दोषत्वं [स्व] विवक्षित्वा [ तत्वात् ] तत्राभिधानात् । असतोऽपि विवक्षिततायाः 'निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षं' इत्यादौ बहुलं उपलम्भात् । उक्तं च महाभाष्ये 'तद्यथा समुद्रः कुण्डिका विन्ध्यो वर्धितकमि'ति इति ।

ननु 'व्याप्यं अनुमानं' इति व्याप्यत्वमात्रस्य अनुमानलक्षणत्वाभिधानं अयुक्तम् । 'निर्दोषोपपत्तिः अनुमानं' इति अनुमानलक्षणे आभासव्यावृत्तये निर्दोषत्वविशेषणोपादानात् इति चेन्न । तत्र 'उपपत्तिशब्दस्य मुख्यैव वृत्तिः विवक्षिता' इति ज्ञापनाय निर्दोषत्वविशेषणस्य उपात्तत्वेन

आभासव्यावृत्त्यर्थं अनुपादानात् । या तु 'निर्दोषग्रहणं अनुमानाभासनिरासार्थं' इति प्रमाणलक्षण-टीका, साऽपि उपपत्तिशब्दस्य अमुख्यवृत्तिं जानतः मन्दस्य उपपत्त्याभासे उपपत्तित्वबुद्धिः स्यात् । तद्व्युदासाय उपपत्तिशब्दस्य मुख्यैव वृत्तिः विवक्षिता इति ज्ञापनाय निर्दोषग्रहणमित्यभिप्रायेति न तद्विरोधः । उक्तं च सुधायां– ''अस्ति खलु शब्दानां मुख्यामुख्यभेदेन द्वयी वृत्तिः । एवं च उपपत्तिशब्दात् उपपत्ताविव तदाभासेऽपि प्रतिपत्तौ उत्पन्नायां तद्व्यवच्छेदेन मुख्यार्थोपदर्शनार्थं तत्र निर्दोषग्रहणं कृतम् । अत्र पुनरन्तर्गतनिर्दोषत्वं मुख्यमेव अर्थं उपादाय 'युक्तिरेव' इत्युक्तम् । सर्मार्चीनो हेतुः अनैकान्तिको हेतुः इति यथा'' इति । तदिदमुक्तं 'युक्तिरेव' इति । न तु निर्दोष-त्वविशेषिता । युक्तिशब्दमुख्यार्थत्वविवक्षायां तदनपेक्षणात् इति'' इति ॥

ननु 'व्याप्यं अनुमानं' इत्ययुक्तम् । व्याप्याभावदशायां अपि तज्ज्ञानमात्रेण अनुमितिदर्शनात् । दृश्यते हि लोके विनष्टलिङ्गज्ञानेन लिङ्गसमानकालिकसाध्यानुमितिः । आप्तवाक्यादिना आगामि-लिङ्गज्ञानेन आगामिसाध्यानुमितिः । न च विनष्टं कार्यजनकं इति युक्तम् । अतिप्रसङ्गात् । अस्तु वा विनष्टस्यापि लिङ्गस्य स्वर्गं प्रति चिरविनष्टज्योतिष्टोमादेः इव कथञ्चित् कारणत्वम् । आगामिनस्तु लिङ्गस्य न पूर्वकालिकानुमितिहेतुत्वं संभवति । कारणस्य पूर्ववर्तित्वनियमात् इति चेत् । स्यादयं दोषः; यदि 'लिङ्गनाशदशायां जायमानानुमितौ विनष्टमेव लिङ्गं करणं, प्रागभावदशायां जायमानानुमितौ अनुत्पन्नं लिङ्गं एव करणं' इति ब्रूमः । न चैवम् । किंनाम अनुमित्यपेक्षया पूर्वभाविलिङ्गज्ञानमेवेति ब्रूमः । न च एतावता लिङ्गस्य कारणत्वभङ्गः । ज्ञानस्य लिङ्गप्रतिनिधित्वात् । प्रतिनिधिना कृतस्य स्वकार्यत्वनियमात् । कथमन्यथा सोमकार्यकारित्वलक्षणसोमप्रतिनिधित्वं पूतिकस्य स्यात् । न च लिङ्गसद्भावदशायामपि आवश्य-कस्य लिङ्गज्ञानस्य लिङ्गप्रतिनिधित्वासंभवः । राजसद्भावदशायां आवश्यकस्यापि अमात्यस्य राज्ञः दूरगमन-वेलायां तत्प्रतिनिधित्वदर्शनात् । सार्वत्रिकत्वात् लिङ्गज्ञानमेव करणं अस्तु । किं लिङ्गस्य करणत्वाग्रहेण इति चेन्न । लिङ्गकरणतायाः 'धूमेन वह्निं अनुमिनोमि' इत्यबाधितानुभवसिद्धत्वात् । 'सुषुप्तिस्वप्नजाग्रद्भिः मायावृत्तिभिरीयते' इति भागवते सुषुप्त्यादिलिङ्गैरीश्वरस्य ज्ञेयत्वोक्तेः । तथा वायुपुराणे 'उपक्रमोपसंहारौ युक्तिरभ्यास एव च । अपूर्वता समाख्या च स्थानं प्रकरणं तथा ॥ ३ ॥ फलं चैतैः महावाक्यतात्पर्यं ज्ञायते बुधैः' इति उपक्रमादिभिः तात्पर्यस्य ज्ञेयत्वोक्तेश्च । अन्यथा 'उपक्रमादिज्ञानैः' इत्यवक्ष्यत् ।

किञ्चैवं सति 'कुतः पर्वतः अग्निमान् ?' इति प्रश्ने 'धूमात्' इत्युत्तरं न स्यात् । धूमस्य साध्यप्रमितिहेतुत्वानङ्गीकारात् । स्याच्च 'धूमज्ञानात्' इत्युत्तरम् । धूमज्ञानस्यैव वह्निज्ञानं प्रति हेतुत्वाङ्गीकारात् ।

अनुमानरूपकरणस्य अनुमितिः फलम् । अनुमितिश्च आगमविधया शब्दाजन्यपरोक्षज्ञानम् । शब्दलिङ्गकानुमितौ अव्याप्तिवारणाय 'आगमविधया' इत्युक्तम् ।

अथ, अनुमानं न अर्थव्यवस्थापकत्वलक्षणप्रामाण्यवत् । निष्कम्पप्रवृत्त्यहेतुत्वात् । अनुवादशब्दवत् । पृच्छन्ति निष्कम्पप्रवृत्तये 'पर्वतः अग्निमान् धूमवत्त्वात्' इति वदन्तं, किमेवं पश्यसि ? उत एवमेव अनुमिनोषि' इति । 'पश्यामि' इत्युक्ते अर्थे निश्चित्य निष्कम्पं प्रवर्तते । अन्यथा तु न इति ।

न च 'अनुमानं न व्यवस्थापकं' इति वदतः अनुमानाप्रामाण्यसाधनाय अनुमानोपन्यासायोगः इति वाच्यम् । अनुमानाव्यवस्थापकत्वस्य अनुभवसिद्धत्वेन तत्संवाद्यनुमानस्य युक्तत्वात् । न हि प्रत्यक्षेण दर्शने यथा समाश्वासः तथा लिङ्गेन अर्थानुमितौ समाश्वासो भवति । किमियं लिङ्गभ्रम-जन्यव्याप्तिभ्रमजन्याऽनुमितिः ? उत तत्प्रमाजन्या ? इति सन्देहेन निष्कम्पप्रवृत्त्यभावदर्शनात् ।

ननु प्रत्यक्षानन्तरमपि निष्कम्पप्रवृत्त्यभावो दृश्यते इति प्रत्यक्षमपि न व्यवस्थापकं इति वक्तुं शक्यं इति चेत् । सत्यम् । प्रत्यक्षमपि अर्थाव्यवस्थापकम् । तथापि प्रत्यक्षं प्रमाणम् । अर्थव्यवस्था-पकत्वस्य तत्स्वभावत्वात् । यत्त्वव्यवस्थापकत्वं तत्तु दोषप्रयुक्तम् । अत एव प्रत्यक्षानन्तरमपि जातो-ऽर्थसंशयः प्रत्यक्षान्तरेणैव निवर्तते । न अनुमानादिना । अनुमानानन्तरभावी तु संशयः प्रत्यक्षेणैव निवर्तते । न अनुमानान्तरेण; इति अव्यवस्थापकमेव अनुमानम् ।

धूमाद्यनुमानानि तु प्रत्यक्षयोग्यसाध्यकानि इति सांव्यावहारिकाणि । सर्वातीन्द्रियसाध्यकानि तु संवादाभावात् उपन्यासायोग्यानि । इति चेत् ।

उच्यते । यत्तावदभिमतं केवलानुमानं न अर्थव्यवस्थापकं इति तदनुमतमेव । अन्ततः प्रत्यक्षागममूलस्यैव अर्थव्यवस्थापकत्वाङ्गीकारात् ।

यत्तु अनुमेयस्य प्रत्यक्षयोग्यत्वं आवश्यकमिति । तन्न । ''यत् कार्यं तत् सकर्तृकमेव'' इति व्याप्तिग्राहकप्रत्यक्षेण अतीन्द्रियस्यापि क्षित्यादिकर्तुः ईश्वरस्य व्यवस्थापनसम्भवात् । अन्यथा पर्वतवह्नि-संसर्गस्य दूरस्थं प्रति अयोग्यत्वात् धूमेन वह्न्यनुमानेऽपि निष्कम्पा प्रवृत्तिः न स्यात् । स्वस्य अयोग्य-त्वेऽपि कस्यचित् प्रत्यक्षयोग्यत्वात् धूमः पर्वतीयवह्निव्यवस्थापकः इति चेत् । न । परप्रत्यक्षयोग्यत्वस्य स्वात्मानं प्रति अर्थनिश्चयानुपयोगात् । यथा हि व्याप्तिग्राहकबलवत्प्रमाणसद्भावे लिङ्गं स्वायोग्यं व्यवस्थापयेत् । एवं परायोग्यमपि व्यवस्थापयेत् । अविशेषात् । न च अयोग्योपाधिशङ्काप्रतिरुद्धत्वात्

व्याप्तिग्रह एव असम्भावितः इति युक्तम् । अनुभवसिद्धस्य व्याप्तिग्रहस्य अपलापानर्हत्वात् व्याप्तिग्रहोपायं तु वक्ष्यामः ॥

## इत्यनुमाननिरूपणम् ॥

मणिकारस्तु– 'व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानं अनुमितिः । तत्करणं अनुमानम् । तच्च लिङ्गपरामर्शः । न तु परामृश्यमानं लिङ्गम्' इत्याह । सः स्थूलदृश्वा । असल्लिङ्ग[क]परामर्शे अतिव्याप्तस्य अनुमितिकरणत्वस्य अनुमानलक्षणत्वेनाभिधानात् । न च प्रमानुमितिकरणत्वमेव लक्षणत्वेन विवक्षितमिति वाच्यम् । यादृच्छिकसंवादिलिङ्गविभ्रमे अतिव्याप्त्यपरिहारात् । न च नासौ करणं इति वाच्यम् । तज्जन्यप्रमायाः करणशून्यक्रियात्वापत्तेः । न च तत्रापि ईश्वरीयं वह्निव्याप्यवत्त्वज्ञानं करणं इति वाच्यम् । प्रमातृसम्बन्धिकरणमन्तरा प्रमोदयायोगात् । अन्यथा धूमज्ञानविधुरस्यापि ईश्वरीयज्ञानेन अनुमितिः स्यात् ।

ननु भवत्येव असौ परामर्शः करणम् । तथापि यज्जातीयानन्तरं नियमेन अनुमितिः भवत्येव तत्त्वं लक्षणत्वेन विवक्षितम् । अत्र च प्रमाजनकत्वनियमाभावात् नातिव्याप्तिः इति चेत् । न । 'गन्धव्याप्यपृथिवीत्ववानयं' इति परामर्शाव्याप्तेः । तज्जातीयानन्तरं नियमेन प्रमोत्पत्त्यभावात् ।

यत्तु– 'व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानं अनुमितिः' इति अनुमितिलक्षणम् । तन्न । ऊर्ध्वदेशो वृष्टिमान् इत्यनुमितौ अव्याप्तेः । तत्करणस्य वृष्टिव्याप्यनदीपूरवानयं देशः इति ज्ञानस्य पक्षधर्मतावगाहित्वाभावात् ।

ननु नास्माद् विज्ञानात् अनुमितिः उदेति । किन्तु 'नदीपूरवदधोदेशप्रतियोगिकोर्ध्वदेशत्ववान् अयं' [सः] इति परामर्शादनुमितिरुदेति । तस्य च व्याप्तिप्रकारकपक्षधर्मत्वावगाहिज्ञानत्वमस्त्येव इति न अव्याप्तिः इति चेत् । किमेवं लौकिकी प्रतीतिः ? उत स्वसमयानुरोधात् एवं उच्यते ? नाद्यः । अधोदेशे नदीपूरदर्शनमात्रेण ऊर्ध्वदेशो वृष्टिमान् इति लौकिकानां प्रतीतेः । न द्वितीयः । स्वसमयस्य अप्रामाणिकत्वात् । ऊर्ध्वदेशे, देशान्तरस्थस्य पुरुषस्य, त्वदुक्तलिङ्गज्ञानाय व्यधिकरणलिङ्गस्यैव अनुसर्तव्यत्वाच्च । भ्रमानुमितौ अतिव्याप्तेश्च । तस्याः व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यत्वात् ।

वस्तुतो व्याप्तिविशिष्टः यः पक्षधर्मः तज्ज्ञानजन्यत्वविवक्षायामपि गन्धव्याप्यपृथिवीत्ववानयं इति बाधानवतारकालिकपरामर्शजन्यभ्रमानुमितौ अतिव्याप्तिस्तु अपरिहार्या । न च भ्रमानुमितिरपि लक्ष्या एवेति वाच्यम् । अनुमाननिरूपणावसरे प्रमानुमितेरेव (लक्ष्यत्वात्) लक्षणीयत्वात् । अन्यथा 'तत्करणं अनुमानं' इति लक्षणं अयुक्तं स्यात् । असल्लिङ्गपरामर्शे अतिव्याप्तेः उक्तत्वात् ।

रुचिदत्तस्तु– 'भ्रमानुमितौ अतिव्याप्तिवारणाय अग्रिमज्ञानपदं प्रमापरम् । प्रमाणलक्षणाय प्रमाया एव अत्र लक्ष्यत्वात् । प्रथमज्ञानपदस्यैव तदर्थं प्रमापरत्वे धर्म्यंशप्रमानुपसंग्रहापत्तिः । गन्ध-प्रागभावावच्छिन्नो घटो गन्धवान् इत्यादौ बाधानवतारे जायमानानुमितौ अतिव्याप्त्यापत्तेश्च' इत्याह । सः स्थूलदृश्वा । प्रमाणलक्षणाय प्रमानुमितेरेव लक्ष्यत्वमभिधाय भ्रमानुमितौ धर्म्यंशप्रमोपसंग्रहाभि-धानात् । धर्म्यंशप्रमोपसंग्रहस्य च प्रमाणलक्षणानुपयोगित्वात् । प्रत्युत 'तत्करणं अनुमानं' इति लक्षणस्य असल्लिङ्गपरामर्शातिव्याप्तिप्रयोजकत्वात् । असल्लिङ्गकपरामर्शस्यापि त्वत्संगृहीतधर्म्यंशप्रमानुमिति-करणत्वात् । यादृच्छिकसंवादिपरामर्शजन्यप्रमानुमितौ अतिव्याप्त्यापत्तेश्च । तत्करणमनुमानमिति लक्षणस्य असल्लिङ्गकपरामर्शे अतिव्याप्तिवारणाय तज्जन्यप्रमातिरिक्तप्रमानुमितेरेव लक्ष्यत्वस्य वक्तव्य-त्वात् ।'प्रमाणलक्षणाय प्रमानुमितेरेव लक्ष्यत्वं' इति वदता त्वयैव प्रमाणलक्षणोपयोगिप्रमानुमितेरेव लक्षणीयत्वाभिधानात् ।

## इति मण्युक्तानुमित्यनुमानलक्षणभङ्गः ॥

शिरोमणिस्तु– 'पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यता-वच्छेदिका या ज्ञानवृत्तिः जातिः, सामानाधिकरण्येन वा अवच्छेदिका जातिः तद्वत्त्वम् । वह्निव्याप्य-वत्पर्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिकव्याप्यविषयकवृत्तिकार्यतायाः अवच्छेदिका या ज्ञानवृत्तिः जातिः, सामानाधिकरण्येन वा अवच्छेदिका या जातिः तद्वत्त्वं वा अनुमितेः लक्षणं' इत्याह । पर्वतस्य वह्निव्याप्यस्य च वैशिष्ट्यावगाही यो निश्चयः= 'वह्निव्याप्यवानयं पर्वतः' इति निश्चयः । तन्निष्ठा उक्तनिश्चयत्वावच्छिन्ना या कारणता तन्निरूपिता या वह्न्यनुमितिनिष्ठा कार्यता, तदवच्छेदिका ज्ञानवृत्तिः जातिः–अनुमितित्वजातिः तद्वत्त्वं इति आद्यलक्षणार्थः । न च वह्न्यनुमिति-निष्ठकार्यतायां नानुमितित्वं अवच्छेदकम् । अधिकदेशवृत्तित्वात् । किन्तु वह्न्यनुमितित्वं कार्यतावच्छेदकम् । तच्च न जातिः इति इदं लक्षणं असम्भवि इति वाच्यम् । अवच्छेदकशब्देन अवच्छेदककोटिप्रविष्ट-(त्व) स्य विवक्षितत्वात् । तथा च वह्न्यनुमितिनिष्ठकार्यतावच्छेदकवह्न्यनुमितित्वान्तर्गतानुमितित्वजातेः सर्वत्र सद्भावात् नासम्भवः । वह्नित्वस्यापि अवच्छेदकान्तर्गतजातित्वात् तद्वति वह्नौ अतिव्याप्तिवार-णाय ज्ञानवृत्तिरिति विशेषणम् । अथवा वह्नावेव अतिव्याप्तिवारणाय ज्ञानवृत्तिपदस्थाने अवच्छेदक-प्रविष्टजातेः सामानाधिकरण्येन वा इति विशेषणं देयम् । वह्नित्वजातेस्तु अवच्छेदकान्तर्गतत्वेन कार्यतावच्छेदकत्वेऽपि न कार्यतासामानाधिकरण्यमिति तद्वति वन्हौ नातिव्याप्तिरिति पदकृत्यं बोध्यम् ।

द्वितीयलक्षणस्य तु वह्निव्याप्यवत्वेन यः पर्वतनिश्चयः पर्वतः वन्हिव्याप्यवान् अयं इति निश्चयः । तन्निष्ठा या तन्निश्चयत्वावच्छिन्ना कारणता, तत्प्रतियोगिका या व्याप्त्यविषयकवृत्तिकार्यता वह्न्यनुमितिनिष्ठा, तदवच्छेदिका या ज्ञानवृत्तिजातिः अनुमितित्वं, तद्वत्त्वमित्यर्थः । अत्र उक्तनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यता 'वन्हिव्याप्यवत्पर्वतवानयं प्रदेशः' इति प्रत्यक्षनिष्ठाऽपि भवति । विशिष्टवैशिष्ट्यज्ञानस्य विशिष्टज्ञानजन्यत्वात् । तदवच्छेदकं च जन्यविशिष्टवैशिष्ट्य-(ष्ट्यावगाहि) प्रत्यक्षत्वम् । तदन्तर्गतत्वात् प्रत्यक्षत्वमपि अवच्छेदकं भवति । तद्वत्त्वं प्रत्यक्षमात्रे अस्तीति तत्रातिव्याप्तिशङ्का स्यात् । सा मा भूत् इत्येवम(तद)र्थं व्याप्त्यविषयकवृत्ति इति कार्यताविशेषणम् । इयं च कार्यता व्याप्त्यविषयकनिष्ठा न भवति । 'वह्निव्याप्यवत्पर्वतवान् अयं प्रदेशः' इति बोधस्य वह्निव्याप्तिविषयकत्वात् । ततश्च प्रत्यक्षत्वस्य तन्निष्ठकार्यतावच्छेदकत्वेऽपि तदादाय न प्रत्यक्षमात्रे अतिव्याप्तिः । ज्ञानवृत्तिरिति अवच्छेदकजातिविशेषणं तु पूर्ववत् वह्नित्वमादाय वह्नौ अतिव्याप्तिवारणाय । तदर्थमेव ज्ञानवृत्तिपदस्थाने 'सामानाधिकरण्येन' इति पदं देयम् । वह्नित्वजातेः अवच्छेदककोटिप्रविष्टत्वेन (प्रवेशेन) अवच्छेदकत्वेपि सामानाधिकरण्येन अवच्छेदकत्वाभावात् नातिव्याप्तिः इति पदकृत्यं बोध्यम् ।

तन्न । वन्हिव्याप्यधूमवानयं इति परामर्शस्य वह्निव्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वेनैव वह्निव्याप्यान्तरपरामर्शस्यापि वह्निव्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वेन पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वेन कारणत्वाभावात्, तदवच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकजातिमत्त्वाभावेन आद्यलक्षणस्य असम्भवात् । अन्यथा वह्निव्याप्ये पर्वतः इति ज्ञानादपि अनुमित्यापत्तिः ।

अस्तु वैशिष्ट्यावगाहिनिश्चयत्वेन वह्निव्याप्यधूमवानयं पर्वतः इति निश्चयस्य वह्न्यनुमितिं प्रति कारणत्वम् । तथापि प्रत्यक्षादौ अतिव्याप्तिः स्यादेव । तथाहि । पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यतायां हि न वह्न्यनुमितित्वं अवच्छेदकम् । रात्रौ पर्वतागतवायौ उष्णस्पर्शानुभवेन जातायां पर्वतोऽग्निमानित्यनुमितावपि तस्य सत्त्वेन कार्यताधिकदेशवृत्तित्वात् । किन्तु पर्वतनिष्ठलिङ्गज्ञानानन्तरभाविवह्न्यनुमितित्वमेव कार्यतावच्छेदकमिति वाच्यम् । तत्र च अनुमितित्ववत् ज्ञानत्वमपि प्रविष्टम् । तदवच्छिन्नत्वं च प्रत्यक्षादौ अस्तीति । न च वायुनिष्ठेन उष्णस्पर्शेन पर्वते वह्न्यनुमितिरेव न भवतीति वचनं युक्तिमत् । व्याप्तिप्रकारमनुसृत्य व्यधिकरणानामपि लिङ्गानां अनुमितिजनकत्वस्य बहुलं उपलम्भात् । अन्यथा कालान्तरे सस्यादिकार्यदर्शनेन कालान्तरे वृष्ट्याद्यनुमानं न स्यात् । न हि व्याप्तिसद्भावाविशेषे व्याप्तिप्रकारं अनुसृत्य कालान्तरभाविहेतोः कालान्तरभावि-

साध्यगमकत्वं उपपन्नम्, अनुपपन्नं च देशान्तरगतस्य देशान्तरगतानुमापकत्वमिति सम्भवति। वैषम्ये कारणाभावात्। न च ज्ञानवृत्तिपदस्थाने सामानाधिकरण्येनेति पदप्रक्षेपात् न ज्ञानत्वमादाय अतिप्रसङ्ग इति वाच्यम्। ज्ञानत्वस्यापि कार्यतासमानाधिकरणत्वेन अतिप्रसङ्गापरिहारात्।

ननु कार्यतासामानाधिकरण्यं नाम न कार्यतैककार्यसमवायित्वमात्रम्। येन उक्तदोषः स्यात्। किं नाम कार्यतावच्छेदकभाने नियमतः कार्यांशे प्रकारीभूय भासमानत्वं विवक्षितम्। ज्ञानत्वं तु कार्यतावच्छेदकभानवेलायां न अनुमितिरूपकार्यांशे प्रकारीभूय भासते। अपि तु पर्वतनिष्ठलिङ्गज्ञानांशे प्रकारीभूय भासत इति न ज्ञानत्वमादाय अतिप्रसङ्गः इति चेन्न। प्रत्यक्षादौ अतिव्याप्तिपरिहारेऽपि भ्रमानुमित्यतिव्याप्तेरपरिहारात्। न हि भ्रमानुमितौ अनुमितित्वं नेति वक्तुं युक्तम्। येन अनुमितित्वमादाय तत्र अतिव्याप्तिः न स्यात्। न च लक्ष्यत्वान्नातिव्याप्तिरिति वाच्यम्। प्रमाणलक्षणाय प्रमानुमितेरेव लक्षणीयत्वात्। अन्यथा तत्करणं अनुमानमिति अनुमानलक्षणस्य अनुमानाभासे अतिव्याप्तिप्रसङ्गात्। अनुमितित्वं अनुमितेः लक्षणं इत्यनुक्त्वा वक्रवन्धरीत्यनुसरणायोगाच्च। अनुमितित्वमादायैव त्वया लक्षणस्य व्युत्पादनीयत्वात्। अत एव द्वितीयलक्षणमपि परास्तम्। व्याप्यविषयकवृत्ति इति कार्यताविशेषणवैयर्थ्याच्च। न च वह्निव्याप्यवत्पर्वतवानयं प्रदेशः इति ज्ञानवृत्तिकार्यतावच्छेदककोटिप्रविष्टप्रत्यक्षत्वं आदाय अतिप्रसङ्गपरिहारार्थं तदिति वाच्यम्। वह्निव्याप्यवत्पर्वतवानयं प्रदेशः इति प्रत्यक्षनिष्ठकार्यतायाः वह्निव्याप्यवत्पर्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिकत्वाभावेन अतिव्याप्तिप्रसक्त्यभावात्। विशिष्टवैशिष्ट्यप्रत्यक्षे विशिष्टज्ञानस्य विशेषणज्ञानतयैव कारणत्वेन वह्निव्याप्यवत्पर्वतनिश्चयत्वेन अकारणत्वात्।

ननु विशेषणज्ञानत्वेन विशिष्टज्ञानत्वेन सामान्यतः कार्यकारणभावेऽपि वह्निव्याप्यवत्पर्वतवानयं प्रदेशः इति प्रत्यक्षविशेषं प्रति वह्निव्याप्यवान् पर्वतः इति निश्चयस्य विशेषरूपेण कारणत्वं अस्तीति अतिव्याप्तिरवर्जनीया इति चेत्। एवं तर्हि देवदत्तीयवह्निव्याप्यवत्पर्वतवानयं प्रदेशः इति विशिष्टवैशिष्ट्यबोधं प्रति देवदत्तीयवह्निव्याप्यवानयं प्रदेशः इति निश्चयस्य देवदत्तीयवह्निव्याप्यवत्पर्वतनिश्चयत्वेन हेतुत्वं स्यात्। एवं अन्यान्यप्रत्यक्षं प्रति अन्यान्यनिश्चयत्वेन कारणता स्यात्। न तु वह्निव्याप्यवत्पर्वतनिश्चयत्वेन हेतुत्वं स्यात्। तेनापि रूपेण कार्यकारणभावाङ्गीकारे अप्रामाणिकानेककार्यकारणभावकल्पनाप्रसङ्गः ॥

इति शिरोमण्युक्तानुमितिलक्षणभङ्गः ॥

यत्तु मणौ— 'अनुमानं न प्रमाणम् । योग्यानां उपाधीनां योग्यानुपलब्ध्या अभावनिश्चयेऽपि अयोग्योपाधिशङ्कया व्यभिचारसंशयात् । शतशः सहचरितयोरपि व्यभिचारोपलब्धेश्च । लोके धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारश्च सम्भावनामात्रात् । संवादेन च प्रामाण्याभिमानात् इति नाप्रत्यक्षं प्रमाणम्' इति ।

तन्न । अप्रमाणसाधर्म्येण अप्रामाण्यसाधने दृष्टसाधर्म्यस्य अनुमानत्वात् । एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतरं प्रत्यर्थवत्त्वात् । तयोश्च परकीययोः अप्रत्यक्षत्वात् । अनुमानं अप्रमाणं इति वाक्यस्य प्रामाण्याप्रामाण्ययोः व्याघाताच्च ।

अपि च अनुमानाप्रामाण्ये प्रत्यक्षस्यापि अप्रामाण्यापत्तिः । प्रामाण्यस्य अनुमेयत्वात् । 'स्वतः प्रामाण्यग्रहे तत्संशयाभावापत्तेः' इत्युक्तम् ।

तन्न । पूर्वपक्षिणा व्यभिचारसंशयेन अप्रामाण्यस्य असाधितत्वात् । अप्रमाणसाधर्म्येण अप्रामाण्यसाधनपक्षे दृष्टसाधर्म्यस्य अनुमानत्वादिति दूषणाभिधानस्य असङ्गतत्वात् । न हि परेण अप्रमाणसाधर्म्येण अप्रामाण्यं साध्यते इत्युक्तम् । येन तत्पक्षे दूषणाभिधानं सङ्गतं स्यात् । प्रत्युत धूमादिदर्शनानन्तरं जायमानस्य वह्न्यादिव्यवहारस्य गतिं कथयतैव अयोग्योपाधिशङ्कया व्यभिचारसंशयविषयत्वरूपलिङ्गोद्भावनस्य अप्रामाण्यसम्भावनाप्रयोजकत्वमेवोक्तम् । एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतरं प्रत्यर्थवत्त्वादित्यस्य असङ्गतत्वाच्च । 'तयोश्च परकीययोः' इत्यनेन संशयविपर्यययोः अप्रत्यक्षत्वाभिधानस्य असङ्गतत्वाच्च ।

यदत्रोक्तं रुचिदत्तेन—'अनुमानं अप्रमाणं इति अनुमानविधया उच्यते, उत आगमविधया वा, इति विकल्पं मनसि निधाय, आद्यकल्पस्य अप्रमाणसाधर्म्येण इत्यादि पूर्ववाक्येन व्याघातः; उत्तरवाक्येन परकीयसंशयविपर्ययज्ञानार्थं अनुमानस्य अनुसर्तव्यत्वात् व्याघातः उच्यते'' इति ।

तन्न । सम्भावनार्थमेव हेतूपन्यासः, न अनुमितिजननार्थं; इत्यभिप्रायस्य लोके धूमादिदर्शनानन्तरमिति पूर्ववाक्येनैव ज्ञापिततया विकल्पस्यैव अनुत्थानात् । परस्य परस्मिन् आप्त्यनिश्चयेन अनाश्वासात् लिङ्गोपन्यासाच्चागमविधया उच्यते इति विकल्पस्य अनवकाशाच्च । परकीयसंशयविपर्ययसिध्यर्थं परेण अनुमानस्य अनुपन्यासेन व्याघातस्य अभिधानायोगाच्च । न हि चार्वाकः परकीयसंशयविपर्ययौ निश्चित्य वाक्यं प्रयुंक्ते । येन अनुमानं अनुसर्तव्यं स्यात् । किंतु सम्भावनयैव वाक्यं प्रयुंक्ते ।

यदपि 'अनुमानं अप्रमाणं इति वाक्यस्य प्रामाण्याप्रामाण्ययोः व्याघाताच्च' इति । तदपि न । वाक्यस्य पारिभाषिकाप्रामाण्यवत्वेऽपि बाधितार्थकत्वरूपाप्रामाण्याभावेन अनुमानप्रामाण्याप्रसक्त्या

व्याघाताभावात् । 'संवादेन प्रामाण्याभिमानात्' इति वदता संवादस्य अङ्गीकारेण बाधितार्थकत्वानङ्गीकारात् ।

यदपि– 'अनुमानाप्रामाण्ये प्रत्यक्षस्यापि अप्रामाण्यं स्यात् । प्रामाण्यस्य अनुमेयत्वात् ।' इति । तदपि न । अनुमेयत्वासिद्धेः । प्रत्यक्षेण घटादिग्रहे तत्र संशयवत् मनसा प्रामाण्यग्रहेऽपि तत्संशयोपपत्तेः ॥

## इति मण्युक्तानुमानप्रामाण्यसमर्थनभङ्गः ॥

श्रीकृष्णाय नमः ॥ अविनाभावो व्याप्तिः । अविना अव्यतिरेकेण, भावः साहचर्यनियमस्वभाववत्त्वं इति यावत् । अनन्वेष्टसाधनत्वाद्यौत्सर्गिकव्याप्तिकव्याप्यव्यापकयोः अपवादवशात् क्वचित् साहचर्यभङ्गेऽपि तत्साहचर्यनियमस्वभावत्वानपायात् न तत्राव्याप्तिः ॥

ननु नियमो नाम व्याप्तिः । तथा च आत्माश्रयः । इति चेत् । कथमवगतं लोकोत्तरप्रज्ञेन नियमो नामात्र व्याप्तिरेवेति । यावता कृतकत्वनित्यत्वयोः नियमेनासाहचर्यं इति प्रयोगोऽस्ति । न च तत्र व्याप्त्याऽसहचारः इत्यर्थः सम्भवति ।

अपि च नियमेनायं प्रातःस्नायी ब्राह्मणः इति प्रयोगो दृश्यते । न च अत्र व्याप्तिः नियमशब्दार्थः । अपि च 'धूमो वह्निना व्याप्तः' इत्युक्त्वा 'नियमेन वह्निना सहचरितः' इति व्याचक्षाणाः दृश्यन्ते । अतः नियमशब्दः न व्याप्तिमात्रपर्यायः । अपि तु अव्यभिचाराद्यनेकार्थः । प्रकृते च अव्यभिचारार्थको विवक्षितः इति न आत्माश्रयः ।

नन्वेवमपि व्यतिरेकव्याप्तौ अव्याप्तिः । व्यापकत्वाभिमतोचितदेशकालादिषु तत्सत्तामविहाय लिङ्गसत्तारूपत्वाभावात् इति चेन्न । व्यतिरेकव्याप्तेरन्वयव्याप्तित्वेन लक्षणसद्भावात् । अस्ति हि तत्रापि व्यापकत्वोचितदेशकालादिषु तत्सत्तामविहाय व्याप्यत्वाभिमतसाध्याभावसत्तारूपत्वम् । एवं तर्हि अन्वयव्याप्तिरेव, न व्यतिरेकव्याप्तिः इति चेत् । सत्यम् । साधनाभावनिरूपिता व्याप्तिः साक्षात्सम्बन्धेन साध्याभावनिष्ठा इति तस्य सा अन्वयव्याप्तिरेव । तथापि व्याप्त्याश्रयव्यापकाभावप्रतियोगित्वरूपेण परंपरासम्बन्धेन हेतुनिष्ठा व्यतिरेकव्याप्तिः इत्युपचर्यत इत्यदोषः ।

नन्वेवमपि वृष्ट्यादिसाधकनदीपूरादिव्याप्तौ अव्याप्तं इदं लक्षणं इति चेत् । उच्यते । साहचर्यनियमो नाम यद्देशकालयोः व्याप्यसत्ता तद्देशकालयोः व्यापकसत्तैव इति न विवक्षितः । किं नाम तदुचितदेशकालाद्यवच्छेदेन तत्सत्तामविहायैव स्वोचितदेशकालयोः सत्ता साहचर्यनियमशब्दार्थः विवक्षितः । न चासौ नदीपूरादौ शक्यते नेति वक्तुम् । ऊर्ध्वदेशे पूर्वकालाद्यवच्छेदेन वृष्टिसद्भाव एव तदुत्तरकालाद्यवच्छेदेन अधोदेशे नदीपूरसद्भावात् ।

ननु साध्यासमानाधिकरणस्य नदीपूरस्य साध्यगमकत्वाङ्गीकारे अतिप्रसङ्गः इति चेत् । न । व्याप्तिप्रकारं अनुरुध्य गमकत्वाङ्गीकारात् । न हि व्याप्तेः समानदेशकालत्वमेव प्रकारः । येन साध्या-समानाधिकरणस्य गमकत्वं न स्यात् । किंतु बहवः प्रकाराः सन्ति । तथा हि–कयोश्चित् समानदेश-कालयोः व्याप्तिः यथा रसस्य रूपेण । कयोश्चित् समानदेशत्वेऽपि भिन्नकालयोः । यथा धूमस्य अग्निना । कयोश्चित् समानकालत्वेऽपि भिन्नदेशयोः । यथा कृत्तिकोदयस्य रोहिण्युदयासत्त्या । कयोश्चित् भिन्नदेशकालयोः । यथा अधोदेशे नदीपूरस्य ऊर्ध्वदेशे वृष्ट्या । कस्यचित् कादाचित्कस्य समानदेशत्वेऽपि सार्वकालिकेन । यथा पतनस्य गुरुत्वेन । कस्यचित् समानदेशत्वेऽपि सार्वकालिकस्य कादाचित्केन । यथा शरीरत्वस्य विनाशेन । कस्यचित् प्रदेशवर्तिनो व्याप्यवर्तिना । यथा संयोगस्य द्रव्यत्वेन । कस्यचित् व्याप्यवर्तिनः प्रदेशवर्तिना । यथा रूपस्य संयोगेन । कयोश्चित् एकावय-विवर्तिनोरपि अवयवभेदेन । यथा तुलोन्नमनावनमनयोः इत्यादयः ॥

## इति स्वमते व्याप्तिनिरूपणम् ॥

केचित्तु अव्यभिचरितत्वमेव व्याप्तिः । अव्यभिचरितत्वं च पारिभाषिकम् । तथा हि । यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाः यावन्तोऽभावाः प्रति-योगिसमानाधिकरणाः तत्त्वम् इत्याहुः ॥ अस्य अर्थः । हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकाव-च्छिन्नहेत्वधिकरणाधिकरणाः साध्यतावच्छेदकावच्छिन्नं यत् साध्यं तन्निष्ठा या व्याप्यता तन्निरूपिका या व्यापकता तदवच्छेदकीभूता या प्रतियोगिता तत्काः यावन्तः अभावाः । स्वविशिष्टहेत्वधिकरणा-वच्छेदेन प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणाः तत्त्वं इति । अस्ति चेदं लक्षणं धूमानुमाने । हेतुतावच्छेदकसम्बन्धेन धूमाधिकरणाधिकरणकाः वह्नित्वावच्छिन्नवह्निव्यापकतावच्छे-दकप्रतियोगिताकाः यावन्तः अभावाः घटत्वेन प्रमेयत्व-वस्तुत्वाभिधेयत्वाद्यभावाः । तेषां स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वात् । न भवति चेदं लक्षणं धूमवान्

वह्निः इति व्यभिचारिसाधारणम् । हेतुतावच्छेदकावच्छिन्नवह्निसमानाधिकरणस्य धूमाभावस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावस्य प्रतियोगिसामानाधिकरण्याभावात् । भवति हि धूमाभावप्रतियोगिता साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका । यत्र धूमः तत्र धूमाभावप्रतियोगीति व्याप्तिसद्भावात् । अभेदेऽपि व्याप्यव्यापकभावाङ्गीकारात् ।

यत्समानाधिकरणा इत्याद्युक्तौ द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्र अव्याप्तिः । गुणाद्यधिकरणेषु सत्त्वरूपहेतुसमानाधिकरणः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताको यो द्रव्यत्वाभावः तस्य प्रतियोगिसामानाधिकरण्याभावात् । भवति हि द्रव्यत्वाभावप्रतियोगिता साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका । यत्र द्रव्यत्वं तत्र द्रव्यत्वाभावप्रतियोगीति व्याप्तिसद्भावात् । सा माभूत् इत्येतदर्थं 'हेतुतावच्छेदकावच्छिन्नहेतुसमानाधिकरणाः' इत्यभावविशेषणम् ।

एवमपि धूमानुमाने अव्याप्तिः स्यात् । समवायेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणे धूमावयवे वर्तमानस्य वह्न्यभावस्य प्रतियोगिसामानाधिकरण्याभावात् । भवति हि वह्न्यभावप्रतियोगिता साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका । यत्र वह्निः तत्र वह्न्यभावप्रतियोगीति व्याप्तिसद्भावात् । अतः 'हेतुतावच्छेदकसम्बन्धेन हेतुसमानाधिकरणाः इत्युक्तम् ।

'साध्यव्यापकतावच्छेदकप्रतियोगिताकाः' इत्यादेरेवोक्तौ धूमानुमाने अव्याप्तिः स्यात् । धूमसमानाधिकरणस्य महानसीय वह्न्यभावस्य प्रतियोगिसामानाधिकरण्याभावात् । भवति हि महानसीयवह्न्यभावप्रतियोगिता साध्यव्यापकतावच्छेदिका । महानसीयवह्निः साध्यत्वात् । यत्र महानसीयवह्निः तत्र महानसीयवह्न्यभावप्रतियोगीति व्याप्तिसद्भावात् । अतः साध्यतावच्छेदकावच्छिन्नेत्युक्तम् ।

साध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिताका इत्यादेरेवोक्तौ महानसीयवह्न्यभावमादाय धूमानुमाने अव्याप्तिः स्यात् । महानसीयवह्नेरपि प्रमेयत्वेन रूपेण साध्यतावच्छेदकावच्छिन्नव्यापकत्वात् । अतः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इत्युक्तम् ।

साध्यतावच्छेदकव्यापकतावच्छेदकप्रतियोगिताकेत्युक्तौ वह्नित्वाभावमादाय धूमानुमाने अव्याप्तिः स्यात् । भवति हि वह्नित्वाभावप्रतियोगिता साध्यतावच्छेदकवह्नित्वव्यापकतावच्छेदिका । यत्र वह्नित्वं तत्र वह्नित्वाभावप्रतियोगीतिव्याप्तिसद्भावात् । अतः साध्यतावच्छेदकावच्छिन्नेत्युक्तम् ।

हेतुसमानाधिकरणाः यावन्तः अभावाः प्रतियोगिसमानाधिकरणाः तत्त्वं इत्येवोक्तौ असंभवः स्यात् । धूमादिहेतुसमानाधिकरणानां घटपटादिसर्वाभावानां प्रतियोगिसामानाधिकरण्याभावात् । अतः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इति हेतुसमानाधिकरणत्वेनोक्ताभावविशेषणम्।

अभावविशेषणीभूतयावत्पदपरित्यागे व्यभिचारिसाधारण्यम् । हेतुसमानाधिकरणस्य व्यधिकरणधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकप्रमेयत्वाद्यभावस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यात् । भवति हि व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगिता साध्यतावच्छेदकावच्छिन्नसाध्यव्यापकतावच्छेदिका । यत्र साध्यं तत्र व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगीति व्याप्तिसद्भावात् ।

एवं भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इति व्यभिचारिणि हेतुसमानाधिकरणद्वित्वावच्छिन्नसाध्याभावस्य स्वविशिष्टहेत्वधिकरणे मनसि हेतुरूपप्रतियोगिसामानाधिकरण्यात् अतिव्याप्तिः ऊह्या । तत्परिहाराय अभावानां यावन्तः इति विशेषणम् । व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावस्य प्रतियोगिसामानाधिकरण्येऽपि हेतुसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नसाध्याभावस्य प्रतियोगिसामानाधिकरण्याभावात् ।

एवं मूर्तत्वसामानाधिकरणद्वित्वावच्छिन्नप्रतियोगिकाभावस्य प्रतियोगिसामानाधिकरण्येऽपि तथाविधभूतत्वाभावस्य प्रतियोगिसमानाधिकरण्याभावात् अतिव्याप्तिनिरासः इति ।

उक्ताभावानां प्रतियोगिसामानाधिकरण्यमात्रोक्तौ अयं कालः गोमान् गोत्वात् इत्यत्र अतिव्याप्तिः । हेतुसमानाधिकरणस्य गवाद्यनधिकरणधर्म्यवच्छेदेन विद्यमानस्य गवाभावस्य महाकालरूपे अवान्तरकालरूपे वा अधिकरणे गोरूपप्रतियोगिसमानाधिकरणत्वात् । भवति हि गवाभावप्रतियोगिता साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका । यदा गौः तदा गवाभावप्रतियोगीतिव्याप्तेः । अतः हेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणाः इत्युक्तम् ।

एवमपि कपिसंयोगाभाववान् मेयत्वात् इत्यत्र अव्याप्तिः । कपिसंयोगरूपस्य(कपिसंयोगाभावाभावात्मकस्य) तस्य उक्ताभावस्य गुणादावभावेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावात् । तत्परिहाराय स्वविशिष्टेति हेत्वधिकरणविशेषणम् । अभावविशिष्टं यावद् हेत्वधिकरणं तत्र सर्वत्राप्यभावस्य प्रतियोगिसामानाधिकरण्यं विवक्षितम् । तच्च प्रकृते अस्ति इति नाव्याप्तिः । एवमपि

ज्ञानवान् द्रव्यत्वात् इत्यत्र अतिव्याप्तिः । द्रव्यत्वसमानाधिकरणस्य ज्ञानाभावस्य स्वविशिष्टहेत्वधिकरणे घटे विषयतासम्बन्धेन प्रतियोगिसमानाधिकरणत्वात् । तादृशात्मत्वाद्यभावानामपि घटादौ संयुक्तसमवाय-सम्बन्धेन गगनादौ व्यासपदार्थे संयुक्त संयुक्तसमवायसम्बन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगि-सामानाधिकरण्यात् प्रतितः । अयोगितावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणाः इत्युक्तम्' इति ।

तन्न । ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरात् इति व्यधिकरणसाध्यकलिङ्गाव्याप्तेः । अधोदेशे नदीपूररूपहेतुसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकस्य साध्याभावस्य प्रतियोगिसामानाधिकरण्याभावात् । अयं एतत्कपिसंयोगी एतत्त्वात् इति बाधिताव्याप्तेः । तस्याव्याप्तत्वे गन्धवान् पृथिवीत्वात् इत्यस्यापि तथात्वं स्यात् । किञ्च औत्सर्गिकव्याप्तिमत्सु उपक्रमादिलिङ्गेषु अव्याप्तेश्च । साध्यापवादाधिकरणे हेतुसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकस्य साध्याभावस्य प्रतियोगिसामानाधिकरण्याभावात् । प्रतियोगिसमानाधिकरणा इत्यत्र स्वविशिष्टहेत्वधि-करणावच्छेदेनेति विशेषणवैयर्थ्याच्च ।

यदत्रोक्तम्– यदा गोत्वं तदा गौः इति व्याप्तिविवक्षया प्रयुक्ते अयं कालो गोमान् गोत्वात् इत्याभासे अतिव्याप्तिवारणाय हेत्वधिकरणावच्छेदेनेति विशेषणम् । गोत्वेन व्यक्त्यभावस्य तदनधिकरण-धर्म्यवच्छेदेन तद्वति काले महाकाले वा वृत्तावपि हेतुमति प्रलये तत्सामानाधिकरण्याभावात् न अतिव्याप्तिरिति ।

तन्न । त्वन्मते महाकालावान्तरकालानां भेदाभावेन कालिकसहचारमात्रस्यैव व्याप्तित्वात् । यदा गोत्वं तदा गौः इत्यादेः व्यभिचाराभावेन आभासत्वाभिधानायोगात् । अयं एतत्संयोगी एतत्त्वा-दित्यत्र एतत्त्वरूपहेतोः मूलाद्यवच्छेदेन साध्यसहचाराभावाद् व्यभिचारः स्यात् । प्रलयकालस्य महाकालभिन्नत्वाङ्गीकारे तु तत्र व्यभिचारो न व्याप्तिविघटकः । कालिकव्याप्तेः काल एव व्यभिचा-रस्य वक्तव्यत्वेन उपचारतः कालशब्दविषये व्यभिचारस्य अदोषत्वेन अवक्तव्यत्वात् । अत एव अयं कालो जन्यद्रव्यवान् कालत्वात् इति दैशिकव्याप्तिभ्रमविषये कालत्वरूपहेतौ अतिप्रसङ्गपरिहाराय हेत्वधिकरणावच्छेदेनेति विशेषणमिति परास्तम् । अत्रापि प्रलयकालशब्देन कालविवक्षायां व्यभिचारस्यैव अभावात् । कालोपाधिविवक्षायां तु हेतोरेव अभावात् । अव्यभिचारेण सद्धेतुत्वात् ।

किंच व्यापकतायाः व्याप्तिनिरूप्यत्वेन आत्माश्रयः । अपि च साध्यतावच्छेदकावच्छिन्नत्व

हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणावच्छेदेन ग्राह्यसम्बन्धेन हेतुसामानाधिकरण्यनिरूपकत्वमात्रस्यैव लक्षणत्वसम्भवे गुरुभूतोक्तलक्षणाङ्गीकारो न युक्तः ।

यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं वा तत्त्वं इति तेषामेव लक्षणान्तरम् । अस्यार्थः । हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणाधिकरणानां साध्यतावच्छेदकावच्छिन्नं प्रति व्यापकतायाः यदवच्छेदकं रूपं तदवच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं अव्यभिचारित्वमिति । पूर्वं हेतुसमानाधिकरणानां साध्यव्यापकतावच्छेदकप्रतियोगिताकयावदभावानां प्रतियोगिसामानाधिकरण्यं लक्षणत्वेनोक्तम् । इदानीं तु हेतुसमानाधिकरणानां साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं लक्षणत्वेनोच्यते इति भेदः ।

अस्ति चेदं लक्षणं लक्ष्ये । धूमसमानाधिकरणानां वाच्यत्वाद्यवच्छिन्नज्ञेयत्वादिप्रतियोगिकाभावानां प्रतियोगितावच्छेदकावच्छिन्नवाच्यत्वादिसामानाधिकरण्यसद्भावात् । नास्ति चेदं अलक्ष्ये लक्षणम् । वह्निसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधूमत्वरूपधर्मावच्छिन्नप्रतियोगिताकस्याभावस्य प्रतियोगितावच्छेदकावच्छिन्नधूमसामानाधिकरण्याभावात् । धूमसमवायिदेशे धूमसमानाधिकरणस्य वह्नित्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्याभावात् असम्भववारणाय हेतुतावच्छेदकसम्बन्धेनेति पदम् । द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्र सत्त्वसमानाधिकरणस्य द्रव्यत्वाभावस्यातथात्वात् अव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नेति हेतुविशेषणम् । साध्यतावच्छेदकावच्छिन्नेतिपदस्थाने साध्यपदप्रक्षेपे पर्वतीयवह्निरूपसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकस्य पर्वतत्वाभावस्य अतथात्वात् अव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नेत्युक्तम् । साध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकानां इत्येवोक्तौ धूमाद्यनुमानेषु अव्याप्तिः । हेतुसमानाधिकरणस्य प्रमेयत्वेन साध्यव्यापकमहानसीयवह्नेः महानसीयवह्नित्वेनाभावस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्याभावात् । तन्निरासार्थं साध्यव्यापकतावच्छेदकरूपावच्छिन्नेतिविशेषणम् । प्रतियोगिसामानाधिकरण्यस्य लक्षणशरीरप्रवेशे असम्भवः । साध्यव्यापकतावच्छेदकवाच्यत्वावच्छिन्नगगनाभावस्य प्रतियोगिसमानाधिकरण्याभावात् । अतः प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यस्य लक्षणशरीरे प्रवेशः कृतः । 'यावत्' पदपरित्यागे व्यभिचारिसाधारण्यम् । अतो 'यावत्' इति अभावविशेषणम् । इति । तदपि न । औत्सर्गिकव्याप्तिकोषकमादिलिङ्गे व्यधिकरण-

साध्यकलिङ्गे च अव्याप्तेः । अव्यभिचरितत्वरूपव्याप्तिशरीरे व्यापकतावच्छेदकेत्यत्र व्यापकतानिरूपकतया व्याप्तिप्रवेशेन आत्माश्रयाच्च ।

अन्ये तु– 'व्याप्यवृत्तेः हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसमानाधिकरण्यं व्याप्तिः । अथवा हेतुसमानाधिकरणस्य व्याप्यवृत्तेरभावस्य प्रतियोगितायाः सामानाधिकरण्येन अनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । अस्ति तावदाद्यं लक्षणं लक्ष्ये । धूमसमानाधिकरणस्य व्याप्यवृत्तेः घटत्वेन वह्निरूपसाध्याभावस्य प्रतियोगिताया अनवच्छेदकीभूतवह्नित्वावच्छिन्नवह्निरूपसाध्यसामानाधिकरण्यस्य सत्वात् । नास्ति च अलक्ष्ये । अयोगोलके वह्निसमानाधिकरणस्य व्याप्यवृत्तेः धूमत्वेन धूमरूपसाध्याभावस्य प्रतियोगितायां साध्यतावच्छेदकधूमत्वस्य अवच्छेदकत्वेन प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्याभावात् । एवं द्वितीयमपि लक्षणं लक्ष्येऽस्तीति ज्ञेयम् । धूमादिसमानाधिकरणस्य व्याप्यवृत्तेः वह्नित्वेन घटाभावस्य प्रतियोगितायां साध्यतावच्छेदकस्य वह्नित्वस्य वैय्यधिकरण्येन अवच्छेदकत्वेऽपि सामानाधिकरण्येन अनवच्छेदकत्वात् । नास्ति चेदमलक्ष्ये । अयोगोलके वह्निसमानाधिकरणस्य व्याप्यवृत्तेः धूमत्वेन धूमाभावस्य प्रतियोगितायां धूमत्वरूपसाध्यतावच्छेदकस्य सामानाधिकरण्येन अवच्छेदकत्वात् । एवं तृतीयमपि लक्ष्येऽस्ति । धूमसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्य घटाद्यभावस्य प्रतियोगितायां साध्यताच्छेदकस्य वह्नित्वस्य अनवच्छेदकत्वात् । नास्ति चेदमलक्ष्ये । अयोगोलके वह्निसमानाधिकरणस्य धूमाभावस्य प्रतियोगितायां साध्यतावच्छेदकस्य धूमत्वस्य अवच्छेदकत्वात्' इत्याहुः ॥

तन्न । औत्सर्गिकव्याप्तौ (त्रिमद्) उपक्रमादिलिङ्गव्याप्तौ व्यधिकरणसाध्यकलिङ्गव्याप्तौ उक्तलक्षणानां अभावात् ।

अपरे तु 'साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकत्वसमानाधिकरणसाध्याभावत्वकत्वं व्याप्तिः । अथ वा यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानस्य, प्रतिबन्धकत्वं नास्ति तत्त्वं व्याप्तिः । अस्ति चेदमाद्यं लक्षणं लक्ष्ये । धूमसमानाधिकरणस्य घटत्वादिव्यधिकरणधर्मेण साध्याभावस्य साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यनियमेन तन्निष्ठाभावत्वस्य साध्यसामानाधिकरण्यावच्छेदकत्वात् । नास्ति चालक्ष्ये । अयोगोलके वह्निसमानाधिकरणस्य धूमत्वेन धूमाभावस्य

साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्याभावेन धूमाभावत्वस्य साध्यसामानाधिकरण्यानवच्छेदकत्वात् । अस्ति च द्वितीयमपि लक्षणं लक्ष्ये । धूमसमानाधिकरणव्यधिकरणधर्मावच्छिन्नसाध्याभावप्रमायां साध्यवत्ताज्ञान(स्य) प्रतिबन्धकत्वाभावात् । नास्ति चालक्ष्ये । अयोगोलके वह्निसमानाधिकरणस्य धूमत्वेन धूमाभावस्य प्रमायां साध्यवत्ताज्ञान[स्य] प्रति-बन्धकत्वात्' इत्याहुः ।

तदपि न । औत्सर्गिकव्याप्तौ व्यधिकरणव्याप्तौ च लक्षणाभावात् ।

## इति व्यधिकरणधर्मावच्छिन्नाभावाश्रयणेन व्याप्तिनिरूपणभङ्गः ॥

॥ श्रीः ॥ श्रीरामायनमः । मणिकारस्तु— प्रतियोग्यसमानाधिकरण यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः । अन्यनिष्ठवह्नेः धूमवत्पर्वतवृत्त्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगिता न वह्नित्वेन अवच्छिद्यते । धूमवति वह्निः नास्तीत्यप्रतीतेः । सामान्यावच्छिन्नप्रतियोगि(ता)कश्चाभावः पृथगेव । अन्यथा सकलप्रसिद्धरूपाभावे प्रसिद्धरूपवदन्यत्वे च अवगते वायौ रूपं न वा, वायू रूपवान् न वा, इति संशयो न स्यात् । विशेषाभावकूटस्य निश्चितत्वात् इत्याह ॥

तन्न । धूमानुमानाव्याप्तेः । प्रतियोग्यसमानाधिकरण धूमसमानाधिकरणमहानसीयादि वह्न्यत्यन्ताभावप्रतियोगितावच्छेदकैः महानसीयवह्नित्वादिभिः वह्नेः अवच्छिन्नत्वेन 'प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं' इत्युक्तलक्षणाभावात् ।

यदत्रोक्तम् क्वचिदत्तेन— 'प्रतियोग्यसमानाधिकरण यदवच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नेन येन केनापि तदवच्छिन्नस्य सामानाधिकरण्यं तदवच्छिन्नेन सह व्याप्तिः इत्यर्थः' इति । अत्र अयं एतत्संयोगी एतत्त्वात् इत्यत्र साध्यतावच्छेदकावच्छिन्नात्यन्ताभावो हेतुसमानाधिकरणः इति तत्र अव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेत्यभावविशेषणम् । प्रतियोग्यसमानाधिकरणयत्समानाधिकरणेत्याद्युक्तौ इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्र अव्याप्तिः । प्रतियोग्यसमानाधिकरण साध्यतावच्छेदकावच्छिन्नद्रव्यत्वरूपसाध्याभावस्य गुणाद्यधिकरणे सत्त्वसमानाधिकरणत्वेन उक्तलक्षणस्य तत्र अभावात् । विशिष्टस्यापि विशेष्याभिन्नत्वेन तस्यापि हेतुत्वात् । सा मा भूत् इत्येतदर्थं यदवच्छिन्नेत्युक्तम् । धूमानुमाने अव्याप्तिः मा भूत् इत्येव (तद) मर्थं प्रतियोगिता-

वच्छेदकं यत्र भवति तदवच्छिन्नेत्युक्तम् । उक्ताभावप्रतियोगितावच्छेदकमहानसीयवह्नित्वाद्यवच्छिन्नत्वेऽपि प्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य हेतौ सद्भावात् अव्याप्तिनिरासः । एकैकधूमस्य सर्ववह्निनिरूपितव्याप्तिसिद्धये येन केनापीत्युक्तम् । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नेन यस्य कस्यचित् सामानाधिकरण्यं हेतोः व्याप्तिः मा भूत् इत्येव (तद्) मर्थं तदवच्छिन्नस्येत्युक्तम् । यद्यपि तस्य सामानाधिकरण्यं तदवच्छिन्नेन व्याप्तिरित्येवोक्तौ अन्यनिष्ठसामानाधिकरण्यस्य हेतुव्याप्तित्वनिरासो भवति । तथापि गुणकर्मान्यत्वविशिष्टसत्त्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकद्रव्यत्वत्वावच्छिन्नद्रव्यत्वसामानाधिकरण्यं सत्त्वमात्रस्य व्याप्तिः इति बुद्धिः स्यात् । सा मा भूत् इत्येतदर्थं तदवच्छिन्नस्येत्युक्तम । ततश्च तदवच्छिन्नेन सह तदवच्छिन्नस्य सामानाधिकरण्यं व्याप्तिः इति लभ्यते इति द्रव्यत्वसामानाधिकरण्यस्य सत्त्वमात्रव्याप्तित्वनिरासः । एवमपि वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकप्रमेयत्वावच्छिन्नधूमसामानाधिकरण्यं वह्नेः धूमत्वावच्छिन्नेन सह व्याप्तिः मा भूत् इत्येवमर्थं तदवच्छिन्नेन सह व्याप्तिः' इत्युक्तम् ॥

तन्न । व्यतिरेकव्याप्तेः धूमादिसाधनव्याप्तित्वाभावप्रसङ्गात् । न हि व्यतिरेकव्याप्तिः हेतुतावच्छेदकावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यत्र भवति तदवच्छिन्नसामानाधिकरण्यरूपा । येन साधनव्याप्तिः स्यात् । व्यतिरेकव्याप्तेः धूमनिष्ठत्वाभावात् न सा धूमव्याप्तिः इति चेन्न । साक्षात्संबन्धेन धूमनिष्ठत्वाभावेऽपि स्वाश्रयवह्न्यभावव्यापकाभावप्रतियोगितासंबन्धेन धूमनिष्ठत्वात् । अत एव 'धूमादिरन्वयव्यतिरेकी' इति प्रवादः । धूमं प्रति व्याप्तित्वाभावे 'व्यतिरेकव्याप्तिः' इति संज्ञाऽभावप्रसङ्गाच्च । साध्याभावं प्रति तस्य अन्वयव्याप्तित्वेन व्यतिरेकव्याप्तित्वाभावात् । अन्यथा धूमाग्न्योरपि व्याप्तिः व्यतिरेकव्याप्तिः स्यात् । तयोरपि स्वाभावव्यतिरेकत्वात् । सप्तमपदार्थयोः व्याप्तिः व्यतिरेकव्याप्तिः इति चेन्न । वह्न्यभावेन धूमाभावसाधनवेलायामपि व्यतिरेकव्याप्तित्वप्रसङ्गात् । 'गौर्न वक्ता पशुत्वात्' इत्यत्र 'न यदेवं न तदेवं' इति व्यतिरेकव्याप्तेः व्यतिरेकव्याप्तित्वाभावप्रसङ्गाच्च । एकस्याभावरूपत्वेऽपि अपरस्य भावत्वात् ।

अन्वयव्याप्तेरेवेदं लक्षणमुच्यते । ततश्च न कोऽपि दोषः इति चेत् । न । व्यतिरेकव्याप्तावव्याप्त्यभावेऽपि व्यधिकरणवृष्टिनिरूपितनदीपूरव्याप्तावव्याप्तेः । तद्व्याप्तेः व्यतिरेकव्याप्तिवत् असामानाधिकरण्यरूपत्वात् ।

किञ्च उपक्रमोपसंहारनिष्ठौत्सर्गिकव्याप्तौ अव्याप्तिः । तत्साध्यस्य शिवादितात्पर्यस्य शिवोप-क्रमविष्णूपसंहारप्रकरणेषु हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नत्वेन तत्सामानाधि-करण्यरूपव्याप्तौ उक्तलक्षणाभावात् । 'न च नोपक्रमादिमात्रं तात्पर्यलिङ्गम्, किंतु विरोध्युपसंहारा-भावविशिष्टं' इति युक्तम् । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंङ्गं तात्पर्य-निर्णये' इति केवलोपक्रमादीनामेव तात्पर्यलिङ्गत्वोक्तेः । उपक्रमोपसंहारादीनां बलाबलचिन्तावैयर्थ्य-प्रसङ्गाच्च ।

एवं 'अन्नं इष्टसाधनं अन्नत्वात्' इति हेतुनिष्ठौत्सर्गिकव्याप्तौ अव्याप्तिः बोध्या ।
न चैवं सति व्यभिचारस्य दूषणत्वं न स्यात् इति वाच्यम् । स्वाभाविकव्यभिचारस्य दूषणत्वेऽपि नैमित्तिकव्यभिचारस्य अदूषणत्वात् ॥

यच्चोक्तम् पक्षधरेण– 'यत्पदं हेतुत्वाभिमतपरम् । प्रतियोग्यसमानाधिकरणः हेतुसमानाधिकरणो योऽत्यन्ताभावः तत्प्रतियोगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छिन्नेन हेतुतावच्छेदकाव-च्छिन्नस्य सामानाधिकरण्यं तदवच्छिन्नस्य हेतुतावच्छेदकावच्छिन्ने व्याप्तिरित्यर्थः । उक्ताभावप्रति-योगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति । साध्यतावच्छेदकावच्छिन्नं न भवति । यस्य साध्यतावच्छे-दकावच्छिन्नतायां हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं अवच्छेदकं न भवति। तादृशसाध्यता-वच्छेदकावच्छिन्नेन हेतुतावच्छेदकावच्छिन्नस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः । इदं च सामानाधिकरण्यं यस्य कस्य चित् येन केन चित् सह न व्याप्तिः । अपि तु हेतुतावच्छेदकावच्छिन्नस्य साध्यतावच्छेदका-वच्छिन्नेन व्याप्तिरितिभावेनोक्तं तदवच्छिन्नस्य हेतुतावच्छेदकावच्छिन्न इति ।

न च धूमानुमानाव्याप्तिः । वह्नित्वावच्छिन्नतायाः धूमसमानाधिकरणतत्तद्वह्न्यत्यन्ताभावप्रति-योगितावच्छेदकैः तत्तद्वह्नित्वैः अवच्छिन्नत्वेन उक्तात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छिन्नेनेत्युक्तलक्षणाभावात् इति वाच्यम् । वह्नित्वावच्छिन्नतायाः अधिकदेशवृत्तित्वेन तत्तद्वह्नित्वानां च न्यूनवृत्तित्वेन अवच्छेद्यावच्छेदकभावाभावात् । अवच्छेद्यान्यूनानतिरिक्तवृत्तित्वस्यैव इह अवच्छेदकशब्दार्थत्वेन विवक्षितत्वात् ।

नापि धूमवान् वह्नेः इत्यत्र अतिव्याप्तिः प्राप्नोति । साध्यतावच्छेदकधूमत्वावच्छिन्नतायाः हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधूमत्वेनैव अवच्छिन्नत्वात् इति ॥

तत्र । धूमानुमानाव्याप्तिः । धूमस्य उक्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छिन्नेन सामानाधिकरण्याभावात् । उक्तात्यन्ताभावप्रतियोगितावच्छेदकानां तत्तद्वह्नित्वानां प्रत्येकं साध्यतावच्छेदकावच्छिन्नतान्यूनवृत्तित्वेन तदवच्छेदकत्वासम्भवेऽपि संभूयान्यूनानतिरिक्तदेशवृत्तित्वेन वह्नित्वावच्छिन्नतायां अवच्छेदकत्वसम्भवात् । न च उक्तात्यन्ताभावप्रतियोगितावच्छेदकानां मध्ये प्रत्येकं एकैकावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छिन्नेन सामानाधिकरण्यं विवक्षितं, तत्तद्वह्नित्वानां सम्भूय वह्नित्वावच्छिन्नावच्छेदकत्वेऽपि प्रत्येकं तथात्वाभावात् नाव्याप्तिरिति वाच्यम् । दण्डिमान् प्रमेयत्वात् इत्यत्र अतिव्याप्तिः । साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकानां तत्तद्दण्डानां प्रत्येकमनवच्छेदकत्वेन अत्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छेदकैः दण्डैः सम्भूयावच्छिन्नेन साध्येन सामानाधिकरण्यसद्भावात् । न च गगनादौ हेतुसमानाधिकरणदण्डिसामान्याभावप्रतियोगितावच्छेदकं परम्परासंबद्धं दण्डत्वमेव. तदेव साध्यतावच्छेदकम् । एवं च सति हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं साध्यतावच्छेदकावच्छिन्नं भवतीति उक्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छिन्नेन सामानाधिकरण्याभावात् नातिव्याप्तिरिति वाच्यम् । धूमानुमानाव्याप्त्यनिस्तारात् । धूमसमानाधिकरणयावद्वह्न्यत्यन्ताभावप्रतियोगितावच्छेदकं वह्नित्वमेव । न तु तत्तद्वह्नित्वानि । तेषां तत्तद्धूमसमानाधिकरणतत्तद्वह्न्यत्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि न्यूनवृत्तित्वेन धूमसमानाधिकरणवह्न्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । एवं च साध्यतावच्छेदकावच्छिन्नं उक्तात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नमेवेति तत्राव्याप्तिरेव । न च एकत्वेनाभावो विशि[शे]ष्यते; ततश्च हेतुसमानाधिकरणैकाभावप्रतियोगितावच्छेदकं न वह्नित्वमिति प्रतियोगितावच्छेदकावच्छिन्नं यदवच्छिन्नं न भवति तदवच्छिन्नेन सामानाधिकरण्यसद्भावात् नाव्याप्तिरिति वाच्यम् ।

एवमपि व्यधिकरणसाध्यकहेतुनिष्ठव्याप्त्यभावव्याप्तिः । औत्सर्गिकव्याप्त्यभावव्याप्तिश्च ॥

**शिरोमणिस्तु-** 'प्रतियोग्यसमानाधिकरण यद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मः तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिः । अस्ति चेदं धूमानुमाने । धूमत्वविशिष्टसमानाधिकरणस्य प्रतियोग्यसमानाधिकरणस्य घटाद्यत्यन्ताभावस्य प्रतियोगितायाः अनवच्छेदकवह्नित्वावच्छिन्नेन येन केनापि समं सामानाधिकरण्यस्य धूमत्वावच्छिन्ने सद्भावात् ।

नास्ति चेदं धूमवान् वह्नेः इत्यत्र । साध्यतावच्छेदकधूमत्वस्य वह्नित्वविशिष्टसमानाधिकरणधूमात्यन्ताभावप्रतियोगितावच्छेदकत्वात् ।

न च अयं प्रदेशः दण्डिमान् तद्याप्यत्वात् इत्यत्र अव्याप्तिः । तत्र साध्यतावच्छेदकतत्तद्दण्डानां हेतुसमानाधिकरणतत्तद्दण्डव्यभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । परम्परासंबन्धेन दण्डत्वस्यैव साध्यतावच्छेदकत्वाङ्गीकारेण उक्तात्यन्ताभावप्रतियोगितावच्छेदकानां दण्डानां साध्यतावच्छेदकत्वानङ्गीकारात् । न चैवं(सति) 'दण्डवान्' इत्यनुमितिः स्यात् न तु दण्डिमान् इति । अनुमितेः साध्यतावच्छेदकप्रकारेण साध्यावगाहित्वनियमादिति वाच्यम् । दण्डिमानित्यनुमितेरपि व्यापकतावच्छेदकप्रकारेण साध्यावगाहित्वात् । साक्षात्संबन्धेन दण्डत्वप्रकारकस्य विज्ञानस्य 'दण्डः' इत्याकारः परम्परासंबन्धेन दण्डत्वप्रकारकस्य 'दण्डी' इत्याकारः इति सुप्रसिद्धत्वात् ।

अयं एतत्संयोगी एतत्त्वात् इत्यादौ साध्यतावच्छेदकस्य उक्तात्यन्ताभावप्रतियोगितावच्छेदकत्वात् अव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेत्यभावविशेषणम् । इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यत्र अव्याप्तिवारणाय यद्रूपविशिष्टसमानाधिकरणेत्यभावविशेषणम् । द्रव्यत्वत्वस्य सत्त्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि हेतुतावच्छेदकावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावात् नाव्याप्तिः ।

अभावस्य प्रतियोग्यसमानाधिकरण्यं च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसामानाधिकरण्यं बोध्यम् । एतेन भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् इत्यत्र अतिव्याप्तिः निरस्ता । तत्र मूर्तत्वरूप हेतुसमानाधिकरणस्य साध्यतावच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नभूतत्वमूर्तत्वोभयाभावस्य मूर्तत्वरूपप्रतियोगिसामानाधिकरण्येऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभावेन हेतुसमानाधिकरणाभावेषु (तस्य)संग्राह्यत्वात्, साध्यतावच्छेदकभूतत्वमूर्तत्वोभयत्वस्य उक्ताभावप्रतियोगितावच्छेदकत्वेन लक्षणाभावात् ।

नन्वेवमसंभवः । अभावमात्रस्य प्रतियोगिसमानाधिकरणत्वेन प्रतियोगिव्यधिकरणाभावस्य दुर्लभत्वात् । तथा हि घटाद्यभावा हि स्वसमानाधिकरणाभावान्तरभिन्नाः । अभावप्रतियोगिकाभावधर्मिकभेदश्च अधिकरणस्वरूप एव । अभावप्रतियोगिकाभावधर्मिकभेदरूपातिरिक्ताभावानङ्गीकारात् । ततश्च धूमादिहेतुसमानाधिकरणधूमाभावानां तत्समानाधिकरणाभावाः प्रतियोगिनः । घटाद्यभावात्मकभेदप्रतियोगित्वात् । ततश्च प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति चेत् । न । अभावनिष्ठात्यन्ताभावत्वनिरूपकप्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यस्य प्रतियोग्यसमानाधिकरणपदेन विवक्षितत्वात् । यद्यपि घटाद्यभावस्य पटाद्यभावाः प्रतियोगिनः तथापि न ते घटाद्यभावनिष्ठात्यन्ताभावत्वनिरूपकाः ।

किन्तु अन्योन्याभावत्वनिरूपकाः । एवं च घटाद्यभावानां तादृशप्रतियोगिसामानाधिकरण्येऽपि न विवक्षितप्रतियोग्यसामानाधिकरण्यहानिः । अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्य सत्त्वात् ।

नन्वेवमपि धूमाभाववान् वह्न्यभाववत्त्वात् इत्यभावसाध्यकसद्धेतुव्याप्तावव्याप्तिः । तथाहि वह्न्यभावसमानाधिकरणो यो घटाभावः तस्य धूमाभावः प्रतियोगी । घटाभावस्य धूमाभाव-प्रतियोगिकभेदात्मकत्वात् । घटाभावः प्रतियोगिव्यधिकरणश्च भवति । तस्य धूमाभावादिरूपप्रति-योगिसामानाधिकरण्येऽपि स्वनिष्ठात्यन्ताभावत्वनिरूपकघटादिरूपप्रतियोग्यसमानाधिकरणत्वात् । एवं च साध्यतावच्छेदकं धूमाभावत्वं हेतुसमानाधिकरणप्रतियोगिव्यधिकरणघटाभावप्रतियोगितावच्छेदकमेव । तदात्मकभेदप्रतियोगितावच्छेदकत्वात् इति चेत् । न । प्रतियोगितानवच्छेदकपदेन अभावनिष्ठात्यन्ता-भावत्वनिरूपकप्रतियोगिनावच्छेदकत्वस्य विवक्षितत्वात् । धूमाभावत्वस्य घटाभावनिष्ठान्योन्या-भावत्वनिरूपकप्रतियोगिनावच्छेदकत्वेऽपि तन्निष्ठात्यन्ताभावत्वनिरूपकप्रतियोगितावच्छेदकत्वाभावेन तदवच्छेदकत्वस्य अदोषत्वात् ॥

नन्वेवमपि ज्ञानवान् द्रव्यत्वात् इत्यत्र अतिव्याप्तिः । द्रव्यत्वरूपहेतुसमानाधिकरणस्य समवायेन ज्ञानाभावस्य विषयतासंबन्धेन प्रतियोगिसमानाधिकरणतया तत्परित्यागेन अभावान्तरग्रहे लक्षणप्राप्तिः इति चेत् । न । अभावविशेषणेन प्रतियोग्यसमानाधिकरणपदेन प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिनो यदधिकरणं तद्वृत्तित्वाभाववैशिष्ट्यस्य उक्तत्वात् । घटादिवृत्तिसमवायावच्छिन्नज्ञानाभावस्य संबन्धान्तरेण प्रतियोगिसामानाधिकरण्येऽपि प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिनो यदधिकरणं तद्वृत्तित्वाभाववैशिष्ट्यरूपप्रतियोगिवैयधिकरण्यस्य सत्त्वेन उक्तलक्षणाभावात् ।

न चैवमपि अयमेतत्संयोगी एतत्त्वात् इत्यत्र अव्याप्तिः साध्याभावस्य हेतुसमानाधिकरणत्वात् । तस्यैव गुणादावधिकरणे प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणवृत्तित्वाभावविशिष्टत्वेन प्रति-योगिव्यधिकरणत्वेन उक्तलक्षणस्य वक्तुमशक्यत्वात् इति वाच्यम् । प्रतियोग्यधिकरणवृत्तित्वाभाव-वैशिष्ट्यस्य हेत्वधिकरणे विवक्षितत्वात् । प्रकृतसाध्याभावस्य च हेत्वनधिकरणे गुणादौ तथात्वेऽपि हेत्वधिकरणे तथात्वाभावात् ।

अथ वा – अयमेतत्संयोगी एतत्त्वात् इत्यत्र अव्याप्तिवारणाय प्रतियोगिव्यधिकरणेति विशेषणं न देयम् । अयमेतत्संयोगी सत्त्वात् इत्यत्र अतिव्याप्तिप्रसञ्जकत्वात् । किन्तु प्रतियोगिवैय्यधिकरण्यावच्छेदकावच्छिन्नत्वं अभावविशेषणं बोद्धव्यम् । न च एवं सति अयमेतत्संयोगी सत्त्वात् इत्यत्र अतिव्याप्तिः भवति । साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन प्रतियोगिवैय्यधिकरण्यासंभवेऽपि प्रतियोगिवैय्यधिकरण्यावच्छेदकगुणत्वाद्यवच्छिन्नत्वेन उक्तलक्षणाभावात् । न चैवमपि अयमेतत्संयोगी एतत्त्वात् इत्यत्र अव्याप्तिः प्राप्नोति हेतुसमानाधिकरणस्य साध्याभावस्य गुणाद्यावधिकरणे प्रतियोगिवैय्यधिकरण्यावच्छेदकावच्छिन्नत्वेन उक्तलक्षणाभावात् इति वाच्यम् । प्रतियोगिवैय्यधिकरण्यावच्छेदकावच्छिन्नत्वस्य हेत्वधिकरणे विवक्षितत्वात् । प्रकृते च साध्याभावस्य अतथात्वात् ।

न च एवमपि वह्निमान् धूमात् इत्यत्र अव्याप्तिः । वह्नित्वस्य प्रतियोगितावच्छेदकत्वात् प्रतियोग्यनधिकरणीभूतहेतुमद्वृत्तिसमवायसंबन्धावच्छिन्नवह्न्यत्यन्ताभावप्रतियोगितावच्छेदकत्वात् इति वाच्यम् । साध्यतावच्छेदकसंबन्धेन हेत्वधिकरणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । तथा च प्रतियोगितावच्छेदकसंबन्धेनात्यन्ताभावत्वनिरूपकप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणीभूते हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणे विद्यमानो योऽभावः तन्निष्ठात्यन्ताभावत्वनिरूपकसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकावच्छिन्नेन हेतुतावच्छेदकावच्छिन्नस्य सामानाधिकरण्यं व्याप्तिरिति निष्कर्षः' इत्याह ॥

**तन्न** ॥ धूमाभाववान् प्रमेयत्वात् इत्यत्र अतिव्याप्तेः । तत्र साध्यतावच्छेदकीभूतधूमाभावत्वस्य हेतुसमानाधिकरणधूमरूपाभावप्रतियोगितावच्छेदकत्वसंभवेऽपि धूमेऽत्यन्ताभावत्वाभावेन तन्निष्ठात्यन्ताभावत्वनिरूपकप्रतियोगितावच्छेदकत्वाभावात् । किञ्च यदा गोत्वं तदा गोप्रागभावः इति व्याप्त्याभासे अतिव्याप्तिः । प्रतियोग्यनधिकरणीभूतहेत्वधिकरणरूपप्रलयकालवृत्तिगवात्यन्ताभावेऽत्यन्ताभावत्वस्य सत्त्वेऽपि गोप्रागभावनिष्ठप्रतियोगिताया हेतुसमानाधिकरणाभाववृत्त्यत्यन्ताभावत्वनिरूपकत्वाभावात् । न हि गोः अत्यन्ताभावं गोप्रागभावात्यन्ताभावत्वेन व्यवहरन्ति । येन प्रागभावनिष्ठा प्रतियोगिता तन्निष्ठात्यन्ताभावत्वनिरूपिका स्यात् ।

अपि च व्यधिकरणसाध्यनिरूपितहेतुव्याप्तावव्याप्तिः । साध्यसामानाधिकरण्यरूपत्वस्यैव अभावात् । [ न च व्यधिकरणयोः व्याप्तिरेव न इति युक्तम् । यत्र सास्नादिः सा गौः इति

व्याप्यव्यापकभावग्रहे सास्नादिना तादात्म्येन गौः सिध्यति । तादात्म्येन गोः व्यतिरेकाच्च सास्नादिव्यतिरेकश्च सिध्यतीति त्वयैव अभिधानात् । ]

अपि च 'अनुमितिहेतुभूतव्याप्तिज्ञाने का व्याप्तिः' इत्यनुमितिहेतुभूतलिङ्गपरामर्शविषय-व्याप्तिस्वरूपस्य पृष्टत्वेन परामर्शविषयव्याप्त्याकारस्यैव वक्तव्यत्वेन तदविषयव्याप्तिस्वरूपनिरूपणायोगः ।

किञ्च हेतुसमानाधिकरणेषु घटाद्यभावेषु 'हेतुः नास्ति' इत्यबाधितप्रतीतेः अभावाधिकरणका-भावस्य धर्मिस्वरूपत्वस्य त्वयाङ्गीकारात्, हेतुसमानाधिकरणाभावानां हेतुप्रतियोगिकत्वेन अत्यन्ता-भावत्वनिरूपकप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणहेतुमद्वृत्त्यभावाप्रसिद्धेः असम्भवः । न च शब्दोऽभिधेयः प्रमेयत्वात् इत्यादौ हेतुसमानाधिकरणाभावेषु प्रमेयत्वाभावाभावात् तेषां प्रमेयत्व-प्रतियोगिकत्वं नास्तीति प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणनिष्ठाः घटाद्य-भावाः सुप्रसिद्धाः इति वाच्यम् । प्रमेयत्वसमानाधिकरणाभावानां प्रमेयत्वप्रतियोगिकत्वाभावेऽपि हेतु-समानाधिकरणव्यतिरेकिधर्मप्रतियोगिकत्वेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावाप्रसिद्धितादवस्थ्यात् ।

यदपि 'हेतुसमानाधिकरणाभावानां स्वसमानाधिकरणाभावान्तरभेदात्मकत्वं अङ्गीकृत्य हेतुसमानाधिकरणसर्वाभावानां प्रतियोगिसामानाधिकरण्येन प्रतियोग्यनधिकरणवृत्त्यभावाप्रसिद्धि-वारणाय अत्यन्ताभावत्वनिरूपकेति प्रतियोगिविशेषणम्' इति ।

तदपि न ॥ त्वन्मते भेदस्य धर्मिस्वरूपत्वायोगात् । अन्यथा घटाभावे स्वभेदात्मकस्तम्भा-भावस्य सत्त्वेन 'घटाभावो घटाभावो न' इति प्रतीतिप्रसङ्गः । न च घटाभावे न स्वभेदात्मक-स्तम्भाभावोऽस्ति । किन्तु स्वात्मक एव । अभाववृत्त्यभावानां धर्मिस्वरूपत्वाङ्गीकारादिति वाच्यम् । स्तम्भाभावस्य धर्मिस्वरूपत्वेन धर्मिभिन्नत्वासंभवेऽपि धर्मिभेदत्वसंभवात् । स्वभेदत्वाभावे तु घटा(द्य) भावनिष्ठस्य स्तम्भाभावस्य स्तम्भाभावत्वमेव न स्यात् । घटाभावसमानाधिकरणस्तम्भाभाव-विलक्षणत्वात् । अभावरूपधर्मिभेदेन अनन्तस्तम्भाद्यभावकल्पनापाताच्च । अत एव अत्यन्ताभावत्व-निरूपकप्रतियोगितानवच्छेदकेत्यत्रापि अत्यन्ताभावत्वनिरूपकेति विशेषणवैयर्थ्यम् ।

साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिनि हेतुमति विद्यमानो योऽभावः तत्प्रतियोगितान-वच्छेदकावच्छिन्नसाध्यसंबन्धित्वं व्याप्तिः इति **शिरोमण्युक्तं लक्षणान्तरम् ।**

अस्ति चेदं धूमानुमाने । साध्यतावच्छेदकसंबन्धेन संयोगेन प्रतियोग्यसंबन्धिनि महानसे विद्यमानो यो घटाभावः तत्प्रतियोगितायां अनवच्छेदकेन साध्यतावच्छेदकेन अवच्छिन्नं यत् साध्यं वह्निः, धूमे तत्संबन्धित्वसद्भावात् ।

नास्ति चेदं धूमवान् वह्नेः इत्यत्र । वह्नेः साध्यतावच्छेदकसंबन्धेन संयोगेन प्रतियोग्यसंबन्धिनि वह्निमत्ययोगोलके विद्यमानो यो धूमाभावः तत्प्रतियोगितावच्छेदकधूमत्वावच्छिन्नधूमसंबन्धित्वात् ।

अस्मिंश्च पक्षे धर्मिणोरपि व्याप्यव्यापकभावः सिध्यति । यदा धर्मिणोः व्याप्यव्यापकभावः तदा हेतुतावच्छेदकसंबन्धः साध्यतावच्छेदकसंबन्धश्च तादात्म्यसंबन्धः । एवं च तादात्म्यसंबन्धेन हेतुसंबन्धिनि महानसे वर्तमानो यो घटान्योन्याभावः तस्य तादात्म्यसंबन्धावच्छिन्ना या प्रतियोगिता घटादिनिष्ठा तदनवच्छेदकवह्निमत्वावच्छिन्नेन वह्निमता तादात्म्यसंबन्धेन धूमवतः संबन्धित्वात् । धर्मयोः व्याप्यव्यापकभावः 'यत्र धूमः तत्र वह्निः' इत्येवमाकारेण गृह्यते । धर्मिणोः व्याप्यव्यापकभावस्तु 'यो धूमवान् सः वह्निमान्' (इत्येवं) इति गृह्यते । एवं धर्मस्य व्याप्यत्वं धर्मिणो व्यापकत्वं धर्मिणो व्याप्यत्वं धर्मस्य व्यापकत्वं चाभिमतम् । अत एव 'यत्र सास्नादिः सा गौः' इति तादात्म्येन व्यापकत्वग्रहे सास्नादिना लिङ्गेन तादात्म्येन गौः सिध्यति । एवं तादात्म्येन गोव्यतिरेकात् समवायेन सास्नादिव्यतिरेकश्च सिध्यति । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात्' इति ।

तन्न ॥ औत्सर्गिकव्याप्तावव्याप्तेः । साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिनि हेतुमति वर्तमानसाध्याभावप्रतियोगितायाः साध्यतावच्छेदकावच्छिन्नत्वात् । न हि इष्टसाधनत्वस्वरूपं साध्यतावच्छेदकं अन्नत्वरूपहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं नेति संभवति । विषसम्पृक्तान्ने इष्टसाधनत्वाभावदर्शनात् । महाकालः विशेषणताविशेषेण घटवान् कालपरिमाणात् इत्यत्र अव्याप्तेश्च । न हि साध्यतावच्छेदकेन कालिकसंबन्धेन प्रतियोग्यसम्बन्धी हेतुमानत्र संभवति । हेत्वधिकरणीभूतमहाकालस्य कालिकसम्बन्धेन सर्वसम्बन्धित्वात् । ततश्च कालिकसंबन्धेन प्रतियोग्यसम्बन्धिहेतुमन्निष्ठाभावाप्रसिद्ध्या तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसंबन्धित्वस्य अप्रसिद्ध्याऽव्याप्तिरिति ।

यदत्रोक्तम्– साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व हेत्वधिकरणीभूतत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्यैव विवक्षितत्वात् न दोष इति । तस्यार्थः । साध्यता-

वच्छेदकसंबन्धसामान्ये हेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्यैव हेतुसमानाधिकरणाभावनिष्ठप्रतियोगि-वैय्यधिकरण्यरूपत्वेन विवक्षितत्वादिति ।

इदमुक्तं भवति — साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमन्निष्ठाभावप्रतियोगितान-वच्छेदकावच्छिन्नसाध्यसंबन्धित्वमित्युक्तव्याप्तिलक्षणे साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धीति हेत्वधिकरणविशेषणं हेत्वधिकरणस्य साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वलाभाय नोपात्तम् । येन महाकालः जगदाधारतासंबन्धेन घटवान् कालपरिमाणात् इत्यत्र साध्यतावच्छेदकीभूतजगदाधारता-(नियामकीभूत)संबन्धेन सर्वस्यापि काले सत्त्वात् साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुमद-प्रसिध्या अव्याप्तिलक्षणदोषः स्यात् । किन्तु हेत्वधिकरणनिष्ठाभावस्य साध्यप्रतियोगिकत्वे सति साध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्याभावरूपप्रतियोगिवैय्यधिकरण्यलाभायोपात्तम् ।

नन्वेवं तर्हि हेतुसमानाधिकरणाभावे साध्यप्रतियोगिकत्वे सति साध्यसामानाधिकरण्याभावस्यैव प्रतियोगिवैय्यधिकरण्यशब्दार्थत्वेन विवक्षितत्वात् इति वक्तव्यम् । तत्कथं साध्यतावच्छेदकसंबन्ध-सामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्यैव विवक्षितत्वात् इत्युक्तमिति चेन्न । साध्यतावच्छेदकसंबन्धसामान्ये उभयाभावोक्त्या हेतुसमानाधिकरणा-भावेषु साध्यप्रतियोगिकत्वे सति साध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्याभावरूपार्थलाभात् । तथाहि–यदाहि [च] साध्यतावच्छेदकसंबन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगिप्रतियोगिकत्वं भवति तदा हेतुसमानाधिकरणाभावस्य साध्यप्रतियोगिकत्वं भवति । तेन विना तदयोगात् । यदा च साध्य-तावच्छेदकसंबन्धसामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्याभावो भवति तदा हेतुसमा-नाधिकरणाभावस्य साध्यसामानाधिकरण्याभावो भवति । न हि साध्यसंबन्धस्य हेत्वधिकरणीभूतयद्व्यक्त्यनु-योगिकत्वं, तस्यां व्यक्तौ साध्यमस्तीति संभवति । साध्यसंबन्धो नास्ति साध्यमस्ति इत्यस्य व्याहतत्वात् । साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्व-सामान्योभयाभावः इति प्रतियोगिवैय्यधिकरण्यलक्षणे साध्यतावच्छेदकसंबन्धसामान्य इति सामान्यपदं उत्पत्तिकालावच्छेदेन पर्वतवृत्तिवह्न्यभावस्य प्रतियोगिवैय्यधिकरण्यपरिहाराय । अन्यथा महानसीय-वह्निसंयोगरूपसाध्यतावच्छेदकसंबन्धस्य निरुक्तप्रतियोगिप्रतियोगिकत्वेऽपि हेत्वधिकरणीभूतपर्वतरूप-यत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावेन उभयाभावसद्भावात्प्रतियोगिवैय्यधिकरण्यं स्यात् । न च अस्त्विति

वाच्यम् । धूमानुमाने व्याप्तिलक्षणस्य अव्याप्तिप्रसङ्गात् । सामान्यग्रहणे पुनः क्रियमाणे न दोषो भवति । महानसीयवह्निरूपसाध्यसंबन्धविशेषे निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावसद्भावेऽपि साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तोभयाभावाभावेन उत्पत्तिकालावच्छिन्नपर्वतवृत्तिवह्निसामान्याभावस्य प्रतियोगिवैय्यधिकरण्याभावात् ।

उक्तसंबन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावः प्रतियोगिवैय्यधिकरण्यं इत्युक्तौ गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्र जातिसमानाधिकरणः साध्याभावः प्रतियोगिव्यधिकरणो न स्यात् । गुणकर्मान्यत्वविशिष्टसत्तासमवायरूपे साध्यतावच्छेदकसंबन्धे हेतुसमानाधिकरणाभावप्रतियोगिप्रतियोगिकत्वस्य हेत्वधिकरणीभूतसर्वव्यक्त्यनुयोगिकत्वस्य च सत्त्वेनोभयाभावाभावात् । ततश्च व्याप्तिलक्षणस्य तत्रातिव्याप्तिः स्यात् । तद्वारणाय हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिप्रतियोगिकत्वमुक्तम् । न चैवं सत्युक्तदोषो भवति । साध्यतावच्छेदकसंबन्धस्य समवायस्यैकत्वेन यावद्धेत्वधिकरणव्यक्त्यनुयोगिकत्वस्य तत्र सद्भावेऽपि हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नसत्तानिरूपितत्वविशिष्टेऽपि समवाये हेत्वधिकरणीभूतयावद्व्यक्त्यनुयोगिकत्वाभावेन उभयाभावसंभवेन साध्याभावस्य प्रतियोगिवैय्यधिकरण्यलाभात् । निरुक्तसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वाभावः प्रतियोगिवैय्यधिकरण्यम् एतावन्मात्रोक्तौ धूमवान् वह्नेरित्यत्र हेतुसमानाधिकरणसाध्याभावस्य प्रतियोगिवैय्यधिकरण्यं न स्यात् । साध्यसंबन्धे निरुक्तप्रतियोगिप्रतियोगिकत्वस्य विद्यमानत्वेन तदभावाभावात् । ततश्च व्याप्तिलक्षणस्य तत्रातिव्याप्तिः स्यात् । तत्परिहाराय हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्यं प्रतियोगिकोटौ निवेशितम् । एवं सति न दोषो भवति । धूमसंबन्धे पूर्वदलसद्भावेऽपि उत्तरदलाभावात् उभयाभावसंभवेन प्रतियोगिवैय्यधिकरण्यसंभवात् । उत्तरदले सामान्यपदपरित्यागे तु वह्निमान् धूमात् इत्यत्र उत्पत्तिकालावच्छेदेन पर्वतवृत्तिवह्निसामान्यभावस्य प्रतियोगिवैय्यधिकरण्यं स्यात् । वह्निसंबन्धे निरुक्तप्रतियोगिप्रतियोगिकत्वसद्भावेऽपि तथा हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसद्भावेऽपि घटसंयोगवृत्ति यत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावेन स्ववृत्तिहेत्वधिकरणनिष्ठप्रतियोगिप्रतियोगिकत्वघटसंयोगनिष्ठयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावसंभवात् । ततश्च व्याप्तिलक्षणस्य अव्याप्तिः स्यात् । सामान्यग्रहणे क्रियमाणे न दोषो भवति । सर्वव्यक्त्यनुयोगिकत्वसद्भावेनयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्याभावासंभवात् । एवं पूर्वदलेऽपि सामान्यपदमूह्यम् । अन्यथा उत्पत्तिकालावच्छिन्नपर्वतवृत्तिवह्निसामान्याभावस्यापिप्रतियोगिवैय्यधिकरण्यं स्यात् । साध्यसंयोगे दलद्वयसद्भावेऽपि स्ववृत्ति-

हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्यविभागनिष्ठनिरुक्तप्रतियोगिप्रतियोगिकत्वोभयाभाव-संभवात् । ततश्च धूमानुमाने लक्षणस्यातिव्याप्तिः स्यात् । पूर्वदले सामान्यपदग्रहणे क्रियमाणे न दोषो भवति । सामान्याभावासंभवादिति सर्वं सार्थकम् ।

ततश्च हेतुसमानाधिकरणः साध्यप्रतियोगिकत्वे सति साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्याभाववान् योऽभावः, तत्प्रतियोगितानवच्छेदकावच्छिन्नसाध्यसंबन्धित्वं व्याप्तिरिति लक्षणनिष्कर्षः । साधनसमानाधिकरणाभावानां साध्यप्रतियोगिकत्वे सति साध्यसामानाधिकरण्याभावो हि द्वेधा भवति । क्वचिद्विशेषणाभावेन क्वचिद्विशेष्याभावेन । सद्धेतुसमानाधिकरणाभावेषु साध्यसामानाधिकरण्यरूपविशेष्यसद्भावेऽपि साध्यप्रतियोगिकत्वरूपविशेषणाभावाद्विशिष्टाभावः । अयमेव तेषां प्रतियोगिवैयधिकरण्यशब्दार्थत्वेन विवक्षितः । एतादृशाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसंबन्धित्वं धूमाद्यनुमानेषु संभवति । असद्धेतुसमानाधिकरणाभावेषु साध्यप्रतियोगिकत्वरूपविशेषणसद्भावेऽपि व्यभिचाराधिकरणे साध्यसामानाधिकरण्यरूपविशेष्याभावाद्विशिष्टाभावो भवति । ततश्च हेतुसमानाधिकरणः प्रतियोगिव्यधिकरणः साध्याभाव एव भवतीति तत्र तत्प्रतियोगितावच्छेदकावच्छिन्नसाध्यसंबन्धित्वं प्राप्तमिति न तत्राव्याप्तिः ।

न चैवं सति महाकालः घटवान् महाकालपरिमाणादित्यत्र अव्याप्तिः भवति । कालपरिमाणसमानाधिकरणगगनाभावे साध्यप्रतियोगिकत्वरूपविशेषणाभावात्साध्यप्रतियोगिकत्वे सति साध्यसामानाधिकरण्यरूपविशिष्टाभावप्राप्त्या गगनाभावस्यैव प्रतियोगिव्यधिकरणत्वेन तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसंबन्धित्वस्य कालपरिमाणे सत्त्वात् । अत्र हेतुसमानाधिकरणः साध्यप्रतियोगिकत्वे सति साध्यसामानाधिकरण्याभाववान् योऽभावः तत्प्रतियोगितानवच्छेदकेत्याद्युक्तौ ज्ञानवान् द्रव्यत्वादित्यत्रातिव्याप्तिः स्यात् । द्रव्यत्वसमानाधिकरणज्ञानाभावस्य साध्यप्रतियोगिकत्वे सति विषयतासंबन्धेन ज्ञानसमानाधिकरणत्वात् उभयाभावशून्यत्वेन त्यागे हेतुसमानाधिकरणाभावतया घटाद्यभावस्य ग्रहे च सति साध्यतावच्छेदकीभूतज्ञानत्वस्य तत्प्रतियोगितानवच्छेदकत्वप्राप्तेः । अतः साध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्याभाववान् इत्युक्तम् । एवं च (कृत्वा) न दोषो भवति । हेतुसमानाधिकरणस्य ज्ञानाभावस्य विषयतासंबन्धेन ज्ञानसमानाधिकरणत्वेऽपि साध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्याभावात् उभयाभावसंभवेन हेतुसमानाधिकरणाभावतया साध्याभावस्यैव विवक्षणीयतया तत्प्रतियोगितानवच्छेदकावच्छिन्नसाध्यसंबन्धित्वाभावात् ।

एवमपि गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिः प्राप्नोति । जातिसमानाधिकरणगुणकर्मान्यत्वविशिष्टसत्ताभावस्य साध्यप्रतियोगिकत्वस्य साध्यतावच्छेदकसंबन्धेन सत्तारूपसाध्यसामानाधिकरण्यस्य च सद्भावेनोभयाभावात्, तं परित्यज्य अन्यस्यैव हेतुसमानाधिकरणाभावस्य ग्रहणे तत्प्रतियोगितानवच्छेदकावच्छिन्नसाध्यसंबन्धित्वस्य हेतौ सुवचत्वात् । तत्परिहाराय साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्याभाववानित्युक्तम् । एवं च कृत्वा न दोषो भवति । हेतुसमानाधिकरणसाध्याभावस्य साध्यप्रतियोगिकत्वेऽपि साध्यतावच्छेदकसंबन्धेन साध्यसामानाधिकरण्येऽपि साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्याभावेन उभयाभावसम्भवात् हेतुसमानाधिकरणाभावतया साध्याभावस्यैव विवक्षायां तत्प्रतियोगितानवच्छेदकावच्छिन्नसाध्यसम्बन्धित्वालाभादिति ।

तन्न । अन्नं इष्टसाधनं अन्नत्वात् इत्यादावव्याप्त्यपरिहारात् । विषसम्पर्केण व्यभिचाराधिकरणे हेतुसमानाधिकरणस्य इष्टसाधनत्वरूपसाध्याभावस्य साध्यप्रतियोगिकत्वे सति साध्यसामानाधिकरण्यरहितस्य यत्प्रतियोगितावच्छेदकं तदवच्छिन्नसाध्यसम्बन्धित्वस्य अन्नत्वरूपहेतौ सद्भावात् ।

किञ्च हेतुसमानाधिकरणयत्किञ्चिदभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदकस्य विवक्षितमुत यावदभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदकस्य विवक्षितम् । आद्ये धूमवान् वन्हेरित्यत्रातिव्याप्तिः । धूमत्वस्य घटाभावप्रतियोगितानवच्छेदकत्वात् । द्वितीये दुर्ज्ञेयता । हेतुसमानाधिकरणयावदभावानां साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वस्य पुरुषायुषाऽपि ज्ञातुमशक्यत्वात् ।

साध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणः साध्याभावो हेतुसमानाधिकरणो न इति ज्ञाने सति हेतुसमानाधिकरणो यो योऽभावो भविष्यति तस्य (तस्य) सर्वस्य साध्यतावच्छेदकं प्रतियोगितानवच्छेदकं इति बुद्धिः भवेदेवेति चेन्न । केवलान्वयिन्युक्तज्ञानासंभवेन साध्यतावच्छेदके निरुक्ताभावप्रतियोगितानवच्छेदकत्वस्य दुर्ज्ञेयत्वानिवारणात् ।

किञ्च हेतुसमानाधिकरणसाध्यप्रतियोगिकत्वविशिष्टसाध्यसामानाधिकरण्याभाववदभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसामानाधिकरण्यस्य घटादिसाधारणत्वादुक्तलक्षणस्य घटादावतिव्याप्तिः । न हि उक्तवह्निसामानाधिकरण्यं धूम एवास्ति न घटादाविति वक्तुं शक्यम् । येन तत्रातिव्याप्तिर्न स्यात् न च उक्ताभावप्रतियोगितानवच्छेदकावच्छिन्नेन सह हेतुतावच्छेदकावच्छिन्नस्य सामानाधिकरण्यं तदवच्छिन्नेन तदवच्छिन्नस्य व्याप्तिरिति वाच्यम् । घटादावतिव्याप्त्यवारणात् ।

व्याप्तित्वेन त्वयोक्तस्य तदवच्छिन्ननिष्ठतदवच्छिन्ननिरूपितसामानाधिकरण्यस्य घटादौ सद्भावात् । इदं सामानाधिकरण्यव्यक्तिः तत्र नास्तीति चेन्न । एतत्सजातीयव्यक्तिसद्भावात् । अन्यथा शृङ्गस्य गोलक्षणत्वविवक्षायां अतिव्याप्तिः न स्यात् । न च न निरुक्तवह्निनिरूपितसामानाधिकरण्यमात्रं व्याप्तित्वेन विवक्षितम् किंतु निरुक्तवह्निनिरूपितधूमनिष्ठसामानाधिकरण्यव्यक्तिविशेषो लक्षणत्वेन विवक्षितः । ततश्च नातिव्याप्तिरिति वाच्यम् । हेतुसमानाधिकरणात्यन्ताभावेत्यादि विशेषणवैयर्थ्यात् । साध्यनिरूपितसामानाधिकरण्यव्यक्तिविशेषो व्याप्तिरित्युक्तौ अतिव्याप्तेरभावात् ।

निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यं इति शिरोमण्युक्तं व्यापकलक्षणम् । तस्यार्थः -- प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणे हेतुमति विद्यमानाः येऽभावाः तत्प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व–यद्धर्मावच्छिन्नत्वोभयाभावः तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नव्यापकत्वमिति । अस्ति चेदं धूमव्यापके वह्नौ । प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यनधिकरणे हेतुमति महानसादौ विद्यमानाः ये घटाद्यभावाः तत्प्रतियोगितासु घटादिनिष्ठासु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेऽपि साध्यतावच्छेदकावच्छिन्नत्वाभावेन उभयाभावसद्भावात् । नास्ति चेदं वह्न्यव्यापके धूमे । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणे व्यभिचाराधिकरणे वर्तमानस्य धूमाभावस्य प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य साध्यतावच्छेदकावच्छिन्नत्वस्य च सत्त्वेन उभयाभावाभावात् ।

अयमेतत्संयोगी एतत्त्वादित्यत्र एतत्संयोगस्य व्यापकत्वसिद्धये प्रतियोग्यनधिकरणेति हेतुमद्विशेषणम् । अन्यथा हेतुमन्निष्ठैतत्संयोगाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोः सद्भावेन उभयाभावाभावात् तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य एतत्संयोगस्य व्यापकत्वं न स्यात् ।

एवमपि गुणकर्मान्यत्वविशिष्टसत्तायाः जातिव्यापकत्वं प्राप्नोति । जातिसमानाधिकरणस्य गुणकर्मान्यत्वविशिष्टसत्ताऽभावस्य सत्तारूपप्रतियोग्यधिकरणहेत्वधिकरणवृत्तित्वेन तत्परित्यागेन घटाभावस्य च ग्रहे तत्प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वयोः अभावेन उभयाभावसद्भावात् । तन्मा भूदित्येतदर्थं निरुक्तेति प्रतियोगिविशेषणम् । एवं च कृत्वा न

दोषो भवति । जात्यधिकरणवृत्तिगुणकर्मान्यत्वविशिष्टसत्ताभावस्य प्रतियोग्यधिकरणहेतुमद्वृत्तित्वेऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणहेतुमन्निष्ठत्वात् । हेतुमन्निष्ठाभावत्वेन तस्यैव विवक्षायां तत्प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वयोः सद्भावेनोभयाभावाभावात् ।

हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावमात्रविवक्षायां वह्नेरपि धूमव्यापकत्वं न प्राप्नोति । संयोगेन हेतुसमानाधिकरणघटाद्यभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावाभावात् । हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वाभावमात्रविवक्षायां सास्नादिरूपधर्मं प्रति गोरूपधर्मिणो व्यापकत्वं न स्यात् । सास्नादिसमानाधिकरणात्यन्ताभावप्रतियोगितायां गोत्वस्यावच्छेदकत्वेन साध्यतावच्छेदकधर्मावच्छिन्नत्वाभावाभावात् । तन्मा भूदित्येव(तद)मर्थं यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाव इत्युक्तम् । सास्नादिसमानाधिकरणात्यन्ताभावप्रतियोगितायां गोत्वरूपसाध्यतावच्छेदकधर्मावच्छिन्नत्वेऽपि तादात्म्यरूपसंबन्धावच्छिन्नत्वाभावादुभयाभावसद्भावेन गोर्व्यापकत्वं भवति ।

प्रतियोगितासामान्ये इत्युक्तिस्तु धूमस्य वह्निव्यापकतानिरासाय । अन्यथा वह्निसमानाधिकरणघटाभावप्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावसद्भावात् धूमोऽपि वह्निव्यापकः स्यात् । सामान्यग्रहणे पुनः क्रियमाणे न दोषो भवति । घटाभावप्रतियोगितायां उभयाभावसद्भावेऽपि धूमाभावप्रतियोगितायां तदभावादिति ॥

तन्न ॥ प्रमेयधूमवान् वह्नेरित्यत्र प्रमेयधूमस्य वह्निव्यापकत्वप्रसङ्गात् । हेतुसमानाधिकरणप्रतियोगिव्यधिकरणसाध्याभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसद्भावेऽपि साध्यतावच्छेदकप्रमेयधूमत्वावच्छिन्नत्वाभावेनोभयाभावसद्भावात् । न हि लघुधर्मस्य अवच्छेदकत्वे संभवति गुरुभूतस्यावच्छेदकत्वं संभवति । येन प्रमेयधूमत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं स्यात् ।

ननु गुरुधर्मस्य वास्तवावच्छेदकत्वाभावेऽपि पारिभाषिकं तावदवच्छेदकत्वमस्ति । पारिभाषिकं चावच्छेदकत्वं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वम् । न चैवं वह्नित्वस्यापि हेतुसमानाधिकरणात्यन्ता-

भावप्रतियोगितावच्छेदकतापत्तिः । वह्नित्वस्य धूमसमानाधिकरणतार्णातार्णवह्निगतद्वित्वावच्छिन्नाभावप्रतियोगितावच्छेदकद्वित्वानतिरिक्तवृत्तित्वात् इति वाच्यम् । पारिभाषिकावच्छेदकसमानवृत्तिकप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् । पारिभाषिकावच्छेदकसमानवृत्तिकत्वं च तत्पर्याप्त्यधिकरणपर्याप्तवृत्तिकत्वं विवक्षितम् । पारिभाषिकमवच्छेदकं व्यासज्यवृत्ति चेत् प्रतियोगितावच्छेदकमपि व्यासज्यवृत्त्यैव ग्राह्यम् । न चेत् व्यासज्यवृत्ति, तदा अवच्छेदकमप्यव्यासज्यवृत्त्यैव ग्राह्यमिति यावत् । एवं च कृत्वा न दोषो भवति । तार्णातार्णवह्निवृत्तिद्वित्वस्य व्यासज्यवृत्तित्वेन वह्नित्वस्य चाव्यासज्यवृत्तित्वेन द्वित्वस्य वह्नित्वसमानवृत्तिकत्वाभावेन वह्नित्वस्य पारिभाषिकावच्छेदकत्वालाभात् । पर्याप्तिश्च अयमेको घटः इमौ द्वौ इति प्रतीतिसाक्षिकः संबन्धविशेष एव । पारिभाषिकावच्छेदकलक्षणप्रविष्टं चावच्छेदकत्वं स्वरूपसंबन्धविशेषः । एवं च प्रमेयधूमवान् वह्नेरित्यत्र गुरुधर्मावच्छिन्नस्य प्रमेयधूमस्य न वह्निव्यापकत्वं प्राप्नोति । हेतुसमानाधिकरणाभावप्रतियोगितायां यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वयोः सद्भावेन उभयाभावाभावात् । गुरुधर्मस्य वास्तवावच्छेदकत्वाभावेऽपि पारिभाषिकावच्छेदकत्वसद्भावादिति चेत् । न । सत्तावान् जातेरित्यत्र सत्तायाः (सत्त्वस्य) जात्यव्यापकत्वापातात् । सत्तात्वस्य जातिमन्निष्ठगुणकर्मान्यत्वविशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वतुल्यवृत्तिकत्वेन हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वात् । न हि सत्तात्वं गुणकर्मान्यत्वविशिष्टसत्तात्वरूपप्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणवृत्ति येन तस्य प्रतियोगितानवच्छेदकत्वं न स्यात् ।

ननु प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वं नाम न प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणत्वाभावो विवक्षितः । येन सत्ता जातिव्यापिका न स्यात् । किंनाम तदवच्छिन्नप्रतियोगिताकाभाववदसंबद्धत्वविशिष्टसामान्यकत्वं विवक्षितम् । तस्यार्थः– तत् प्रतियोगितावच्छेदकं; तेन अवच्छिन्ना या प्रतियोगिता, तत्को योऽभावः, तद्वत्यसंबद्धं स्वविशिष्टसामान्यं तद्वृत्तित्वं इति । तदवच्छिन्नप्रतियोगिताकाभाववत्सम्बद्धत्वसामान्याभाववद्वृत्तित्वमिति यावत् । न चैवं सति सत्तायाः जातिव्यापकत्वाभावः प्राप्नोति । सत्तात्वस्य गुणकर्मान्यत्वविशिष्टसत्तात्वाधिकरणभिन्नाधिकरणवृत्तित्वाभावेऽपि गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभाववति गुणादौ संबद्धस्वविशिष्टसामान्यकत्वेन असंबद्धस्वविशिष्टसामान्यकत्वरूपतदनतिरिक्तवृत्तित्वाभावात् ।

अत्र अभाववत्संबद्धत्वसामान्येति सामान्यग्रहणं वह्नित्वस्य धूमसमानाधिकरणमहानसीयवह्न्यत्यन्ताभावप्रतियोगितावच्छेदकत्ववारणाय । अन्यथा उक्ताभावप्रतियोगितावच्छेदकमहानसीय-

वह्नित्वावच्छिन्नप्रतियोगिताकाभाववति महाह्रदादौ असंबद्धत्वविशिष्टसामान्यकत्वात् वह्नित्वं तदवच्छेदकं स्यात् । अभाववत्संबद्धत्वसामान्याभाववद्वृत्तित्वविवक्षायां पुनर्न दोषो भवति । वह्नित्वाधिकरणपर्वतीय-वह्न्यादौ महानसीयवह्नित्वावच्छिन्नाभाववन्महाह्रदसंबद्धत्वाभावसद्भावेऽपि तदभाववत्पर्वतादिसंबद्धत्व-सद्भावेन तदभाववत्संबद्धत्वसामान्याभावाभावात् ।

एवमपि पुनर्वह्नित्वस्य धूमसमानाधिकरणमहानसीयवह्न्यत्यन्ताभावप्रतियोगितावच्छेदकत्वं प्राप्नोति । धूमसमानाधिकरणमहानसीयवह्न्यभाववत्संबद्धत्वसामान्याभाववन्महानसीयवह्निवृत्तित्वात् । अतः उक्ताभाववत्संबद्धत्वसामान्याभाववद्यावत्स्वाधिकरणवृत्तित्वं तदनतिरिक्तवृत्तिशब्दार्थत्वेन विवक्षितम् । एवं च कृत्वा न दोषो भवति । वह्नित्वाधिकरणेषु कस्यचिन्महानसीयवह्नेः महानसीयत्वावच्छिन्न-प्रतियोगिताकाभाववत्संबद्धत्वसामान्याभाववत्त्वेऽपि यावदधिकरणानां अतथात्वादिति चेत् । न । धूमत्वस्य वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावापातात् । संयोगेन वह्निसमानाधि-करणात्यन्ताभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नधूमाभाववति धूमावयवे समवायसंबन्धेन धूमस्य वर्तमानत्वेन उक्ताभाववत्संबद्धत्वसामान्याभाववद्वृत्तित्वरूपप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वाभावात् ।

न च साध्यतावच्छेदकसंबन्धेन उक्ताभाववत्संबद्धत्वसामान्याभाववद्यावत्स्वाधिकरणवृत्तित्वं विवक्षितम् । धूमश्च धूमाभाववति स्वावयवे समवायेन सन्नपि साध्यतावच्छेदकसंबन्धेन धूमाभाववति साध्यतावच्छेदकसंबन्धेन सम्बद्धत्वसामान्याभाववानेवेति धूमत्वस्य पारिभाषिकावच्छेदकत्वं न व्याहन्यते इति वाच्यम् । पारिभाषिकप्रतियोगितावच्छेदकविवक्षाप्रयोजनाभावेन तत्सामञ्जस्याय साध्यतावच्छेदक-संबन्धेन उक्ताभाववत्सम्बद्धत्वसामान्याभाववद्वृत्तित्वमिति विवक्षाऽयोगात् ।

न च प्रमेयधूमवान् वह्नेः इत्यत्र प्रमेयधूमत्वस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगिता-वच्छेदकत्वसिद्धये पारिभाषिकमवच्छेदकत्वं विवक्षितमिति वाच्यम् । गुरुधर्मस्य अभावप्रतियोगिता-वच्छेदकत्वाभावात् साध्यतावच्छेदकत्वस्याप्यभावेन प्रमेयधूमत्वावच्छिन्नस्य वह्निव्यापकत्वप्रसक्त्यभावेन तद्व्यापकताविघटनाय तस्य हेतुसमानाधिकरणाभावं प्रति पारिभाषिकप्रतियोगितावच्छेदकत्वस्वीकार-वैयर्थ्यात् । न हि गुरुधर्मः अभावप्रतियोगितावच्छेदको न भवति; भवति च व्यापकतावच्छेदक इति राज्ञामाज्ञाऽस्ति । येन अभावप्रतियोगितानवच्छेदकोऽपि गुरुधर्मः लघुधर्मलाभेऽपि व्यापकता-वच्छेदकः स्यात् ।

नापि वक्तोद्देशसिद्धये गुरुधर्मं अवच्छेदकं करोति इति गुरुधर्मस्यावच्छेदकत्वमिति युक्तम् । स्वाभिमतसिद्धये प्रमेयो घटो नास्तीति अभावस्य प्रमेयघटत्वावच्छिन्नप्रतियोगिकतया[ताया] निरूप्यमाणतया गुरुधर्मस्य अभावप्रतियोगितावच्छेदकत्वापातात् ।

अत एव स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसामानाधिकरण्यमिति प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वनिर्वचनमपास्तम् । उक्तरीत्या पारिभाषिकप्रतियोगितावच्छेदकत्वविवक्षावैयर्थ्यात् ।

यत्तु 'स्वविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यं' इति तस्यार्थः । 'हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितायां साध्यतावच्छेदकविशिष्टं यत्साध्यं तत्संबन्धिनिष्ठो योऽभावः साध्यसमानाधिकरणाभावः तत्प्रतियोगितायां यदनवच्छेदकं तदवच्छेद्यत्वमेव साध्यतावच्छेदकस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वं बोध्यं' इति । ततश्च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां यत्संबन्धावच्छिन्नत्वसाध्यतावच्छेदकत्वाभिमतयद्धर्मविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्व-उभयाभावः तेन संबन्धेन तद्धर्मविशिष्टस्य व्यापकत्वं इति व्यापकलक्षणं पर्यवसन्नम् ।

अस्ति चेदं प्रमेयवह्निमान् धूमात् इत्यत्र । धूमसमानाधिकरणात्यन्ताभावप्रतियोगिघटनिष्ठप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि प्रमेयवह्नित्वविशिष्टप्रमेयवह्निसमानाधिकरणघटाद्यभावप्रतियोगितावच्छेदकावच्छेद्यत्वस्यैव सत्त्वेन प्रतियोगितानवच्छेदकावच्छेद्यत्वाभावादुभयाभावप्राप्तेः ।

नास्ति चेदं प्रमेयधूमवान् वह्नेः इत्यत्र । अयोगोलके वह्निसमानाधिकरणात्यन्ताभावप्रतियोगिधूमनिष्ठप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्ववत्प्रमेयधूमरूपसाध्यसमानाधिकरणघटाद्यभावप्रतियोगितानवच्छेदकधूमत्वावच्छेद्यत्वस्य सत्त्वेन उभयाभावाभावात् ।

सदनुमानेषु हेतुसमानाधिकरणयावदभावानां साध्यसमानाधिकरणत्वेन हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छेद्यत्वं भवति इति स्वविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावः संपद्यते । असदनुमाने तु हेतुसमानाधिकरणाभावस्य साध्यसामानाधिकरण्यनियमाभावात् व्यभिचाराधिकरणवृत्तिहेतुसमानाधिकरणसाध्या-

भावप्रतियोगितायां यत्संबन्धावच्छिन्नत्वस्य साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वस्य सत्त्वेन उभयाभावो न लभ्यते इति विवेकः' इति ।

**तन्न** । निरुक्तप्रतियोग्यनधिकरणेति विशेषणवैयर्थ्यात् । अयमेतत्संयोगी एतत्त्वात् इत्यत्र हेतुसमानाधिकरणसाध्याभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि साध्यसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकावच्छिन्नत्वस्य सत्त्वेन साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावात् उभयाभावसंभवेन अव्याप्त्यनवकाशात् । न हि अव्याप्तिप्रसक्त्यभावे तद्वारणप्रयोजनकस्य प्रतियोगिव्यधि[ग्यनधि]करणेति पदस्य उपादानं युक्तिमत् । वह्नेः धूमव्यापकत्वाभावप्रसङ्गाच्च । धूमसमानाधिकरणघटाद्यभावप्रतियोगितायां वह्निसमानाधिकरणपटा[द्य]भावप्रतियोगितानवच्छेदकावच्छेद्यत्वस्य सत्त्वेन उभयाभावाभावात् ।

न च स्वविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वं नाम स्वविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नावच्छेदकत्वशून्यत्वम् ; घटत्वे च साध्यसमानाधिकरणघटात्यन्ताभावप्रतियोगितावच्छेदकत्वस्यैव सत्त्वेन अनवच्छेदकत्वाभावात् अनवच्छेदकावच्छेद्यत्वाभावसंभवान्न व्यापकत्वभङ्गः इति वाच्यम् । हेतुसमानाधिकरणयावदभावप्रतियोगितानां साध्यसमानाधिकरणयावदभावानां तत्प्रतियोगितावच्छेदकानां च पुरुषायुषेणापि ज्ञातुमशक्यत्वेन अप्रसिद्धत्वात् ।

त्वन्मते यावद्धत्वधिकरणसंबन्धित्वस्यैव अवश्यं विज्ञेयस्य व्यापकतालक्षणत्वसंभवे एतज्ज्ञानं विना दुर्ज्ञेयस्य अनावश्यकस्य हेतुसमानाधिकरणाभावप्रतियोगितासामान्ये स्वविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्व-तत्संबन्धावच्छिन्नत्व-उभयाभावस्य लक्षणत्वाभिधानायोगात् । न हि यावद्धत्वधिकरणस्य साध्याधिकरणत्वज्ञानमन्तरा हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये स्वविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावः ज्ञातुं शक्यः । येन तदुपजीवकत्वं तस्य न स्यात् । औत्सर्गिकव्याप्तिव्यापकेषु अव्याप्तेश्च ।

यत्तु 'विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्संबन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिः' 'इति शिरोमण्युक्तं लक्षणान्तरम् । तस्यार्थः । विशेषणताविशेषेण साधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठो यो विशेषणताविशेषा-

वच्छिन्नप्रतियोगिताकोऽभावः तत्प्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्ति तस्मिन् तद्धर्मविशिष्ट-सामानाधिकरण्यं व्याप्तिः इति ।

अस्ति चेदं धूमानुमाने । धूमसमानाधिकरणविशेषणताविशेषावच्छिन्नप्रतियोगिताकपर्वतान्यत्वाद्यभावप्रतियोगितासामान्ये वह्नित्वविशिष्टसंबन्धिनि विशेषणताविशेषेण पर्वतान्यत्वाद्यभावस्य विद्यमानत्वेन तत्प्रतियोगितावच्छेदकावच्छेद्यत्वस्यैव सत्त्वेन प्रतियोगितानवच्छेदकावच्छेद्यत्वाभाव-संभवात् ।

नास्ति चेदं वह्नौ । व्यभिचारिणि साधनसमानाधिकरणाभावस्य साध्यसामानाधिकरण्यनियमाभावेन व्यभिचाराधिकरणे अयोगोलके हेतुसमानाधिकरणस्य विशेषणताविशेषावच्छिन्नप्रतियोगिताकस्य अयोगोलकान्यत्वाभावस्य प्रतियोगितायां साध्यतावच्छेदकविशिष्टसंबन्धिनि पर्वतादौ वर्तमानस्य विशेषणताविशेषावच्छिन्नप्रतियोगिताकस्य पर्वतान्यत्वाद्यभावस्य प्रतियोगितानवच्छेदकेन अयोगोल-कान्यत्वत्वेन अवच्छेद्यत्वस्यैव सत्त्वेन अवच्छेद्यत्वाभावाभावात् ।

व्यभिचारिणि वह्न्यादौ स्वसमानाधिकरणोक्तसंबन्धावच्छिन्नप्रतियोगिताकपर्वतान्यत्वा(द्य)भाव-प्रतियोगितायां यद्धर्मविशिष्टसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्तीति अतिव्याप्तिः स्यात् । तत्परिहाराय प्रतियोगितासामान्ये इत्युक्तम् । एवं च कृत्वा न दोषो भवति । पर्वतान्य-त्वाभावप्रतियोगितायां साध्यसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावेऽपि हेतुसमाना-धिकरणव्यभिचाराधिकरणान्यत्वाभावप्रतियोगितायां उक्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वस्य सत्त्वेन तदभावाभावात्' इति ।

तन्न । महाकालः कालपरिमाणवान् प्रमेयत्वात् इत्यत्र अतिव्याप्तेः । व्यभिचाराधिकरणे विशेषणताविशेषावच्छिन्नप्रतियोगिताकसाध्याभावस्य साध्यसमानाधिकरणत्वेन हेतुसमानाधिकरण-विशेषणताविशेषावच्छिन्नप्रतियोगिताकसाध्याभावप्रतियोगितायां साध्यतावच्छेदकविशिष्टसंबन्धिनिष्ठ-तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छेद्यत्वस्यैव सत्त्वेन उक्ताभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्तीति उक्तलक्षणप्राप्तेः । न हि जगदाधारे काले विशेषणताविशेषावच्छिन्नप्रतियोगिताकः कालपरिमाणाभावो नास्तीति युक्तम् । कालस्य जगदाधारताभङ्गप्रसङ्गात् ।

यत्तु मणौ– यावद्विशेषाभावातिरिक्तसामान्याभावसाधनं तदनुमतमेव । घटवति भूतले घटान्तराभावे सत्यपि घटो नास्तीत्यप्रतीत्या घटो नास्तीतिप्रतीतेः सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावविषय(क)त्वस्य वक्तव्यत्वात् । न च घटो नास्तीति प्रतीतेः यावद्विशेषाभावकूटो विषयः इति वाच्यम् । अभावज्ञाने प्रतियोगितावच्छेदकावच्छिन्नज्ञानस्य कारणत्वेन यावद्घटज्ञानस्य कदाप्यभावात् घटो नास्तीतिप्रतीतिविलोपप्रसङ्गात् ।

न चायं दोषः सामान्याभावपक्षेऽपि । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्यैव अभावधीहेतुत्वेन तस्य च प्रकृते सत्त्वात् ।

यत्तु— 'अन्यथा सकलप्रसिद्धरूपाभावे रूपवदन्यत्वे चावगते वायौ रूपं न वा, वायू रूपवान्न वेति संशयो न स्यात्' इति साधकाभिधानम् । तन्न । वायौ रूपं न वेति संशयानुपपत्त्या यावद्विशेषाभावातिरिक्तसामान्याभावसिद्ध्यङ्गीकारे रूपसामान्यसिद्धिप्रसङ्गात् । यावद्विशेषाभावानां निश्चितत्वेन संशयकोटित्वानुपपत्तिवत् यावद्रूपाणामपि संशयकोटित्वस्य अनुपपन्नत्वात् । तन्निश्चयस्य तत्संशयविरोधित्ववत् तद्व्यतिरेकनिश्चयस्यापि तत्संशयविरोधित्वात् । वायौ च यावद्रूपव्यतिरेकनिश्चयसद्भावात् । रूपाणां तत्तद्रूपत्वेन संशयकोटित्वासंभवेऽपि रूपत्वाख्यसामान्यधर्मेण यदि संशयकोटित्वं तर्हि यावद्विशेषाभावानां तत्तदभावत्वेन कोटित्वासंभवेऽपि रूपाभावत्वेन तेषामेव संशयकोटित्वमस्तु । कृतं सामान्याभावेन इति ॥

**यदत्रोक्तं रुचिदत्तेन**– 'रूपाभावत्वं हि रूपत्वोपहितप्रतियोगिकाभावत्वं रूपत्वावच्छिन्नप्रतियोगिकाभावत्वं वा । आद्यं तु निश्चितमेव । विशेषाभावप्रतियोगिसमूहे रूपत्वस्य निश्चितत्वात् । द्वितीयं तु स्यादपि यदि रूपत्वं अभावप्रतियोगितावच्छेदकं स्यात् । तद्धि न विशेषाभावप्रतियोगितावच्छेदकं अतिप्रसक्तत्वात् । तत्तद्रूपत्वस्यैव तथात्वाच्च । न च सामान्याभावप्रतियोगितावच्छेदकम् । तस्य त्वयाऽनभ्युपगमात् । अभ्युपगमे वा पर्यवसितं विवादेन' इति ।

**तन्न** ॥ रूपत्वोपहितप्रतियोगिकाभावत्वं रूपाभावत्वमित्यङ्गीकारे बाधकाभावात् । यदि विशेषाभावप्रतियोगिसमूहे रूपत्वस्य निश्चितत्वात् न तदभावानां रूपाभावत्वेन संशयविषयत्वं तर्हि रूपाणामपि न रूपत्वेन संशयकोटित्वं स्यात् । तदुपहिताभावनिश्चयस्य तदुपहितकोटिकसंशयविरोधित्वात् ॥ अन्यथा धूमाभावनिश्चयेऽपि नीलधूमो न वेति संशयः स्यात् ।

**॥ इति मण्युक्तात्यन्ताभावगर्भाद्यव्याप्तिलक्षणभङ्गः ॥**

**श्रीरस्तु। यत्तु मणौ**— प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगि(ना)-सामानाधिकरण्यं व्याप्तिः' इति लक्षणमुक्तम्। **तदपि न**। धूमानुमानाव्याप्तेः। सर्ववह्नीनामपि धूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात्। न हि महानसे पर्वतीयवह्न्यत्यन्ताभावः पर्वते महानसीयवह्न्यत्यन्ताभावो नास्तीति संभवति। येन सर्ववह्नीनां धूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वं न स्यात्। नेदं धूमत्वावच्छिन्नस्य वह्नित्वावच्छिन्नेन व्याप्तिलक्षणम्। अपि तु तत्तद्धूमस्य तत्तद्वह्निना या व्याप्तिस्तल्लक्षणम्। न चैवं सति उक्तदोषो भवति। महानसीयवह्नेः पर्वतीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वेऽपि यन्निष्ठव्याप्तिप्रतियोगित्वं तद्धूमसमानाधिकरणात्यन्ताभावाप्रतियोगित्वात् इति चेत्। न। गन्धवान् पृथिवीत्वात् इत्यत्र अव्याप्तेः। पृथिवीत्वनिष्ठव्याप्तिप्रतियोगिनां गन्धानां तत्समानाधिकरणात्यन्ताभावप्रतियोगित्वात्। न हि पृथिवीत्वाधिकरणे पटे घटगन्धोऽस्ति; तदधिकरणे घटे वा पटगन्धोऽस्ति। येन गन्धानां पृथिवीत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं न स्यात्।

**यदत्रोक्तं रुचिदत्तेन**– "तादृशात्यन्ताभावप्रतियोगिताऽवच्छेदकं यन्न भवति तदवच्छिन्नेन सामानाधिकरण्यमित्यर्थः। न चैवं पूर्वलक्षणाभेदः। तत्र त(य)दवच्छिन्नेन केनापि सामानाधिकरण्यं हेतुतावच्छेदकावच्छिन्नस्य सर्वस्यैव व्याप्तिरित्यर्थः। अत्र तु समानाधिकरणयोरेव व्याप्तिरिति महान् भेदः। तथा च अयोगोलकीयो वह्निरत्र मते न व्यापकः" इति।

**तन्न**। व्यधिकरणसाध्यनिरूपितव्याप्तौ औत्सर्गिकव्याप्तौ अव्याप्त्यनिस्तारात्।

किञ्च उक्तात्यन्ताभावप्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नेन सामानाधिकरण्यं किं तदवच्छिन्नेन व्याप्तिः उत तेन व्याप्तिः। नाद्यः। अस्मिन्मते अयोगोलकीयो वह्निः न व्यापकः इत्युक्त्ययोगात्। अयोगोलकीयवह्नेः व्यापकत्वाभावे अधिकदेशवर्तिनो वह्नित्वस्य व्यापकतावच्छेदकताऽसंभवात्। नापि द्वितीयः। पृथिवीत्वस्य चित्ररूपव्याप्यताप्रसङ्गात्। पृथिवीत्वस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकप्रमेयत्वावच्छिन्नेन चित्ररूपेण सह सामानाधिकरण्यसद्भावात्॥

**पक्षधरस्तु**– 'स्वाधिकरणीभूतयद्व्यक्तिनिष्ठाभावाप्रतियोगिनी या व्यक्तिस्तदधिकरणत्वं तद्व्यक्तौ तद्व्याप्तिरित्यर्थः। न चैवं सति गन्धादिसाध्यकपृथिवीत्वादिहेतोः व्याप्तिविकलता भवति। पृथिवीत्वाधिकरणीभूतयद्व्यक्तिनिष्ठाभावाप्रतियोगिनी या गन्धव्यक्तिः, तदधिकरणाधिकरणत्वरूपायाः तद्व्यक्तिव्याप्तेः तदधिकरणावच्छेदेन पृथिवीत्वे सत्त्वात्।

न चैवं सति द्रव्यत्वमपि गन्धव्याप्यं स्यात् । द्रव्यत्वाधिकरणीभूतयद्व्यक्तिनिष्ठाभावाप्रतियोगिनी या गन्धव्यक्तिः तदधिकरणाधिकरणतायाः सत्त्वादिति वाच्यम् । गन्धाधिकरणावच्छेदेन द्रव्यत्वस्यापि गन्धव्याप्यत्वेनेष्टत्वात् । परं तु द्रव्यत्वत्वेन गन्धव्याप्यता न गृह्यते । तस्य गन्धाव्याप्ये जलादि-वृत्तिद्रव्यत्वेऽपि सत्त्वात् । पृथिवीवृत्तिद्रव्यत्वत्वेन तु गृह्यते एव । अत एव जलादौ न गन्धानुमानम् ।

वस्तुतस्तु स्वावच्छिन्नाधिकरणे तत्तद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोग्यधिकरणताकत्वं व्याप्तिः । स्वावच्छिन्नाधिकरणे सर्वत्र तत्तद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगिसाध्याधिकरणताकत्वं व्याप्तिरिति यावत् । न चैवं सति पृथिवीत्वस्य गन्धाव्याप्यता भवति । पृथिवीत्वाधिकरणे सर्वत्र स्ववृत्त्यत्यन्ताभावाप्रति-योगिगन्धरूपसाध्याधिकरणतायाः सत्त्वात् । नापि द्रव्यत्वे गन्धव्याप्यता प्राप्नोति । द्रव्यत्वाधिकरणे सर्वत्र स्वनिष्ठात्यन्ताभावाप्रतियोगिगन्धाधिकरणताविधुर्यात् । आकाशादौ गन्धादर्शनात्'' इत्याह ॥

तत्तुच्छम् ॥ पर्वतादौ वह्न्याद्यनुमितेः प्राक् स्वाधिकरणीभूतपर्वतादिनिष्ठात्यन्ताभावाप्रतियोगि-पर्वतीयवह्न्यधिकरणाधिकरणत्वरूपपर्वतीयवह्निव्याप्तेः पर्वतीयधूमे गृहीतुमशक्यत्वेन तज्ज्ञानस्य अनुमि-त्यकारणत्वात् । महानसादिदृष्टान्तोपादानासङ्गतिप्रसङ्गाच्च । पर्वतीयधूमाग्निव्याप्तेः भिन्नत्वेन तज्ज्ञानस्य पर्वतीयधूमाग्निज्ञानानुपायत्वात् । नापि 'वस्तुतस्तु' इत्यादिनोक्तं लक्षणं युक्तम् । स्वाधिकरणे सर्वत्र साध्याधिकरणत्वमित्येतावन्मात्रस्यैव समञ्जसत्वेन अत्यन्ताभावाप्रतियोगीति विशेषणवैयर्थ्यात् । व्यधिकरणसाध्यकव्याप्तौ औत्सर्गिकव्याप्तौ चाव्याप्त्यपरिहाराच्च ॥

## ॥ इति मण्युक्तात्यन्ताभावगर्भद्वितीयव्याप्तिलक्षणभङ्गः ॥

**श्रीगुरुभ्यो नमः** ॥ यत्तु मणौ — 'यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन तस्य सामानाधिकरण्यं व्याप्तिः' इत्युक्तम् ।

तन्न । धूमानुमानाव्याप्तेः । वह्निमतो महानसस्य पर्वतीयधूमसमानाधिकरणान्योन्याभाव-प्रतियोगित्वेन (तया) उक्तलक्षणाभावात् ।

यदत्रोक्तं रुचिदत्तेन– 'यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यदवच्छिन्नं यन्न भवति तदवच्छिन्नेन येन यस्य सामानाधिकरण्यं तयोर्व्याप्तिरित्यर्थः' इति । तन्न । व्यधिकरण-साध्यकानुमाननिष्ठव्याप्तौ अव्याप्त्यपरिहारात् ।

अत एव 'यद्रूपावच्छिन्नवत्वं तादृशान्योन्याभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यं इत्यर्थ इति शिरोमण्युक्तं निरस्तम् । एतेनैव स्वसमानाधिकरणान्योन्याभावाप्रतियोगियद्वत्कत्वं इति लक्षणान्तरमपि परास्तम् ॥

## ॥ इति मण्युक्तान्योन्याभावगर्भलक्षणभङ्गः ॥

**श्रीगुरुभ्यो नमः** ॥ यत्तु मणौ — 'अनौपाधिकत्वं वा व्याप्तिः । अनौपाधिकत्वं च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यावत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन सामानाधिकरण्यम् । न च सोपाधौ अतिव्याप्तिः । तत्र साधनसामानाधिकरणात्यन्ताभावप्रतियोगिनः उपाधेः आर्द्रेन्धनवत्त्वादेः योऽत्यन्ताभावः तेन सह साध्यस्य धूमादेः सामानाधिकरण्याभावात् । उपाधेः साध्यव्यापकत्वात् । न च धूमस्य वह्निव्याप्तिशून्यता । धूमस्य स्वसमानाधिकरणयावदभावसमानाधिकरणवह्निसमानाधिकरणत्वात्' इत्युक्तम् ।

तन्न । यत् यावत्स्वसमानाधिकरणसमानाधिकरणं तेन सामानाधिकरण्यं इत्येतावतैव पूर्णत्वेन अधिकोपादानवैयर्थ्यात् । व्यधिकरणसाध्यकनदीपूरादिनिष्ठसंबन्धेऽव्याप्तेश्च । साध्यस्य ऊर्ध्वदेशवृष्ट्यादेः पूरसमानाधिकरणात्यन्ताभावप्रतियोग्यूर्ध्वदेशत्वात्यन्ताभावासमानाधिकरणत्वात् । यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिज्ञानाभावात् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तत्सामानाधिकरण्यस्य सुतरां ज्ञातुमशक्यत्वेन व्याप्तेरेव दुर्ज्ञेयत्वापत्तेश्च । न ह्यसर्वज्ञाः साधनसमानाधिकरणसर्वाभावान् तत्प्रतियोगिनश्च ज्ञातुमीशते । येन व्याप्तेरज्ञेयत्वं न स्यात् ।

यद्यत्र साधनव्यापकः कश्चित् स्यात् तर्हि प्रसिद्धसाधनाव्यापकधर्मवत् सोऽपि साध्याव्यापको भवेदविशेषात् । इत्यादि तर्केण अनौपाधिकत्वग्रहः शक्यः इति चेत् । न । आपाद्यापादकयोः अनौपाधिकसंबन्धग्रहं विना तर्कस्योत्थानासंभवे तदर्थं तर्कान्तरानुसरणे चानवस्थानात् ।

हेतोः साध्याव्यभिचारित्वेन लिङ्गेन, यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगि यत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तत्सामानाधिकरण्यं अनुमीयते इति चेत् ।

उच्यते । एतत्साधनसाध्यव्याप्तेः उक्तरूपत्वे व्याप्तिग्रहासंभव एव । तद्ग्रहार्थं अनुमानान्तरानुसरणे चानवस्थानात् । अन्यादृशत्वे च सर्वत्र सैव व्याप्तिरस्तु । उक्तलक्षणस्य तत्राव्याप्तिश्च ।

यदपि मणौ– 'यावद्यत्समानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वम् । सोपाधौ तु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगिनः उपाधेः योऽत्यन्ताभावः तेन समं सामानाधिकरण्यम् । उपाधेः साधनाव्यापकत्वात्' इत्युक्तम् ।

तदपि न । असंभवात् । त्वन्मते साध्यमात्रसमानाधिकरणात्यन्ताभावाप्रतियोगिप्रमेयत्वादिकेवलान्वयिधर्मप्रतियोगिकात्यन्ताभावाप्रसिद्ध्या तदसामानाधिकरण्यस्य क्वापि साधनेऽभावात् ।

ननु यावद्यत्स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिव्यतिरेकिधर्मप्रतियोगिताकात्यन्ताभावसामानाधिकरण्यं यस्य तस्य तदनौपाधिकत्वं विवक्षितम्; न चैवमसंभवो भवति इति चेत् । न । केवलान्वयिन्यव्याप्तेः । केवलान्वयिसाध्यसमानाधिकरणात्यन्ताभावाप्रतियोगिव्यतिरेकिधर्मस्यैव अप्रसिद्धेः ।

ननु केवलान्वयिसाध्यसमानाधिकरणात्यन्ताभावाप्रतियोगिव्यतिरेकिधर्मः गगनाद्यत्यन्ताभाव एव प्रसिद्धः । मया गगनादेरवृत्तित्वाङ्गीकारेण तत्प्रतियोगिकात्यन्ताभावस्य केवलान्वयिप्रमेयत्वादिव्यापकत्वात् इति चेत् । अत्र वक्तव्यम् । हेतोरुक्तव्यतिरेकिधर्मप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं किं तदधिकरणानधिकरणत्वम्? उत तदनधिकरणाधिकरणत्वम् इति । आद्ये केवलान्वयिन्यव्याप्त्यनिस्तारः । आकाशात्यन्ताभावात्यन्ताभावात्मकस्य आकाशस्य अधिकरणाप्रसिद्धेः । त्वन्मते तस्य अवृत्तित्वात् । न द्वितीयः । सोपाधिकातिव्याप्तेः । वह्नेरपि धूमसमानाधिकरणात्यन्ताभावाप्रतियोग्यार्द्रेन्धनप्रतियोगिकात्यन्ताभावानधिकरणे महानसादौ सत्त्वात् ।

यदत्रोक्तं रुचिदत्तेन— 'तादृशात्यन्ताभावेऽसामानाधिकरण्यं सामानाधिकरण्याभावो यस्य तस्य तदेव तादृशात्यन्ताभावनिष्ठसामानाधिकरण्यात्यन्ताभावकत्वमेवानौपाधिकत्वमित्यर्थः । न चैवं सति केवलान्वयिन्यव्याप्तिर्भवति । आकाशाधिकरणानधिकरणत्वस्य हेतौ निरूपयितुमशक्यत्वेऽपि हेत्वधिकरणानधिकरणत्वस्य आकाशे निरूपयितुं शक्यत्वात्' इति ।

तन्न । वह्न्यादिसमानाधिकरणात्यन्ताभावाप्रतियोगिव्यतिरेकिधर्मप्रतियोगिकात्यन्ताभावे धूमादिसामानाधिकरण्याभावाज्ञानेऽपि वह्न्यनुमितिदर्शनेन उक्तानौपाधिकत्वस्य व्याप्तित्वासंभवात् ।

पक्षधरस्तु— 'यत्पदं साध्यत्वाभिमतपरम् । यावदितिपदं द्वितीयात्यन्ताभावविशेषणम् । तथा च तत्समानाधिकरणात्यन्ताभावप्रतियोगी तद्व्यापकः इति यावत् । तत्प्रतियोगिकाः यावन्तः प्रतियोग्यसमानाधिकरणाः अत्यन्ताभावाः तदसामानाधिकरण्यं यावत्साध्यव्यापकव्याप्यत्वमिति यावत् ।

न च यावदिति साध्यव्यापकस्यैव विशेषणम् । असंभवात् । मेयत्वादीनां तादृशानां अभावाप्रसिद्धेः । तद्व्यतिरेकिरूपसाध्यव्यापकपरमेव यत्समानाधिकरणात्यन्ताभावाप्रतियोगिपदम् । विशेषणान्तरस्य व्यतिरेकित्वादेः प्रवेशे गौरवात् । तद्व्यतिरेकेणापि सर्वसामञ्जस्यात् । न च 'साध्य-व्यापकाभावाभावात्मकेनाकाशेन असामानाधिकरण्यमसंभवि । आकाशाधिकरणस्य अप्रसिद्धत्वेन तदधिकरणानधिकरणत्वस्य क्वापि वक्तुमशक्यत्वात् ! तदनधिकरणाधिकरणत्वस्य तु सोपाधिसाधारण्येन अवक्तव्यत्वात् इति वाच्यम् । साध्यव्यापकाभावस्यैव हेत्वधिकरणानधिकरणत्वस्य विवक्षितत्वात् । आकाशादौ च तत्संभवात् । वस्तुतो यावदिति साध्यव्यापकविशेषणमेव । तत्प्रतियोगिकाभावा-सामानाधिकरण्यमित्यत्र च नञ्व्यत्यासेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगियावत्साध्यव्यापककत्व-मित्यर्थः पर्यवस्यतीति न काऽप्यनुपपत्तिः' इत्याह ॥

तन्न । अनौपाधिकत्वस्य दुर्ज्ञेयत्वेन अनुमानोच्छेदप्रसङ्गात् । तथा हि– साध्यव्यापकप्रति-योगिकयावदभावेषु आकाशादेः पतितत्वेन अत्र हेत्वधिकरणानधिकरणत्वस्य तद्ग्रहं विना ज्ञातुम-शक्यत्वात् आकाशादिज्ञानं वाच्यम् । न च तत्प्रत्यक्षेण संभवति । तस्य अतीन्द्रियत्वात् ।

नाप्यनुमानेन । तत्साधकस्य 'शब्दः क्वचिदाश्रितः गुणत्वात्' इत्यनुमानस्यापि अनौपाधि-कत्वरूपव्याप्तिग्रहसापेक्षत्वेन अन्योन्याश्रयात् । क्वचिदाश्रितत्वरूपसाध्यव्यापकेषु आकाशात्यन्ता-भावस्यापि पतितत्वेन तदत्यन्ताभावरूपे आकाशे गुणत्वरूपहेत्वसामानाधिकरण्यरूपव्याप्तिग्रहे अनुमानप्रवृत्त्या आकाशसिद्धिः । तत्सिद्धौ च व्याप्तिग्रहद्वारा अनुमानप्रवृत्तिः इति ।

नाप्यागमेन । तस्य सङ्केतग्रहाधीनत्वात्, सङ्केतग्रहस्य च आकाशोपस्थितिमन्तराऽसंभवात्, तदुपस्थित्यर्थं च उक्तानुमानानुसरणेऽन्योन्याश्रयात् ।

उक्तानौपाधिकत्वग्रहाभावेऽपि अनुमितेः जायमानत्वेन तस्य व्याप्तिरूपत्वायोगाच्च ।

अत एव 'वस्तुत' इत्यादिनोक्तमपि लक्षणमनुपपन्नम् । आकाशात्यन्ताभावस्य साध्यव्यापक-कोटिप्रविष्टत्वेन तस्य च साध्यव्यापकत्वेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिकत्वेन च ज्ञातुम-शक्यत्वात् । प्रतियोगिज्ञानं विना अभावज्ञानायोगात् प्रतियोगिज्ञानासंभवस्य च उक्तत्वात् ।

यदपि 'नञ्व्यत्यासेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यव्यापककत्वमित्यर्थः पर्यव-स्यति' इति ।

तदपि न । असामानाधिकरण्यमित्यत्र नञ्व्यत्यासेन संबन्धे अप्रतियोगिकात्यन्ताभावसामानाधिकरण्यमित्यर्थस्यैव लाभेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यव्यापककत्वमित्यर्थस्य अलाभात् ।

**शिरोमणिस्तु**– 'यत्पदं साध्यत्वाभिमतपरं, सोपाधावतिव्याप्तिवारणाय यावदिति लुप्तसप्तमीकस्य द्वितीयात्यन्ताभावस्य विशेषणम् । तथा च साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावकत्वमित्यर्थः । न च केवलान्वयिनि अव्याप्तिः । केवलान्वयिसाध्यव्यापकस्यापि केवलान्वयितया साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य अप्रसिद्धत्वेन तादृशाभावत्वव्यापको हेतुसामानाधिकरण्याभावः इत्यस्य वक्तुमशक्यत्वात् इति वाच्यम् । अभिधेयत्वव्यापकस्य ज्ञेयत्वस्य अभावासंभवेऽपि तद्व्यापकस्याकाशाभावस्याभावसंभवेन आकाशात्यन्ताभावाभावत्वस्य व्यापको हेतुसामानाधिकरण्याभाव इति वक्तुं शक्यत्वात् ।

वह्निसामग्रीघटोभयाभावस्य धूमसमानाधिकरणत्वात् वह्निव्यापकाभावत्वस्य धूमसामानाधिकरण्याभावो न व्यापक इति धूमानुमानेऽव्याप्तिः स्यात् । सा माभूदित्येतदर्थं व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यभावविशेषणम् । उक्ताभावस्य द्वित्वावच्छिन्नप्रतियोगिताकत्वेऽपि व्यापकतावच्छेदकवह्निसामग्रीत्वावच्छिन्नप्रतियोगिताकत्वाभावात् अव्याप्तिपरिहारः ।

धूमवान् वह्नेरित्यत्र धूमव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकार्द्रेन्धनाभावस्य वह्निसमानाधिकरणत्वेऽपि घटनिष्ठवह्निसामानाधिकरण्यप्रतियोगिकाभावस्य उक्ताभावत्वव्यापकत्वादतिव्याप्तिः स्यात् । सा मा भूत् इत्येतदर्थं सामानाधिकरण्य(प्रतियोगिक)सामान्याभावकत्वमित्युक्तम् । वह्निसामानाधिकरण्यविशेषाभावस्य उक्ताभावत्वव्यापकत्वेऽपि सामानाधिकरण्यसामान्याभावस्य अव्यापकत्वात् अतिव्याप्तिपरिहारः' इत्याह ।

तन्न । उक्तानौपाधिकत्वज्ञानविरहेऽपि अनुमितिदर्शनेन तस्य व्याप्तित्वासंभवात् । साध्यव्यापकप्रतियोगिकयावदभावेषु आकाशस्यापि प्रविष्टत्वात् तज्ज्ञानस्य च उक्तरीत्या अनुमानजन्यत्वे अन्योन्याश्रयादयोगेन तत्र हेतुसामानाधिकरण्यसामान्याभावस्य गृहीतुमशक्यत्वेन उक्तरूपानौपाधिकत्वस्य हेतुमात्रेऽप्रसिद्धेश्च । समुद्रवृद्ध्यनुमापकचन्द्रोदयादिहेतुनिष्ठव्याप्तावव्याप्तेश्च । हेतोः साध्यात्यन्ताभावसमानाधिकरणत्वेन साध्यव्यापकाभावे हेतुसामानाधिकरण्यस्य सद्भावात् ।

॥ इति मण्युक्तानौपाधिकत्वस्य व्याप्तित्वभङ्गः ॥

॥ श्रीनिरुपाधिकरूपाय नमः ॥

ननु व्याप्तिग्रहः केन प्रमाणेन जायते ? यथायथं प्रत्यक्षानुमानागमैरिति ब्रूमः । प्रत्यक्षेण तावत् भूयो भूयो धूमं पश्यन् अग्निं पश्यति । अग्न्यभावे च धूमाभावम् । न क्वापि धूमसद्भावे अग्न्यभावम् । एवं परिचितधूमेषु अग्न्यव्यतिरेकेण सत्त्वरूपाविनाभावग्रहः उपजायते । तदनन्तरं यद्यन्यत्रापि धूमः स्यात् सोऽपि वह्निव्यतिरेकेण न सत्त्वमर्हतीति सर्वोपसंहारेण व्याप्तिग्रहस्तु प्रवृत्ति-निवृत्त्युपयोग्यदृष्टोपगृहीतप्रत्यक्षेणैव भवति । तद्यथा योगीन्द्रियाणि योगजधर्मोपगृहीतानि अतीतानागतगोचरज्ञानमुपजनयन्ति ।

इयांस्तु विशेषः । योगजधर्माः विशिष्य अतीतानागतग्रहणे साचिव्यमाचरन्ति । प्रवृत्ति-निवृत्त्यनुकूलादृष्टं तु सामान्येनैव अतीतानागतग्रहणे साचिव्यमाचरति । अत एव प्रमेयत्वाभिधेयत्वयोः व्याप्तिं गृह्णतः न सार्वज्ञप्रसङ्गः ।

यस्य तु मानसापराधात् स्वपरिचितस्थले वह्निना सह वर्तमानो धूमः देशान्तरे कालान्तरे तं परित्यज्य वर्तते इति किं न स्यात् इति शङ्कोदयः, तदा न केवलं प्रवृत्तिजनकादृष्टं व्याप्ति-ग्रहार्थं इन्द्रियस्य साचिव्यमाचरति, किन्तु उपाध्यभावनिश्चयसहकृतमेव ।

उपाध्यभावनिश्चयश्च साध्यव्यापकत्वेन दृष्टानां साधनव्यापकत्वग्रहे साधनाव्यापकत्वेन निश्चितानां साध्याव्यापकत्वग्रहे सति भवति । साधनाव्यापकानां साध्याव्यापकत्वादिग्रहस्तु आप्तवाक्येन तर्केण वा भवति । तर्कमूलभूतव्याप्तिग्रहस्तु प्रत्यक्षेणेति न तदर्थमपि तर्कान्तरानुसरणप्रयुक्ता अनवस्था । नह्येकत्र प्रत्यक्षं शङ्काकलङ्कितमिति सर्वत्रापि तथा भवतीति नियमः । येन तत्र प्रत्यक्षेण व्याप्तिग्रहो न स्यात् । यस्य तु साधनाव्यापकानां साध्याव्यापकत्वादिग्रहोपायः आप्तोपदेशादिः न लभ्यते, तस्य व्याप्तिग्रह एव न भवति ।

कुत एतत् सर्वं कल्प्यते इति चेत् । अपरिचितधूमदर्शनानन्तरोत्पन्नानुमितिलक्षणकार्यदर्शना-देवेति ब्रूमः ।

मूकानामपि भूयोदर्शनप्रवृत्तिजनकादृष्टोपगृहीतमिन्द्रियमेव व्याप्तिज्ञानमुत्पादयति । देश-कालान्तरभाविव्यभिचारसंशये तु स्वपरिचितप्रदेशेषु साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगितया स्वेनोपलब्धानां धर्माणां साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वोपलम्भसहकृतेन प्रवृत्तिजनकादृष्टोप-गृहीतेन व्याप्तिनिश्चयो भवति ।

बालानां जातमात्राणां स्तनपानादौ प्रवृत्तिः न इष्टसाधनानुमितिसाध्या । किन्तु जीवनादृष्ट-प्रेरकपरमेश्वरायत्तप्रातिभज्ञानसाध्या । लौकिकसामग्रीविलक्षणसामग्रीजन्यज्ञानस्यैव प्रातिभज्ञानत्वात् ।

उक्तं हि मृगादीनामपि प्रातिभज्ञानम् । 'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः । भयाभयस्वभोगादौ कारणानि विजानते' इति । अत एव स्वमात्रादीनुपसर्पन्ति । वर्जयन्ति च नयनान्तःशङ्कुकण्डूयनादीनि ।

न च तेषामपि इष्टानिष्टसाधनतानुमितिः कल्पयितुं शक्या । व्याप्तिग्रहविधुरत्वात् । जन्मान्त-रीयव्याप्तिस्मृतिकल्पनातः प्रातिभज्ञानकल्पनस्यैव उचितत्वात् ।

अस्मास्वदृष्टं प्रातिभं कथं बालमूकादीनामभ्युपगम्यते इति चेत् । अस्मदादिषु अदृष्टाया अप्यन्तर्धानशक्तेः पिशाचादिष्विव इति गृहाण ।

व्याप्तिग्राहकस्य इन्द्रियस्य, भूयसां दर्शनमिति वा भूयांसि दर्शनानि इति वा भूयस्सु दर्शन-मिति वा सहकारीति न निर्बन्धः । एतद्वृक्षत्वस्य प्रमेयत्वेन सह सकृद्दर्शनेनैव व्याप्तिग्रहात् । किन्तु अनेकव्यक्तिकसाधनेषु भूयसां दर्शनेन व्याप्तिग्रहः । तत्रापि न संख्येयत्तानियमः । कस्यचिद् द्वित्रादिदर्शनेन अन्यस्य दशद्वादशदर्शनेनेत्याद्यूह्यम् ।

ननु दर्शनानां आशुतरविनाशिनां मेलनासंभवात् विनष्टानां च हेतुत्वायोगात्, कथं भूयोदर्शनं व्याप्तिग्रहहेतुः इति चेत् । न । संस्कारद्वारा सहकारित्वोपपत्तेः । न च सहचारविषयकसंस्कारस्य व्याप्तिग्रहहेतुत्वासंभवः । अन्यविषयकसंस्कारस्य अन्यग्रहहेतुत्वाभावात् इति वाच्यम् । व्याप्तेः सहचारविशेषत्वात् । प्राणादिमत्त्वस्य सात्मकत्वेन व्याप्तिग्रहः तदभावव्यापकाभावप्रतियोगित्वादि-रूपलिङ्गजन्यः । ब्राह्मणत्वस्य अहिंस्यत्वेन व्याप्तिग्रहस्तु 'ब्राह्मणो न हन्तव्यः' इत्याद्यागमजन्यः ।

॥ इति व्याप्तिग्रहोपायनिरूपणम् ॥

मणिकारस्तु— व्यभिचारज्ञानविरहसहकृतसहचारदर्शनं व्याप्तिग्राहकम् । ज्ञानं निश्चयः, शङ्का च । सा च क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहकृत-साधारणधर्मदर्शनात् । तद्विरहश्च क्वचिद् विपक्षबाधकतर्कात्, क्वचित्स्वतः सिद्ध एव । तर्कस्य व्याप्तिमूलत्वेनानवस्थेति चेत् । न । यावदाशङ्कं तर्कानुसरणात् । यत्र च व्याघातेन शङ्कैव नोदेति (नावतरति) तत्र तर्कं विनैव व्याप्तिग्रहः ।

तथाहि— 'धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात् नोत्पन्नः स्यात्' इत्यत्र किं धूमोऽवह्नेरेव भविष्यति, क्वचिद् वह्निं विनापि भविष्यति इति वा; अहेतुक एवोत्पत्स्यते इति वा शङ्का स्यात्, सर्वत्र स्वक्रियाव्याघातः । [ स्यात् ] यदि [ हि ] गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत, तदा स्वयमेव– धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य परप्रतिपत्त्यर्थं शब्दस्य चो[चो]पादानं नियमतः कथं कुर्यात् । तेन विनाऽपि तत्संभवात् । तस्मात् त(त्त)दुपादानमेव तादृशशङ्काप्रतिबन्धकम् ।

शङ्कायां च न नियतोपादानम् । नियमत उपादाने (नियतोपादाने) च न शङ्का । एतादृश-तर्कावतारश्च न भूयोदर्शनं विनेति भूयोदर्शनादरः । अत एव तदाहितसंस्कारो न मानान्तरम् । तर्कस्याप्रमात्वात् ।

ननु– सहचारदर्शनव्यभिचारदर्शनवत् व्यभिचारशङ्काविरहानुकूलतर्कयोः ज्ञानं व्यभिचारि-साधारणमिति न ततोऽपि व्याप्तिग्रह इति चेत् । न । स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात् । सत्तर्काद्व्याप्तिप्रमा तदभासात्तदप्रमा, विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव' इत्याह ।

तन्न ॥ व्याप्तिज्ञानविधुरेण धूमे वह्न्यसमवहिताजन्यत्वस्याज्ञातत्वेन धूमो यदि वह्न्यसमवहिता-जन्यत्वे सति वह्निसमवहिताजन्यः स्यात् इत्यापादकानुसन्धानाभिधानायोगात् । धूमस्य भूयोदर्शनेन वह्न्यसमवहिताजन्यत्वं गृहीतुं शक्यमिति चेत् ।

अत्र वक्तव्यम्— किं यासां धूमव्यक्तीनां वह्निना सहचारो दृष्टः तासां धूमव्यक्तीनां वह्न्य-समवहिताजन्यत्वं अनुसन्धीयते ? उत अपरिचितधूमव्यक्तीनाम् ? आद्ये वह्न्यसमवहिताजन्यत्वरूप-विशेषणानुसन्धानसंभवेऽपि वह्निसमवहिताजन्यत्वरूपविशेष्यानुसन्धानविरहात् तर्कानुदयः । न हि वह्निसाहचर्येण दृष्टासु धूमव्यक्तिषु वह्निसमवहिताजन्यत्वरूपविशेष्यस्य संभावना अस्ति । न द्वितीयः । अपरिचितधूमव्यक्तिषु वह्न्यसमवहिताजन्यत्वरूपविशेषणनिश्चयोपायाभावात् ।

किं च अहेतुक एव धूमो भविष्यतीति शङ्काया इव अवह्नेरेव भविष्यति, क्वचिद् वह्निं विनापि भविष्यतीति शङ्काद्वयस्य आपाद्यापादकव्याप्तिग्रहापरिपन्थित्वेन तन्निरासाभिधानवैयर्थ्यम् ।

यत्तु– किं धूमो अवह्नेरेव भविष्यति क्वचिद्वह्निं विनाऽपि भविष्यति, अहेतुक एव उत्पत्स्यते इति शङ्कात्रये व्याघातः' इति ॥

**तन्न**। व्याप्तिज्ञानविधुरस्य धूमार्थं वह्न्युपादानलक्षणक्रियाऽभावेन स्वक्रियाविरोधाभावात्। व्याप्तिज्ञानाभावेऽपि कार्यकारणभावज्ञानसद्भावात् उपादानं युक्तमिति चेत्। न। अस्य तर्कस्य कार्यकारणभावग्राहकत्वेनैव तत्तर्कावतारात्पूर्वं कार्यकारणज्ञानाभावात्। भावे वा तर्कवैय्यर्थ्यात्।

**रुचिदत्तस्तु**— धूमस्य वह्न्यसमवहिताजन्यत्वनिश्चयदशायामेव तर्कोऽयमभिमतः, तेन सत्यन्तविशेषणेनैव व्यतिरेकमादाय नास्य विपर्ययपर्यवसानम्। एवं च वह्न्यसमवहिताजन्य इति पक्षविशेषणमप्यत्राभिमतम्। तथा च अवह्नेरेव भविष्यति, क्वचिद्वह्निं विनापि भविष्यति, इति शङ्काद्वयं आपाद्यापादकव्याप्तिग्रहापरिपन्थिभूतमपि पक्षविशेषणग्रहपरिपन्थित्वादाशङ्क्य परिहृतमिति ध्येयम्' इत्याह।

**तन्न**। 'धूमोऽस्तु वह्निर्मास्तु' (इति) विपक्षे बाधकाभावादिति शङ्कमानस्य वह्न्यसमवहिता-जन्यत्वरूपविशेषणनिश्चयाभावात्। जन्यत्वेन ज्ञायमाने धूमे वह्न्यसमवहिताजन्यत्वरूपविशेषण-निश्चये च 'धूमोऽस्तु वह्निर्मास्तु' इति शङ्कानुदयेन तर्कवैय्यर्थ्यात्।

यदपि 'वह्न्यसमवहिताजन्य' इति पक्षविशेषणमभिमतं' इति। तदपि न। व्यावर्त्याभावेन विशेषणवैय्यर्थ्यात्। न हि वह्न्यसमवहितसामग्रीजन्यो धूमोऽस्ति। येन तद्व्यावृत्तये विशेषणमर्थवत् स्यात्।

ननु न व्यावृत्त्यर्थं पक्षे विशेषणम्। किन्तु वह्निजन्यत्वेन विपर्ययपर्यवसानार्थम्। अन्यथा वह्न्यसमवहिताजन्यत्वरूपविशेषणाभावेनापि विशिष्टाभावपर्यवसानं स्यात्। पक्षविशेषणे तु विशेषण-वत्तया निश्चिते पक्षे विशिष्टाभावो विशेष्याभावे[ नैव ] पर्यवस्यतीति चेत्। न पक्षविशेषणेऽपि वह्न्यसमवहिताजन्यस्यापि धूमस्य वह्निजन्यत्वं विनापि नान्तरीयकवह्निसमवहितसामग्रीजन्यत्वसंभवे पर्यवसानगत्या वह्निजन्यत्वालाभात्। न हि नान्तरीयकरासभसमवहितसामग्रीजन्यस्य घटस्य रासभ-जन्यत्वं भवति। येनेह वह्निसमवहितसामग्रीजन्यत्वं वह्निजन्यत्वेन पर्यवसितं स्यात्।

यदत्रोक्तं— धूमाग्न्योः कार्यकारणभावग्रहः तर्केणैवेति न नियमः। किन्तु कोटिस्मरणादि-विरहेण शङ्काविरहे अन्वयव्यतिरेकेणापि क्वचित् कार्यकारणभावग्रहः, क्वचित्तु शङ्काविरहे अनेनापि तर्केण व्याप्तिग्रहः। तदिदमुक्तं 'क्वचित् स्वतः सिद्ध एव' इति। तस्मात्सर्वत्र शङ्का स्यादेव। ततः कुत्रापि न व्याप्तिग्रहः। ततोऽनुमानमप्रमाणमिति यश्चार्वाकादिर्मनुते तं प्रत्युच्यते 'नायं नियमः

साधुः यत् सर्वत्र शङ्का' इति । तथा सति एतादृशतर्केऽपि तादृशशङ्कायां भवतो धूमार्थं वह्न्युपादानं व्याहन्येत । तदिदमाह— 'न हि संभवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमतः उपादत्ते; तत्कारणं तन्नेत्याशङ्कते' चेति । तथा च शङ्कानवश्यंभावात् न व्याप्तिग्रहानुपपत्तिः; न वा अनवस्था; इति सिद्धमनुमानमिति सर्वमवदातम्' इति ॥

तन्न ॥ कार्यकारणभावग्राहकतर्के व्याप्तिशङ्कायामपि चार्वाकस्य धूमार्थं वह्नौ प्रवृत्तिसंभवात् । व्याप्तिसन्देहात् तर्केण कार्यकारणग्रहासंभवेऽपि अन्वयव्यतिरेकसध्रीचीनेन प्रत्यक्षेण कार्यकारणभावग्रहसंभवात् । न हि तर्केणैव कार्यकारणभावग्रहः इति नियमोऽस्ति । येन व्याप्तिशङ्कया तर्के प्रतिरुद्धेऽपि कार्यकारणग्रहासंभवापत्त्या धूमार्थं वह्नौ प्रवृत्तिः न स्यात् । अथवा उदाहृततर्के अयोग्योपाधिकशङ्कया तेन कार्यकारणभावग्रहासंभवेऽपि धूमार्थं वह्नौ प्रेक्षावतां प्रवृत्तिं पश्यतः चार्वाकस्य कार्यकारणभावसंभावनासंभवेन प्रवृत्त्युपपत्तेः धूमार्थं न वह्न्युपादानक्रियया विरोधः । संभावनाया अपि प्रवृत्तिहेतुत्वात् ।

यदपि 'न हि संभवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमतः उपादत्ते तत्कारणं तन्नेत्याशङ्कते चेति' इति ।

तदपि न । वन्ह्यादिकं धूमादिकारणमेव नेति निषेधकस्योपादानासंभवेऽपि कारणं नवेति शङ्कमानस्य तत्संभवात् । न हि चार्वाकः कारणमेव निषेधति किन्तु कारणं नवेति संदिग्धे ।

अस्तु वा धूमार्थं वह्नौ प्रवर्तमानस्य न वह्निः धूमकारणमिति शङ्कानुदयः । तथापि धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात्, अनुत्पन्नः स्यात् इति तर्कमूलभूतव्याप्तौ वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्योऽपि कश्चन पदार्थः जन्यः किं न स्यादित्याशङ्का स्यादेव; स्वक्रियाविरोधाभावात् ।

**पक्षधरस्तु**— 'धूमो यदि वह्निव्यभिचारी स्यात् (तर्हि) वह्निजन्यो न स्यात् इति विपर्ययतर्क एव व्याप्तिग्राहकः । अयं च तर्को भवति चायं वह्निजन्य इति पर्यवसानमपेक्षते । वह्निजन्यत्वरूपविपर्ययश्च प्रत्यक्षेण ग्राह्यः । न च केवलस्य प्रत्यक्षस्य कार्यकारणभावग्राहकत्वं संभवतीति अनुग्राहकः तर्कः अपेक्षितः इति भावेन मणिकृता 'धूमो यदि वन्ह्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात्, तर्हि जन्यो न स्यात्' इति कार्यकारणभावग्राहकप्रत्यक्षसहकारितया तर्कः उक्तः । न तु व्याप्तिग्राहकप्रत्यक्षसहकारितया । 'जन्यश्चायं धूमः तस्मात्

वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यो नेति विपर्ययग्राहिणा प्रत्यक्षेण वह्न्यसमवहिता-जन्यत्वरूपविशेषणस्य प्रमाणान्तरसिद्धत्वात् विशिष्टाभावस्य विशेष्यविरहमात्रपर्यवसानमितिन्यायेन वह्निजन्यत्वं विपर्यीक्रियते ।

अस्मिंश्च तर्के यद्यपि वह्न्यसमवहिताजन्यत्वरूपापादकविशेषणासिद्धिप्रयुक्तस्य 'अवह्नेरेव धूमो भविष्यति, कचिद् वह्निं विनाऽपि भविष्यति' इति शङ्काद्वयस्य प्रसक्तिरस्ति । तथापि शङ्काद्वयमिह न भवति; धूमार्थं वह्न्युपादानलक्षणस्वक्रियाव्याघातादिति मूलाशयः' इत्याह ।

तन्न ॥ प्रत्यक्षेण कार्यकारणभावग्रहात् पुरा धूमस्य वह्न्यसमवहिताजन्यत्वासिद्ध्या उक्ततर्क-प्रवृत्त्यभिधानायोगात् । 'धूमो यदि वह्निजन्यो न स्यात् (तर्हि) धूमार्थिनां प्रेक्षावतां नियमेन वह्नौ प्रवृत्तिः न स्यात्' इति सुग्रहतर्कसहकृतप्रत्यक्षतः कार्यकारणभावग्रहसंभवे मण्युक्तदुर्ग्रहतर्कोपन्यास-वैयर्थ्यात् ।

यदपि– 'अवह्नेरेव भविष्यति, कचिद् वह्निं विनाऽपि भविष्यतीति शङ्काद्वयं व्याघातात् न भवति' इति । तदपि न । कार्यकारणभावग्रहानन्तरं धूमार्थं नियमेन वह्न्युपादानलक्षणस्वक्रिया । तस्यां च शङ्काद्वयनिरासः । तस्मिंश्च सति उक्ततर्कसहकृतेन प्रत्यक्षेण कार्यकारणभावग्रहः इत्यन्योन्या-श्रयात् ।

अहेतुक एवोत्पत्स्यते इति शङ्काया अपि मूलोक्तस्वक्रियाव्याघातनिरस्यत्वात् ; व्याघाता-प्रतिसन्धानदशायां संभावितत्वाच्च शङ्काद्वयस्य प्रसक्तिरस्तीति विशिष्याभिधानायोगाच्च ।

**शिरोमणिस्तु**–– 'वह्न्यजन्यमपि वह्निसमवहितजन्यं वह्न्यसमवहिताजन्यं संभवतीति वह्निजन्य-त्वपर्यवसितं वह्निसमवहितजन्यत्वं वाच्यम् । तथा च घटादौ व्यभिचारवारणाय आपाद्यकोटिप्रति-योगिविशेषणं सत्यन्तम् । अजन्ये जन्ये च नान्तरीयकवह्निके व्यभिचारवारणाय जन्ये इति ।

तदर्थस्तु– वह्न्यसमवधानकालीनवह्नितत्समवधानेतरयावत्कारणजन्यत्वम् । तथाविधयाव-त्कारणकत्वमिति यावत् । तथा च वह्न्यसमवहिताजन्यत्वे सति वह्न्यसमवधानकालीनवह्नितत्समव-धानेतरयावत्कारणको न स्यादिति पर्यवसितोऽर्थः' इत्याह ॥ तस्यार्थः वह्न्यजन्यमपीति ।

वह्न्यजन्यमपि घटादिकं नान्तरीयकवह्निसमवहितमृत्पिण्डादिसामग्रीजन्यत्वात् वह्न्यसमवहित-सामग्र्यजन्यत्वे सति वह्निसमवहित–मृत्पिण्डादिजन्यं दृष्टमिति आपादकविपर्ययपर्यवसानेन

वह्निजन्यत्वं न सिध्यतीति वह्निजन्यो न स्यात् इत्येव आपादकं वाच्यम् । न तु गुरुभूतं यथा-मूलप्राप्तमादरणीयमिति भावः ।

मूले आपादकविशेषणतया प्रतीयमानं वह्न्यसमवहिताजन्यत्वे सतीति विशेषणं नोत्पन्नः स्यादित्यापाद्यप्रतियोगिनो जन्यस्य विशेषणं बोध्यम् । ततश्च वह्न्यसमवहिताजन्यत्वे सति जन्यो न स्यादित्यापाद्यं पर्यवसन्नं भवतीत्याशयेन जन्यविशेषणस्य सत्यन्तस्य कृत्यमाह 'तथाच' इति ।

ननु यदि वह्निजन्यो न स्यात् तर्हि वह्न्यसमवहितसामग्र्यजन्यो न स्यात् इत्येव तर्कोऽस्तु । किमापाद्येऽजन्यपदग्रहणेन ? इत्यत आह - 'अजन्य' इति । अजन्ये गगनादौ नान्तरीयकवह्निसमवहितसामग्र्यजन्ये घटविशेषादौ च वन्ह्यजन्यत्वरूपापादकसद्भावेऽपि वन्ह्यसमवहितसामग्र्यजन्यत्वाभावरूपापाद्याभावेन व्यभिचारः स्यात् । मा माभूत् इत्येतदर्थं जन्यपदमित्यर्थः । जन्यपददानेन अजन्ये गगनादौ व्यभिचारपरिहारेऽपि नान्तरीयकवह्निसमवहितसामग्र्यजन्ये घटविशेषादौ न व्यभिचार-परिहारः इति अतो जन्यपदार्थमाह तदर्थस्तु इति ।

वह्न्यसमवधानकाले विद्यमानानि वह्निश्च तत्समवधानं च ताभ्यां इतराणि यावन्ति कारणानि तज्जन्यत्वं जन्यशब्दार्थः इत्यर्थः ।

नन्वेवं सति विपर्यये पर्यवसानायोगः । धूमस्य वह्निजन्यत्ववादिमते वह्न्यसमवधानकालिक-वह्नितत्समवधानेतरयावत्कारणजन्यत्वाभावात् । तथात्वे च वह्निजन्यत्वाभावप्रसङ्गात् । न हि यद्यद्-समवधानकालिकसामग्रीजन्यं तत् तज्जन्यं संभवति इत्यतः स्वाभिप्रायमाह— तथाविधेति । वह्न्यसमवधानकाले वह्नितत्समवधानेतरयावत्कारणकत्वं जन्यशब्दार्थ इत्यर्थः ।

नास्माभिः धूमस्य वह्न्यसमवधानकाले जन्यत्वमुच्यते । येनोक्तदोषः स्यात् । किं नाम वह्न्यसमवधानकाले तदुभयन्यूनयावत्कारणकत्वं उच्यते ।

न ह्येवं सत्यपि नान्तरीयकवह्निसमवहितसामग्र्यजन्ये घटे व्यभिचारो भवति । घटस्य वह्न्य-समवधानकाले यावत्कारणकत्वस्यैव विद्यमानत्वेन वह्नितत्समवधानन्यूनयावत्कारणकत्वाभावात् । न हि घटसामग्र्यां वह्नितत्समवधाने प्रविष्टे । येन तस्मिन् काले घटस्य तदुभयन्यूनसामग्रीकत्वं स्यात् ।

एवं जन्यशब्दार्थमुक्त्वा समग्रमापाद्यमाह 'तथाच' इति। वह्निवत् तत्समवधानमपि वह्निकार्यं प्रति कारणम्। तथाच वह्न्यसमवहिताजन्यत्वे सति वह्न्यसमवधानकालीनवह्नीतरयावत्कारणको न स्यात् इत्येतावन्मात्रोक्तौ इष्टापत्तिशङ्का स्यात्। वह्न्यसमवधानकाले वह्निसमवधानरूपकारणाभावेन वह्नीतरयावत्कारणासंभवेन तादृशयावत्कारणकत्वाभावस्य अभिमतत्वात्; सा मा भूदित्येतदर्थं वह्नित-त्समवधानेत्युक्तम्' इत्याह।

**सः स्थूलदृश्वा।** प्रयोजनविधुरस्य विशेषणस्य उपादानात्। तस्य च घटादौ अप्राप्त-व्यभिचारवारणलक्षणप्रयोजनाभिधानाच्च॥ न हि घटादौ वह्न्यसमवधानकालीनवह्नितत्समवधानेतर-यावत्कारणकत्वरूप(त्वद्वि)विवक्षितजन्यत्वाभावो नास्ति। येन सत्यन्तविशेषणस्य तत्र व्यभिचार-वारकत्वाभिधानं युक्तं स्यात्।

किञ्च अस्यापि तर्कस्य 'भवति चायं वह्न्यसमवधानकाले वह्नितत्समवधानेतरयावत्कारणकः' इति विपर्यये पर्यवसानमपेक्षितम्। अन्यथा तर्काभासः स्यात्। तज्ज्ञानं च वह्नितत्समवधानयोः कारणताज्ञानसाध्यम्। ततश्च कारणताग्राहिप्रत्यक्षप्रवृत्तौ एतत्तर्कप्रवृत्तिः; तत्प्रवृत्तौ च कारणताग्राहि-प्रत्यक्षप्रवृत्तिः इत्यन्योन्याश्रय इति॥

## ॥ इति सहचारवादे मण्युक्तकारणताग्राहकतर्कभङ्गः ॥

**मणिकारस्तु** — 'उक्तप्रकारेषु अन्योन्याभावगर्भव्याप्तिः अनुमितिहेतुः। लाघवात्। अतो नाननुगमः। अनौपाधिकत्वं तु तल्लिङ्गम्' इत्याह।

**सः स्थूलदृश्वा।** अनुमितिहेतुज्ञानविषयीभूतव्याप्तिनिरूपणावसरे अत्यन्ताभावगर्भव्याप्तिं तत्त्वेन निरूप्य इदानीं अनुमितिहेतुत्वाभावाभिधानात्। न हि अत्यन्ताभावगर्भव्याप्तेरनुमित्यनुप-योगित्वे व्याप्तिवादे तन्निरूपणस्य प्रयोजनमस्ति। व्याप्तेरनेकानि लक्षणानि निरूपयित्वा लक्ष्यैक्यस्य वक्तव्यत्वेन अन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुः नात्यन्ताभावगर्भेत्यभिधानायोगाच्च।

किञ्च अन्योन्याभावगर्भव्याप्तिज्ञानस्य नियतपूर्ववर्तित्वमस्ति न वा। आद्ये तत एव कारणत्वस्य वक्तव्यत्वेन लाघवादरणवैयर्थ्यम्। न हि अन्योन्याभावगर्भव्याप्तिज्ञानस्यैव अत्यन्ताभावगर्भव्याप्ति-

ज्ञानस्य नियतपूर्ववर्तित्वं दृष्टं इष्टं वा । येन तद्धेतुत्वव्युदासाय लाघवादरणं युक्तं स्यात् । **द्वितीये** हेतुभावस्यैव अनिश्चितत्वेन लाघवादरणवैयर्थ्यम् ।

यदपि 'अनौपाधिकत्वं तु तल्लिङ्गम्' इति । एतदपि न । 'अनौपाधिकत्वं वा व्याप्तिः' इति प्राक् व्याप्तेरनौपाधिकत्वरू(ताया)पतया उक्तत्वेन तद्विरोधात् ।

**पक्षधरस्तु**— 'व्याप्त्योर्भेद एव न किन्तु एकैव व्याप्तिः । तथाहि— धूमसमानाधिकरणो यो धर्मः तदप्रतियोगित्वं तदविरोधित्वं, तदधिकरणानधिकरणभिन्नत्वमिति यावत् । तद्वता सामानाधिकरण्यम् । भवति च व्यभिचारिणि हेतुसमानाधिकरणस्य साध्यात्यन्ताभावस्य तद्वदन्योन्याभावस्य चाधिकरणानधिकरणमेव साध्यम् । तदुभयस्यैकत्रावृत्तेः । तादृशश्च प्रतियोगिव्यधिकरणात्यन्ताभावोऽन्योन्याभावश्चेति विशेषणद्वयगर्भा व्याप्तिरुक्ताः न तु अत्यन्ताभावगर्भत्वेन व्याप्तिज्ञानं कारणं, अपि तु अन्योन्याभावगर्भत्वेन' इत्याह ।

**सः स्थूलदृश्वा** । साध्यसामानाधिकरण्यं हेतोर्व्याप्तिः । साध्यं च हेतुसमानाधिकरणान्योन्याभावस्याप्रतियोगितावच्छेदकम् । तथा तत्समानाधिकरणात्यन्ताभावाप्रतियोगि च भवति । न च एतावता साध्यप्रतियोगिकहेतुनिष्ठं सामानाधिकरण्यं भिद्यते । अतिप्रसङ्गात्ः इत्येव व्याप्त्योरभेदस्य व्युत्पादयितव्यत्वेन तद्विहाय हेतुसमानाधिकरणधर्माप्रतियोगित्वावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः इत्यनुगमकरणात् । न हि साधनसमानाधिकरणान्योन्याभावात्यन्ताभावयोरेकोक्त्या संग्रहाभावप्रयुक्तो व्याप्तिभेदः प्राप्तोऽभूत् । येन अत्यन्ताभावान्योन्याभावयोरेकोक्त्याऽभेदः स्यात् ।

॥ इति सहचारवादे अन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुरिति मण्युक्तनियमभङ्गः ॥

**मणिकारस्तु**— 'व्याप्तिग्रहश्च सामान्यलक्षणया प्रत्यासत्त्या सकलधूमविषयः । कथमन्यथा पर्वतीयधूमव्याप्त्यग्रहे ततोऽनुमितिः । सा च इन्द्रियसंबद्धविशेषणता अतिरिक्तैव वा । तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेन अनागतादौ संयोगादेरभावादिति वदन्तीत्यादिना पूर्वाचार्यमतमनूद्य तत्र 'तदपरे न क्षमन्ते । आदौ सन्निकृष्टधूमविषयकः 'धूमो वह्निव्याप्यः' इत्यनुभवो भवति । व्याप्तिस्मरणमपि 'स धूमो वह्निव्याप्यः' इति धूमत्वप्रकारकमेव भवति । ततो व्याप्तिस्मृतिसमानप्रकारकं 'धूमवानयम्' इति ज्ञानमुदेति । ततोऽनुमितिः । व्याप्त्यनुभवस्मरणपक्षधर्मताज्ञानानां एकप्रकारकत्वेन

अनुमितिकारणत्वात् । अपूर्वव्यक्तिलाभस्तु पक्षधर्मताबलात् । तथा च 'धूमो वह्निव्याप्यः' इत्येव व्याप्त्यनुभवः । न तु सर्वो धूमो वह्निव्याप्यः' इति । येन सर्वधूमभानार्थं सामान्यस्य प्रत्यासत्तित्वं अभ्युपेयं स्यात्' इत्याशङ्क्य, उच्यते, यदि सामान्यलक्षणा नास्ति तदाऽनुकूलतर्काभावदशायां धूमादौ व्यभिचारसंशयो न स्यात् । प्रसिद्धधूमे वह्निसंबन्धावगमेन देशान्तरीयकालान्तरीयधूमस्य मानाभावेन अज्ञानेन तदुभयविशेष्यकसंशयायोगात् । सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते इति संशयसिद्ध्यर्थं सामान्यलक्षणप्रत्यासत्तिः एष्टव्या' इति समादधौ ।

**तन्न ॥** प्रसिद्धधूमे वह्निसंबन्धनिश्चयेऽपि देशकालान्तरभाविधूमस्य लोकव्यवहारात्, विप्रतिपन्नः कालः धूमवान् प्रलयेतरकालत्वात् इत्यनुमानाद्वा अवगतौ धूमो वह्निव्यभिचारी न वेति मानससंशयोपपत्तेः । न च सामान्यप्रत्यासत्त्यभावे सर्वोपसंहारेण व्याप्तिग्रहासंभवादस्यानुमानस्याप्रवृत्तिरिति वाच्यम् । सामान्यप्रत्यासत्त्यभावेऽपि अदृष्टोपगृहीतप्रत्यक्षेणैव व्याप्तिग्रहस्योक्तत्वात् । चक्षुषा पुरोवर्तिधूमदर्शनानन्तरं अदृष्टोपगृहीतेनैव तेन सकलधूमोपस्थितौ 'धूमो वह्निव्यभिचारी न वा ?' इति चाक्षुषोऽपि संशयः उपपन्नः इति न संशयार्थं सामान्यस्य प्रत्यासत्तित्वकल्पना । अयुक्तं च अननुगतानां सामान्यानां प्रत्यासत्तित्वम् । अनुगतान्येव घटत्वादिसामान्यानीति चेत् ।

अत्र वक्तव्यम्— अनेकेषु घटेषु घटत्वादिसामान्यानि किमनेकेषु घटेषु व्यासज्य वर्तन्ते ? उत प्रत्येकं सामस्त्येन वर्तन्ते ? नाद्यः । एकस्य घटस्य दर्शने घटबुद्ध्यभावापातात् । न हि एकस्य घटस्य दर्शने द्वाविति बुद्धिर्भवति । येन घट इति बुद्धिः ।

द्वितीये कथं सामान्यस्य नाननुगमः ? एकैकत्र सामस्त्येन विद्यमानानां रूपरसादीनां नानात्वदर्शनात् । अन्यथा घटपटादिषु नीलं नामैकमेव रूपम् । किं नाम प्रत्येकं सामस्त्येनास्तीत्यपि स्यात् ।

न हि रूपादिकं नाना घटत्वादिकं तु एकमेवेत्यत्र किञ्चिन्मानम् । येन वैषम्यं स्यात् ।

यदि घट इत्यनुगतबुद्ध्यन्यथानुपपत्त्या घटत्वमेकं स्यात् तर्हि नील इत्यनुगतबुद्ध्यन्यथानुपपत्त्या नीलरूपमेकं स्यात् । यदि रूपाणां सादृश्यादनुगतबुद्धिः घटत्वादीनामपि सादृश्यादनुगतबुद्धिरस्तु ॥

**रुचिदत्तस्तु—** 'वह्निमानित्यनुमितेर्विशेषणज्ञानजन्यत्वानुमानादेव सामान्यप्रत्यासत्तिसिद्धिः । न च अनुमानादेव विशेषणज्ञानमस्त्विति वाच्यम् । अनवस्थापातात् । तस्मात् तत्र कलससामान्यप्रत्यासत्तिर्व्याप्त्यादिकमपि ग्राहयतीति तत्त्वं' इत्याह ।

**तन्न** । उक्तरीत्या अदृष्टप्रत्यासत्त्यैव विशेषणबुद्धेः सिद्धत्वात् । तस्याननुगतत्वेन तेन विशेषणबुद्ध्युदयासंभवस्योक्तत्वाच्च ।

**पक्षधरस्तु**— 'सामान्यलक्षणां विना अन्धकारप्रत्ययानुदयप्रसङ्गः । यावत्तेजोविरहव्यक्तेः यावत्तेजोग्रहाधीनग्रहनियमात् । न च तां विहाय यावद्व्यक्तिभानम् । न च प्रतियोगिज्ञानं विना अभावधीरस्ति' इत्याह ॥

**तदपि न** । अन्धकारस्य भावत्वेन अभावत्वाभावात् । रूपादिगुणाश्रयस्य द्रव्यत्वनियमात् । अस्तु वा अन्धकारस्याभावत्वं; तथापि प्रतिषेधाकारबुद्ध्यविषयत्वेन अन्धकारबुद्धेः प्रतियोगिज्ञानानपेक्षत्वात् । अन्यथा प्रमेयत्वेन घटाभावज्ञानेऽपि प्रतियोगिधीसापेक्षत्वं स्यात् ।

**शिरोमणिस्तु**— 'सामान्यलक्षणां विनाऽपि अयं कालः सुखप्रागभाववान् सुखोत्पादकालीनध्वंसप्रतियोगी वा कालत्वात् एतादृशकालत्वाद्वा इत्यनुमानादसिद्धसुखस्य ज्ञानं सुलभमेवेति सामान्यलक्षणाप्रत्यासत्तिः न' इत्याह ।

**तदपि न** । सुखप्रागभाववानिति स्वपरिचितवर्तमाननिष्ठसुखप्रागभावसाधने बाधात् अपरिचितसुखप्रागभावस्य प्रतियोगिज्ञानाभावेन ज्ञातुमशक्यत्वात् । न च– 'प्रतियोगितावच्छेदकावच्छिन्नज्ञानमेव अभावज्ञानकारणम् । न तु प्रतियोगिज्ञानमपि । गौरवात् । प्रकृते च तदवच्छेदकावच्छिन्नज्ञानसद्भावात् सुखप्रागभावज्ञानं नानुपपन्नं' इति वाच्यम् । तत्तत्सुखत्वादीनामेव तत्प्रतियोगितावच्छेदकत्वेन सुखत्वस्य अनवच्छेदकत्वात् । निषेधज्ञानस्य निषेध्यज्ञानपूर्वकत्वेन प्रतियोगिज्ञानस्य भाव्यत्वाच्च ।

अत एव द्वितीयानुमानमपि परास्तम् । एष्यत्सुखज्ञानाभावेन सुखोत्पादकालीनध्वंसप्रतियोगित्वज्ञानासंभवात् ।

**यत्तु**– सामान्यलक्षणप्रत्यासत्तिनिराकरणं तदनुमतमेवास्माकम् ।

॥ इति **मण्युक्तसामान्यलक्षणप्रत्यासत्तिभङ्गः** ॥

साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः उपाधिः । साध्यत्वाभिमतव्यापकत्वमात्रं प्रमेयत्वादौ गतम् । अतः साधनत्वाभिमताव्यापक इति विशेषणम् । साधनत्वाभिमताव्यापकत्वमात्रं तु धूमाव्यापके महानसत्वादौ गतम् । अतः साध्यत्वाभिमतव्यापकत्वे सतीति विशेषणम् ।

न च 'सः श्यामः मित्रातनयत्वात्' इत्यनुमानोपाधौ पक्षधर्मावच्छिन्नसाध्यव्यापके शाकपाकजत्वे, 'प्रागभावः विनाशी जन्यत्वात्' इत्यनुमानोपाधौ साधनावच्छिन्नसाध्यव्यापके भावत्वे च शुद्धसाध्यव्यापकत्वाभावेन अव्यापकत्वात् नेदं लक्षणमिति युक्तम्। साधनपक्षधर्मावच्छिन्नसाध्यव्यापकानां अनुपाधित्वात्। तत्र शास्त्रकाराणां उपाधिशब्दव्यवहारस्तु उपाधिसादृश्यनिबन्धनः। उपाधिसादृश्यं तु स्वव्यभिचारेण हेतोः साध्यव्यभिचारितालिङ्गत्वम्। यथा हि शुद्धसाध्यव्यापकेन आर्द्रेन्धनाद्युपाधिना वह्निः धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वात् इति हेतोः साध्यव्यभिचारो विज्ञायते तथैव पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिनापि साध्यव्यभिचारित्वं विज्ञायते।

**तथाहि**– मित्रातनयत्वं नरत्वावच्छिन्नश्यामत्वव्यभिचारि, तद्व्यापकशाकपाकजत्वव्यभिचारित्वात् इति विशिष्टव्यभिचारेऽवगते विशेषणस्य प्रमाणसिद्धत्वात् विशेषणव्यभिचारायत्तविशिष्टव्यभिचारपर्यवसानायोगेन विशेष्यव्यभिचारेणैव विशिष्टव्यभिचारः पर्यवसितो भवति इति।

न चास्य उपाधित्वमेवास्तु इति वाच्यम्। विशिष्टव्यभिचारद्वारा साध्यव्यभिचारज्ञापकत्वेऽपि उपाधिवत् साक्षादेव साध्यव्यभिचारागमकत्वात्। अवच्छिन्नसाध्यव्यापकसाधनाव्यापकोपाधेः नियमेन साध्यव्यभिचारगमकत्वाभावाच्च।

घटो गुणवान् द्रव्यत्वादित्यत्र पृथिवीत्वावच्छिन्नसाध्यव्यापकक्रियावत्त्वस्य कथमपि हेतोः साध्यव्यभिचारगमकत्वाभावात्।

याऽपि 'इदमेव सामान्यलक्षणम्। साध्यपदेन अवच्छिन्नानवच्छिन्नसाध्यस्य अभिधानात्। न च तत्र प्रतिपक्षासंभवः। यदवच्छिन्नसाध्ये य उपाधिः तद्व्यावृत्तः तद्विशिष्टाभावे हेतुत्वोपपत्तेः इति सुधाः सा तु अवच्छिन्नसाध्यव्यापकसाधनाव्यापकरूपोपाधिप्रतिनिधेरपि उपचारतः उपाधिशब्दवाच्यताऽस्तीत्यभिप्रेत्य उपाधिशब्दवाच्यतायां मुख्यामुख्यत्वरूपं अवान्तरविशेषं अविवक्षित्वा प्रवृत्ता इति न तद्विरोधः शङ्क्यः।

अतः एव 'यदवच्छिन्नसाध्ये य उपाधिः तद्व्यावृत्तः तद्विशिष्टाभावे हेतुत्वोपपत्तेः इति विशिष्टसाध्य एव अवच्छिन्नसाध्यव्यापकस्य उपाधित्वमुक्तम्। अन्यथा शुद्धसाध्योपाधेरपि तस्य

व्यतिरेकमुखेन साक्षाच्छुद्धसाध्यव्यतिरेकगमकत्वासंभवेऽपि परम्परया तद्व्यतिरेकस्य साध्यव्यतिरेकहेतुत्वोपपत्तेः इत्यवक्ष्यत् ।

न च औत्सर्गिकव्याप्तिनिरूपकेष्टसाधनत्वरूपसाध्यव्यापके अनन्तत्वरूपसाधनाव्यापके विपक्षसम्पर्कशून्यत्वेऽतिव्याप्तिरिति वाच्यम् । तस्यापि लक्ष्यत्वात् । न च अनुमानस्य आभासताप्रसङ्गः । औत्सर्गिकव्याप्तिके व्याप्तिग्राहकप्रमाणसद्भावेन व्यभिचारस्यैव अदोषतया तदुन्नायकोपाधेरप्यदोषत्वात् ।

## || इति स्वमते उपाधिनिरूपणम् ||

**मणिकारस्तु–** 'यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं सः उपाधिः । लक्षणं तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् । यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्यवसितं साध्यम् । स च धर्मः साधनमेव । क्वचिद् द्रव्यत्वादि क्वचिन्महानसत्वादि । तद्यथा– ध्वंसः विनाशी जन्यत्वादित्यादौ साधनमेव साध्यप्रसिद्ध्यवच्छेदको धर्मः । जन्यत्ववति विनाशित्वस्य सुप्रसिद्धत्वात् । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र द्रव्यत्वं साध्यप्रसिद्ध्यवच्छेदको धर्मः । द्रव्यत्ववति बहिरिन्द्रियप्रत्यक्षत्वमिति प्रसिद्धत्वात् । अयं धूमवान् वह्नेः इत्यत्र महानसत्वादिः साध्यप्रसिद्ध्यवच्छेदको धर्मः । महानसत्वादिमति धूमस्य प्रसिद्धत्वात् । तथाच आद्यानुमाने जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वं उपाधिः । द्वितीयानुमाने द्रव्यत्वावच्छिन्नबहिरिन्द्रियप्रत्यक्षत्वव्यापकउद्भूतरूपवत्वं उपाधिः । तृतीयानुमाने महानसत्वाद्यवच्छिन्नसाध्यव्यापकं व्यञ्जनवत्वादिकं उपाधिः' इत्याह ।

**तन्न** । स्थाल्यादिमत्त्वादेः धूमानुमानोपाधित्वप्रसङ्गात् । भवति हि स्थाल्यादिमत्त्वं महानसत्वावच्छिन्नस्य वह्नेः व्यापकं, अव्यापकं च धूमस्य ।

न च पर्यवसितसाध्यव्यापकेत्यनेन यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वं न विवक्षितम् । किन्तु साधनव्यापकधर्मावच्छिन्नसाध्यव्यापकत्वं विवक्षितम् । स्थाल्यादिमत्त्वं च महानसत्वावच्छिन्नसाध्यव्यापकमपि न साधनव्यापकधर्मावच्छिन्नसाध्यव्यापकमिति नोपाधिरिति वाच्यम् । 'क्वचिन्महानसत्वादि' इति साधनाव्यापकमहानसत्वादेरपि साध्यप्रसिद्ध्यवच्छेदकतायाः त्वयैवाभिधानात् । सः श्यामः मित्रापुत्रत्वात् इत्यत्र नरत्वावच्छिन्नश्यामत्वव्यापकस्य शाकपाकजत्वस्य अनुपाधित्वप्रसङ्गाच्च । न हि नरत्वं साधनव्यापकमिति युक्तम् । मित्रापुत्रकोकिलादौ अभावात् । न चासावनुपाधिः ।

स्वव्यभिचारेण साधनस्य साध्यव्यभिचारोन्नायकत्वात् । तस्यैव त्वया उपाधिशब्दप्रवृत्तितया अभिधानात् ।

अथ यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वं विवक्षितम् । ततश्च स्थाल्यादिमत्त्वं महानसत्वावच्छिन्नवह्नेरिव तदवच्छिन्नधूमस्यापि व्यापकमिति नोपाधिरिति चेत् । न । पर्वतो धूमवान् वह्नेः इत्यनुमानोपाधौ आर्द्रेन्धनप्रभववह्नौ अव्याप्तेः । यथाहि आर्द्रेन्धनप्रभववह्निः आर्द्रेन्धनावच्छिन्नधूमस्य व्यापकः तथैव आर्द्रेन्धनावच्छिन्नवह्नेरपि व्यापकः इत्यस्य सुप्रसिद्धत्वात् ।

**रुचिदत्तस्तु**— पर्यवसितसाध्यव्यापकत्वे सति साध्यव्यभिचारिसाधनाव्यापकत्वं वा साध्यसमानाधिकरणत्वे सति साध्यव्यभिचारिसाधनाव्यापकत्वं वा लक्षणम् । अत्र च निरधिकरणे साध्यविरुद्धे च सर्वथा उपाधिव्यवहाररहिते अतिव्याप्तिवारणाय सत्यन्तम् । व्यञ्जनवत्त्वादेः धूमादिहेतौ उपाधित्वप्रसङ्गवारणाय साध्यव्यभिचारि इति । नानेन रूपेण ज्ञातस्योपाधेः व्यभिचारोन्नायकत्वम् । येन उपाधिज्ञानकाल एव व्यभिचारस्य ज्ञातत्वात् उपाधेः वैयर्थ्यं स्यात् । किन्तु शुद्धसाध्यव्यापकत्वपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादिना ज्ञातस्य उपाधेः व्यभिचारोन्नायकत्वम्' इत्याह ।

**तन्न** । धूमवान् वह्नेः इत्यत्र पाषाणादेरपि उपाधित्वप्रसङ्गात् । तस्यापि पर्वतत्वावच्छिन्नसाध्यव्यापकत्वे सति साध्यव्यभिचारिसाधनाव्यापकत्वात्, साध्यसमानाधिकरणत्वे सति साधनाव्यापकत्वाच्च ।

अस्तु तस्याप्युपाधित्वमिति चेत् । न । शुद्धसाध्यव्यभिचारोन्नायकत्वाभावेन तस्यानुपाधित्वात् । पाषाणादौ उपाधिव्यवहाराभावाच्च । एवमप्युपाधित्वाङ्गीकारे आकाशादेरप्युपाधित्वापत्त्या तद्वारकविशेषणवैयर्थ्यात् ।

**पक्षधरस्तु**— 'यद्व्यभिचारित्वलिङ्गकानुमितिविषयः साध्यव्यभिचारित्वं यत्र साधने सः तत्रोपाधिः । तथा च विशेषणाव्यभिचारित्वसहकारिणा विशिष्टसाध्यव्यापकव्यभिचारित्वलिङ्गेन शुद्धसाध्यव्यभिचारानुमितिजननात् । शुद्धसाध्येऽपि पक्षधर्मावच्छिन्नसाध्यव्यापकोऽप्युपाधिः भवति' इत्याह ।

तदपि न 'पर्वतः आकाशवान् धूमात्' इत्यत्र घटस्य उपाधित्वप्रसंगात् । घटव्यभिचारित्व-लिङ्गेन धूमस्य आकाशव्यभिचारित्वज्ञानात् । तन्मते आकाशव्यभिचारित्वस्य केवलान्वयित्वेन सर्व-व्यभिचाराणां तल्लिङ्गत्वात् ।

न च घटव्यभिचारित्वं घटात्यन्ताभावसामानाधिकरण्यम् । एवं च साधिकरणत्वमात्रस्यैव गमकत्वे शेषवैयर्थ्यमिति वाच्यम् । अखण्डोपाधौ वैयर्थ्यशङ्कानुदयात् । अन्यथा 'शब्दोऽभिधेयः प्रमेयत्वात्' इत्यत्रापि वैयर्थ्यशङ्काप्रसङ्गः । प्रमाविषयत्वं हि प्रमेयत्वम् । एवं च 'विषयत्वमात्रेणालं किं प्रमापदेन' इति [तत्रापि] वक्तुं शक्यत्वात् ।

**यदत्रोक्तं**— 'साध्यपदेन सिद्धियोग्यस्य विवक्षितत्वात् नातिप्रसङ्गः । न ह्यवृत्तित्वेन प्रमितस्य आकाशस्य सिद्धियोग्यता अस्ति । सिद्धिविधुरत्वेन उपस्थितेः । अवृत्तित्वाज्ञाने च घटव्यभि-चारित्वादिना तद्व्यभिचारानुमापनात् । यत्रैवाधिकरणे आकाशवृत्तिताभ्रमः तद्धर्मे घटव्यमिचारित्वस्य आकाशव्यभिचारित्वेन सह व्यभिचारस्फुरणात्' इति ।

**तन्न** । 'आकाशो घटाधिकरणमात्रवृत्तिः' इति भ्रमदशायां आकाशे पक्षधर्मतासामानाधि-करण्येन सिद्धियोग्यतायाः संभवात्, घटव्यभिचारित्वस्य आकाशव्यभिचारित्वेन व्यभिचारस्फुरणा-भावेन तेन तत्साधनसौलभ्यात् ।

**शिरोमणिस्तु**— 'साध्यासमानाधिकरणस्य साध्यव्यापकाभावस्य वा अधिकरणं यत् साधनवत् [साधनाधिकरणं] तन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगिताव-च्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्वं उपाधित्वं' इत्याह । तस्यार्थः— साध्यासमानाधिकरणधर्मस्य साध्यव्यापकाभावस्य वा अधिकरणं [समानाधिकरणं] यत् साधनाधिकरणं [साधनं] तन्निष्ठः [तद्वन्निष्ठ]-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो योऽत्यन्ताभावः तत्प्रतियोगितावच्छेदकः साध्यसमा-नाधिकरणवृत्तिः यो धर्मः तद्वत्त्वं उपाधित्वं' इति ।

अस्ति चेदं आर्द्रेन्धनादिशुद्धसाध्यव्यापकोपाधौ । साध्यासमानाधिकरणायोगोलकत्वरूपधर्मस्य साध्यव्यापकीभूतधूमसामग्र्यभावस्य चाधिकरणे साधनाधिकरणे अयोगोलके विद्यमानस्य प्रतियोगि-तावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणस्य आर्द्रेन्धनात्यन्ताभावस्य प्रतियोगितावच्छेदकीभूतसाध्य-समानाधिकरणार्द्रेन्धनवृत्यार्द्रेन्धनत्वाख्यधर्मवत्त्वस्य तत्र सुप्रसिद्धत्वात् ।

अस्ति च अवच्छिन्नसाध्यव्यापकशाकपाकजत्वाद्युपाधौ । साध्यासमानाधिकरणमित्राष्टमगर्भत्व-रूपधर्माधिकरणसाधनाधिकरणाष्टमगर्भगतप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणशाकपाकजत्वात्यन्ताभावस्य प्रतियोगितावच्छेदकीभूतश्यामत्वसमानाधिकरणशाकपाकजत्ववृत्तिशाकपाकजत्वत्वरूप-धर्मवत्त्वस्य तत्र सुप्रसिद्धत्वात् ।

अत्र धर्मत्वमात्रं उपाधित्वं इत्युक्ते धूमानुमाने वह्निसामग्री उपाधिः स्यात् । अतः 'साध्य-समानाधिकरणवृत्ति' इत्युक्तम् । एवमपि तत्रैव वह्निसामग्र्याः न उपाधित्वपरिहारः । साध्यसमाना-धिकरणसामग्रीवृत्तिसामग्रीत्वरूपधर्मवत्त्वात् । तद्व्युदासाय 'साधनवन्निष्ठात्यन्ताभावप्रतियोगिता-वच्छेदक' इति साध्यसमानाधिकरणवृत्तिधर्मविशेषणम् । एवमपि 'घटः द्रव्यं पृथिवीत्वात्' इत्यत्र घटसंयोगस्य उपाधित्वं प्राप्नोति । तस्यापि उक्तधर्मवत्त्वात् । अतः प्रतियोगिव्यधिकरणेत्यत्यन्ताभाव-विशेषणमुपात्तम् । एवं सति 'रूपं द्रव्यं सत्त्वात्' इत्यत्र गुणकर्मान्यत्वविशिष्टसत्त्वस्य उपाधित्वं न प्राप्नोति । साधनवन्निष्ठगुणकर्मान्यत्वविशिष्टसत्त्वात्यन्ताभावस्य सत्त्वरूपप्रतियोगिसमानाधिकरणत्वेन प्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वाभावात् । तदर्थं प्रतियोगितावच्छेदका-वच्छिन्नेति प्रतियोगिविशेषणम् । उक्ताभावस्य सत्त्वरूपप्रतियोगिसमानाधिकरणत्वेऽपि प्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणत्वाभावात् अव्याप्तिपरिहारः । एवमपि धूमानुमाने व्यञ्जना-देरपि उपाधित्वं प्राप्नोति । साधनाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकव्यञ्जनत्वादिधर्मवत्वात् । तद्व्युदासाय साध्यासमानाधिकरणधर्माधिकरणेति साधनाधिकरणविशेषणमिति बोध्यम् ।

तदेतदसत् । 'धूमवान् वह्नेः' इत्यत्र व्यञ्जनादेरपि उपाधित्वापातात् । तत्रापि साध्यासमा-नाधिकरणधर्माधिकरणहेत्वधिकरणायोगोलकवृत्तिप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणव्यञ्जना-त्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणव्यञ्जनवृत्तिव्यञ्जनत्वरूपधर्मस्य सुप्रसिद्धत्वात् । व्यञ्जनादौ उपाधिव्यवहाराभावेन तस्य अनुपाधित्वात् । तस्मिन्नेव वह्न्यनुमाने ह्रदवृत्तित्व-विशिष्टवाच्यत्वेन रूपेण वाच्यत्वस्य उपाधित्वापाताच्च । भवति हि धूमरूपसाध्यासमानाधिकरणस्य अयोगोलकत्वस्य साध्यव्यापकाभावस्य च यदधिकरणं अयोगोलकं साधनवत् तन्निष्ठप्रतियोगितावच्छे-दकावच्छिन्नप्रतियोगिव्यधिकरणह्रदनिष्ठवाच्यत्वाभावस्य ह्रदनिष्ठत्वविशिष्टवाच्यत्वत्वं प्रतियोगिताव-च्छेदकं साध्यसमानाधिकरणे वाच्यत्वे वृत्ति चेति ।

'साध्यव्यापकत्वसाधनाव्यापकत्वावच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किंचिद्धर्म-व्यापकतावच्छेदकत्वरूपवत्त्वं' इति शिरोमण्युक्तं लक्षणान्तरम् । अस्ति चेदं शुद्धसाध्यव्यापकादौ-

नाद्युपाधौ । साध्यतावच्छेदकावच्छिन्नसाध्यव्यापकत्वस्य साधनतावच्छेदकावच्छिन्नसाधनाव्यापकत्वस्य च यत् अवच्छेदकरूपं आर्द्रेन्धनत्वं, तदनतिरिक्तवृत्ति तदेव, तद्भिन्नस्य तदतिरिक्तदेशवृत्तित्वासम्भवात् । तदेव च साध्यसमानाधिकरणयत्किंचिद्धर्मव्यापकतावच्छेदकरूपम् । धूमसमानाधिकरणं कालविशेषावच्छिन्नं महानसत्वं यत्र तत्र आर्द्रेन्धनं इति व्याप्तेः । एवं च उक्तरूपावच्छेदकानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किंचिद्धर्मव्यापकतावच्छेदकरूपार्द्रेन्धनवत्त्वस्य तत्र सत्त्वात् ।

अस्ति च अवच्छिन्नसाध्यव्यापकशाकपाकजत्वाद्युपाधौ । शुद्धसाध्यव्यापकत्वस्य साधनाव्यापकत्वस्य चावच्छेदकं रूपं साधनस्य साध्यव्यभिचारनिरूपकाष्टमगर्भरूपाधिकरणावृत्तित्वम् । यत्र श्यामत्वं तत्र मित्राष्टमगर्भवृत्ति धर्मः यत्र च मित्रातनयत्वं न तत्र मित्राष्टमगर्भवृत्तिधर्मः यत्र च मित्रातनयत्वं न तत्र मित्राष्टमगर्भवृत्तिपदार्थः इत्यस्ति । मित्राष्टमगर्भे व्यभिचारात् । एवं च मित्राष्टमगर्भवृत्तित्वस्य अनतिरिक्तवृत्तिधर्मः शाकपाकजत्वत्वम् । तदधिकरणे शाकपाकजत्वे मित्राष्टमगर्भवृत्तित्वस्य सत्त्वात् । तच्च शाकपाकजत्वत्वं साध्यसमानाधिकरणयत्किंचिद्धर्मस्य नरत्वावच्छिन्नश्यामत्वस्य व्यापकतावच्छेदकं रूपम् । तच्च अवच्छिन्नोपाधौ शाकपाकजत्वे अस्तीति सुप्रसिद्धमेवेति ।

'साध्यव्यापकत्वे सति साधनाव्यापकत्वं' इत्येतावन्मात्रोक्तौ साध्यव्यापकस्य अरण्यस्थार्द्रेन्धनस्य उपाधित्वं न स्यात् । तदर्थं साध्यव्यापकत्वसाधनाव्यापकत्वावच्छेदकरूपवत्त्वोक्तौ अवच्छिन्नसाध्यव्यापकशाकपाकजत्वादौ उपाधित्वं न स्यात् । तदर्थं तदनतिरिक्तवृत्तिधर्मवत्वविवक्षायां 'धूमवान् वह्नेः' इत्यत्र ह्रदत्वं ह्रदत्वत्वेन उपाधिः स्यात् । ह्रदत्वत्वस्यापि साध्यव्यापकत्वसाधनाव्यापकत्वावच्छेदकायोगोलकवृत्तित्वरूपधर्मानतिरिक्तवृत्तित्वात् । अस्ति हि ह्रदत्वत्वाधिकरणे ह्रदत्वे अयोगोलकावृत्तित्वम् । तत्परिहाराय उक्तरूपानतिरिक्तवृत्तिधर्मस्य साध्यसमानाधिकरणधर्मव्यापकतावच्छेदकरूपत्वं उक्तम् । एवं च सति असंभवः प्राप्नोति । उपाधितावच्छेदकस्य साध्यसमानाधिकरणप्रमेयत्वादियावद्धर्मव्यापकतावच्छेदकत्वाभावात् । तत्परिहाराय 'यत्किंचित्' इति साध्यसमानाधिकरणधर्मविशेषणम्' इति ॥

तन्न । 'तत् द्रव्यं सत्त्वात्' इत्यत्र सत्तायाः उपाधितापत्तेः । सत्तात्वस्य साध्यव्यापकत्वे सति साधनाव्यापकतायाः यत् अवच्छेदकं रूपं गुणकर्मान्यत्वविशिष्टसत्तात्वं, तदनतिरिक्तवृत्तित्वात् । सत्तात्वाधिकरणस्य गुणकर्मान्यत्वविशिष्टसत्तात्वाधिकरणस्य च भेदाभावात् ।

एवं द्रव्यत्वरूपसाध्यसमानाधिकरणगुणकर्मान्यत्वविशिष्टसत्त्वरूपयत्किंचिद्धर्मव्यापकतावच्छेदकत्वाच्च ॥

धूमवान् वह्नेरित्यत्र महानसत्वत्वेन महानसत्वस्य उपाधितापत्तेश्च । तस्यापि साध्यव्यापकत्व-साधनाव्यापकत्वावच्छेदकायोगोलकवृत्तित्वरूपधर्मानतिरिक्तवृत्तिमहानसत्वत्वाख्यसाध्यसमानाधिकरण-यत्किंचिद्धर्मव्यापकतावच्छेदकरूपवत्त्वात् ।

रूपादिसाध्यकद्रव्यत्वादिहेतौ पृथिवीत्वाभावादेः उपाधितामङ्गीकृत्य 'स्वविशिष्टसाध्यानधि-करणीभूतसाधनानधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं' इति लक्षणान्तरं कृत्वा, अत्र च पूर्वदलप्रविष्टा या साधनव्यक्तिः तदव्यापकत्वं बोध्यम् । तेन रूपादिना गुरुत्वादौ साध्ये पृथिवीत्वाभावादौ नातिप्रसङ्गः इति चोक्तम् ।

अस्यार्थः— उपाधिविशिष्टं यत्साध्यं तस्यानधिकरणं, यत्साधनाधिकरणं तद्वृत्तिधर्मावच्छिन्न-साध्यव्यापकत्वे सति उपाधिविशिष्टसाध्यानधिकरणवृत्तिसाधनव्यक्त्यव्यापकत्वमेवोपाधित्वं' इति ।

अस्ति चेदं 'रूपी द्रव्यत्वात्' इत्यनुमानोपाधौ पृथिवीत्वाभावे । उपाधिविशिष्टसाध्यानधिकरणे द्रव्यरूपसाधनाधिकरणे आकाशे वर्तमानगन्धानधिकरणत्वरूपधर्मावच्छिन्नरूपव्यापकत्वस्य जलादौ पृथिव्यां विवक्षितसाधनव्यक्त्यव्यापकत्वस्य च सत्त्वात् । न हि पृथिवीवृत्तिद्रव्यत्वमाकाशवृत्तिद्रव्यत्वं च भिन्नम् । येन विवक्षितसाधनव्यक्त्यव्यापकत्वं उपाधेः न स्यात् ।

नास्ति चेदं 'गुरुत्ववान् रूपात्' इत्यनुमानगतपृथिवीत्वाभावरूपोपाध्याभासे । तत्र उक्तरूप-पक्षधर्मावच्छिन्नसाध्यव्यापकत्वसत्त्वेऽपि, यन्निष्ठधर्ममादाय साध्यव्यापकत्वं गृहीतं तदधिकरणवृत्ति-साधनाव्यापकत्वाभावात् । न हि तेजोरूपं पृथिवीरूपं चैकम् । येन पृथिवीरूपाव्यापकत्वेन उपाधेः तेजोरूपाव्यापकत्वं स्यात् ।

ननु 'गुरुत्ववान् रूपात्' इत्यत्र पृथिवीत्वाभावोऽपि उपाधिरस्तु । किं तद्वारणार्थं पूर्वदल-प्रविष्टसाधनव्यक्त्यव्यापकत्वविवक्षया ? इति चेत् । न । व्यभिचारोन्नायकत्वासंभवेन तत्र तस्य अनुपाधित्वात् । तथा हि रूपं पृथिव्यप्तेजोगतं भिन्नभिन्नमेव । एवं च यत्र तेजोरूपे गुरुत्वरूप-साध्यव्यभिचारः न तत्र पृथिवीत्वाभावरूपोपाधिव्यभिचारः । यत्र च पृथिवीरूपे पृथिवीत्वाभाव-रूपोपाधिव्यभिचारः न तत्र गुरुत्वरूपसाध्यव्यभिचारः । सति चैवं कथमुपाधिव्यभिचारः साध्य-व्यभिचारं गमयेत् । सामानाधिकरण्यशून्यत्वात् ।

ननु 'रूपी (गुरु)द्रव्यत्वात्' इत्यत्रापि पृथिवीत्वाभावः द्रव्यत्वे रूपव्यभिचारं कथं गमयेत् । पृथिवीत्वाभावव्यभिचारस्य गन्धादौ सद्भावेऽपि रूपव्यभिचाराभावेन व्याप्त्यभावात् । ततश्च तत्रापि नायं उपाधिः इति चेत् । उच्यते । केवलस्य पृथिवीत्ववद्वृत्तित्वलक्षणस्य पृथिवीत्वाभावव्यभिचारस्य रूपव्यभिचारोन्नायकत्वाभावेऽपि विशेषणान्तरविशिष्टस्य तदस्त्येव । तथा हि 'द्रव्यत्वं रूपव्यभिचारि सत्ताद्रव्यत्वजलत्वानीति प्रतीतिविशेष्यत्वे सति पृथिवीत्ववद्वृत्तित्वात् सत्तावत् । सत्तायां हि 'सत्ताद्रव्यत्वजलत्वानि' इति प्रतीतिविशेष्यत्वे सति पृथिवीत्ववद्वृत्तित्वरूपसाधनं रूपव्यभिचारित्वलक्षणं च साध्यं सुप्रसिद्धम् ।

अत्र चानुमाने सत्ताग्रहणं सत्ताजातेः दृष्टान्तत्वसिध्यर्थम् । अन्यथा द्रव्यत्वजलत्वे इति प्रतीतिविशेष्यत्वे सति पृथिवीवृत्तित्वस्य तत्र अभावेन साधनविकलो दृष्टान्तः स्यात् । द्रव्यत्वग्रहणं असिद्धिवारणार्थम् । अन्यथा 'सत्ताजलत्वे' इति प्रतीतिविशेष्यत्वे सति पृथिवीवृत्तित्वस्य द्रव्यत्वे अभावेन असिद्धिः स्यात् । पृथिवीत्ववद्वृत्तित्वरूपविशेष्यसद्भावेऽपि सत्यन्तविशेषणाभावात् जलत्वग्रहणं विशेष्यवैयर्थ्यपरिहारार्थम । अन्यथा 'सत्ताद्रव्यत्वे' इति प्रतीतिविशेष्यत्वमात्रस्य रूपव्यभिचारसाधनसमर्थत्वेन पृथिवीत्ववद्वृत्तित्वादिति विशेष्यवैयर्थ्यं स्यात् । जलत्वग्रहणे पुनः क्रियमाणे न दोषो भवति । 'सत्ताद्रव्यत्वजलत्वानि' इति प्रतीतिविशेष्यत्वरूपसाधनस्य जलत्वे सद्भावेऽपि रूपव्यभिचाररूपसाध्याभावेन जलत्वे व्यभिचारप्राप्तौ तत्परिहाराय पृथिवीत्ववद्वृत्तित्वरूपविशेष्यस्य आवश्यकत्वात्' इति ॥ तन्न । स्वविशिष्टपदवैयर्थ्यात् ।

यदत्र केनचिदुक्तम्–– 'स्वविशिष्टपदादाने साध्यानधिकरणीभूतसाधनाधिकरणत्वविज्ञानदशायामेव व्यभिचारस्फूर्तिः स्यात् । ततश्च उपाधेः वैयर्थ्यं स्यात् । तन्मा भूत् इत्येव(तद)मर्थं विशेषणम् । स्वविशिष्टपदोपादाने च न दोषो भवति । हेतोः विशिष्टसाध्याभाववद्वृत्तित्वज्ञानेऽपि शुद्धसाध्याभाववद्वृत्तित्वज्ञानाभावात्' इति ।

**तन्न** । उपाधिमत्तया विज्ञाते द्रव्यत्वरूपसाधनाधिकरणे आकाशादौ उपाधिविशिष्टसाध्याभावज्ञाने व्यभिचारज्ञानानिवारणात् । विशेषणवति विशिष्टाभावस्य विशेष्याभावायत्तत्वनियमात् । अतिव्याप्त्यादिवारकविशेषणस्यैव लक्षणप्रवेशनियमेन प्रयोजनान्तराय विशेषणोपादानायोगाच्च । साधनाव्यापकत्वमात्रस्यैव आवश्यकत्वेन पूर्वदलप्रविष्टसाधनव्यक्त्यव्यापकत्वाभिधानायोगाच्च ।

न च रूपादिना गुरुत्वादौ साध्ये पृथिवीत्वाभावस्य उपाधित्ववारणाय पूर्वदलप्रविष्टसाधनव्यक्त्यव्यापकत्वं वक्तव्यमिति वाच्यम् । द्रव्यत्वेन रूपे साध्ये अनुपाधेरपि पृथिवीत्वाभावस्य उपाधित्वमङ्गीकृत्य तदनुगुणं लक्षणं ब्रुवता रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावस्य उपाधित्वनिवारणस्य अकर्तव्यत्वात् ।

न च द्रव्यत्वेन रूपे साध्ये 'द्रव्यत्वं रूपव्यभिचारि, सत्ता द्रव्यत्व-जलानि' इति प्रतीतिविशेष्यत्वे सति पृथिवीत्ववद्वृत्तित्वात्' इति उक्तविधया व्यभिचारोन्नायकत्वात् भवत्येव तत्र पृथिवीत्वाभावः उपाधिः । रूपेण गुरुत्वे साध्ये उपाधिव्यभिचारवति पृथिवीरूपे गुरुत्वव्यभिचाराभावेन साध्यव्यभिचारासमानाधिकरणस्य पृथिवीत्वाभावरूपोपाधिव्यभिचारस्य साध्यव्यभिचारोन्नायकत्वासंभवात् नासौ तत्र उपाधिरिति तद्वारणमुचितमिति वाच्यम् । 'रूपं गुरुत्वव्यभिचारि, सत्तारूपजलत्वानीतिप्रतीतिविशेष्यत्वे सति पृथिवीत्वाभावव्यभिचारित्वात् सत्तावत्' इति पृथिवीत्वाभावस्य गुरुत्वव्यभिचारोन्नायकत्वसंभवात् इति ।

यदि 'सत्तारूपे' इति प्रतीतिविशेष्यत्वमात्रस्यैव व्यभिचारोन्नायकत्वसंभवात् पृथिवीत्वाभावस्य अत्र नोपाधित्वम्, तर्हि 'सत्ताद्रव्यत्वे' इति प्रतीतिविशेष्यत्वमात्रस्यैव व्यभिचारोन्नायकत्वसंभवात् तत्रापि पृथिवीत्वाभावस्य नोपाधित्वमिति । एवं अन्यान्यपि लक्षणानि निरसनीयानि ।

॥ इति **परोक्तोपाधिलक्षणभङ्गः** ॥

**श्रीरस्तु** ॥ उपाधेः दूषकताबीजमुच्यते । उपाधिः कदाचिदव्याप्त्युन्नायकः । कदाचित् बाधोन्नायकः । कदाचित् प्रतिपक्षोन्नायकः । व्याप्तिग्रहणवेलायां अव्याप्तेरेव उन्नायकः । न बाधप्रतिपक्षयोः । पक्षे साध्योपसंहारवेलायामेव बाधप्रतिपक्षयोरवकाशात् ।

न च प्रत्यक्षेण साध्यव्यापकोपाधेः साधनाव्यापकत्वग्रहदशायामेव साधनाधिकरणे साध्याभावरूपाव्याप्तिग्रहस्य संभवेन उपाधेरव्याप्त्यनुमापकत्वमयुक्तम् । प्रत्यक्षासंभव एव अनुमानस्य अनुसर्तव्यत्वात् इति वाच्यम् । 'यत्र धूमः तत्रार्द्रेन्धनं' इत्युपाधेः साध्यव्यापकत्वं गृहीतवतः 'आर्द्रेन्धनं वह्निरूपसाधनाव्यापकं न वा' इति जिज्ञासायां तद्विचारार्थं प्रवृत्तस्य भूयस्सु स्थानेषु सहचारं पश्यतः कदाचिदयोगोलके वह्निदर्शनेऽपि आर्द्रेन्धनमपश्यतः साधनाव्यापकत्वग्रहेऽपि प्रतियोगिज्ञानविधुरस्य

साधनाधिकरणे साध्याभावरूपव्यभिचारग्रहासंभवेन अनुमानस्य अवश्यं अनुसर्तव्यत्वात् । तथा वह्निधूमयोः व्याप्तिग्रहणवेलायां 'आर्द्रेन्धनं धूमव्यापकं वह्न्यव्यापकं' इति आप्तोपदेशे अनुमानेनैव व्यभिचारज्ञानमिति वक्तव्यत्वाच्च । साध्यत्वाभिमतस्य अतीन्द्रियत्वे अव्याप्तेः अनुमानेनैव वेद्यत्वाच्च । पक्षादिप्रविभागानन्तरं स्वार्थानुमाने पूर्वानुभूतोपाधिस्मरणे सति उपाधिः बाधोन्नायको भवति । साध्यव्यापकोपाधिनिवृत्त्या साध्याभावनिश्चये पूर्वानुमानस्य बाधितविषयत्वावश्यंभावात् व्यापकनिवृत्त्या व्याप्यनिवृत्त्यनुमानस्य व्याप्तिपक्षधर्मतोपेतत्वेन बलवत्त्वात् ।

एवं वादिप्रतिवादिविवाददशायां प्रतिवाद्युद्भावितोपाधिः उभयवादिसंमतः चेत् बाधस्यैव उन्नायकः । व्याप्तिपक्षधर्मतोपेतत्वेन उपाधिव्यतिरेकरूपलिङ्गस्य बलवत्त्वात् ।

उद्भावितोपाधेः वाद्यसंमतत्वे तु प्रतिपक्षोन्नायको भवति । अभिमानतः उभयोरपि समबलत्वात् ।

ननु वाद्यसंमतोपाधिः प्रतिपक्षोन्नायकः इत्युक्तम् । प्रतिपक्षानुमाने अन्यतरासंमतोपाध्युद्भावनाभावप्रसङ्गात् । पूर्वं प्रतिपक्षेणैव प्रतिरुद्धानुमाने प्रतिपक्षोत्थापकोपाधिकृत्याभावात् ।

न च पूर्वप्रवृत्तप्रतिपक्षदार्ढ्याय प्रतिपक्षान्तरोद्भावनमिति वाच्यम् । असमर्थसमुदायस्याप्यसमर्थत्वात् इति चेत् । न । प्रतिपक्षानुमाने प्रतिवाद्यसंमतमुपाधिमुद्भाव्य प्रमाणेन संमतं कारयित्वा बाधं चोदयामीत्याशयेन उपाध्युद्भावनसंभवात्, पक्षादिप्रविभागानन्तरं बाधप्रतिपक्षयोरन्यतरस्य उद्भावकः इति न नियमः । किन्तु यदि उपाधिः पक्षाद्व्यावृत्तः तर्हि बाधप्रतिपक्षयोरन्यतरोद्भावकः । यदि न व्यावृत्तः तर्हि अव्याप्त्यनुमापकः । अत एव 'पर्वतो धूमवान् वह्नेः' इत्यत्र उपाधेः पक्षव्यावृत्त्यभावात् अनुद्भाव्यत्वमिति वदन्तः परास्ताः वेदितव्याः ।

नन्वेवं सुधाविरोधः । 'व्याप्तिग्रहणवेलायां अव्याप्तिरेव, अनुमानप्रवृत्त्युत्तरकालं सत्प्रतिपक्षतैव' इति अव्याप्तिप्रतिपक्षयोरेवोन्नायकत्वाभिधानात् इति चेन् । सामर्थ्यानिर्धारणायामेव प्रतिपक्षः; निर्धारिते तु सामर्थ्ये 'बाधको वा स्यात् बाध्यो वा' इति को नाम नाभ्युपैति' इति बाधोन्नायकत्वस्यापि सुधायामभिधानात् ।

'स एवोपाधिदोषोऽपि' इति प्रमाणलक्षणवाक्यमपि 'उपाधेरुभयसम्मतत्वाभावदशायां समबलप्रमाणविरोधान्तर्भावः' इत्यभिप्रायेण प्रवृत्तमिति न तद्विरोधः ।

नन्वेवं संदिग्धोपाधिः अदूषणं स्यात्। उक्ताव्याप्त्याद्युन्नायकत्वासम्भवात् इति चेन्न। अव्याप्त्युन्नायकत्वेन अदोषत्वेऽपि व्यभिचारसंशयाधायकत्वेन दोषत्वात्। व्यभिचारनिश्चयवत् व्यभिचारसंशयस्यापि दोषत्वात्।

ननु दूष्यानुमानस्य तर्कावतारे उपाधित्वेन अभिमतोऽनुपाधिरेव। साध्याव्यापकत्वात्। प्रतिपक्षानुमानस्य तदनुग्रहे तु बाध एवेति न प्रतिपक्षावसरः इति चेत्। न। यदा उभयत्र न तर्कावतारः तदा प्रतिपक्षः इत्यङ्गीकारात्।

ननु दूष्यानुमाने तर्कावतारदशायां उपाधेरप्रवृत्तेः तर्कानवतारे तु व्याप्तिग्रहविरहेण अनुमानस्य दुष्टत्वात् किं उपाधिचिन्तया? इति चेत्। न। शङ्कानवतारदशायां तर्कं विनाऽपि व्याप्तिग्रहदर्शनेन तर्कस्य व्याप्तिग्रहाहेतुत्वात्। 'तर्के सत्येव व्याप्तिग्रहः नान्यथा' इत्यङ्गीकारे तु तर्कस्यापि व्याप्तिमूलत्वेन तर्कपरम्परया अनवस्था स्यात्।

**॥ इति स्वमते उपाधेः दूषकताबीजनिरूपणम् ॥**

**श्रीरस्तु ॥ अथ उपाध्याभासाः–** असाधारणविपर्ययः। अप्रसिद्धसाध्यविपर्ययः। पूर्वसाधनव्यतिरेकः। पूर्वसाधनव्याप्यव्यतिरेकः। उत्तरसाधनव्याप्यव्यतिरेकः। पक्षविपक्षान्यतरान्यत्वम्। पक्षेतरवृत्तिसाध्याधारत्वं इत्येवमाद्याः बहुविधाः।

तत्र असाधारणविपर्ययो यथा– वह्निमान् धूमात् इत्यत्र पक्षेतरत्वम्। पर्वतो न वह्निमान् पर्वतत्वात् इति प्रयोगे उपाधिव्यतिरेकस्य हेतोः सपक्षमात्रव्यावृत्तत्वात्।

अप्रसिद्धसाध्यविपर्ययो यथा– शब्दः अभिधेयः प्रमेयत्वात् इत्यत्र अशब्दत्वम्। शब्दो नाभिधेयः शब्दत्वात् इति प्रयोगे साध्याप्रसिद्धेः।

पूर्वसाधनव्यतिरेको यथा– 'शर्करारसः अनित्यः अनित्यवृत्तिगुणत्वात्' इति वादिप्रयोगानन्तरं प्रतिवाद्युपन्यस्ते 'शर्करारसः नित्यः रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववत्' इति अनुमाने अनित्यवृत्तिगुणत्वव्यतिरेकः। अत्र यद्यपि अनित्यवृत्तिगुणत्वाभावः साध्यव्यापकत्वे सति साधनाव्यापकत्वात् अनित्यवृत्तिगुणत्वाभावत्वेन उपाधिरेव। तथापि न पूर्वसाधनव्यतिरेकत्वेन उपाधिः। पूर्वत्वापरत्वयोः अव्यवस्थितत्वात्।

पूर्वसाधनव्याप्यव्यतिरेको यथा— 'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इति वादिना उक्ते प्रतिवादी वदति 'क्षित्यादिकं विकर्तृकम् । अस्मत्संमतकर्तृरहितत्वात्' इति । अथ वादी आह— 'पूर्वसाधनस्य कार्यत्वस्य यद् व्याप्यं भावत्वे सति अनित्यत्वं, तद्विरहः उपाधिः' इति । अयमपि साध्यव्यापकत्वात् साधनाव्यापकत्वात् उपाधिरेव । तथापि पूर्वसाधनव्याप्यविपर्ययत्वेन रूपेण आभास एव । पूर्वसाधनव्याप्यत्वादेः अव्यवस्थितत्वात् ।

उत्तरसाधनव्यतिरेको यथा — 'शर्करारसो नित्यः रसननिर्विकल्पकविषयत्वात् रसत्ववत्' इति वादिना उक्ते शर्करारसोऽनित्यः अनित्यवृत्तिगुणत्वादिति प्रतिपक्षमुक्त्वा प्रतिवादी आह— 'त्वदनुमाने उत्तरसाधनव्यतिरेकः उपाधिरपि' इति । यद्यपि अयमुपाधिरेव । तथापि उत्तरसाधनव्यतिरेकत्वेन रूपेण आभास एव । तद्यथा धूमत्वेन रूपेण वह्निव्याप्योऽपि धूमः पुरोवर्तित्वेन रूपेण आभास एव ।

उत्तरसाधनव्याप्यव्यतिरेको यथा— क्षित्यादिकं विकर्तृकं अस्मत्संमतकर्तृरहितत्वात्' इति वादिना उक्ते 'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इति प्रतिपक्षं विधाय प्रतिवादी आह- 'उत्तरसाधनस्य कार्यत्वस्य यद् व्याप्यं भावत्वे सति अनित्यत्वं, तद्विरहः वाद्यनुमाने उपाधिः' इति । अस्य साध्यव्यापकत्वे सति साधनाव्यापकत्वेऽपि उत्तरसाधनव्याप्यव्यतिरेकत्वस्य अव्यवस्थितत्वात् तेन रूपेण आभासत्वम् ।

पक्षविपक्षान्यतरान्यत्वं यथा— धूमानुमाने पर्वतह्रदान्यतरान्यत्वम् ।

पक्षेतरवृत्तिसाध्याधारत्वं यथा— धूमानुमाने अपर्वतीयवह्न्यधिकरणत्वम् । एवमन्येषामपि यथासंभवं उदाहरणमूह्यम् ॥

॥ इत्युपाध्याभासनिरूपणम् ॥

साध्यधर्मप्रकारकानुमितिविषयत्वयोग्यता पक्षता । यदा विशेष्यतया साध्यधर्मप्रकारकयदीयानुमितिविषयत्वयोग्यता यस्य तदा तं प्रति सः पक्षः इति यावत् । योग्यता च क्वचित् संदेहात् भवति । यथा वह्निमत्तया संदिग्धस्य पर्वतस्य । क्वचित्तु सिषाधयिषया भवति । वह्निमत्तया निश्चितेऽपि महानसे सिषाधयिषया अनुमितिदर्शनात् । क्वचित्तु उभयाभावेऽपि अदृष्टवशाद् भवति । तद्यथा—घनगर्जितादिश्रवणे कालविशेषस्य 'अयं कालो वृष्टिमान् घनगर्जनविशेषवत्वात्' इति । संदेहवत् विपर्ययोऽपि पक्षताप्रयोजकः । अत एव संदिहानं प्रतीव भ्रान्तं प्रत्यपि तर्कावतारो भवति ।

इयांस्तु विशेषः । सन्दिहानः स्वयमेव निर्णयाय प्रवर्तते । भ्रान्तस्तु 'त्वज्ज्ञानं भ्रान्तिः' इत्याप्तोक्ते निर्णयाय प्रवर्तते । पूर्वपक्षात्मकभ्रमनिवृत्तये अधिकरणप्रवृत्तेः सर्वत्रोपलम्भात् ।

क्वचित् सभ्यादीनां कल्पनयाऽपि पक्षता । अत एव वादिप्रतिवादिनोः मध्यस्थपरिकल्पित-विषयमालम्ब्य वितण्डा प्रवर्तते । एवं जल्पे विद्यापरीक्षात्मकवादेऽपि मध्यस्थपरिकल्पनयैव पक्षता भवति ।

क्वचित्तु परकीयसंभावितसंशयाहरणेनापि पक्षता भवति । तद्यथा– परार्थानुमानप्रयोक्तुः ।

न च श्रोतुरेव पक्षता अस्तु । किं वक्तुः पक्षताङ्गीकारेण ? इति वाच्यम् । वक्तुरपि अनुमित्युत्पादात् । न हि परार्थं न्यायप्रयोक्तुः न्यायानुसंधानवतः अनुमितिः न उत्पद्यते इति युक्तम् । असति प्रतिबन्धे करणस्य क्रियोत्पादस्वाभाव्यात् । न च सिद्धिरेव प्रतिबन्धिकेति युक्तम् । सिद्धविषयकानुमितेः क्वाप्यनुत्पादप्रसङ्गेन सिद्धसाधनत्वास्यानुमानदोषस्य अलीकत्वापातात् ।

एवं अज्ञानमपि पक्षताप्रयोजकम् । अज्ञातबोधनाय परार्थानुमानप्रवृत्तिदर्शनात् । एवं परकीयाज्ञानाहरणमित्याद्यनेकं पक्षताप्रयोजकं द्रष्टव्यम् ।

उक्तं च सुधायां– 'वस्तुतस्तु अनुमितिविषयः पक्षः' इति ।

मिथ्यात्वानुमानखण्डने 'साध्यधर्मविशिष्टः पक्षः' इति अयावल्लक्ष्यभाविलक्षणमेव उक्तमिति न भ्रमानुमितिपक्षे अव्याप्तिः दोषाय इति बोध्यम् ।

न च सत्प्रतिपक्षस्थले परस्परप्रतिबन्धेन अनुमितेरजननात् अनुमितिविषयत्वयोग्यतारूपलक्षणं तत्राव्याप्तमिति वाच्यम् । तत्र निश्चयात्मकानुमित्यजननेऽपि एककोटिकसंशयात्मकानुमितिजननाङ्गी-कारात् ।

न च 'यत्सद्भावे लिङ्गाभिमतं ज्ञानमेव न जनयति, संशयविपर्ययौ वा करोति' इति पद्धत्युक्तेः सत्प्रतिपक्षस्थले लिङ्गाभिमतं ज्ञानमेव न जनयतीति वाच्यम् । तद्वाक्यस्य— "साध्या-भावेन लिङ्गस्य व्याप्त्यनुसन्धानवतः 'शब्दो नित्यः कृतकत्वात्' इत्यादिलिङ्गेन ज्ञानं न उदेति" इत्यर्थत्वात् ।

न च विरुद्धानुमानपक्षे अव्याप्तिः । विरुद्धहेतुना अनुमितेरजननेन तत्र अनुमितिविषयत्वयोग्यताभावात् इति वाच्यम् । तत्र अनुमितिविषयत्वाभावेऽपि योग्यतासद्भावात् । अन्यथा विरुद्धत्वाप्रतिसन्धानदशायां कार्योत्पत्तिः न स्यात् । अयोग्ये कार्योत्पादादर्शनात् । अनुमितिविषयत्वयोग्यतारूपपक्षता स्वरूपसत्येव अनुमितिहेतुः । न तु तज्ज्ञानम् ।

॥ इति स्वमते पक्षतानिरूपणम् ॥

**श्रीरस्तु ॥ मणिकारस्तु**— सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्र सः पक्षः । तेन सिषाधयिषाविरहसहकृतं साधकं प्रमाणं यत्रास्ति न सः पक्षः । यत्र साधकप्रमाणे सत्यमति वा सिषाधयिषा, यत्र च उभयाभावः, तत्र विशिष्टाभावात् पक्षत्वं' इति । यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वम्; तथापि पक्षपदप्रवृत्तिनिमित्तं उक्तम्' इत्याह ।

**तन्न** । 'पर्वतोऽग्निमान् धूमवत्वात्' इति प्रयोगवेलायां महाह्रदादेरपि पक्षत्वापातात् । सोऽपि पक्ष एवेति इष्टापत्तिः इति चेत् । न । तत्र वह्न्यभावप्रमायाः बाधत्वप्रसङ्गात् । पक्षे साध्याभावप्रमायाः बाधत्वात् । भागासिद्धिप्रसङ्गाच्च । पर्वतस्य अपक्षत्वापाताच्च । सिषाधयिषाविरहसहकृतमानस्यैव सत्त्वात् ।

न च पर्वते अनुमानरूपसाधकमानसद्भावेऽपि अनुमानेतरसाधकमानाभावस्य विवक्षितत्वात् न असंभवः इति वाच्यम् । अनुमित्यनन्तरमपि पक्षतापत्तेः । तदापि सिषाधयिषाविरहसहकृतानुमानेतरसाधकमानाभावसद्भावात् ॥

**रुचिदत्तस्तु**— 'अत्र च साधकमानपदं सिद्धिपरम् । तेन तादृशसिद्ध्यभाव एव पक्षता' इत्याह ॥

**तन्न** । महाह्रदस्य पक्षत्वानिस्तारात् ।

ननु सिषाधयिषाविरहसहकृतसिद्धिविषयत्वाभावो विवक्षितः । स च प्रागभावः । तस्य च ह्रदवृत्तित्वाभावात् नोक्तदोषः इति चेत् । न । सिद्धौ सत्यां सिषाधयिषावशेन पक्षताऽभावप्रसङ्गात् । वर्तमानायाः सिद्धेः विशेषणाभावेन प्रागभावायोगात् । यदपि मणौ– 'सिषाधयिषाविरहसहकृतं साधकप्रमाणं यत्रास्ति न सः पक्षः' इति ।

**तदपि न**। प्रत्यक्षादिजन्यसिद्धिदशायामपि 'अग्निमान् धूमवत्त्वात्' इति केनचिदुक्ते अनुमितिदर्शनेन तत्रापि पक्षतासद्भावात्। अन्यथा सिद्धसाधकत्वं अनुमानदूषणं न स्यात्। सिद्ध-साधकत्वेन अभिमतानां अज्ञापकत्वमेव दोषः स्यात्।

किञ्च अयोगोलकं पक्षीकृत्य 'वह्निमत् धूमात्' इति साधने असिद्धिर्नाम दूषणाभिधानं न स्यात्। साधकमानवतः तस्य अपक्षत्वेन तदवृत्तित्वस्य अदोषत्वात्।

यदपि 'यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वम्। तथाऽपि पक्षपदप्रवृत्तिनिमित्तं उक्तम्' इति। तदपि न। पक्षत्वस्य ससंबन्धिकत्वेन तल्लक्षणस्य भेदकत्वसंभवात्। अन्यथा पक्षत्वस्येव कारणत्वस्यापि केवलान्वयित्वात् कारणलक्षणमपि अव्यावर्तकं स्यात्। अपि च यदि पक्षत्वं केवलान्वयि पक्षशब्द[पद]प्रवृत्तिरपि सर्वत्रेति प्रमेयत्वमेव तथा वाच्यम्। कृतं सिषाधयिषा-विरहसहकृतसिद्ध्यभावत्वेन इति।

**॥ इति मण्युक्तपक्षताभङ्गः ॥**

**शिरोमणिस्तु**– 'स्वविषयसिद्ध्यनुपहिततदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छाविरह-विशिष्टसाध्यतावच्छेदकसंबन्धावगाहिसाध्यतावच्छेदकावच्छिन्नसाध्यविशेषणकधर्मितावच्छेदकावच्छिन्न-प्रकृतधर्मिविषयकसिद्ध्यभावः पक्षता' इति आह।

अस्यार्थः– स्वस्य सिषाधयिषायाः विषयीभूता या सिद्धिः अनुमितिरूपा, तया अनुपहिता प्रकृतलिङ्गान्यमात्रलिङ्गका या अनुमितीच्छा तदन्या या अनुमितीच्छा तद्विरहविशिष्टा या साध्यता-वच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यविशेषणकधर्मितावच्छेदकावच्छिन्नप्रकृतधर्मिविष-यिका सिद्धिः तदभावः पक्षता।

अस्ति चेदं संदेहविषये पर्वतादिरूपे पक्षे। तत्र साध्यसिद्धेरेव अभावेन उक्तरूपविशिष्टसि-द्ध्यभावस्य सत्त्वात्। अस्ति च सिद्धिविषये महानसादिरूपे पक्षे। तत्र सिद्धिसद्भावेऽपि तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छासद्भावेन तद्विरहविशिष्टसिद्धेरभावात्।

अत्र सिद्धिस्थले पक्षतासम्पत्तये 'अनुमितीच्छाविरहविशिष्ट' इति सिद्धिविशेषणम्। तत्र विशेषणाभावप्रयुक्तविशिष्टभावसद्भावात् पक्षतालाभः। 'धूमेन वह्निमनुमिनुयाम्' इतीच्छासद्भावे

सिद्धिदशायां आलोकलिङ्गकपरामर्शात् न अनुमितिरित्यविवादम् । ततश्च तत्र पक्षताऽपि नास्त्येवेत्यपि अविवादम् । एवं च अनुमितीच्छाविरहविशिष्टसिद्ध्यभावस्य तत्रापि सत्त्वात् लक्षणस्य तत्र अतिव्याप्तिः स्यात् । तत्परिहाराय 'तदन्यलिङ्गकानुमितीच्छातिरिक्त' इति अनुमितीच्छाविशेषणम् । तत्र तदन्यलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छाविरहरूपविशेषणस्यापि सद्भावेन न विशेषणाभावायत्तो विशिष्टाभावः इति नातिव्याप्तिः ।

'धूमेन वा प्रकाशविशेषेण वा वह्निमनुमिनुयाम्' इति इच्छादशायां सिद्धिकाले पक्षतालाभाय 'तदन्यमात्रलिङ्गक' इति मात्रपदोपादानम् । तत्र तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तेच्छा उभयलिङ्गकानुमितीच्छैव, इति तद्विरहरूपविशेषणाभावात् विशिष्टाभावः इति पक्षतालाभः ।

यत्र 'पर्वतः साध्यवान्, तद्व्याप्यधूमवान्, तद्व्याप्यार्द्रेन्धनादिसामग्रीविशेषवान्, साध्यवत्त्वानुमितिः इष्टसाधनं तद्व्याप्यधर्मवत्त्वानुमितिश्च इष्टसाधनं' इति समूहालम्बनात्मकमेकं स्मरणं, ततः साध्यतद्व्याप्यगोचरानुमितीच्छा, ततः पर्वतो वह्निमान्, वह्निव्याप्यधूमवांश्च' इत्येकैव अनुमितिः, तत्र अनुमित्यनन्तरं च पुनरनुमितिप्रसङ्गः । तत्र साध्यसिद्धिसद्भावेऽपि, ततः पूर्वक्षणे अनुमित्सासद्भावेन अनुमित्साविरहविशिष्टसिद्ध्यभावरूपपक्षतासद्भावात् । अनुमित्यात्मकलिङ्गपरामर्शस्यापि सद्भावात् इति तद्वारणाय 'स्वविषयसिद्ध्यनुपहित' इति अनुमितीच्छाविशेषणम् ।

प्रकृते च अनुमित्सायाः स्वविषयानुमितिरूपसिद्ध्युपहितत्वेन अनुपहितेच्छाविरहविशिष्टसिद्धेरेव भावेन तदभावाभावात् न पक्षता ।

तेजस्त्वादिना पर्वतीयवह्निसिद्धिदशायां सिषाधयिषाविरहेऽपि पर्वतस्य पक्षतालाभाय 'साध्यतावच्छेदकावच्छिन्न' [साध्यविशेषणक] इति सिद्धिविशेषणम् । तत्र तेजस्त्वेन रूपेण साध्यसिद्धावपि साध्यतावच्छेदकावच्छिन्नसाध्यविशेषणकसिद्ध्यभावस्य सुलभत्वात् पक्षतालाभः ।

'समवायेन पर्वते वह्निः' इति भ्रमदशायां संयोगेन वह्न्यनुमितिपक्षतालाभाय 'साध्यतावच्छेदकसंबन्धावच्छिन्न–साध्यविशेषणक' इति सिद्धिविशेषणम् । तत्र समवायेन वह्निविशेषणकसिद्धिसद्भावेऽपि साध्यतावच्छेदकसंयोगसंबन्धेन सिद्ध्यभावात् पक्षतालाभः ।

'पाषाणमये वह्निः' इति सिद्धिदशायां सिषाधयिषाविरहकाले पर्वतत्वेन पर्वतस्य पक्षतालाभाय 'धर्मितावच्छेदकावच्छिन्नधर्मिविषयक' इति सिद्धिविशेषणम् । तत्र पाषाणमयत्वावच्छेदेन साध्यसिद्धावपि धर्मितावच्छेदकपर्वतत्वावच्छिन्ने सिद्ध्यभावात् पक्षतालाभः ।

पर्वतान्तरे वह्निसिद्धिदशायां सिषाधयिषां विना पर्वतान्तरस्य पक्षतासंपत्तये 'तद्धर्मिविषयक' इति सिद्धिविशेषणम् । धर्म्यन्तरविषयकसिद्धिसद्भावेऽपि प्रकृतधर्मिविषयकसिद्ध्यभावात् पक्षतालाभः' इति ॥

**तन्न** । महाह्रदे अतिव्याप्तेः । तत्र सिद्धेरेवाभावेन त्वदुक्तविशिष्टसिद्ध्यभावस्यापि सत्त्वात् । सिद्धसाधनस्थले उक्तरूपेच्छाविरहसद्भावेऽपि सिद्धिदशायां पक्षतासद्भावेन तत्राव्याप्तेः ।

न च तत्र पक्षतैव न इति वाच्यम् । अनुमित्यभावप्रसंगात् । न च सिद्धेः प्रतिबन्धकत्वात् न तत्रानुमितिः इति वाच्यम् । तथा सति सिद्धसाधकत्वाख्यदूषणस्य अलीकतापातात् । न हि करणं सिद्धं न साधयति; सिद्धसाधनत्वं च एतस्य दूषणमिति संभवति ।

**सार्वभौमस्तु**— 'सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः, सिषाधयिषाविरहविशिष्टायाः तस्याः अभावः पक्षता' इत्याह ।

**तस्यार्थः**— सिषाधयिषाविरहविशिष्टो यः स्वक्षणः सिद्धिक्षणः । तदव्यवहितोत्तरक्षणोत्पत्तिका या सिद्धिः, सिषाधयिषाविनाशोत्तरक्षणोत्पन्ना सिद्धिः । एतन्मते सिषाधयिषाविनाशानन्तरं द्वि[त्र]-त्रिक्षणानन्तरमपि सिद्धिसत्त्वेऽपि अनुमित्युत्पादाङ्गीकारात् । तद्भिन्ना या सिद्धिः सिषाधयिषोत्पत्त्यनन्तरोत्पत्तिविधुरा सिद्धिः । सिषाधयिषाविरहविशिष्टायाः तस्याः अभावः पक्षता ।

अस्ति चेदं सन्देहविषये पर्वतादिरूपे पक्षे । तत्र सिद्धेरेवाभावेन विशिष्टसिद्ध्यभावस्य सम्भवात् । अस्ति च सिद्धिकालीनपक्षताके महानसादौ । यद्यपि महानसनिष्ठतया वह्निसिद्धिः, सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना । सिद्ध्यनन्तरं सिषाधयिषा, तदनन्तरं परामर्शः, तदनन्तरमनुमितिः, इति स्वक्षणव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात् । तथाऽपि सिषाधयिषायाः सत्त्वेन सिषाधयिषाविरहविशिष्टतदभावोक्तौ बाधकाभावात् ।

सिषाधयिषाविरहविशिष्टमहानसीयवह्निसिद्धेः स्वाधिकरणस्थूलकालाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेन तद्भिन्नसिद्धित्वाभावात् । तादृशसिद्ध्यन्तराभावमादाय महानसस्य सिषाधयिषाविरहविशिष्टसिद्धिकाले पक्षतां वारयितुं 'स्वक्षणाव्यवहित' इति आद्यं क्षणपदम् ।

एवमपि महानसीयपूर्वोक्तसिद्धेः स्वक्षणापेक्षया अव्यवहितोत्तरस्थूलकालोत्पत्तिकानुमितिकत्वया तद्भिन्नत्वाभावात्, सिद्ध्यन्तरमादाय महानसस्य पक्षतां वारयितुं 'अव्यवहितोत्तरक्षण' इति द्वितीयं क्षणपदम् ।

सिषाधयिषाकाले महानसस्य सिद्धिदशायां पक्षतासंपत्तये 'सिषाधयिषाविरहविशिष्टाया' इति सिद्धिविशेषणम् । अन्यथा सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्न-सिद्धेरेव सत्त्वेन तदभावाभावात् पक्षता न स्यात् । विशिष्टाभावोक्तौ तु पुनः न दोषो भवति । सिद्धिरूपविशेष्यसद्भावेऽपि विशेषणाभावायत्तविशिष्टाभावसंभवात् ।

सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता' इत्येतावन्मात्रोक्तौ, यत्रादौ सिषाधयिषा तन्नाशक्षणे 'वह्निमान्– वह्निव्याप्यधूमवान्' इति परामर्शात्मकसिद्धिः ततोऽनुमितिः, तत्र पक्षता न स्यात् । सिषाधयिषायाः विनष्टत्वेन तद्विरहरूपविशेषणस्य सिद्धिरूपविशेष्यस्य च सत्त्वेन विशिष्टाभावा-संभवात् । तदर्थं पक्षताप्रतियोगिन्याः सिद्धेः 'स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्न' इति विशेषणम् । सिषाधयिषोत्तरसिद्धेश्च स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेन तद्भिन्नत्वाभावात् । तदभावासंभवेऽपि न पक्षताहानिः ।

यत्र प्रथमं सिषाधयिषा, अनन्तरं प्रात्यक्षिकी सिद्धिः, अनन्तरं परामर्शः ततोऽनुमितिः, तत्र परामर्शक्षणे पक्षतासम्पत्तये 'सिषाधयिषाविरहविशिष्ट' इति स्वक्षणविशेषणम् । अन्यथा तत्र सिद्धेः, सिषाधयिषाविरहरूपविशेषणस्य च सत्त्वेन विशिष्टाभावासम्भवेन पक्षता न स्यात् । न च सिद्ध्यन्तरा-भावमादाय पक्षता । प्रकृतसिद्धेः स्वप्रथमक्षणापेक्षया व्यवहिततृतीयक्षणोत्पत्तिकानुमितिकतयाऽव्यवहित-क्षणोत्पत्तिकानुमितिकभिन्नसिद्धित्वेन तदभावस्यैव वक्तव्यत्वात् । सिषाधयिषाविरहविशिष्टेति स्वक्षणविशेषणोपादाने च न दोषो भवति । प्रकृतसिद्धेः सिषाधयिषाविरहविशिष्टस्वप्रथमक्षणापेक्षया व्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेऽपि सिषाधयिषाविरहविशिष्टस्वस्थितिक्षणाव्यवहितोत्तरोत्पत्तिकानु-मितिकत्वेन तद्भिन्नत्वाभावात् तदन्यसिद्ध्यभावस्यैव पक्षतात्वेन वक्तव्यत्वात्' इति ।

**तन्न** । यत्र सिषाधयिषानाशकाले प्रात्यक्षिकी सिद्धिः, अथ परामर्शः, तदनन्तरं चानुमितिः, तत्र परामर्शकाले पक्षताभावप्रसंगात् ।

तत्र परामर्शकाले सिषाधयिषाविरहविशिष्टस्वोत्पत्तिक्षणाव्यवहितोत्पत्तिकानुमितिकभिन्नायाः सिद्धेः, सिषाधयिषाविरहस्य च भावेन विशिष्टाभावस्य चाभावात्' इति **शिरोमणिः** ।

**सः स्थूलदृश्वा ।** प्रकृतसिद्धेः प्रथमक्षणापेक्षया व्यवहितक्षणोत्पत्तिकानुमितिकत्वेऽपि स्वस्थितिक्षणापेक्षया अव्यवहितक्षणोत्पत्तिकानुमितिकत्वेन तद्भिन्नसिद्धित्वासंभवेन तदभावासम्भवस्य अदोषत्वात् । वस्तुतस्तु धूमानुमाने महाहृदस्यापि पक्षत्वप्राप्तिरिति दूषणं बोध्यम् ॥

## ॥ शिरोमण्युक्तपक्षतालक्षणभङ्गः ॥

अनुमितिकरणस्य लिङ्गस्य व्याप्तिप्रकारकसमुचितदेशवृत्तित्वज्ञानं सहकारि । यथा वह्निव्याप्यधूमवानिति ज्ञानं धूमस्य । अत एव धूमवानयमिति ज्ञानात् नानुमितिप्रसङ्गः ।

**प्राभाकराः मन्यन्ते**– 'व्याप्यतावच्छेदकप्रकारेण व्याप्तिस्मरणं पक्षधर्मताज्ञानं चेति ज्ञानद्वयमेव अनुमितिहेतुः । लाघवात् । न तु व्याप्तिविशिष्टपक्षधर्मताज्ञानम् । गौरवात् । परामर्शस्य हेतुत्वं वदताऽपि तद्धेतुतया ज्ञानद्वयस्य अवश्यं वक्तव्यत्वाच्च ।

न च ज्ञानद्वयस्य कारणत्वकल्पनापेक्षया एकस्यैव विशिष्टज्ञानस्य कारणत्वकल्पनं लघु इति वाच्यम् । अनुमितेः पूर्वं विशिष्टज्ञाने प्रमाणाभावेन विशिष्टज्ञानाख्यधर्मिणः तत्कारणत्वस्य च गौरवेण अकल्प्यत्वात् । धर्मिकल्पनातो धर्ममात्रकल्पनायाः लघुत्वेन क्लृप्तज्ञानद्वयस्यैव कारणत्वकल्पनस्य औचित्याच्च ।

अथ यथा तत्ताविशिष्टस्मरणे सति इन्द्रियसन्निकृष्टे 'स एवायं' इति अभेदप्रत्ययो भवति, तथा इन्द्रियसन्निकृष्टे धूमे वह्निव्याप्यधूमस्मरणे धूमत्वासाधारणधर्मदर्शनात् 'व्याप्योयम्' इत्यभेदप्रत्ययः स्यात् । सामग्र्या वृत्तत्वात्; इति स एव अनुमितिहेतुः इति चेत् । न । प्रत्यक्षसामग्रीतो भिन्ने विषये अनुमितिसामग्र्याः बलवत्त्वात् । व्याप्याभेदप्रत्यक्षं पराभूय अनुमितेरेव उत्पत्तेः । अन्यथा तत्रापि परामर्शानन्तरं अनुव्यवसायो भवेत् । नत्वनुमितिः ।

अस्तु वा पक्षधर्मतयाऽवगतस्य व्याप्यतया अवगतेन सह भेदाग्रह एव अनुमितिहेतुः । परामर्शहेतुतया तस्य आवश्यकत्वात् । अत एव असन्निकृष्टधूमादिज्ञानादपि अनुमितिः । अन्यथा तत्र विशिष्टज्ञानासंभवेन अनुमितिः न स्यात्' इति ।

**तन्न ।** व्याप्तिमत्तया पर्वतीयधूमज्ञानाभावे पर्वते वह्निसिद्ध्यभावप्रसङ्गात् । 'नदीपूरदर्शनेन ऊर्ध्वदेशे वृष्टिसिद्धिः । वृष्टिदर्शनेन अधोदेशे नदीपूरसिद्धिः । धूमदर्शनेन धूमाधिकरणे एव वह्निसिद्धिः' इति कार्यवैरूप्ये स्वस्वव्याप्त्यनुसरणमन्तरा कारणान्तराभावात् ।

न चास्तु पर्वतीयधूमस्य वह्निव्याप्तिः, तज्ज्ञानं तु न अपेक्षितं इति वाच्यम्। अननुसंहित-व्याप्तेः साध्यसिद्धौ अनुपयोगात्।

किञ्च— 'अपर्वतीयो धूमो वह्निव्याप्यः, न तु पर्वतीयधूमः' इति ग्राह्याभावानवगाहिभ्रम-दशायां धूमात् अनुमितिः न भवति इति अनुभवसिद्धम्। न च पर्वतीयधूमव्यक्तेः व्यभिचारज्ञानं जनकीभूतज्ञानविघटनमन्तरा अनुमितिप्रतिबन्धकं भवति इत्येतद्विघटनीयं जनकीभूतज्ञानमास्थेयम्।

न चानेन विघटनीयं 'स धूमो वह्निव्याप्यः अयं च धूमवान्' इति विज्ञानद्वयं; ततोऽन्या-मेनापि तद्विघटनीयस्य 'वह्निव्याप्यधूमवानयं' इति विज्ञानस्य हेतुत्वमास्थेयम्। न च 'धूमो वह्निव्याप्यः' इति स्मरणे विद्यमाने धूमत्वविशेषदर्शनसद्भावेन 'पर्वतीयधूमो न वह्निव्याप्यः' इति विभ्रमो न संभवति इति वाच्यम्। सामान्यलक्षणप्रत्यासत्त्यनङ्गीकारवादिनः तव मते सर्वोपसंहारेण व्याप्तिग्रहाभावात्, 'धूमत्वं वह्निव्याप्यत्वानधिकदेशवृत्ती'ति ज्ञानासंभवेन धूमत्वज्ञानस्य उक्तभ्रमाप्रति-बन्धकत्वात्। न हि 'करादि पुरुषत्वव्याप्यम्' इति ज्ञानाभावदशायां करादिदर्शने सति 'स्थाणु'रिति भ्रमो नोत्पद्यते। येन अत्र 'नायं धूमो वह्निव्याप्य' इति भ्रमानुदयः स्यात्। सामान्यलक्षणप्रत्या-सत्तिसद्भावेऽपि धूमत्वस्य 'वह्निव्याप्तिव्याप्यत्वग्रहनियमाभावेन तस्य विशेषत्वनिश्चयाभावदशायां तद्दर्शनेऽपि 'नेदं वह्निव्याप्यम्' इति भ्रमसंभवाच्च।

किञ्च 'पर्वते वह्निव्याप्यम्' इति आप्तोपदेशात् वह्निव्याप्यं पक्षधर्मतया यदा विज्ञायते तत्रापि अनुमितिः दृश्यते।

न च तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वं अभ्युपगन्तुं शक्यम्। व्याप्यतावच्छेदकधूमत्वादेः अप्रकारत्वात्। न च धूमाग्न्योः द्वयी व्याप्तिः। एका महाव्याप्तिः; अपरा अवान्तरा। वह्निव्याप्य[धूम]वानयमिति ज्ञाने महाव्याप्त्यवच्छेदकीभूता अवान्तरव्याप्तिः प्रकारतया भासते इति वाच्यम्। व्याप्तिभेदे मानाभावात्।

अस्तु वा व्याप्तिभेदः। तथापि व्याप्त्यवच्छेदेन व्याप्तेरभावेन तत्प्रकारकत्वाभिधानवैयर्थ्यम्। किं तु व्याप्यताप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वं वाच्यम्। तथा च अनुमितिमात्रे व्याप्यताप्रका-रकज्ञानजन्यमित्यङ्गीकर्तव्यम्। अन्यथा क्वचित् व्याप्यतावच्छेदकप्रकारकं ज्ञानं कारणं, क्वचित् व्याप्तिप्रकारकं ज्ञानं कारणं; इति अननुगमः स्यात्। उचितं च पक्षधर्मताज्ञानस्य व्याप्तिप्रकारकत्वेनैव

कारणत्वं, व्याप्यतावच्छेदकप्रकारकत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वात् । पक्षधर्मताज्ञानस्य व्याप्तिप्रकारकतायाः आवश्यकत्वाच्च । अन्यथा विस्मृतव्याप्तिकस्यापि धूमवानयमिति ज्ञानात् अनुमितिः स्यात् । न च व्याप्तिस्मरणाभावात् तस्य न अनुमितिरिति वाच्यम् । अन्यनिष्ठव्याप्ति-स्मरणस्य पर्वतीयलिङ्गजन्यानुमितौ अनुपयोगित्वात् ।

ननु न व्याप्तिविशिष्टपक्षधर्मताज्ञानं अनुमितिहेतुः । व्यतिरेकव्यभिचारात् । तथाहि– यदा स्वयमेव महानसादौ धूमाग्न्योः व्याप्तिं गृहीत्वा पर्वते धूमं उपलभ्य वह्निं अनुमिनोति तदा व्याप्तिवैशिष्ट्यावगाहिज्ञानस्य कथमपि असंभवात् । न हि पर्वतीयवह्न्युपलम्भमन्तरा तद्धूमस्य तद्व्याप्ति-वैशिष्ट्यं प्रत्यक्षेण अवगन्तुं शक्यम् । वह्नेः अयोग्यत्वेन तद्व्याप्तेः अयोग्यत्वात् । न च आगमेन तद्व्याप्तिवैशिष्ट्योपलम्भः । तदभावात् । नाप्यनुमानेन । तदनुमापकपक्षवृत्तिलिङ्गेऽपि व्याप्ति-वैशिष्ट्यभानार्थं अनुमानान्तरानुसरणे तस्याप्येवं, तस्याप्येवं इति अनवस्थापातात् इति चेत् । उच्यते । व्याप्तिग्रहणवेलायां जीवनादृष्टोपगृहीतेन इन्द्रियेण तत्तद्धूमव्यक्तीनां तत्तद्वह्निनिरूपितव्याप्तेः प्रत्यक्षतो गृहीतत्वेन उपनीतायाः पर्वतीयवह्निनिरूपितव्याप्तेः उपनायकज्ञानोपगृहीतेन इन्द्रियेणैव प्रकारतया पक्षधर्मताज्ञाने भानसंभवात् । पर्वतीयवह्निनिरूपितव्याप्तेः विशिष्य पूर्वं अभातत्वात् विशिष्य नेदानीं भानमुपपन्नम् इति चेत् । न । इदानीमपि पर्वतीयवह्निव्याप्यधूमवानयमिति परामर्शानङ्गीकारात् । वह्निव्याप्तित्वेन गृहीतायाः पर्वतीयवह्निनिरूपितव्याप्तेः वह्निव्याप्तित्वेन रूपेण वह्निव्याप्यधूमवानयमिति परामर्शविषयत्वे बाधकाभावात् ।

अत एव पर्वतोऽग्निमानित्येव अनुमितिः भवति । न तु पर्वतीयवह्निमानिति । यत्र पक्षो लिङ्गं चातीन्द्रियं तत्र 'त्र्यणुकं सावयवावयवारब्धं जन्यमहत्त्वाधिकरणत्त्वात्' इत्यनुमानेन धर्मिसिद्धौ उपदेशेन वा तर्कान्तरेण वा अतीन्द्रियधर्मिणि लिङ्गग्रहे व्याप्त्यनुसन्धानवतः लिङ्गाद्युपनायकज्ञान-सहकृतेन मनसा परामर्शो भवति । न चानवस्था । अन्ततः प्रत्यक्षयोग्यलिङ्गकानुमानानुसरणात् ।

यदपि 'ज्ञानद्वयानन्तरं प्रत्यक्षसामग्रीतो अनुमितिसामग्र्याः बलवत्त्वात् अनुमितिरेवोत्पद्यते न तु व्याप्याभेदप्रत्यक्षम्' इति । तदपि न । ज्ञानद्वयस्य अनुमितिसामग्रीत्वासिद्धेः ।

यदपि 'अस्तु वा व्याप्यतया पक्षधर्मतया अवगतस्य भेदाग्रह एव अनुमितिहेतुः' इत्यादि । तदपि न । भेदाग्रहादेव प्रवृत्त्युपपत्तौ 'इदं जल'मित्यादि विशिष्टज्ञानानामपि विलोपापत्तेः । प्रमानुमितिस्थले पक्षधर्मस्य उपस्थितव्याप्यभेदाग्रह एव हेतुरित्यङ्गीकारे भ्रमानुमितिरपि प्रमानुमितिः स्यात् । कार्यवैजात्यस्य कारणवैजात्याधीनत्वात् ।

न च तत्र विद्यमानभेदाग्रहः प्रमानुमितिस्थले अविद्यमानभेदाग्रहः इति वैषम्यमिति वक्तुं युक्तम् । प्रमानुमितिस्थलेऽपि व्याप्यत्वेनोपस्थितमहानसीयधूमात् पर्वतीयधूमस्य भिन्नत्वेन विद्यमान-भेदाग्रहस्यैव वक्तव्यत्वात् ।

**|| इति प्राभाकरोक्तज्ञानद्वयस्य अनुमितिहेतुत्वभङ्गः ||**

**मणिकारस्तु**— 'न लिङ्गं अनुमितिकरणम् । अपि तु परामर्श एव । लिङ्गस्य अतीतत्वे अनागतत्वे च परामर्शसद्भावे अनुमितिदर्शनात् । सति लिङ्गे परामर्शाभावे अनुमित्यदर्शनात् । लिङ्गाभावेऽपि धूलीपटले धूमभ्रमेण अनुमितिदर्शनाच्च । न च परामर्शोऽपि न अनुमितिकरणम् । व्यापारविधुरत्वात् इति वाच्यम् । व्याप्तिज्ञानं करणं परामर्शोऽवान्तरव्यापार इत्यङ्गीकारेण परामर्शः करणमिति वादस्य औपचारिकत्वात्' इत्याह ||

**तन्न** । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् || अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति उपक्रमादीनां तात्पर्यनिर्णये लिङ्गत्वस्य अभिधानात् ।

न च उपक्रमादीनां लिङ्गत्वमेवोक्तं, न तु तात्पर्यानुमितिकरणत्वं इति वाच्यम् । लिङ्गपदेनैव करणत्वस्य उक्तत्वात् । न हि अनुमितिकरणत्वातिरिक्तं लिङ्गत्वं नामास्ति । येन लिङ्गशब्देन करणत्वं न सिद्ध्येत् ।

किञ्च श्रुतिलिङ्गवाक्यप्रकरणस्थानादिलिङ्गेषु पूर्वपूर्वस्य श्रुत्यादेरुत्तरोत्तरबाधकत्वं दृश्यते । 'मध्ये वामनमासीनं विश्वे देवा उपासते' इत्यादौ सर्वदेवोपास्यत्व-मध्यमत्वादिलिङ्गैः ईशानस्य वायुत्वे प्राप्ते वामनश्रुत्या तद्बाधेन विष्णुत्वस्य समर्थनात् । न च लिङ्गस्य ज्ञानकरणत्वाभावे श्रुत्यादिबाधितत्वं नामास्ति । अत एव लिङ्गस्य सावकाशत्वनिरवकाशत्वाभ्यामपि अर्थनिर्णयो दृश्यते । न च लिङ्गस्य गमकत्वाभावे तत्सावकाशत्वादेः उपयोगोऽस्ति इति लिङ्गस्य गमकत्वमास्थेयम् ।

अपि च लिङ्गस्य ज्ञानजनकत्वाभावे धूमादिलिङ्गाधिकरणे वह्न्यादिसिद्धिः न स्यात् । परामर्शस्य स्वविषयनिष्ठसाध्यव्याप्तिप्रकारानुसारेण साध्यानुमितिहेतुत्वस्वाभाव्यात् देशविशेषे साध्य-सिद्धिरिति चेत् । न । लिङ्गस्यैव अनुपयोगित्वे तन्निष्ठव्याप्त्यनुरोधेन साध्यगमकत्वस्वाभाव्यानुपपत्तेः । 'धूमेन वह्निमनुमिनोमि' इत्यबाधितानुभवाच्च ।

**यदुक्तं**— 'लिङ्गाभावेऽपि अनुमितिजननात् लिङ्गं न अनुमितिकरणं' इति । तन्न । सोमाभावेऽपि जायमानहोमसाद्गुण्यं प्रति सोमस्येव अतीतस्य अनागतस्य च लिङ्गस्य अनुमितिहेतुत्वोपपत्तेः । लिङ्गपरामर्शस्य लिङ्गप्रतिनिधित्वाङ्गीकारात् । न हि प्रतिनिधिकृतं न स्वकृतमिति (युक्तं) । पूतीककार्यस्य सोमकार्यत्वाभावप्रसङ्गात् । देवोत्पन्नानां पार्थानां पाण्डुपुत्रत्वाभावप्रसङ्गाच्च । क्षेत्रजत्वमात्रस्य चन्द्रोत्पन्नबुधे व्यभिचारेण क्षेत्रपतिपुत्रत्वाप्रयोजकत्वात् ।

न च लिङ्गपरामर्शस्य लिङ्गप्रतिनिधित्वे लिङ्गसद्भाववेलायां परामर्शस्य अनुपादानं स्यात् । सोमसमवधानदशायां पूतीकाग्रहणदर्शनात् इतिं चेत् । न । प्रतिनिधिमात्रस्य तथात्वेऽपि अङ्गत्वे सति प्रतिनिधेः सर्वदा उपादेयत्वनियमात् । राजाज्ञामात्यस्य राजसद्भाववेलायां अङ्गत्वेनोपादानस्य तदभाववेलायां प्रतिनिधित्वेनोपादानस्य च दर्शनात् । अन्यथा इष्टभार्यामरणं दुःखहेतुः न स्यात् । सत्यपि भार्यामरणे ज्ञानाभावे दुःखादर्शनात् । असति च तस्मिन् कुतश्चित् कारणात् तज्ज्ञाने दुःखदर्शनात् ।

न च तत्रापि ज्ञानमेव हेतुः न मरणं इति युक्तम् । मरणमुच्चार्य, 'हा ! मृताऽसि' इति शोकदर्शनात् । 'एवं कुलिङ्गं विलपन्तमारात् प्रियावियोगातुरमश्रुकण्ठम्' इति भागवते प्रियावियोगस्यैव दुःखहेतुत्वाभिधानाच्च । न स्याच्च बन्धुजननमरणयोः अशौचहेतुत्वम् । सतोरपि तयोरज्ञाने अशौचाभावात् । ज्ञाने सति अशौचदर्शनात् ।

न च ज्ञानमेव अशौचहेतुः, न जननमरणे इति युक्तम् । जननमरणे निमित्तीकृत्य अशौचविधानात् ।

अथ तत्र प्रियामरणाभावदशायां प्रियामरणज्ञानं प्रतिनिधिः, तत्सत्त्वादशायां तु अङ्गमिति उच्यते । तर्हि इहापि तथाऽस्तु । कारणत्वस्य 'धूमेन वह्निं जानामि' इत्यनुभवसिद्धत्वात् ।

लिङ्गाभावदशायां ज्ञानं प्रतिनिधिः लिङ्गसद्भावदशायां तु ज्ञानं लिङ्गस्य सहकारि; इत्यभिप्रायं मनसि निधाय प्रमाणपद्धतौ— 'व्याप्तिस्मरणसहितं लिङ्गस्य सम्यग्ज्ञानं सम्यग्ज्ञातं वा लिङ्गं व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयदनुमानं इत्युक्तं भवति' इत्युक्तम् ।

सुधायामपि 'प्रमितमेव व्याप्यं अनुमानम् । न तु इन्द्रियवत् सत्तामात्रेण प्रमाकरणम्' इत्युक्तम् । 'तथा च व्याप्तिस्मरणसव्यपेक्षं व्याप्यज्ञानं अनुमानं इत्युक्तं भवती'ति चोक्तम् । उक्ताभिप्रायाभावे पूर्वोत्तरविरोधः स्यात् ।

किञ्च 'धूमो हेतुः' इत्यविवादम् । 'हेतुः ज्ञापकः' इति च पर्यायावेतौ । धूमस्य वह्निज्ञापकत्वं, च वह्निज्ञानजनकत्वमेव । नान्यत् । ततश्च अनुमितिकरणं नानुमितिकरणमिति वदन् कथं न स्थूलदृश्वा ।

किञ्च यदि लिङ्गं करणं न स्यात् तर्हि– कुतः पर्वतोऽग्निमान्? इति प्रश्ने 'धूमात्' इत्युत्तरं न स्यात् । स्याच्च 'धूमज्ञानात्' इत्युत्तरम् । न च लिङ्गस्य करणत्वे व्यापाराभावः । लिङ्गाजन्यस्यापि परामर्शस्य लिङ्गेन कार्ये जनयितव्ये नियमेन साचिव्यमाचरतः व्यापारत्वोपपत्तेः । न चान्यस्यापि व्यापारशब्दवाच्यताप्रसङ्गः । लिङ्गपरामर्शो हि लिङ्गपरामर्शत्वेन कारणं नान्यपरामर्शत्वेन । अतिप्रसङ्गात् । कालादृष्टेश्वरादिकं तु न लिङ्गसंबन्धित्वेन कारणं इति विशेषसद्भावात् ।

**शिरोमणिस्तु–** 'न लिङ्गमात्रं अनुमितिहेतुः । अज्ञातादपि लिङ्गात् अनुमित्युत्पत्तिप्रसङ्गात् । नापि ज्ञातं लिङ्गम् । मेयत्वादिना तज्ज्ञानेऽपि अनुमितिप्रसङ्गात् । नापि व्याप्तिपक्षधर्मतावत्त्वेन ज्ञातं लिङ्गं अनुमितिहेतुः । व्याप्तिपक्षधर्मताविषयकलिङ्गज्ञानादेव अनुमित्युत्पत्तौ तादृशज्ञानविषयीभूतलिङ्गस्यापि कारणत्वाङ्गीकारे गौरवापातात् ।

किञ्च कालान्तरीयतादृशज्ञानविषयादपि लिङ्गात् अनुमितिप्रसङ्गः । कारणतावच्छेदकावलीढकारणसत्त्वस्यैव कार्योत्पत्तिनियामकत्वात् । न तु तद्विशिष्टसत्त्वस्य । गौरवात् । परामर्शविशिष्टसत्त्वस्य चात्र प्रयोजकत्वाभिधाने लाघवादावश्यकत्वाच्च परामर्शस्यैव तथात्वम् । तत्र नातिप्रसङ्गशङ्काऽपि । अत्रापि च चैत्रेण परामृश्यमानात् लिङ्गात् अपरामृशतोऽपि मैत्रस्य अनुमित्युत्पत्त्यापत्तिः ।

अथ तत्तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषपरामृश्यमानलिङ्गं हेतुः, इति चेत् । तर्हि अनन्तकार्यकारणभावप्रसङ्गः । तस्मात् परामर्श एव अनुमितिकरणम् । न च व्यापाराभावात् न स हेतुः इति वाच्यम् । इच्छाकृतिसुखदुःखस्मरणविशिष्टज्ञानशाब्दबोधादिषु ज्ञानेच्छाधर्माधर्मनिर्णयविशेषणज्ञानपदार्थज्ञानादीनां स्वकार्यैकार्थप्रत्यासत्या हेतुत्ववत् परामर्शस्यापि अनुमितिरूपकार्यैकार्थप्रत्यासत्त्या हेतुत्वसंभवात्' इत्याह ।

**स स्थूलदृश्वा** । अज्ञातलिङ्गस्य परामर्शरूपसहकारिविधुरस्य अनुमितिजनकत्वापादनात् । न हि यत्कारणं तत्सहकारिसंपत्तिमपहाय कार्योत्पादकमिति व्याप्तिरस्ति । येन कारणत्वाङ्गीकारे सहकारिविधुरस्य कार्योत्पादकत्वमापादयन् स्थूलदृश्वा न स्यात् ।

**यत्तु** 'व्याप्तिपक्षधर्मताविषयकलिङ्गज्ञानादेव अनुमित्युत्पत्तौ तादृशज्ञानविषयीभूतलिङ्गस्यापि कारणत्वाङ्गीकारे गौरवम्' इति ॥ तन्न । 'धूमेन वह्निं निश्चिनोमि' इति अबाधितानुभवसिद्धकारण-भावस्य लिङ्गस्य कारणत्वाङ्गीकारे गौरवस्यावक्तव्यत्वात् । अन्यथा इन्द्रियार्थसन्निकर्षेणैव प्रत्यक्षोपपत्तौ इन्द्रियस्यापि तद्धेतुत्वाङ्गीकारे गौरवं स्यात् ।

**यदत्रोक्तम्**— 'स्यादेवं यदि न स्यातां इन्द्रियस्य स्वतन्त्रान्वयव्यतिरेकौ, स्याच्च व्यापारिणो व्यापारेण व्यवधानम् । न चैवम्' इति । तदपि न । इन्द्रियार्थसन्निकर्षसद्भावे इन्द्रियान्वयविलम्ब-प्रयुक्तकार्यविलम्बस्य अदर्शनेन स्वतन्त्रान्वयव्यतिरेकयोः तत्राप्यभावात् । इन्द्रियस्य कारणत्वसिद्धौ सन्निकर्षस्य व्यापारत्वसिद्धिः । तत्सिद्धौ च व्यापारस्य अव्यवधायकत्वात् कारणत्वसिद्धिः इति अन्योन्याश्रयाच्च ।

यदि 'चक्षुषा पश्यामि' इत्यनुभवात् तत्र चक्षुषः करणत्वं, तर्हि 'धूमेन वह्निमनुमिनोमि' इत्यनुभवात् लिङ्गस्यापि अनुमितिकरणत्वमस्तु ।

यदपि— 'कालान्तरीयतादृशज्ञानविषयादपि लिङ्गात् अनुमितिप्रसङ्गः' इति । तदपि न । कालान्तरे सामग्रीसमवधानेऽपि सामग्रीविरहदशायां कार्योत्पादनायोगात् । न हि कालान्तरे चक्रादिसमवहितात् दण्डात् तद्विरहदशायां कार्योत्पादो दृष्टः । येन इदमापादनं युक्तं स्यात् । यदपि— 'कारणतावच्छेदकावलीढकारणसत्त्वस्यैव कार्योत्पत्तिनियामकत्वम्' इति । तदपि न । लिङ्गपरामर्शस्य सहकारित्वेन कारणतावच्छेदकत्वाभावात् ।

यदपि— 'चैत्रेण परामृश्यमानात् लिङ्गात् अपरामृशतोऽपि मैत्रस्य अनुमित्यापत्तिः' इत्यादि । तदपि न । धूमत्वादिरूपेण वह्न्याद्यनुमितौ लिङ्गं करणम् । परामर्शत्वेन रूपेण परामर्शः तस्य सहकारी । तथा च यस्य पुंसः परामर्शरूपसहकारिसंपत्तिः लिङ्गं तस्य अनुमितिहेतुः । तद्यथा— यस्य कुलालस्य चक्रादिसंपत्तिः तस्मादेव दण्डसहकृतात् कार्यमुत्पद्यते; नान्यस्मात्; तद्वदित्यङ्गीकारात् । न चैवं सति अनन्तकार्यकारणभावप्रसङ्गो भवति । अन्यथा दण्डादावपि अनन्तकार्यकारणभावप्रसङ्गः ॥

**॥ इति मण्युक्तलिङ्गकरणतानिराकरणभङ्गः ॥**

**रुचिदत्तस्तु**— 'अनुमितिं प्रति न व्याप्तिज्ञानं करणम् । 'वह्न्यव्यभिचरितवह्निसहचरित-धूमवानयं पर्वतः' इति परामर्शात् यत्र अनुमितिः तत्र व्याप्तिज्ञानाभावात् । स्मृतिरूपपरामर्शात् यत्र

अनुमितिः तत्रापि व्याप्तिज्ञानाभावाच्च । तेन विनाऽपि भवतः तज्जन्यत्वाभावात् । किन्तु मन एव करणम् । क्लृप्तनियतपूर्ववर्तिनो मनसः करणत्वकल्पने लाघवात् । न च अनुमितेः मानसाध्यक्षतापत्तिः । इन्द्रियत्वेनैव मनोजन्यत्वस्य तत्प्रयोजकत्वात् । प्रकृते च मनस्त्वेनैव करणत्वस्य अङ्गीकारात्' इत्याह ॥

तन्न । मनसि अनुमानत्वव्यवहारप्रसङ्गात् । अनुमितिकरणस्यैव अनुमानत्वात् । धूमादौ अनुमानत्वव्यवहाराभावप्रसङ्गाच्च । धूमादौ अनुमितिकरणत्वाभावात् । किञ्च धूमादौ व्याप्तिपक्षधर्मतादिचिन्ता न स्यात् । अनुमित्यकरणे तच्चिन्ताप्रयोजनाभावात् । अन्यथा रासभादावपि वह्निव्याप्तिपक्षधर्मतादिचिन्ता स्यात् । अनैकान्त्यादिश्च करणदोषो न स्यात् । अनुमितिकरणावृत्तित्वात् ।

एतेन अनुमितेः मनःकरणकत्वं वदन् शिरोमणिरपि अपास्तो वेदितव्यः ॥

॥ इत्यनुमितेः मनःकरणकत्वनिरासः ॥

द्विविधं अनुमानम् । स्वार्थं परार्थं चेति । तत्र परोपदेशमनपेक्ष्य प्रतिपत्त्रा प्रतिपन्नं लिङ्गं यदा स्वस्य अनुमितिं जनयति तदा स्वार्थानुमानम् । तच्च धूमादि । तदेव धूमादिकं यदा उपदेशसहकृतं उपदेश्यस्य पुंसः अनुमितिं उत्पादयति तदा परार्थानुमानम् । अनुमितिजनक(त्व)सामर्थ्यलिङ्गावबोधहेतुत्वात् परोपदेशोऽपि परार्थानुमानं इत्युपचर्यते । लिङ्गस्य सामर्थ्यं द्विविधम् । व्याप्तिः समुचितदेशादौ सिद्धिश्चेति ।

**मणिकारस्तु–** 'अनुमानं त्रिविधम् । केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकिभेदात् । तत्र असद्विपक्षं केवलान्वयि । तथाहि– केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः । अभिधानेऽनभिधाने च विपक्षत्वव्याघातात् ।

अभिधेयत्वस्य केवलान्वयित्वं च वृत्तिमदत्यन्ताभावाप्रतियोगित्वम् । एवं च आकाशात्यन्ताभावोऽपि केवलान्वयी । तस्य आकाशरूपात्यन्ताभावप्रतियोगित्वेऽपि आकाशस्य वृत्तिमत्त्वाभावेन वृत्तिमदत्यन्ताभावाप्रतियोगित्वात्' इत्याह ॥

**सः स्थूलदृश्वा** । व्याप्तिज्ञानमेवानुमानं न तु लिङ्गं इति लिङ्गस्य अनुमानत्वं निषेध्य इदानीं पुनरनुमानस्य लिङ्गात्मकत्वाभिधानात् । लिङ्गमात्रस्य साध्यान्वयित्वेन त्रैविध्याभिधानायोगाच्च । न हि किमपि लिङ्गं साध्येन अन्वयविधुरं नामास्ति । नापि साध्यव्यतिरेकसहचरितम् । येन केवलव्यतिरेकी नाम लिङ्गप्रभेदः स्यात् ।

यल्लिङ्गं केवलं अन्वयव्याप्तिबलेन अर्थगमकं तत्केवलान्वयि । यत्तु केवलं व्यतिरेकव्याप्तिबलेन अर्थगमकं तत् केवलव्यतिरेकि । यत्तु उभयबलेन अर्थगमकं तदन्वयव्यतिरेकि; इति चेत् । न । त्वया लिङ्गस्य गमकत्वानङ्गीकारात् । साध्यसिद्धौ अन्वयव्याप्तेरेव उपयुक्तत्वेन व्यतिरेकव्याप्तेरनुपयुक्तत्वाच्च ।

यदपि– 'असद्विपक्षं केवलान्वयि' इति केवलान्वयिनः अनुमानस्य लक्षणमुक्त्वा, 'केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः' इत्यभिधानं, तदयुक्तम् । लक्ष्यभूतलिङ्ग एव असद्विपक्षत्वस्य वक्तव्यत्वेन साध्ये तस्यावक्तव्यत्वात् ।

न च अभिधेयत्वं लिङ्गमेव, न साध्यं, इति वाच्यम् । 'अभिधानेऽनभिधाने च' इत्युत्तरग्रन्थविरोधात् । न हि हेतुसत्वं विपक्षत्वविरोधि । येन अभिधाने विपक्षत्वव्याघातः स्यात् ।

किञ्च यत्किंचिद्विपक्षशून्यत्वस्य असंभवित्वात् प्रकृतविपक्षशून्यत्वस्य प्रतियोगिसिद्ध्यसिद्धिभ्यां निरूपयितुं अशक्यत्वात् ।

यदपि 'अभिधानेऽनभिधाने च विपक्षत्वव्याघातः' इति । तदपि न । अनभिधानस्य विपक्षत्वव्याघाताप्रयोजकत्वात् ।

**यत्तु**– 'अनभिधाने वस्तुपदादेरप्यनभिधेयतया अवस्तुत्वादेव न विपक्षत्वं' इति रुचिदत्तव्याख्यानम् ; तदपि न । अनभिधेयत्वरूपविपक्षत्वं उपजीव्य सिद्धस्यावस्तुत्वस्य विपक्षत्वव्याघाताप्रयोजकत्वात् । 'अभिधेयत्वं न केवलान्वयि' इति वदता 'यदनभिधेयं न तद्वस्तु' इति व्याप्तेरनङ्गीकारेण अनभिधेयत्वेन अवस्तुत्वस्य साधनायोगाच्च ॥

**शिरोमणिस्तु**— 'अत्यन्ताभावाप्रतियोगिसाध्यकत्वं केवलान्वयित्वम् । यद्वा अन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वम् । तच्च प्रकृतसाध्यव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वम् । तादृशसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वं वा । अथवा प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्य[ध्यान्वय]व्याप्तित्वकत्वं तत्त्वम्' इत्याह ॥

**तस्यार्थः**– 'यत्र क्वाप्यधिकरणे व्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यकत्वं केवलान्वयित्वं' इति । 'संयोगाभाववान् मेयत्वात्' इति केवलान्वयिनि अव्याप्तिवारणाय 'व्याप्यवृत्ति' इत्यत्यन्ताभावविशेषणम् । संयोगाभावलक्षणसाध्यस्य अव्याप्यवृत्तिसंयोगरूपात्यन्ताभावप्रतियोगित्वेऽपि व्याप्य-

वृत्त्यत्यन्ताभावप्रतियोगित्वाभावात् अव्याप्तिपरिहारः । 'कपिसंयोगी एतत्त्वात्' इत्यत्र अतिव्याप्तिपरिहाराय 'यत्र क्वापि' इत्यधिकरणविशेषणम् । कपिसंयोगाभावस्य प्रतियोग्यधिकरणेऽव्याप्यवृत्तित्वेऽपि यत्र क्वाप्यधिकरणे व्याप्यवृत्तित्वेन तत्प्रतियोगिसाध्यकत्वात् अतिव्याप्तिनिरासः ।

आचार्यमतानुसारेण लक्षणमाह— 'यद्वा' इति । एतन्मते अन्वयव्याप्तिज्ञानमेव अनुमितिहेतुः । न व्यतिरेकव्याप्तिज्ञानम् । अन्यव्याप्तिज्ञानस्य अनुमितिहेतुत्वायोगात् ।

अन्वयव्याप्तिग्रहश्च क्वचिदन्वयसहचारज्ञानेन भवति । क्वचित् व्यतिरेकसहचारज्ञानेन क्वचिदुभयसहचारज्ञानेन । अयं च पूर्वमतात् विशेषः व्यतिरेकिसाध्यकस्यापि हेतोः व्यतिरेकसहचारदशायां केवलान्वयित्वमिति ।

ततश्च– 'यस्मिन् काले येन पुरुषेण यस्य हेतोः अन्वयसहचारज्ञानमात्रेण व्याप्तिः गृहीता तं प्रति तस्य तस्मिन् काले केवलान्वयित्वं' इत्यर्थः ।

ननु अन्वयसहचारमात्रगृहीतत्वं अन्वयसहचारज्ञानान्यागृहीतत्वे सति तद्गृहीतत्वं वाच्यम् । तच्च अप्रसिद्धम् । आत्मादेरपि ग्राहकत्वात् ; इत्यतः स्वयं लक्षणार्थमाह– 'तच्च' इति । प्रकृतव्याप्तिः शृङ्गिग्राहिकतया ग्राह्या ।

व्याप्तिग्राहकज्ञानविषयसहचारत्वं च व्याप्तिग्राहकसहचारज्ञाननिष्ठव्याप्तिज्ञानहेतुतां प्रति विषयतासम्बन्धेन अवच्छेदकत्वम् । ततश्च– 'सहचारज्ञाननिष्ठप्रकृतव्याप्तिग्रहजनकतायां विषयतासम्बन्धेन अवच्छेदकीभूतसहचारत्वव्यापकान्वयसहचारत्वकत्वं' इत्यर्थः ।

असम्भववारणाय 'सहचारज्ञाननिष्ठप्रकृतव्याप्तिग्रहजनकतायां विषयतासम्बन्धेनावच्छेदकीभूत' इति सहचारत्वविशेषणम् । अन्यथा 'शब्दोऽभिधेयः प्रमेयत्वात्' इति हेतुनिष्ठव्याप्तिग्रहजनकहेतुसाध्यसहचारज्ञाने कदाचित् साध्यान्तरव्यतिरेकसहचारस्यापि विषयत्वसम्भवात् तत्सहचारत्वं प्रति अन्वयसहचारत्वस्य व्यापकत्वाभावात् असम्भवः स्यात् । न हि अन्वयव्याप्तिग्राहकसहचारज्ञानस्य समूहालम्बनत्वेन न भाव्यं इति राज्ञां आज्ञाऽस्ति । येन प्रकृतव्याप्तिग्राहकान्वयसहचारज्ञानस्य साध्यान्तरव्यतिरेकसहचारो न स्यात् । 'विषयतया अवच्छेदकीभूत' इति विशेषणोपादाने च न दोषो भवति । ज्ञाननिष्ठकारणतानवच्छेदकसहचारत्वं प्रति अन्वयसहचारत्वस्य व्यापकत्वाभावेऽपि ज्ञाननिष्ठकारणतावच्छेदकीभूतसहचारत्वं प्रति अन्वयसहचारत्वस्य व्यापकत्वात् ।

नास्ति चेदं केवलव्यतिरेकिणि । अन्वयव्याप्तेः व्यतिरेकसहचारज्ञानेनैव ग्रहाङ्गीकारेण सहचारज्ञाननिष्ठव्याप्तिज्ञानकारणतां प्रति विषयतासम्बन्धेन अवच्छेदकीभूतव्यतिरेकसहचारत्वं प्रति अन्वयसहचारत्वस्य व्यापकत्वाभावात् ।

अन्वयेति पदस्थाने प्रकृतव्याप्तिघटकेतिपदं वा देयमिति भावेनाह— 'तादृश' इति । 'ज्ञाननिष्ठप्रकृतव्याप्तिज्ञानकारणतायां विषयतासम्बन्धेन अवच्छेदकीभूतं यत् सहचारत्वं तद्व्यापकीभूत-प्रकृतव्याप्तिघटकसहचारत्वकत्वं केवलान्वयित्वं' इत्यर्थः ।

अस्ति चेदं केवलान्वयिनि । तद्व्याप्तेरन्वयसहचारमात्रग्राह्यत्वेन तादृशसहचारत्वं प्रति प्रकृतव्याप्तिघटकसहचारत्वस्य व्यापकत्वात् ।

नास्ति चेदं अन्वयव्यतिरेकिणि केवलव्यतिरेकिणि च । तद्व्याप्तेः व्यतिरेकसहचारज्ञानेनापि गृह्यमाणत्वेन तादृशसहचारत्वं प्रति प्रकृतव्याप्तिघटकसहचारत्वस्य व्यापकत्वाभावात् ।

मणिकृन्मतेन लक्षणान्तरमाह— 'अथवा' इति । एतन्मते च न व्यतिरेकसहचारेण अन्वय-व्याप्तिग्रहः । किं तु अन्वयसहचारेणान्वयव्याप्तिग्रहः । व्यतिरेकसहचारेण व्यतिरेकव्याप्तिग्रहः । द्वयोरपि व्याप्त्योः प्रकृतसाध्यव्यभिचारधीविरोधिधीविषयत्वेन अनुमितिजनकतावच्छेदकत्वम् ।

तथा च 'प्रकृतहेतुका प्रकृतसाध्यका या अनुमितिः; तज्जनकव्याप्तिज्ञाननिष्ठकारणतायां विषयतासम्बन्धेन अवच्छेदकीभूता या व्याप्तिः; तन्निष्ठव्याप्तित्वं प्रति व्यापकीभूतं यत् प्रकृत-साध्यव्याप्तित्वं, तत्कत्वं' इत्यर्थः । अस्मिंश्च लक्षणे धूमानुमानस्यापि अन्वयव्याप्तिमात्रप्रतिसन्धानवेलायां लक्ष्यत्वं बोध्यम् ।

'जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वात्' इत्यन्वयिनि [इत्यादौ] अव्याप्ति-वारणाय 'प्रकृतसाध्यक' इत्यनुमितिविशेषणम् । अन्यथा पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वरूप-प्रकृतहेतुकपृथिवीत्वाभावरूपसाध्यान्तरानुमितिं प्रति 'यत्र पृथिवीत्वं तत्र पृथिवीत्वव्यापकाभाव-प्रतियोगिमत्त्वाभावः' इति व्यतिरेकव्याप्तिज्ञानस्य कारणत्वेन तन्निष्ठकारणतावच्छेदकव्यतिरेकव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावात् अव्याप्तिः स्यात् । प्रकृतसाध्यकेत्यनुमितिविशेषणे च न दोषः भवति । पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वरूपप्रकृतहेतुनिर्गन्धत्वरूपप्रकृतसाध्यकानुमितिं प्रति 'यत्र पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वं तत्र निर्गन्धत्वं' इत्यन्वयव्याप्तिज्ञानस्यैव हेतुत्वेन तदवच्छेदकान्वयव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वात् ।

'वह्न्यभाववान् जलत्वात्' इत्यादौ अन्वयव्याप्तिमात्रग्रहदशायां केवलान्वयित्वसिद्ध्यर्थं 'प्रकृतहेतुके'त्यनुमितिविशेषणम् । अन्यथा वह्निव्यापकशून्यत्वरूपलिङ्गान्तरहेतुकप्रकृतसाध्यकानुमितिं प्रति 'यत्र वह्निः तत्र वह्निव्यापकं' इति व्यतिरेकव्याप्तिज्ञानस्यैव कारणत्वेन तज्ज्ञाननिष्ठानुमितिकारणतायां व्यतिरेकव्याप्तेरेव विषयतया अवच्छेदकत्वेन तादृशव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावेन केवलान्वयित्वं न स्यात् ।

'प्रकृतहेतुक'इति विशेषणोपादाने च न दोषो भवति । अन्वयव्याप्तिमात्रप्रतिसन्धानवेलायां प्रकृतहेतुकप्रकृतसाध्यकानुमितिं प्रति अन्वयव्याप्तिज्ञानस्यैव हेतुत्वेन कारणतावच्छेदकान्वयव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वात् ।

'वह्न्यभाववान् वह्नेः व्यापकीभूतो योऽभावः तत्प्रतियोगिमत्त्वात्' इत्यादिहेतोः अन्वयव्याप्तिमात्रग्रहदशायां केवलान्वयित्वभङ्गप्रसङ्गवारणाय 'प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुव्याप्तिज्ञाननिष्ठकारणतायाः विषयतया अवच्छेदके'ति व्याप्तित्वविशेषणम । अन्यथा वह्निव्यापकाभावप्रतियोगिमत्त्वरूपप्रकृतहेतुकवह्न्यभावरूपप्रकृतसाध्यकानुमितिहेतुभूते 'यत्र वह्निव्यापकाभावप्रतियोगिमत्त्वं तत्र वह्न्यभावः' इति अन्वयव्याप्तिज्ञाने वह्निव्यापकाभावेति हेतुशरीरान्तर्गत-वह्निनिष्ठव्याप्तेरपि भानात् तद्व्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावात् केवलान्वयित्वभङ्गः स्यात् ।

'अनुमितिहेतुव्याप्तिज्ञाननिष्ठकारणतायां विषयतया अवच्छेदकीभूत' इति व्याप्तिविशेषणे तु न दोषो भवति । प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुव्याप्तिज्ञानकारणतावच्छेदकान्वयव्याप्तौ अवच्छेदिकैव वह्निनिष्ठा व्यतिरेकव्याप्तिः । न तु अनुमितिहेतुज्ञाननिष्ठकारणतावच्छेदिका; इत्यङ्गीकारात्' इति ।

तत्र आद्यं लक्षणं तावदयुक्तम् । अभावसाध्यकेऽन्वयव्यतिरेकिणि केवलव्यतिरेकिणि चातिव्याप्तेः । अभावप्रतियोगिकाभावाभावेन व्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यकत्वस्य तत्रापि सत्वात् ।

अत्यन्ताभावपदेन औपचारिकात्यन्ताभावविवक्षायां 'शब्दः अभिधेयः प्रमेयत्वात्' इत्यत्राव्याप्तेः । प्रमेयत्वस्यापि यत्र क्वापि व्याप्यवृत्तिप्रमेयत्वप्रागभावरूपौपचारिकात्यन्ताभावप्रतियोगित्वात् । 'न हि अनाद्यनन्तत्वशून्यः प्रतियोग्येव अत्यन्ताभावस्यौपचारिकोत्यन्ताभावः । न तु प्रतियोगिप्रागभावः प्रतियोगिनः पारिभाषिकोऽत्यन्ताभावः' इत्यत्र किञ्चिन्नियामकमस्ति । प्रमेयत्वस्य प्रतिव्यक्ति नानात्वेन तत्तद्व्यक्तिगतप्रमेयत्वानां स्वानधिकरणीभूतव्यक्त्यन्तरगतात्यन्ताभावप्रतियोगित्वेन अत्यन्ताभावाप्रतियोगिसाध्यकत्वाभावाच्च ।

यत्र क्वाप्यधिकरणे व्याप्यवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वमिति विवक्षायामपि असंभव एव । 'शब्दोऽभिधेयः प्रमेयत्वात्' इत्यादि केवलान्वयिसाध्यतावच्छेदकस्य अभिधेयत्वत्वस्य सर्वत्र व्याप्यवृत्त्यभिधेयत्वत्वावच्छिन्नप्रमेयत्वाभावप्रतियोगितावच्छेदकत्वात् ।

न च व्यधिकरणधर्मावच्छिन्ना(प्रतियोगिताका)भावो नास्त्येवेति न तत्प्रतियोगितावच्छेदकत्वमादाय असंभवित्वव्युत्पादनं युक्तं इति वाच्यम् । व्यधिकरणधर्मावच्छिन्नप्रतियोगिमत्त्वस्य अवर्जनीयत्वापातात् । अभावो नास्तीत्यस्य प्रतियोगिसत्त्वावेदकत्वात् ।

प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वं केवलान्वयित्वं इत्यपि लक्षणमयुक्तम् । धूमाद्यनुमाने अतिव्याप्तेः । धूमाग्न्योः अन्वयसहचारत्वस्यापि प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकत्वात् । सर्वत्रापि अन्वयसहचारस्यैव अन्वयव्याप्तिग्राहकत्वात् ।

धूमाद्यनुमानेषु व्यतिरेकसहचारज्ञानं अन्वयव्याप्तिग्राहकमिति चेत् । अत्र वक्तव्यम्- किं व्यतिरेकसहचारज्ञानं व्याप्तिं गृह्णतः प्रत्यक्षस्य सहकारीत्युच्यते ? उत तदनुमापकमित्युच्यते ? नाद्यः अन्यसहचारज्ञानस्य अन्यव्याप्तिग्रहे अनुपयोगात् ।

नापि द्वितीयः । त्वन्मते व्यधिकरणलिङ्गस्य गमकत्वाभावात् । 'धूमो वह्निव्याप्तः वह्न्यभावव्यापकाभावप्रतियोगित्वात्' इत्यनुमानेन व्याप्तिसाधनात् न वैय्यधिकरण्यं इति चेत् कथं तर्हि व्यतिरेकसहचारस्य अन्वयव्याप्तिगमकत्वं ? वह्न्यभावव्यापकाभावप्रतियोगित्वस्यैव लिङ्गत्वात् ।

अत एव 'प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वं' इत्यपि परास्तम् । धूमाग्निव्याप्तिघटकसहचारत्वस्य प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकत्वेन धूमानुमानातिव्याप्तेः ।

अत एव– 'प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुज्ञाननिष्ठकारणतायां विषयतासंबन्धेन अवच्छेदकीभूतव्याप्तित्वं प्रति व्यापकीभूतप्रकृतसाध्यव्याप्तित्वकत्वं' इत्यपि लक्षणमयुक्तम् । व्यतिरेकित्वप्रतिसन्धानवेलायामपि अन्वयव्याप्तिज्ञानस्यैव अनुमितिहेतुत्वेन अग्निनिरूपितधूमनिष्ठव्याप्तित्वस्यापि प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकत्वात् धूमानुमानादावतिव्याप्तेः ।

यदपि 'प्रकृतसाध्यकेत्यनुमितिविशेषणस्य 'जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वात्' इत्यत्राव्याप्तिवारणलक्षणप्रयोजनाभिधानम् । तदपि न । 'यत्र गन्धः तत्र पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वाभावः' इति व्यतिरेकव्याप्तेरपि भावेन अस्य अन्वयिव्यतिरेकित्वेन अव्याप्त्यभिधानायोगात् ।

न च अन्वयित्वमात्रप्रतिसन्धानदशायां अस्यापि केवलान्वयित्वं इति वाच्यम् । वस्तुतो व्याप्तिद्वयसद्भावे अन्वयमात्रप्रतिसन्धानेन केवलान्वयित्वाभिधानायोगात् । अन्यथा आम्रफलादौ रसाप्रतिसन्धानदशायां केवलरूपित्वप्रसङ्गः ।

अत एव 'वह्न्यभाववान् जलत्वात्' इत्यस्य अन्वयव्याप्तिमात्रप्रतिसन्धानदशायां केवलान्वयित्वसिद्ध्यर्थं प्रकृतहेतुकेत्यनुमितिविशेषणम्' इत्यप्ययुक्तम् । अस्यापि अन्वयव्यतिरेकित्वेन अलक्ष्यत्वात् ।

अत एव 'वह्न्यभाववान् वह्निव्यापकीभूताभावप्रतियोगिमत्त्वात्' इत्यादिहेतोः केवलान्वयित्वप्रतिसन्धानदशायां केवलान्वयित्वभङ्गप्रसङ्गवारणाय, प्रकृतहेतुकप्रकृतसाध्यकानुमितिहेतुव्याप्तिज्ञाननिष्ठानुमितिकारणतायाः विषयतया अवच्छेदकेति व्याप्तिविशेषणम्' इति निरस्तम् । तस्य केवलान्वयित्वाभावेन तद्भङ्गस्य इष्टत्वात् । न ह्यकेवलान्वयिनः केवलान्वयित्वप्रतिसन्धानमात्रेण केवलान्वयित्वं भवति । अन्यथा शुक्तिकाया अपि रजतत्वप्रतिसन्धानमात्रेण रजतत्वं स्यात् । न तर्हि राजानो हस्त्यश्वं बिभृयुः; किं तर्हि विद्यमानेषु पाषाणादिषु हस्त्यश्वप्रतिसन्धानं कुर्युः ।

अस्तु वा अन्वयव्याप्तिमात्रप्रतिसन्धानदशायां धूमाद्यनुमानस्य केवलान्वयित्वम् । तथापि इदं लक्षणं अयुक्तम् । अन्वयव्याप्तिमात्रप्रतिसन्धानदशायां केवलान्वयित्वेन अभ्युपगते धूमानुमानादौ अव्याप्तेः । पर्वतीयधूमलिङ्गकपर्वतीयवह्निसाध्यकव्यतिरेकव्याप्तिप्रतिसन्धानजन्यानुमितेरपि प्रकृतहेतुकप्रकृतसाध्यकानुमितित्वात् । तत्कारणीभूतव्यतिरेकव्याप्तिज्ञाने विषयतयाऽवच्छेदकीभूतव्यतिरेकव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावात् । तथा धूमलिङ्गकद्रव्यत्वावच्छिन्नवह्निसाध्यकव्यतिरेकव्याप्तिमात्रप्रतिसन्धानजन्यानुमितेरपि प्रकृतहेतुकप्रकृतसाध्यकानुमितित्वेन तद्धेतुभूतव्यतिरेकव्याप्तिज्ञाने कारणतावच्छेदकीभूतव्यतिरेकव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावाच्च ।

**यत्तु**– 'प्रकृतहेतुपदेन प्रकृतहेतुतावच्छेदकावच्छिन्नं विवक्षितम् । एवं च पर्वतीयधूमहेतुकानुमितेः प्रकृतहेतुकानुमितित्वेऽपि प्रकृतहेतुतावच्छेदकधूमत्वावच्छिन्नहेतुकत्वाभावात्ः तदनुमितिहेतुज्ञाननिष्ठकारणतावच्छेदकव्यतिरेकव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावो न दोषाय । एवं प्रकृतसाध्यपदेन प्रकृतसाध्यतावच्छेदकावच्छिन्नं विवक्षितम् । तथाच द्रव्यत्वेन व्यतिरेकव्याप्तिप्रतिसन्धानजन्यवह्न्यनुमितेः हेतुतावच्छेदकवह्नित्वावच्छिन्नप्रकृतहेतुकत्वेऽपि प्रकृतसाध्यकत्वेऽपि प्रकृतसाध्यतावच्छेदकवह्नित्वावच्छिन्नप्रकृतसाध्यकत्वाभावात् तदनुमितिहेतुव्यतिरेकव्याप्तिज्ञाननिष्ठकारणतावच्छेदकीभूतव्यतिरेकव्याप्तित्वं प्रति प्रकृतसाध्यव्याप्तित्वस्य व्यापकत्वाभावो न दोषाय;' इति समाधानम् ।

तदनुपपन्नम् । प्रकृतहेतुकप्रकृतसाध्यककालान्तरीयपुरुषान्तरीयव्यतिरेकव्याप्तिप्रतिसन्धान-जन्यानुमितेरपि विवक्षितानुमितित्वेन तद्धेतुज्ञाननिष्ठकारणतावच्छेदकव्यतिरेकव्याप्तित्वं प्रति प्रकृत-साध्यव्याप्तित्वस्य व्यापकत्वाभावेन अव्याप्तितादवस्थ्यात् ।

अन्वयव्याप्तिप्रतिसन्धानकालिकतत्पुरुषीयतद्धेतुकतत्साध्यकानुमितिविवक्षणात् न कालान्तरभा-व्यनुमितिमादाय अव्याप्तिरिति चेत् । न । अन्वयित्वमात्रप्रतिसन्धानकालिकोक्तानुमितिकारणीभूत-ज्ञाननिष्ठकारणतावच्छेदकप्रकृतसाध्यव्याप्तित्वकत्वमित्येतावता पूर्णत्वेन व्याप्तित्वव्यापकेति विशेषण-वैयर्थ्यात् ।

**यदपि मणौ–** 'वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं' इति केवलान्वयिसाध्यस्य केवलान्वयित्वनिर्वचनम् । तदपि न । केवलान्वयित्वेन अभिमतानां प्रमेयत्वाभिधेयत्वादिधर्माणां प्रातिस्विकधर्मत्वेन स्वस्वानधिकरणव्यक्तिवृत्त्यत्यन्ताभावप्रतियोगित्वात् अत्यन्ताभावाप्रतियोगित्वाभावेन अव्याप्तेः ।

**यदत्रोक्तम् ।** 'प्रमात्वमेव हि परम्परासंब[न्धेन]न्धात् घटादौ प्रमेयत्वमनुगतं प्रमाजातीय-विषयत्वं वा' इति । तन्न । प्रमेयमित्युक्ते 'प्रमाविषयः' इत्यर्थप्रतीतेः, प्रमेयत्वस्य प्रमाविषयत्व-रूपत्वेन प्रमात्वरूपत्वाभिधानायोगात् । परम्परासंबन्धेन प्रमात्वस्यैव प्रमेयत्वरूपत्वे सर्वं प्रमेति बुद्धिप्रसङ्गात् । न हि परम्परासंबन्धेन गन्धवति जले गन्धवदिति बुद्धिः न भवति । येनेह सर्वं प्रमेति बुद्धिः न स्यात् । प्रमात्वस्य घटादिभिः परम्परासंबन्धमात्रसद्भावेऽपि तेन संबन्धेन आधाराधेयभावसद्भावे प्रमाणाभावाच्च । प्रमात्वस्यापि प्रतिप्रमाव्यक्तिभिन्नत्वेन एकत्वाभावाच्च ।

यदपि 'प्रमाजातीयविषयत्वं च' इति । तदपि न । प्रमाजातीयविषयत्वस्य नानात्वेन अव्याप्त्यपरिहारात् ।

**रुचिदत्तस्तु–** 'अन्योन्याभावप्रतियोगितानवच्छेदकधर्मत्वं केवलान्वयित्वम् । अन्योन्याभावो व्याप्यवृत्तिरेवेति न अव्याप्यवृत्त्यत्यन्ताभावे अव्याप्तिः' इत्याह ।

**तन्न ।** केवलान्वयित्वाभिमतप्रमेयत्वादौ अव्याप्तेः । प्रमेयत्वादीनां अधिकरणभेदेन भिन्नत्वात् 'इदं प्रमेयं न' इति प्रमेयप्रतियोगिकसामान्यान्योन्याभावप्रतियोगितावच्छेदकत्वाभावेऽपि 'इदं तत्प्रमेयं न' इति, 'तच्चेदं प्रमेयं न' इति, तत्तदधिकरणवृत्तितत्तत्प्रमेयान्योन्याभावप्रतियोगितावच्छेदकत्वेन प्रतियोगितानवच्छेदकत्वाभावात् ।

न च 'तत्त्वमेवान्योन्याभावप्रतियोगितावच्छेदकं, न तु तत्प्रमेयत्वं गौरवात्' इति वाच्यम्। 'अयं प्रमेयघटो न' इत्यन्योन्याभावप्रतियोगितावच्छेदकं घटत्वमेव; न तु प्रमेयघटत्वं, गौरवाद् इत्यापातात्। न च इष्टापत्तिः। अन्योन्याभावप्रतियोगितानवच्छेदके प्रमेयघटत्वे केवलान्वयि-लक्षणस्य अतिव्याप्तिप्रसङ्गात्। एवं 'नीलधूमो न' इति प्रतीयमानान्योन्याभावप्रतियोगितावच्छेदकं धूमत्वमेव, न नीलधूमत्वं, इत्यापत्त्या लक्षणं तत्र अतिव्याप्तं स्यात्।

कथं तर्हि प्रमेयत्वादीनां केवलान्वयित्वव्यवहारः? इति चेत्। प्रमेयत्वव्यक्तीनां सर्वत्र सत्त्वेन 'प्रमेयत्वं केवलान्वयि' इति व्यवहारः इति जानीहि। तद्यथा— प्रातिस्विकधनेन धनवत्सु अनेकेषु 'सर्वे एते धनिनः' इति व्यवहारः।

**शिरोमणिस्तु**— 'यत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वं यस्य तस्य तेन संबन्धेन केवलान्वयित्वम्। अस्ति चेदं प्रमेयत्वादौ। प्रमेयत्वादीनां समवायसंबन्धावच्छिन्नप्रतियोगिताक-प्रमेयत्वाद्यभावप्रतियोगित्वेऽपि स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणघटाद्यभावाप्रति-योगित्वानपायात्। समवायसंबन्धेन अकेवलान्वयितया समवायसंबन्धावच्छिन्नप्रतियोगिताकाभाव-प्रतियोगित्वं न दोषाय।

यत्संबन्धावच्छिन्नस्य केवलान्वयित्वं तत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वस्य सत्त्वात्। न च संयोगाभावे अव्याप्तिः। संयोगरूपात्यन्ताभावस्य प्रतियोगिसमानाधिकरणत्वेन तत्प्रतियोगित्वेऽपि प्रतियोग्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वानपायात्।

ननु प्रतियोग्यसमानाधिकरणत्वं प्रतियोग्यधिकरणानधिकरणत्वम्। आकाशस्य अधिकरणा-प्रसिद्ध्या आकाशात्यन्ताभावो न प्रतियोग्यधिकरणानधिकरणत्वरूपप्रतियोग्यसामानाधिकरण्यविशिष्टः। किन्तु घटाद्यभावः। तदप्रतियोगित्वस्य आकाशे सत्त्वात् आकाशेऽतिव्याप्तं इदं लक्षणं इति चेत्। न। प्रतियोग्यसमानाधिकरणपदेन प्रतियोगितावच्छेदकसंबन्धे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-निरूपितत्वतदभावाधिकरणीभूतयत्किञ्चिद्धर्म्यनुयोगिकत्वोभयाभावस्य विवक्षितत्वात्। आकाशा-भावप्रतियोगितावच्छेदकीभूतस्य संयोगस्य समवायस्य वा आकाशवृत्तिप्रयोजकत्वाभावेन तस्मिन् संबन्धे आकाशाभावाधिकरणानुयोगिकत्वसद्भावेऽपि आकाशनिरूपितत्वाभावात् उभयाभावसद्भावेन आकाशा-भावस्य प्रतियोगिव्यधिकरणत्वात्।

नन्वेवं सत्ताजातौ अतिव्याप्तिः स्यात् । यद्यपि सत्तायाः अभावप्रतियोगित्वं अस्ति । तथापि सत्ताभावो न प्रतियोगिव्यधिकरणः । प्रतियोगितावच्छेदकसंबन्धस्य समवायस्य सत्तावृत्तिप्रयोजकत्वेन तत्र सत्तानिरूपितत्वस्य सत्ताभावाधिकरणीभूतविशेषरूपपञ्चमपदार्थानुयोगिकत्वस्य च भावेन उभयाभावाभावात् ।

प्रतियोगितावच्छेदकसंबन्धनिष्ठप्रतियोगिप्रतियोगिकत्वतदभावाधिकरणानुयोगिकत्वोभयाभावस्यैव प्रतियोगिवैय्यधिकरण्यशब्दार्थत्वेन त्वया उक्तत्वात् इति चेत् । मा भूत् तर्हि आकाशेऽतिव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणपदस्य उक्तार्थविवक्षा । वृत्तिमत्त्वे सति यस्य प्रतियोग्यसमानाधिकरणयत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगिताकाभावाप्रतियोगित्वं तस्य तेन संबन्धेन केवलान्वयित्वमिति विवक्षयाऽपि अतिव्याप्तिपरिहारसंभवात् इत्याह ॥

**तन्न** । घटप्रागभावादौ अतिव्याप्तेः । तस्यापि वृत्तिमत्त्वे सति प्रतियोगिव्यधिकरणघटात्यन्ताभावाप्रतियोगित्वात् । न हि 'घटप्रागभावः घटाद्यत्यन्ताभावप्रतियोगी' इत्युच्यते । येन अतिव्याप्तिः न स्यात् । अन्यथा घटाभावस्य पटोऽपि प्रतियोगी स्यात् । तथा च शास्त्रव्यवहारातिरिक्तकल्पनाप्रसङ्गः ।

न च प्रतियोगिपदेन सहानवस्थितत्वं विवक्षितम् । तादृशं च प्रतियोगित्वं घटप्रागभावेऽपि सुलभम् । तस्य घटात्यन्ताभावेन सहानवस्थानात् इति वाच्यम् । तथा सति अत्यन्ताभावाविरोधित्वं केवलान्वयित्वं इत्येतावतैव पूर्णत्वेन प्रतियोग्यसमानाधिकरणेत्यत्यन्ताभावविशेषणवैय्यर्थ्यप्रसङ्गात् । संयोगात्यन्ताभावस्य संयोगरूपपारिभाषिकात्यन्ताभावप्रतियोगित्वेऽपि तद्विरोधित्वाभावात्; अव्याप्यभावेन व्यावर्त्याभावात् ।

न च संयोगे अतिव्याप्तिः । अत्यन्ताभावाविरोधित्वमित्यनेन अत्यन्ताभावाधिकरणावृत्तित्वशून्यत्वस्य विवक्षितत्वात् । संयोगस्य तु अत्यन्ताभावाधिकरणे गुणादौ अवृत्तित्वेन तदधिकरणावच्छिन्नात्यन्ताभावविरोधित्वात् ।

यदपि 'संयोगाभावे अव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेति पदं देयम्' इति । तदपि न । संयोगसामान्याभावस्य अकेवलान्वयित्वेन तत्र अव्याप्तिवारणाय विशेषणस्य अदेयत्वात् ।

**॥ इति मण्युक्तकेवलान्वयित्वभङ्गः ॥**

**यत्तु मणौ–** 'केवलव्यतिरेकी त्वसत्सपक्षः यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः । निरुपाधि-(क)व्यतिरेकसहचारेण अन्वयव्याप्तिरेव गृह्यते । प्रतियोग्यनुयोगिभाव[स्य]स्यैव नियामकत्वात् । अन्वयव्यतिरेकिवत् । यद्वा व्यतिरेकव्याप्तेरेव अन्वये(न)गम्यगमकभावः । साध्याभावव्यापकसाधना-भावस्य अभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनात् । व्यापकाभावेन व्याप्या-भावावश्यंभावात्' इति ॥

**तन्न** । 'गौर्न पदा स्प्रष्टव्या, न सुरां पिबेत्' इत्याद्यागमगम्यव्याप्तिके 'गौर्न पदा स्प्रष्टव्या गोत्वात्' इत्यन्वयिनि अतिव्याप्तेः । अस्ति ह्यत्रापि सपक्षशून्यत्वम् । न च पदाऽस्प्रष्टव्यं वह्न्यादि-कमेवात्र सपक्षः । नरकाद्यनर्थसाधनीभूतपादस्पर्शकत्वस्य साध्यत्वात् । तस्य च आगमाप्रतिसंधान-दशायां वह्नावपि अनिश्चयात् ।

**यदत्रोक्तं रुचिदत्तेन–** 'असत्सपक्षत्वं सिद्ध्यसिद्धिपराहतमिति तदर्थमाह 'यत्र' इति । व्यतिरेकसहचारमात्रगृहीतव्याप्तिकत्वं केवलव्यतिरेकित्वमिति भावः' इति । तदपि न । सपक्ष-सिद्धौ तन्निषेधे व्याघातेऽपि असिद्धौ तन्निषेधे व्याघाताभावात् । अन्यथा 'अस्य पुत्रो नास्ति' इति निषेधानुपपत्तिः । अत्रापि सिद्ध्यसिद्धिभ्यां निषेधव्याघातस्य वक्तुं शक्यत्वात् । देशान्तरे सिद्धोऽन्यत्र निषिध्यते इति चेत् । न । निषिध्यमानस्य देवदत्तीयपुत्रस्य अत्यन्तासत्वेन अन्यत्र सिद्धेः वक्तुमशक्यत्वात् । न हि यः सर्वथा पुत्रशून्यः तत्पुत्रोऽन्यत्रास्ति इति वक्तुं युक्तम् । व्यतिरेकसहचारस्य अन्वयव्याप्तिग्राहकत्वाभावेन असंभवाच्च ।

**शिरोमणिस्तु**— 'अगृहीतसाध्यवद्वृत्तित्वकः व्यतिरेकिसाध्यको हेतुः केवलव्यतिरेकी । प्रकृतसाध्यकप्रकृतहेतुकानुमितिजनकव्याप्तिज्ञाननिष्ठकारणतायां विषयतासंबन्धेन अवच्छेदकीभूता या व्याप्तिः तन्निष्ठव्याप्तित्वं प्रति व्यापकीभूतप्रकृतसाध्याभावनिष्ठव्याप्तित्वकत्वं केवलव्यतिरेकित्वमिति । इदं च लक्षणं व्यतिरेकव्याप्तिज्ञानमेव व्यतिरेकिजन्यानुमितौ हेतुरितिमतानुसारेणेति नासंभवः' इत्याह ॥

तत्र आद्यं लक्षणं तावदयुक्तम् । अन्वयव्याप्तेरिव व्यतिरेकव्याप्तेरपि अग्रहदशायां 'जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्' इत्यत्र अतिव्याप्तेः । न च व्यतिरेकव्याप्त्यग्रहदशायामपि असौ हेतुः व्यतिरेकीति युक्तम् । अन्वयव्यतिरेकित्वापातात् । अन्वयव्याप्त्यग्रहेऽपि अन्वयित्वमिति वक्तुं शक्यत्वात् ।

द्वितीयं लक्षणमपि अयुक्तम् । अन्वयव्याप्तिज्ञानस्यैव अनुमितिहेतुत्वेन प्रकृतसाध्यकप्रकृत-हेतुकानुमितिहेतुभूतव्याप्तिज्ञाननिष्ठकारणतावच्छेदकीभूतव्याप्तित्वं प्रति प्रकृतसाध्याभावनिष्ठव्याप्तित्वस्य व्यापकत्वाभावात् ।

**यच्चोक्तं मणौ**– 'निरुपाधिव्यतिरेकसहचारेण अन्वयव्याप्तिरेव गृह्यते । प्रतियोग्यनुयोगि-भावस्य नियामकत्वात्' इति ॥

**अत्र वक्तव्यम्**— किं व्यतिरेकसहचारः अन्वयव्याप्तेरनुमापकः इत्युच्यते ? आहोस्वित् अन्वयव्याप्तिं गृह्णतः प्रत्यक्षस्य व्यतिरेकसहचारज्ञानं सहकारि इत्युच्यते ?

नाद्यः । पक्षीभूतसाधनानिष्ठस्य व्यतिरेकसहचारस्य साधने साध्यव्याप्त्यनुमापकत्वायोगात् । तेन पक्षधर्मतावश्यंभाव्यत्वाङ्गीकारात् । अभावनिष्ठसहचारस्य भावनिष्ठव्याप्तिगमकत्वे अन्यत्रापि व्याप्तिगमकत्वं स्यात् । अविशेषात् । व्यधिकरणव्याप्तेः तेन अनङ्गीकारात् ।

यदत्रोक्तं 'प्रतियोग्यनुयोगिभावस्य नियामकत्वं' इति । तदपि न । व्यतिरेकसहचाराधिकरण-साध्याभावं प्रति साधनस्य प्रतियोगित्वाभावात् । प्रतियोग्यनुयोगिभावेन व्यतिरेकसहचाररूपलिङ्गस्य व्याप्तिपक्षधर्मतयोरनुपपादनाच्च ।

'प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् । तदभावव्यापकाभावप्रतियोगित्वाम्' इत्यनुमानं विवक्षित-मिति चेत् । न । 'व्यतिरेकसहचारेणान्वयव्याप्तिर्गृह्यते' इति पूर्वोक्तव्यतिरेकसहचारलिङ्गत्वस्य त्यागप्रसङ्गात् । यो यदभावव्यापकाभावप्रतियोगी स तेन व्याप्तः' इति व्याप्त्यभावाच्च । कपिसंयोगा-भावव्यापकाभावप्रतियोगिनि आकाशे कपिसंयोगव्याप्तेरदर्शनेन व्यभिचारात् ।

'प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् । वृत्तिमत्त्वे सति तदभावव्यापकाभावप्रतियोगित्वात्' इति विवक्षितमिति नोक्तदोषः इति चेत् । वायू रूपवान् वायुपरमाणुनिरूपितसंयोगात्' इत्यत्र व्यभिचारानिस्तारात् । तत्रापि वृत्तिमत्त्वे सति रूपाभावव्यापकाभावप्रतियोगित्वस्य सत्त्वात् ।

साध्याभावव्यापकाभावे प्रतियोगिवैय्यधिकरण्यावच्छेदकावच्छिन्नत्वं विवक्षितम् । संयोगा-भावश्च न तथा; इति नोक्तदोषः इति चेत् । न । अयमेतत्संयोगी एतद्विभागवत्त्वात्' इत्यत्र असिद्धिप्रसङ्गेन अन्वयव्याप्त्यनुमानाभावप्रसङ्गात् । साध्याभावव्यापकीभूतैतद्विभागाभावे प्रतियोगि-वैय्यधिकरण्यावच्छेदकावच्छिन्नत्वाभावात् ।

अस्तु तर्हि द्वितीयः । तथा हि– व्यतिरेक्यनुमाने अन्वयव्याप्तिज्ञानं मानसमेव । व्याप्तिं गृह्णतः प्रत्यक्षस्य व्यतिरेकसहचारज्ञानं सहकारि इति चेत् । न । अन्वयसहचारनिष्ठनैयत्यग्रहे नैयत्याधर्मिणो व्यतिरेकसहचारग्रहस्य अनुपयोगात् ।

ननु व्याप्तिग्रहे हि व्यभिचारग्रहः प्रतिबन्धकः इत्यव्यभिचारग्रहः तद्धेतुः । तदर्थमेव अन्वयसहचारः आद्रियते । स चान्वयसहचारः यथा स्वाधिकरणे व्यभिचाराभावग्रहद्वारा व्यभिचारग्रहविरोधी तथा व्यतिरेकसहचारोऽपि स्वाधिकरणे व्यभिचाराभावग्रहद्वारा व्यभिचारग्रहविरोधी । यत्र यत्र महानसादौ धूमो गृह्यते तत्र सर्वत्रापि वह्निग्रहे महानसादौ व्यभिचारग्रहद्वारा धूमस्य वह्निव्यभिचारशङ्कापनोदवत्, यत्र यत्र ह्रदादौ वह्न्यभावो दृश्यते तत्र तत्र सर्वत्र धूमाभावग्रहे धूमादेः महाह्रदादौ अव्यभिचारग्रहद्वारा व्यभिचारशङ्कापनोददर्शनात् । हेतुसाध्याभावसामानाधिकरण्यस्यैव व्यभिचारत्वात् इति चेत् । न । व्यतिरेकसहचारस्य स्वाधिकरणावच्छेदेन साधनस्य साध्यव्यभिचारशङ्कापनोदकत्वेऽपि साध्यसाधनयोः सामानाधिकरण्योपनायकाभावेन मनसा नियतसामानाधिकरण्यरूपव्याप्तिग्रहायोगात् ।

अथ वृत्तिमतः पदार्थस्य साध्याभावाधिकरणानधिकरणत्वे सिद्धे साध्यसामानाधिकरण्यं स्वयमेव सिद्ध्यति इति चेत् न । पदार्थान्तरसामानाधिकरण्यमपहाय साध्यसामानाधिकरण्यमात्रसिद्धौ नियामकस्य वक्तव्यत्वात् । यद्यदभावाधिकरणानधिकरणत्वे सति साधिकरणं तत् तेन समानाधिकरणमिति व्याप्तेः नियामकत्वे तु यद्यदभावाधिकरणानधिकरणत्वे सति साधिकरणं तत् तेन व्याप्तमिति व्याप्तिसद्भावेन अनुमानेनैव अन्वयव्याप्तिसिद्धिसंभवेन मनसा परिच्छेद्यत्वस्य त्यागापातात् ।

यदपि 'व्यतिरेकव्याप्तेरेव अन्वये गम्यगमकभावः । साध्याभावव्यापकसाधनाभावस्याभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनात् । व्यापकाभावेन व्याप्याभावावश्यंभावात्' इति । तदपि न । व्यतिरेकबलादेव साधनस्य साध्यगमकत्वमिति पक्षस्य परामर्शासंभवेन अयुक्तत्वात् । न हि अन्वयव्याप्तिग्रहाभावे 'सात्मकत्वव्याप्यप्राणादिमत्त्ववान् अयं' इति परामर्शः संभवति । न च परामर्शासंभवेऽपि व्याप्तिज्ञानमात्रेण अनुमित्युत्पादाङ्गीकारो युक्तः । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानं अनुमितिरित्युक्तानुमितिलक्षणस्य तत्र अव्याप्तिप्रसङ्गात् । न च व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यमित्यनेन व्यभिचारधीविरोधिप्रकारकपक्षधर्मताज्ञानजन्यत्वं विवक्षितम् । इह च 'सात्मकत्वाभावव्यापकाभावप्रतियोगिप्राणादिमत्त्ववानयं' इति परामर्शजन्यत्वसद्भावात् नाव्याप्तिरिति वाच्यम् । साधने साध्यव्याप्तिज्ञानविधुरस्य तदभावव्यापकाभावप्रतियोगित्वज्ञाने विद्यमानेऽपि व्यभिचारभ्रमदर्शनेन तज्ज्ञानस्य

व्यभिचारधीविरोधित्वाभावात् । न हि तदभावव्यापकाभावप्रतियोगित्वं व्यभिचारविरोधित्वेन अज्ञातं व्यभिचारधीविरोधि । येन तज्ज्ञाने विद्यमाने व्यभिचारभ्रमो न भवति इति स्यात् । अन्यथा तदभावव्यापकाभावकारणत्वादिज्ञानेऽपि कारणादौ व्यभिचारज्ञानं न स्यात् । अविशेषात् । 'व्यतिरेकव्याप्तेरेव अन्वये गम्यगमकभावः' इति प्रतिज्ञाय प्रतिज्ञातार्थसाधकस्यैव हेतोः उपन्यासाच्च । न हि साध्याभावव्यापकसाधनाभावस्याभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनं व्यतिरेकव्याप्तेरेव गमकत्वमित्यस्यार्थस्य गमकम् । येनेदमसमर्थं न स्यात् । अप्रयोजकतामाशंक्य त्वयैव 'यत्र व्यापकाभावः तत्र व्याप्याभावः' इति व्यतिरेकव्याप्तिपरित्यागेन अन्वयव्याप्तेरेव उक्तत्वात् । व्यतिरेकिणा प्रतिषेधाकारसाध्यबुद्धेः कथञ्चित्समर्थनेऽपि 'जीवच्छरीरं सात्मकं' इति विध्याकारबुद्धेरसमर्थनाच्च ॥

## ॥ इति मण्युक्तव्यतिरेकिनिरूपणभङ्गः ॥

ननु यदि व्यतिरेकिणि न व्यतिरेकव्याप्तिः साध्यसिद्ध्युपयोगिनी, यदि च न व्यतिरेकसहचारेण अन्वयव्याप्तिग्रहः तर्हि व्यतिरेकिणः संव्यवहारः एव न स्यात् । व्याप्तिज्ञानविधुरस्य अनुमानस्य अगमकत्वात् इति चेत् । उच्यते । संव्यवहार्यमेव व्यतिरेक्यनुमानम् । व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्ध्युपयोगाभावेऽपि प्रकृतसाध्यसिद्ध्युपयोग्यन्वयव्याप्तेरेव तत्रापि भावात् ।

ननु विद्यमानाप्यन्वयव्याप्तिः न साध्यसिद्ध्युपयोगिनी, तज्ज्ञानोपायाभावात् । न तावत् तत्र प्रत्यक्षेण व्याप्तिग्रहः । सपक्षाभावात् । सपक्षस्यैव व्याप्तिग्रहभूमित्वात् । नाप्यागमेन । वादिनः प्रतिवादिनि अनाश्वासात् । नाप्यनुमानेन । तद्व्याप्तलिङ्गाभावात् । न च व्यतिरेकव्याप्तिः व्यतिरेकसहचारो वा अन्वयव्याप्तौ लिङ्गम् । व्यधिकरणयोः तयोः साध्यसामानाधिकरण्यरूपव्याप्तेः पक्षधर्मतायाश्च अभावेन अन्वयव्याप्त्यनुमापकत्वासंभवात् इति चेत् । मैवम् । व्यतिरेकव्याप्तेरन्वयव्याप्त्या सहैकाधिकरणान्तर्भावेन व्याप्त्यभावेऽप्युचिताधिकरणान्तर्भावेन व्याप्तिसद्भावेन व्याप्तिप्रकारानुसारेण व्यापकोचितदेशे व्यापकानुमितिजनकत्वसंभवात् । व्यधिकरणानामपि नदीपूरादीनां व्यापकोचितसिद्धेरेव वृष्ट्यादिसाध्यगमकत्वस्य बहुलमुपलम्भात् । समुचितसिद्धेरेव अनुमित्युपयोगित्वेन पक्षधर्मत्वाभावो न दोषाय ।

ननु साध्यस्य अप्रसिद्धत्वेऽपि प्रतियोगिज्ञानाभावेन साध्याभावज्ञानासंभवात् तत्र व्याप्तिः ग्रहीतुमशक्या । ततश्च लिङ्गज्ञानाभावात् नान्वयव्याप्तिज्ञानं इति चेत् । न । वादिवाक्येन लोकप्रवादाद्वा सामान्यतः साध्यप्रसिद्धेः सद्भावात् । तावन्मात्रेण च साध्यव्यतिरेकः सुग्रहः । कथ-

मन्यथा शशविषाणमस्तीति केनचिदुक्ते तन्निषेधं कुर्यात् । पामरा अपि लोकप्रवादात् 'अस्ति धर्मो नाम कश्चन पदार्थः, अस्ति च तत्फलम्; अस्ति चाधर्मः तत्फलं चास्ति' इति जानन्ति ।

यस्तु पदार्थविशेषं वादिवाक्यात् लोकप्रवादाद्वा न जानाति तं प्रति स्वार्थानुमानं न प्रवर्तत एव । 'पृथिवी जलादिभ्यो भिद्यते गन्धवत्त्वात्' इत्यनुमाने वादिवाक्येनैव साध्योपस्थितेः न व्यतिरेके व्याप्तिग्रहासंभवः ।

नन्वेवं साध्यप्रसिद्धिः सर्वत्रापि वक्तुं शक्यत्वात् अप्रसिद्धविशेषणता क्वापि दूषणं न स्यात् इति चेत् । न । अन्वयव्याप्तिग्रहपरिपन्थित्वेन अन्वयित्वाभिमानप्रयुक्तानुमान एव अप्रसिद्ध-विशेषणत्वस्य दूषणत्वात् । वादिवाक्यजनितप्रसिद्धिमात्रेण अन्वयव्याप्तेरग्रहात् । व्यतिरेकिणि तु अदूषणमेव । वादिवाक्यलोकप्रवादादिजनितप्रसिद्धिमात्रेण व्यतिरेकव्याप्तिग्रहसंभवात् ।

ननु अस्त्वेवं परार्थानुमाने । स्वार्थानुमाने तु साध्यप्रसिद्धिसंपादकवादिवाक्यादेरभावेन व्यतिरेकव्याप्तिग्रहाभावेन अनुमानाप्रवृत्त्या इतरभेदानुमित्यसंभवः इति चेत् । उच्यते । 'सर्वा पृथिवी इतरेभ्यो भिद्यते' इति न अनुमानेन प्रथमतो बोधः । किन्तु घटपटादिकं जलादिभ्यो भिन्नमिति प्रत्यक्षतो बोधानन्तरं 'विप्रतिपन्ना पृथिवी जलादिभ्यो भिद्यते पृथिवीत्वात् घटपटादिवत्' इति अन्वयिना स्वार्थानुमानेनैव स्वस्य 'पृथिवी जलादिभ्यो भिन्ना' इति बोधः ॥

॥ इति स्वमते व्यतिरेकिणः संव्यवहार्यत्वसमर्थनम् ॥

**मणिकारस्तु**– 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्' इत्यनुमाने न साध्याप्रसिद्धिः । घटादावेव जलादिसर्वप्रतियोगिकभेदस्य प्रत्यक्षत एव प्रसिद्धत्वात् । न च घटस्यापि पक्षत्वात् अंशतः सिद्धसाधनं इति वाच्यम् । 'सर्वा पृथिवी इतरभिन्ना' इत्युद्देश्यप्रतीतेः अभावात् । पक्षतावच्छेदक-नानात्वे हि तत् । अत एव 'अनित्ये वाङ्मनसे' इत्यत्र 'अनित्या वाक्' इति बुद्धेरुद्देश्यायाः सिद्धत्वात् अंशतः सिद्धसाधनम् ।

ननु घटः कथं पक्षः ? साध्यनिश्चयेन संदेहसिषाधयिषयोरेव अभावात् इति चेत् । न । 'सर्वा पृथिवी इतरभिन्ना न वा' इति संशयस्य तत्कारकसिषाधयिषायाश्च सामान्यतो घटविषय-[क]त्वात् ।

यद्वा सर्वत्वेन रूपेण न पक्षता । सर्वत्राविप्रतिपत्तेः । किन्तु पृथिवीत्वेन सामान्येन यावदेव विप्रतिपत्तिविषयः तावतः एव पक्षत्वम् । विशिष्याननुगमात् । अथवा जलादीनां त्रयोदशान्योन्या-

भावाः त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते । अत एव आकाशे व्यतिरेकिणा जलादिमिलित-प्रतियोगिकान्योन्याभावाप्रतीतावपि त्रयोदशान्योन्याभावाः साध्याः इति न अन्वयित्वासाधारण्ये ।

**यद्वा–** 'जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववत् द्रव्यत्वात् तेजोवत्' इत्यनुमानात् त्रयोदशभिन्नस्य सामान्यतः सिद्धौ पृथिव्यां त्रयोदशभिन्नत्वं साध्यम् । न च अन्वयित्वं असाधारण्यं वा । पक्षादन्यत्र साध्याप्रसिद्धेः । वस्तुगत्या पृथिव्यामेव साध्यसिद्धेः किं व्यतिरेकिणा ? इति चेत् । न । 'पृथिवी त्रयोदशभिन्ना' इति व्यतिरेकिणं विना अप्रतीतेः' इत्याहु ।

**तन्न** । तन्मते अभावस्य योग्यानुपलब्धिसहकृतेन्द्रियग्राह्यत्वेन अयोग्याकाशादिप्रतियोगिकान्योन्याभावस्य घटादौ प्रत्यक्षेण ग्रहासंभवेन घटादौ साध्यप्रसिद्धेः अवक्तव्यत्वात् ।

**यदत्रोक्तम्–** "यो ह्यनुपलम्भो ह्यधिकरणे प्रतियोगिसत्त्वविरोधी सोऽभावं ग्राहयति । न तु योग्यानुपलब्धिमात्रम् । अन्यथा वायौ रूपाभावप्रतीतिवत् जलपरमाणौ पृथिवीत्वाभावप्रतीतिप्रसङ्गः । अधिकरणे प्रतियोगिसत्त्वं च तर्कितम् । यदि हि स्तम्भः पिशाचः स्यात्, स्तम्भवत् उपलभ्येत । न पिशाचानुपलम्भः स्यात् । घटादौ च 'यद्याकाशः घटः स्यात् तर्हि घटवदुपलभ्येत । न च उपलभ्यते इति न आकाशो घटः' इति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसद्भावात् न अतीन्द्रियप्रतियोगिकान्योन्याभावग्रहासंभवः" इति ।

**तन्न** । ऐन्द्रियकाभिन्नस्य ऐन्द्रियकत्वनियमाभावेन घटादौ आकाशानुपलम्भस्य तादात्म्येन संबन्धेन आकाशसत्त्वाविरोधित्वात् । न च ऐन्द्रियकाभिन्नं ऐन्द्रियकमेवेति युक्तम् । ऐन्द्रियकदेवदत्ताद्यभिन्नस्य धर्माधर्मादिविशिष्टस्य ऐन्द्रियकत्वाभावात् । न हि मनसा 'अहं' इत्यनुभववत् 'धर्माधर्मवान्' इत्यनुभवो भवति । येन धर्माधर्मादिविशिष्टः प्रत्यक्षः स्यात् । न च धर्मादिविशिष्टः देवदत्तादिभ्यो भिन्न एवेति युक्तम् । यज्ञाद्यनुष्ठातुरपि देवदत्तस्य परार्थं धर्मानुष्ठातृयज्ञदत्तस्येव धर्मादिफलाभावापातात् ।

किञ्च पर्वतत्वेन ज्ञातोऽपि वह्निमत्त्वेन अज्ञातो भवति । न च पर्वतत्वावच्छिन्नो वह्निविशिष्टात् भिन्नः । तथा च घटादौ आकाशानुपलम्भो न ग्राह्याभावप्रतियोगिसत्त्वविरोधी इति अनुपपन्न एव प्रत्यक्षेण घटादौ आकाशादिभेदग्रहः ।

न चायं दोषोऽसत्पक्षे समानः । अस्माभिः धर्मिस्वरूपभेदप्रत्यक्षत्वे धर्मियोग्यताया एव तन्त्रत्वाङ्गीकारात् । अत एव पदार्थः प्रायः सर्वतो व्यावृत्त एव दृश्यते ।

किञ्चैवं सति अभावभ्रमः क्वापि न स्यात् । अभावभ्रमसाधनानुपलम्भस्य प्रतियोगिसत्त्वाविरोधित्वात् । न हि मन्देन्द्रियस्यानुपलम्भः अधिकरणे प्रतियोगिसत्त्वविरोधी । येन अभावं ग्राहयेत् ।

**रुचिदत्तस्तु–** "अत्रोपलम्भपदं न प्रत्यक्षपरम् । व्याप्त्यसिद्धेः । नापि ज्ञानमात्रपरम् । इष्टापादनप्रसङ्गात् । किन्तु 'स्तम्भो यदि पिशाचात्मा स्यात् पिशाचात्मतया प्रमाविषयः स्यात् । यो यदात्मा सः तदात्मतया प्रमाविषयः' इति सामान्यव्याप्तिरभिमता" इत्याह ॥

**तन्न** । कालान्तरीयपुरुषान्तरीयप्रमाभावस्य निश्चेतुमशक्यत्वात् । इदानीं स्वकीयप्रमाविषयत्वस्य प्रमासामग्रीभूतलिङ्गानुसन्धानाद्यभावेन आपादयितुमशक्यत्वात् ।

किञ्च यदि घटादौ साध्यप्रसिद्धिः स्यात् तर्हि इदं केवलव्यतिरेकि न स्यात् । घटस्यैव सपक्षत्वात् । न च सपक्षत्वे पक्षातिरिक्तत्वं प्रयोजकम् । निश्चितसाध्यवत्त्वेनैव सपक्षत्वसंभवे पक्षातिरिक्तत्वविशेषणवैयर्थ्यात् ।

ननु घटादौ साध्यसाधनयोः सहचारदर्शनेऽपि यदा अव्यभिचारो न गृह्यते तदाऽस्य केवलव्यतिरेकित्वमिति चेत् । न । साध्यसाधनयोः सामानाधिकरण्यग्रहे व्यतिरेकसहचारेण साध्याभाववति न सर्वथा साधनमिति च ज्ञाने अन्वयव्याप्तिज्ञानस्य अवर्जनीयत्वेन अन्वयाप्रतिसन्धानदशायां व्यतिरेकीत्यस्य अयुक्तत्वात् ॥

यदत्रोक्तं पक्षधरेण–– 'तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वादिपदार्थानुपस्थित्या अन्वयव्याप्त्यप्रतिसन्धानम्' इति । **तन्न** । तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वादिज्ञानाभावेऽपि अव्यभिचरितसामानाधिकरण्यज्ञानमात्रेण अनुमितिदर्शनेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यस्य व्याप्तिशब्दार्थत्वाभावात् । न हि धूमात् वह्निं अनुमिमानेन धूमसमानाधिकरणाः अतीन्द्रियविप्रकृष्टप्रतियोगिकाभावाः सर्वेऽपि विज्ञाताः । तावदभावाप्रतियोगित्वं वा साध्ये विज्ञातम् । येन उक्तरूपं व्याप्तिज्ञानं अनुमितिपूर्वसमये अस्तीति स्यात् ।

किञ्च घटादौ साध्यप्रसिद्धिश्चेत् घटादेः पक्षकोटिप्रवेशोऽनुपपन्नः । अंशे सिद्धसाधनताप्रसङ्गात् ।

**यदत्रोक्तम्**– 'सर्वा पृथिवीत्युद्देश्यप्रतीतेरभावात् नांशतः सिद्धसाधनम्' इति । **तन्न** । घटादिषु सन्देहाभावेन 'सर्वा पृथिवी इतरभिन्ना' इति प्रतीतेरुद्देश्यत्वस्यैवायोगात् । अन्यथा सर्वत्राप्येवं वक्तुं शक्यत्वेन अंशतः सिद्धसाधनतायाः क्वापि दूषणता न स्यात् ।

**यदत्रोक्तम्**– 'पक्षतावच्छेदकनानात्वे हि तत् । अत एव 'अनित्ये वाङ्मनसे' इत्यत्र अनित्या वाक् इति बुद्धेः उद्देश्यायाः सिद्धत्वात् अंशतः सिद्धसाधनम्'' इति । **तन्न** । समूहालम्बनबुद्धेरेव उद्देश्यत्वेन– 'अनित्या वाक्' इति एकमात्रबुद्धेरनुद्देश्यत्वात् । अत एव– 'अनित्ये वाङ्मनसे' इत्यत्र असहितावस्थयोरेव द्वयोः पक्षत्वे अंशतः सिद्धसाधनम्' इत्यपि परास्तम् । तथात्वे अनुमानभेदस्य अवर्जनीयत्वेन एकमनुमानं सिद्धसाधनत्वेनैव दुष्टं, नांशतः सिद्धसाधनत्वेन' इत्यापातात् ॥

**रुचिदत्तस्तु**– 'पक्षतावच्छेदकैक्ये न अंशतः सिद्धसाधनम्, पक्षतावच्छेदकसमानाधिकरणतया साध्यसिद्धेरुद्देश्यत्वेन तत्सिद्धौ सिद्धसाधनत्वस्यैव भावात्; असिद्धौ च सिद्धसाधनत्वस्येव अंशतः सिद्धसाधनस्यापि प्राप्त्यभावात्; किन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे, यत्र पक्षतावच्छेदकं नाना, तत्रैव अंशतः सिद्धसाधनता; वाक्त्वरूपपक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरूपैकोद्देश्यसिद्धावपि मनस्त्वरूपपक्षतावच्छेदकान्तरसामानाधिकरण्येन साध्यसिद्धिरूपापरोद्देश्यासिद्धेः ।

न च इहापि सिद्धसाधनमेवास्तु इति वाच्यम् । सर्वपृथिवीत्वस्य पक्षतावच्छेदकत्वात् । घटादौ घटत्वादिसामानाधिकरण्येन साध्यसिद्धावपि सर्वपृथिवीत्वावच्छेदेन साध्यसिद्धेरभावात्' इत्याह ॥

**तन्न** । पक्षतावच्छेदकैक्येऽपि 'यत्र यत्र पक्षतावच्छेदकं तत्र सर्वत्र साध्यसिद्धेरुद्देश्यत्वेन पक्षतावच्छेदकावच्छिन्नैकव्यक्तौ साध्यसिद्धौ अन्यत्रासिद्धौ अंशे सिद्धसाधनत्वस्यैव वक्तव्यत्वात् । अन्यथा यस्यां व्यक्तौ साध्यसिद्धिरुद्देश्या तामेव पक्षीकुर्यात् । न तु सामान्येन । विप्रतिपत्त्यधिकरणे सर्वत्र साध्यसिद्धेरुद्देष्टव्यत्वेन एकत्रानुद्देष्टव्यत्वाच्च ।

यदपि 'सर्वपृथिवीत्वस्य पक्षतावच्छेदकत्वात् घटादौ घटत्वादिसामानाधिकरण्येन साध्यसिद्धावपि सर्वपृथिवीत्वावच्छेदेन साध्यसिद्धेरभावात्' इति । तन्न । पृथिवीत्वस्यैकत्वात्, नानात्वाभावेन 'सर्वपृथिवीत्वावच्छेदेन' इत्युक्त्ययोगात् ।

किञ्च सर्वपृथिवीत्वावच्छेदेन साध्यसिद्धेः उद्देश्यत्वं नाम 'पृथिवीत्वाधिकरणसर्वव्यक्तिषु साध्यसिद्धिः उद्देश्या' इत्येव वाच्यम् । गत्यन्तराभावात् । तथा च घटादिकतिपयव्यक्तिषु साध्य-सिद्धिश्चेत्; कथं नांशतः सिद्धसाधनता ? न हि भवति 'येन कृत्स्नो वेदोऽध्येतव्यः तस्य अर्धाध्य-यनसिद्धौ न भवति अर्धलाभः इति । येनेह कतिपयव्यक्तिषु इतरभेदसिद्धिः अंशे सिद्धिः न स्यात् ।

**यदपि मणौ**– 'घटादौ कथं पक्षता ? तत्प्रयोजकसंदेहसिषाधयिषयोरभावात्' इत्याशङ्क्य, 'सर्वा पृथिवी इतरभिन्ना न वा' इति संशयस्य तत्प्रकारकसिषाधयिषायाश्च सामान्यतो घटविषयत्वात्' इत्युक्तम् । तदपि न । 'घटादिरूपा पृथिवी इतरेभ्यो भिन्ना' इति जानतो जायमानस्य 'सर्वा पृथिवी इतरभिन्ना न वा इति' इति संशयस्य घटादिव्यतिरिक्तसर्वविषयत्वे घटादेः तद्विषयत्वाभावात् । न हि संभवति 'व्याप्यदर्शने विद्यमाने न भवति संशयः; भवति च अन्यतरकोटिनिर्णये संशयः' इति ।

**यदत्रोक्तं**– 'घटत्वेन विशेषदर्शनं सिद्धिर्वा, इति तेन रूपेण संशयसिषाधयिषे न भवतः । पृथिवीत्वेन ते भवतः एव । 'धूमवान् वह्निमान्' इति धूमवत्त्वेन वह्निनिश्चयेऽपि पर्वते वह्निसंशयवत्' इति । तदपि न । 'धूमवान्' इत्यादिना सामान्यतो निश्चिते विशेषरूपेण संशयस्य उपपादितत्वेऽपि विशेषरूपेण निश्चिते सामान्यतः संशयानुपपादनात् । न हि भवति 'अयं पर्वतोऽग्निमान्' इति वह्निनिश्चये पर्वतत्वेन तत्रैव तत्संशयः ।

किञ्च यदवच्छेदेन यत्र यत्कोटिनिश्चयः तदवच्छिन्नत्वज्ञानं तत्र तत्कोटिकसंशयविरोधि । न तु तत्प्रकारकतत्कोटिकसंशयविरोधि । गौरवात् । एवं च सति इतरभेदव्याप्यघटत्वादिम(व)त्तया निश्चिते धर्मिणि कथं पृथिवीत्वेन प्रकारेण इतरभेदकोटिकसंशयः स्यात् । अन्यथा धूमत्वेन रूपेण वह्निव्याप्तिनिश्चयेऽपि तत्रैव प्रमेयत्वरूपेण तदेव संशयः स्यात् । न चेष्टापत्तिः । 'धूमो वह्निव्याप्यः' इति जानतोऽपि 'प्रमेयं वह्निव्याप्यं न वा' इति संदेहदर्शनात्, इति वाच्यम् । तत्संशयस्य धूमेतर-प्रमेयधर्मिकत्वात् ।

**यदपि**– 'यद्वा– सर्वत्वेन रूपेण न पक्षता । सर्वत्र अविप्रतिपत्तेः किन्तु पृथिवीत्वेन सामान्येन यावदेव विप्रतिपत्तिविषयः तावतः एव पक्षत्वं; विशिष्यानुगमात्' इति । तदपि न । व्यतिरेकिप्रयोगनिरूपणावसरे अन्वयिप्रयोगनिरूपणस्य असङ्गतत्वात् । न हि निश्चितसाध्यकघटादि-व्यतिरिक्तपृथिवीपक्षकप्रयोगो नान्वयी । येन तदुपदर्शनं नासङ्गतं स्यात् ।

**यदपि**— 'अथवा जलादीनां त्रयोदशान्योन्याभावाः त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते । अत एव आकाशे जलादिमिलितप्रतियोगिकान्योन्याभावाप्रतीतावपि व्यतिरेकिणा त्रयोदशान्योन्याभावाः साध्याः इति नान्वयित्वासाधारण्ये' इति । तदपि न । 'पृथिवी इतरभिन्ना' इत्यनुमानसाध्यस्य एकधर्मावच्छिन्नत्रयोदशप्रतियोगिकान्योन्याभावस्य प्रसिद्धेरनुपपादनात् । प्रकृतानुमानपरित्यागेन अनुमानान्तरसाध्यप्रसिद्ध्युपपादनस्य असङ्गतत्वात् ।

अस्तु वा तदेवानुमानं प्रकृतम् । तथाऽपि त्रयोदशसु साध्यप्रसिद्धिव्युत्पादनं अयुक्तम् । घट एव साध्यसाधनयोः सहचारस्य सुप्रसिद्धत्वात् । आकाशपक्षकेतरभेदानुमाने असाधारण्यापाताच्च । न हि त्रयोदशान्योन्याभावान्तर्गतकतिपयान्योन्याभाववत्सु जलादिषु आकाशत्वं नाम साधनमस्ति । येन असाधारण्यं न स्यात् ।

न च जलादिषु त्रयोदशान्योन्याभावरूपसाध्यस्य अप्रसिद्धत्वेन तेषां असपक्षत्वात् तेषु हेत्व-भावेऽपि नासाधारण्यमिति वाच्यम् । साध्यत्वस्य त्रयोदशाभावेषु प्रत्येकं परिसमाप्तत्वेन निश्चितकति-पयाभाववत्त्वेन तेषां सपक्षत्वात् । अन्यथा साध्यत्वपर्याप्त्यधिकरणानां त्रयोदशान्योन्याभावानां क्वाप्य-प्रसिद्धत्वेन साध्याप्रसिद्धिर्दुर्वारा स्यात् । पृथिव्यादित्रयोदशप्रतियोगिकान्योन्याभावानां अभावेषु सुप्रसिद्धत्वेन आकाशपक्षकेतरभेदसाधकानुमाने साध्यप्रसिद्ध्यर्थं त्रयोदशान्योन्याभावानां साध्यत्व-स्वीकारायोगाच्च ।

न च अभावे पृथिव्यादित्रयोदशान्योन्याभावो नास्ति इति युक्तम् । 'अभावः पृथिव्यादि-त्रयोदशपदार्थाः न' इति प्रतीतिसिद्धत्वात् । न च प्रतीत्या स्वरूपभेद एव विषयीक्रियते, न अन्योन्यभावः; इति युक्तम् । स्वरूपभेदस्यैव अन्योन्याभावत्वात् । अन्यथा 'पृथिवी इतरभिन्ना' इति बुद्धेरपि स्वरूपभेदविषयत्वं न अन्योन्याभावविषयत्वं इत्यापातः ।

**रुचिदत्तस्तु–** "एतच्च व्यासज्यवृत्तिप्रतियोगिताकाभाववादिमतेन। अन्यथा जलादावेव तेजोवाय्वादिभेदसत्त्वेन त्रयोदशभेदाभावासंभवेन विपक्षत्वानुपपत्त्या व्यतिरेकव्याप्तिग्रहानुपपत्तेः। तस्मात् व्यासज्यवृत्तिधर्मस्य साध्यतावच्छेदकत्वे तदवच्छिन्नाभावः एकसत्त्वेऽपि अस्तीति न उक्तदोषः। अत एव नासाधारण्यमपि। निश्चितसाध्यतावच्छेदकावच्छिन्नवद्व्यावृत्त्या हि तद् भवति। प्रकृते च न तथा। प्रत्येकान्योन्याभावस्य व्यासज्यवृत्तिधर्मावच्छिन्नत्वाभावात्। न चैवं साध्यतावच्छेदकेन रूपेण साध्यप्रसिद्धिः न स्यात् इति वाच्यम्। भिन्नभिन्नाधिकरणस्थानामपि अभावानां त्रयोदशत्वादिना ज्ञानसंभवात। भिन्नाधिकरणस्थघटयोः 'द्वौ घटौ' इतिवत्" इत्याह।

**सः स्थूलदृश्वा**। तत्तदधिकरणवृत्तित्रयोदशान्योन्याभावाभावानां आकाशत्वरूपसाधनाभावेन सह व्याप्तिग्रहसंभवेन व्यतिरेकव्याप्तिग्रहाय व्यासज्यवृत्तिप्रतियोगिताकाभाववादिमतानुसरणवैयर्थ्यात्। त्रयोदशाभावानां साध्यत्वपक्षे प्रत्येकं त्रयोदशान्योन्याभावाभावानामेव साधनाभावेन व्याप्तेर्ग्राह्यत्वात्।

**यदपि**— 'अत एव नासाधारण्यं' इत्यादि। तदपि न। पृथिव्याद्यन्योन्याभावत्वानामेव तत्तत्साध्यतावच्छेदकत्वेन व्यासज्यवृत्तिधर्मस्य साध्यतानवच्छेदकत्वात्। एवं च सति साध्यतावच्छेदकावच्छिन्नसाध्यवज्जलादिव्यावृत्तस्य हेतोः कथं नासाधारण्यम्। अस्तु वा व्यासज्यवृत्तिधर्मः साध्यतावच्छेदकाः। तथापि नासाधारण्यपरिहारः। निश्चितसाध्यतावच्छेदकावच्छिन्नसाध्यवतो जलादेरेव हेतोः व्यावृत्तेः। न हि जले विद्यमानाः तेजःप्रभृतिद्वादशान्योन्याभावाः न साध्यतावच्छेदकत्रयोदशत्वावच्छिन्नाः इति संभवति। अधिकरणान्तरवृत्तिजलान्योन्याभावेन सह त्रयोदशत्वसंभवात्। त्रयोदशत्वस्य अपेक्षाबुद्धिनिमित्तकत्वेन सामानाधिकरण्यनिमित्तकत्वाभावात्। अन्यथा भिन्नाधिकरणवृत्तिना पटेन घटस्य द्वित्वं न स्यात्।

ननु साध्यतावच्छेदकपर्याप्त्यधिकरणसाध्यवद्व्यावृत्तिर्हि हेतोरसाधारण्यम्। जलं च न साध्यतावच्छेदकपर्याप्त्यधिकरणसाध्यवत्। ततः तद्व्यावृत्तावपि नासाधारण्यमिति चेत्। न। जलमात्रव्यावृत्तिरूपासाधारण्याभावेऽपि जलतेजोव्यावृत्तिरूपासाधारण्यापरिहारात्। सपक्षत्वस्येह व्यासज्यवृत्तित्वात्। द्वयोः संभूय साध्यतावच्छेदकावच्छिन्नसाध्याधिकरणत्वात्।

सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवत् : इत्यनुमानेन रूपरसयोः संभूयैव सपक्षत्वदर्शनात्।

**पक्षधरस्तु**— 'त्रयोदशान्योन्याभावानां प्रत्येकमेव साध्यत्वम् । साध्यतावच्छेदकं च तत्तदन्योन्याभावत्वमेव । न चैवं प्रत्येकं साध्यतावच्छेदकावच्छिन्नत्वे तत्तदाश्रयस्य प्रत्येकं सपक्षतया ततो व्यावृत्तौ असाधारण्यमस्त्येवेति वाच्यम् । यतोऽसाधारण्यं सत्प्रतिपक्षोत्थापकतया दोषः इति साक्षादनुमितिविरोधि । तथा च अनुमितिविषयसाध्यवद्व्यावृत्त्या असाधारण्यं, न तु व्यापकतावच्छेदकावच्छिन्नसाध्यवद्व्यावृत्त्या । असाधारण्यस्य व्याप्तिग्रहाप्रतिकूलत्वात् । न च अनुमितिविषयो मिलितात्मकं साध्यं प्रसिद्धमन्यत्र । येन असाधारण्यं स्यात्' इत्याह ।

**तन्न** । 'आकाशः पृथिव्यादित्रयोदशात्मा । आकाशत्वात्' इति प्रतिपक्षोदयसंभवेन अनुमितिप्रतिबन्धानिस्तारात् । अनुमितिविषयत्रयोदशान्योन्याभावरूपमिलितसाध्याधिकरणाप्रसिद्ध्या ततो व्यावृत्तिरूपासाधारण्याभावेऽपि तत्तदन्योन्याभावत्वरूपव्यापकतावच्छेदकावच्छिन्नव्यापकाधिकरणतया प्रसिद्धपृथिव्यादिपदार्थेभ्यो व्यावृत्तस्य आकाशत्वस्य पृथिवीभेदत्वादितत्तत्साध्यतावच्छेदकावच्छिन्न-साध्यव्यापकाभावप्रतियोगित्वेन पक्षे अनुमितिविषयाणां त्रयोदशान्योन्याभावानां अभावसाधनसंभवात् ।

न च प्रतिपक्षानुमाने साध्याप्रसिद्धिः पृथिव्यादितादात्म्यानां संभूय प्रसिद्ध्यभावेऽपि पृथक् पृथक् प्रसिद्धिसद्भावात् । अन्यथा दूष्यानुमाने साध्याप्रसिद्धिः दुर्वारा स्यात् ।

न च आकाशस्य पृथिव्याद्यात्मकत्वाङ्गीकारे गन्धवत्त्वादिप्रसङ्गरूपबाधकसद्भावात् न सत्प्रति-पक्षत्वं युक्तमिति वाच्यम् । गन्धवत्त्वादेः केवलपृथिव्यादिधर्मत्वेऽपि पृथिव्यादित्रयोदशाभिन्नपदार्थ-धर्मत्वाभावेन न गन्धवत्त्वादेः प्रसङ्गः इति वक्तुं शक्यत्वात् ।

**यदपि मणौ**— 'जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववत् द्रव्यत्वात् तेजोवत्' इत्यनुमानात् त्रयोदशभिन्नस्य सामान्यतः सिद्धौ पृथिव्यां त्रयोदशभिन्नत्वं साध्यम् । न चान्वयित्वं न वाऽसाधारण्यम् । पक्षादन्यत्र साध्याप्रसिद्धेः' इत्यादि ।

**तदपि न** । पृथिव्यां जलादिप्रतियोगिकभेदसिद्धेः पुरा तेजःप्रभृतिद्वादशभिन्नत्वेन रूपेण जलस्यैव उपस्थित्या 'जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववत्' इत्यनुमित्युत्पादायोगात् । अन्यथा 'पृथिवी जलादित्रयोदशभिन्नभिन्ना द्रव्यत्वात्' इत्यनुमानप्रसङ्गो दुर्वारः । अप्रयोजकत्वात् यदि द्रव्यत्वेन हेतुना पृथिव्याः जलादित्रयोदशभिन्नभिन्नत्वासिद्धिः । तर्हि तत एव जलेऽपि द्वादशभिन्नभिन्नत्वासिद्धिः स्यात् । अविशेषात् ।

यदि जलं तेजःप्रभृतिद्वादशभिन्नभिन्नं न स्यात् तर्हि पृथिवीत्वाधिकरणं स्यात् इति तर्कबलात् जले तेजःप्रभृतिद्वादशभिन्नभिन्नत्वसिद्धिः इति चेत् तर्हि अनेनैव अनुमानेन पृथिव्यां त्रयोदशभेदसिद्धेः व्यतिरेकिवैयर्थ्यं स्यात् । 'पृथिवी त्रयोदशभिन्ना' इत्येवमाकारा बुद्धिः न व्यतिरेकिणा विना इति चेत् । 'जलं द्वादशभिन्नभिन्नं' इति बुद्धिसहकृतेन ज्ञानान्तरोपनीतपृथिव्यां तादृशबुद्ध्युपपत्तेः इत्यलम् ॥

॥ इति इतरभेदानुमाने मण्युक्तसाध्यप्रसिद्धिभङ्गः ॥

**मणिकारस्तु** — 'ननु जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्, इच्छादिकार्यवत्त्वाद्वा' इति व्यतिरेकिणि साध्याप्रसिद्धौ कथं व्यतिरेकादिनिरूपणम् । ग्राहकप्रमाणाभावाच्च न व्यतिरेकव्याप्तिग्रहः । तथाहि— 'नैरात्म्यं घटस्य न प्रत्यक्षवेद्यम् । तस्य तत्र असामर्थ्यात् । न अनुमानगम्यम् । नैरात्म्याप्रतीतौ अन्वयिनोऽभावात् सात्मकत्वप्रतीतिं विना व्यतिरेकिणोऽनुपपत्तेः इति चेत् । उच्यते । इच्छात्वं संयोगासमवायिकारणकवृत्ति । नित्येन्द्रियमात्रग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वात् शब्दत्ववत्' इत्यनुमानेन इच्छाऽसमवायिकारणसिद्धौ, ततः, 'सः संयोगः किञ्चिदवच्छिन्नः संयोगत्वात्' इत्यनुमानेन तस्य संयोगस्य किञ्चिदवच्छेदकमस्ति इति सामान्यतः सिद्धौ, इच्छासमवायिकारणसंयोगावच्छेदकत्वलक्षणं सात्मकत्वं शरीरे साध्यते । अन्यथा घटाद्यवच्छेदेनापि आत्मसंयोगस्य इच्छाजनकत्वं इति भ्रमः स्यात् ।

यद्वा आत्मनीच्छाधारता महत्संयोगावच्छेद्या जन्यविभुविशेषगुणाधारतात्वात् वाय्वादिसंयोगावच्छेद्यशब्दाधारतावत्' इति सामान्यतः सिद्धं इच्छाधारताघटकेच्छासमवायिकारणद्रव्यसंयोगवत्त्वं सात्मकत्वं शरीरे साध्यम् ।

न च व्यतिरेकग्रहासंभवः । स्वशरीरे प्राणादिमत्त्वस्य इच्छादिमत्त्वस्य च चेष्टावयवोपचयादिव्याप्यत्वग्रहात् । घटादौ चेष्टाविरहेण प्राणादिमत्त्वेच्छादिमत्त्वविरहानुमानं, ततः इच्छाविरहेण लिङ्गेन इच्छादिप्रयोजकेच्छाधारताघटकेच्छासमवायिकारणसंयोगलक्षणसात्मकत्वविरहानुमानं, कार्याभाववति कारणाभावनियमात् । ततश्च यत्र सात्मकत्वाभावः तत्र प्राणादिमत्त्वाभावः इति व्यतिरेकव्याप्तिग्रहसंभवात् ।

**यद्वा**— 'चेष्टाशब्दाभिधेयः शरीरनिष्ठपरिस्पन्दविशेषः संयोगासमवायिकारणकः संस्काराजन्यक्रियात्वात् आद्यक्रियावत्' इति चेष्टायाः असमवायिकारणसंयोगसिद्धौ, सः प्रयत्नवदात्मसंयोग

एव पर्यवस्यति । यत्नान्वयव्यतिरेकानुविधानात् । एवञ्च चेष्टासमवायिकारणसंयोगाश्रयत्वे सति शरीरत्वं सात्मकत्वं जीवच्छरीरे साध्यम् । चेष्टावत्त्वात्, इति हेतुः । चेष्टाविरहश्च घटादौ प्रत्यक्षसिद्धः । तेन तदसमवायिकारणसंयोगविरहोऽपि सुग्रहः । तदनन्तरं व्यतिरेकव्याप्तिग्रहः इति ।

यद्वा जीवच्छरीरं तदवयवो वा, आत्मभिन्नत्वे सति आत्मविशेषगुणकारणभोगानधिकरणावृत्तिसंयोगवत् । प्राणान्यत्वे सति ज्ञानकारणीभूतप्राणसंयोगवत्त्वात् । यन्नैवं तन्नैवम् । यथा घटः । आत्मप्राणसंयोगः प्राणमनःसंयोगो वा शरीरप्राणसंयोगेनैव अन्यथासिद्धो न कारणमिति नात्मनि मनसि वा व्यभिचारः ।

न च शरीरस्य घटादिवत् भोगानधिकरणत्वम् । यतः भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति । सकलभोगाधिकरणवृत्तित्वात् । प्रमेयत्ववत्; इति तार्किकरीतिः' इत्याह ।

अस्यार्थः । **'नित्येन्द्रियमात्रग्राह्येति'** – नित्येन्द्रियमात्रग्राह्यो यो विशेषगुणः तन्निष्ठगुणत्वसाक्षाद्व्याप्यजातित्वात्, इति । तत्र नित्येन्द्रियमात्राग्राह्यवृत्तिजातित्वस्यात्मत्वे व्यभिचारः । तन्निरासाय गुणपदोपादानम् । नित्येन्द्रियमात्रग्राह्यगुणवृत्तिजातित्वस्यापि आत्मैकत्वप्रत्यक्षत्वपक्षे संख्यात्वे व्यभिचारः । तस्यापि नित्येन्द्रियमनोमात्रग्राह्यात्मैकत्ववृत्तिजातित्वात् । तद्व्युदासाय विशेषपदोपादानम् । तावन्मात्रस्यापि शब्दजन्यशब्दनिष्ठजातिविशेषे व्यभिचारः । तस्यापि श्रोत्ररूपनित्येन्द्रियमात्रग्राह्यविशेषगुणवृत्तिजातित्वात् । तस्य शब्दासमवायिकारणकवृत्तित्वेन संयोगासमवायिकारणकवृत्तित्वरूपसाध्यविधुरत्वात् । तत्परिहाराय गुणत्वसाक्षाद्व्याप्येति विशेषणम् । उक्तजातिविशेषस्य गुणत्वव्याप्यशब्दत्वव्याप्यत्वेन तद्व्याप्यव्याप्यत्वे सति तद्व्याप्यत्वरूपसाक्षाद्व्याप्यत्वाभावात् तत्र व्यभिचारनिरासः । इन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वं रूपत्वे व्यभिचारि; इति नित्यपदम् । रूपस्य मनोयुक्तचक्षुर्ग्राह्यत्वेन नित्येन्द्रियग्राह्यत्वस्यापि भावात् तद्वृत्तिरूपत्वे व्यभिचारतादवस्थ्यशङ्कावारणाय मात्रपदम् । नित्येन्द्रियमात्रग्राह्यत्वं च इन्द्रियान्तरासहकृतनित्येन्द्रियग्राह्यत्वमिति इच्छायाः अनुमानादिग्राह्यत्वमादाय नासिद्धिः शङ्कनीया ।

**जन्यविभुविशेषेति** गुणाधारतात्वमात्रं आकाशैकत्वाधारतायां व्यभिचारि । तस्य महत्संयोगाद्यवच्छेद्यत्वाभावात् । तदर्थं विशेषपदोपादानम् । तावन्मात्रं रूपाधारतात्वव्यभिचारीति 'विभु'पदोपादानम् । विभुविशेषगुणाधारतात्वमपि साध्याभाववति ईश्वरज्ञानाधारतात्वे गतम् । तदर्थं जन्यपदोपादानम् ।

**'वाय्वादि'** इति । 'शब्दाधारतावत्' इत्येव दृष्टान्तः । तत्र साध्यप्रदर्शनाय वाय्वादिसंयोगावच्छेद्येत्युक्तम् । आदिपदेन मृदङ्गादिग्रहणम् ॥ इच्छाधारतेति ॥ इच्छाधारताया घटकीभूतः यः इच्छासमवायिकारणस्य द्रव्यस्य आत्मनः संयोगः तद्वत्त्वं सात्मकत्वं इत्यर्थः । शरीरात्मसंयोगस्यैव इच्छाधारताघटकत्वेन शरीरस्यैव सात्मकत्वं नान्यस्येति न सपक्षसंभावना ।

चेष्टासमवायिकारणेति— चेष्टासमवायिकारणसंयोगाश्रयत्वं आत्मनिष्ठमिति तद्व्यावृत्तस्य हेतोः असाधारण्यपरिहाराय 'शरीरत्व'पदम् । एवं च विशिष्टसाध्यस्य तत्राभावान्नासाधारण्यम् ।

'आत्मभिन्नत्वे सति' इति । आत्मभिन्नत्वे सति ज्ञानातिरिक्तात्मविशेषगुणकारणीभूतभोगानधिकरणावृत्तिसंयोगवत् इत्यर्थः । अत्र च मते भोगाधिकरणत्वं आत्मशरीरतदवयवानामेव; न मनआदेः । संयोगवत्त्वमात्रं घटादिसंयोगमादाय सिद्धसाधनम् । तत्परिहाय 'भोगानधिकरणावृत्ति' इति विशेषणम् ।

एवमपि शवसंयोगमादाय सिद्धसाधनता । शवस्य पूर्वं भोगाधिकरणत्वेन भोगाधिकरणभिन्नत्वरूपभोगानधिकरणत्वाभावेन तत्संयोगस्यापि भोगानधिकरणावृत्तित्वात् । तदर्थं आत्मविशेषगुणकारणेत्युक्तम् । तस्यापि स्वसाक्षात्कारकारणत्वेन सिद्धसाधनतावारणाय ज्ञानातिरिक्तेत्यात्मविशेषगुणविशेषणम् । आत्मनोऽपि साध्यवत्त्वे असाधारण्यं स्यादिति तत्परिहाराय सत्यन्तं विशेषणम् ।

आत्मभिन्नत्वे सति आत्मगुणकारणभोगानधिकरणवृत्तिसंयोगवत्त्वस्य साध्यत्वे शवावयवस्यापि सपक्षत्वं स्यात् । तस्यापि आत्मभिन्नत्वे सति शवावयवात्मसंयोगजन्यशवात्मसंयोगरूपात्मगुणकारणभोगानधिकरणावृत्तिसंयोगवत्त्वात् । ततश्च असाधारण्यं स्यादिति तत्परिहाराय विशेषपदम् । आत्मभिन्नत्वे सति आत्मविशेषगुणकारणसंयोगवत्त्वमात्रोक्तौ मनसोऽपि सपक्षत्वं स्यात् । तत्परिहाराय 'भोगानधिकरणावृत्ति' इति संयोगविशेषणम् । मनसो भोगानधिकरणत्वेन भोगानधिकरणावृत्तिसंयोगवत्त्वासंभवात् न सपक्षत्वम्' इति ।

**तत्र**– 'इच्छात्वं संयोगासमवायिकारणकवृत्ति । नित्येन्द्रियमात्रग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वात्' इत्यनुमानं तावदयुक्तम् । शब्दजन्यशब्दवृत्तिजातिविशेषस्य साध्यं विनाऽपि तादृशगुणत्वव्याप्यजातित्वमिव इच्छात्वस्यापि साध्यं विनैव तादृशगुणत्वसाक्षाद्व्याप्यजातित्वस्य संभवेन

अप्रयोजकत्वात् । न हि साक्षाद्व्याप्यजातित्वार्थं संयोगासमवायिकारणवृत्तित्वं आवश्यकम् । येनाप्रयोजकं न स्यात् । अन्यथा रूपत्वादेरपि संयोगासमवायिकारणकवृत्तित्वं वाच्यं स्यात् ।

**यदपि**— 'इच्छासमवायिकारणसंयोगावच्छेदकत्वलक्षणं सात्मकत्वं साध्यं' इति । तदपि न । सात्मकत्वशब्दस्य आत्मसंबन्धविशेषरूपात्मसाहित्यार्थकत्वेन इच्छासमवायिकारणात्ममनःसंयोगावच्छेदकत्वस्यातदर्थत्वात् । उक्तावच्छेदकत्वस्य आत्मीयत्वरूपसात्मकत्वसाध्यत्वाच्च । अन्यथा निद्रावस्थायां उक्तावच्छेदकत्वाभावेन सात्मकत्वाभावप्रसङ्गः ।

किञ्च किं जीवच्छरीरेषु आत्मसाहित्ये विप्रतिपत्तिः ? उतेच्छासमवायिकारणसंयोगावच्छेदकत्वे ? उतेच्छाधारताघटकेच्छासमवायिकारणद्रव्यसंयोगवत्त्वादिवक्ष्यमाणधर्मेषु ? नाद्यः । इच्छासमवायिकारणसंयोगावच्छेदकत्वादिनिर्वचनानामयोगप्रसङ्गात् । आत्मसाहित्यविप्रतिपत्तिनिरासाय प्रवृत्तस्य प्राणादिमत्त्वानुमानस्य विप्रतिपत्त्यविषयोक्तावच्छेदकत्वादिरूपधर्मसाधकत्वाभिधानस्य अयुक्तत्वात् ।

न द्वितीयः । इच्छाधारताघटकेत्यादिवक्ष्यमाणनिर्वचनस्य अज्ञानमूलत्वापातात् । धर्मान्तरविप्रतिपत्त्या प्रवृत्तानुमानस्य मौढ्यमन्तरा अयोगात् । अत एव न तृतीयः । प्रथमनिर्वचनस्य अज्ञानमूलत्वापातात् ।

अथ पुरुषभेदेन विप्रतिपत्तयो भिद्यन्ते । यस्य इच्छासमवायिकारणसंयोगावच्छेदकत्वे विप्रतिपत्तिः तं प्रति प्रवृत्तानुमानसाध्यस्य इच्छासमवायिकारणसंयोगावच्छेदकत्वरूपत्वम् । यस्य यस्य तु वक्ष्यमाणधर्मान्तरे विप्रतिपत्तिः तं तं प्रति प्रवृत्तानुमानसाध्यस्य वक्ष्यमाणतत्तद्धर्मरूपत्वं इति नोक्तदोषः इति चेत् । न । सात्मकशब्दस्य अक्षादिशब्दवत् नानार्थत्वाभावेन नानाविप्रतिपत्तिमूलकानुमानसाध्यानां सात्मकशब्देन सङ्कीर्तनायोगात् । अन्यथा धूमानुमानसाध्यस्यापि सात्मकशब्देन निर्देशप्रसङ्गोऽविशेषात् ।

यदपि 'जन्यविभुविशेषगुणाधारतात्वात्' इति । तदपि न । शब्दजशब्दाधारतायां व्यभिचारात् । तत्र महत्संयोगावच्छेद्यत्वलक्षणसाध्याभावात् । न च तत्र वायुसंयोगोऽवच्छेदकः । मानाभावात् ।

**यदपि** 'इच्छाधारताघटकेच्छासमवायिकारणद्रव्यसंयोगवत्त्वं सात्मकत्वं साध्यं इति' । तदपि न । इच्छाधारताघटकसंयोगवत्त्वस्यैव सात्मकत्वरूपत्वसंभवे 'इच्छासमवायिकारणद्रव्ये'त्यस्य वैयर्थ्यात् ।

शरीरात्मसंयोगस्यैव इच्छाधारताघटकत्वाङ्गीकारेण अन्यत्राप्रसङ्गात् । आत्मन्यपि तस्य सत्त्वेन आत्मनः सपक्षत्वापाताच्च । इच्छाधारताघटकस्य शरीरात्मसंयोगरूपेच्छासमवायिकारणद्रव्यसंयोगस्य व्यासज्य-वृत्तित्वात् ।

**यदपि–** 'स्वशरीरे प्राणादिमत्त्वस्य इच्छादिमत्त्वस्य च चेष्टावयवोपचयादिव्याप्यत्वग्रहात्' इत्यभिधानम् । तत्र वक्तव्यम् । किं यत्र यदा प्राणादिमत्त्वं तत्र तदा चेष्टादिमत्त्वं इति व्याप्तिः ? उत यत्र प्राणादिमत्त्वं तत्र यदा कदाचित् चेष्टादिमत्त्वं इति व्याप्तिः ? नाद्यः । स्वशरीरे सदा चेष्टाऽभावात् । न द्वितीयः । चेष्टाविरहदशायामपि प्राणादिमत्त्वसद्भावेन तद्विरहेण तद्विरहानु-मानायोगेन व्याप्तिग्रहाभिधानवैय्यर्थ्यप्रसङ्गात् । 'स्वशरीर एव प्राणादिमत्त्वसात्मकत्त्वयोः व्याप्तिग्रहः' इत्यनभिधाय व्यतिरेकव्याप्तिग्रहसिद्ध्यर्थं उक्तप्रयासानुसरणवैय्यर्थ्याच्च ।

**यदपि च–** 'इच्छाविरहेण लिङ्गेन इच्छादिप्रयोजकेच्छाधारताघटकेच्छासमवायिकारण-संयोगलक्षणसात्मकत्वविरहानुमानं: कार्याभाववति कारणाभावनियमात्' इति । तदपि न । इच्छाविरह-दशायामपि आत्मनि उक्तसंयोगस्य सत्त्वेन इच्छाविरहस्य उक्तसात्मकत्वाभावसाधकत्वायोगात् । कार्या-भाववत्यपि प्रतिबद्धकारणस्य बहुलं उपलम्भेन उक्तनियमाभिधानायोगाच्च ।

यदपि 'चेष्टासमवायिकारणसंयोगाश्रयत्वे सति शरीरत्वं सात्मकत्वं साध्यं' इति । तदपि न । शरीरत्वे विवादाभावेन तस्या साध्यकोटौ निवेशायोगात् । असिद्धेन सहोच्यमानस्य सिद्धस्य असिद्धत्वायोगात् । अन्यथा शरीरत्वे सति प्रमेयत्वमपि साध्यं स्यात् । आत्मनः सपक्षतावारणाय शरीरत्वं साध्यकोटौ निवेश्यते इति चेत् । सन्दिग्धसिषाधयिषितयोरेव साध्यत्वेन असाधारण्यनिरासो-पयोगिनो धर्मस्यासाध्यत्वात् ।

यदपि 'यद्वा जीवच्छरीरं तदवयवो वा, आत्मभिन्नत्वे सति आत्मविशेषगुणकारणभोगानधि-करणावृत्तिसंयोगवत् । प्राणान्यत्वे सति ज्ञानकारणीभूतप्राणसंयोगवत्त्वात्' इति । तदपि न । अस्य ग्रन्थस्य प्राणादिमत्त्वानुमानसाध्यनिर्वचनपरत्वाभावेन तन्निर्वचनप्रस्तावे यद्वेति एतदनुमानोपन्यासा-योगात् । शरीरे तदवयवे चेत्युभयत्र सात्मकत्वनिश्चयाभावेन विकल्पेन पक्षत्वाभिधानायोगाच्च । आत्मभिन्नत्वे विवादाभावेन तस्य साध्यकोटौ निवेशायोगाच्च । आत्मनः सपक्षत्वनिरासाय साध्ये सिद्धार्थप्रतिपादकविशेषणोपादानायोगाच्च । कमनीयकान्ताशरीरसंयोगेनार्थान्तरत्वप्रसङ्गाच्च । तत्संयोगस्य सुखरूपात्मविशेषगुणकारणत्वात् । प्राणदेहसंयोगस्य ज्ञानकारणत्वे प्रमाणाभावेन हेतोरसिद्धेश्च ।

अत एव प्राणशरीरसंयोगेन प्राणमनःसंयोगस्य प्राणात्मसंयोगस्य च अन्यथासिद्ध्या ज्ञान-हेतुत्वखण्डनमपि अपास्तम् ।

यदपि 'भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति । सकलभोगाधिकरणवृत्तित्वात् । प्रमेय-त्ववत्' इति । तदपि न । दुःखे व्यभिचारात् । सर्वेषां भोगिनां दुःखाधिकरणत्वेन तस्य सकल-भोगाधिकरणवृत्तित्वात् । त्वया च ईश्वरस्य भोगानङ्गीकारात् । एतावताऽपि शरीरस्य भोगाधि-करणत्वासिद्धेश्च । शरीरे भोगः इति प्रतीत्यन्यथानुपपत्त्या भोगायतनत्वं शरीरस्य सिद्ध्यति इति चेत् । न । उक्तानुमानस्य प्रकृतार्थसाधकत्वाभावापरिहारात् ।

## ॥ इति मण्युक्तसात्मकत्वनिरुक्तिभङ्गः ॥

अर्थापत्तिः न मानान्तरम् । किन्तु अनुमानमेव । व्याप्तिबलेनार्थगमकत्वात् । तथा हि– जीवनविशिष्टस्य गृहेऽसत्त्वं विज्ञातं सत् बहिर्भावं गमयति । न च यो जीवन् यत्र नास्ति स ततोऽन्यत्रास्तीति व्याप्तिप्रतिसंधानाभावे जीवतो गृहादर्शनमात्रेण बहिःसत्त्वविज्ञानं भवति । येनेदं व्याप्तिबलेनार्थगमकं न स्यात् ।

ननु न जीवनमात्रं बहिःसत्त्वेन व्याप्तम् । गृहस्थिते व्यभिचारात् । नापि गृहेऽसत्त्वं तद्व्याप्तम् । मृते व्यभिचारात् । नापि जीवित्वे सति गृहेऽसत्त्वं तेन व्याप्तम् । विरुद्धयोः जीवन-गृहाभावयोः विशेषणविशेष्यभावानुपपत्तेः । न चानयोः विरुद्धत्वमेवासिद्धमिति युक्तम् । बहिर्भाव-कल्पकत्वाभावप्रसङ्गात् । न हि जीवतो गृहेऽसत्त्वं बहिर्भावं कल्पयति । येन जीवतः सत्त्वमिवा-विरुद्धमसत्त्वं बहिर्भावं गमयेत् । तथा च व्याप्तिप्रतिसंधानाभावात् नार्थापत्तिरनुमानेऽन्तर्भवतीति चेत् ।

उच्यते— जीवतो गृहेऽसत्त्वमेव बहिर्भावव्याप्तम् । न च विरुद्धयोः विशेषणविशेष्य-भावानुपपत्तिः । तयोः आत्यन्तिकविरोधासिद्धेः । स एव हि आत्यन्तिकविरोधो नाम यो हि उपशामकशून्यः । न च जीवनगृहाभावयोः विरोधः तादृशः । बहिर्भावे सति जीवतो गृहेऽसत्त्व-दर्शनात् । आत्यन्तिकविरोधे तु अर्थापत्तिरेव न प्रवर्तते । न च पक्षीकृतदेवदत्तस्य असन्निकृष्टत्वात् तद्विशेष्यकलिङ्गपरामर्शानुपपत्तिः । ज्ञानान्तरोपनीते तस्मिन् मनसैव परामर्शसंभवात् । जीवनस्य सन्दिग्धत्वात् विशेषणासिद्धिरिति वाच्यम् । ज्योतिःशास्त्राभिज्ञवचसा ज्योतिःशास्त्रोक्तलिङ्गेन वा जीवित्वनिश्चये सत्येवानुमानप्रवृत्तिरित्यङ्गीकारात् । जीवनसंशये च अर्थापत्तेरपि अप्रवृत्तेः ।

## ॥ इत्यर्थापत्तेरनुमानान्तर्भावनिरूपणम् ॥

॥ श्रीरामचन्द्राय नमः ॥ **'अत्रैके मन्यन्ते**— ज्योतिःशास्त्राभिज्ञपुरुषात् ज्योतिःशास्त्रोक्तलिङ्गाद्वा देवदत्तस्य शतवर्षजीवित्वे अवगते, अनन्तरं च शतवर्षजीवी गृह एवेति नियमे प्रत्यक्षेणावगते, अनन्तरं योग्यानुपलब्धिजनितो गृहाभावनिश्चयः; प्रमाणद्वयस्य बलाबलानिरूपणात् ज्योतिःशास्त्रोक्तलिङ्गशतवर्षजीवित्वयोः व्याप्तिविषयकं, तथा शतवर्षजीवी गृहएवेति व्याप्तिविषयकं संशयमापाद्य देवदत्तो जीवति न वेति संशयं जनयित्वा तदपनुत्तये जीवनोपपादकं बहिःसत्त्वं कल्पयति । यथोक्तसामग्र्याः अनन्तरं बहिरस्तीतिप्रतीतिः । तत्रान्वयव्यतिरेकाभ्यां संशयद्वारा गृहाभावनिश्चयः करणम् । तदुत्पादिननियमद्वयविषयकसंशयो वा करणम् । जीवनसंशय एव वा करणम् । बहिःसत्त्वज्ञानं फलम्' इति ।

**तन्न** । जीवनसंदेहसहकृतः गृहाभावनिश्चयः बहिःसत्त्वस्यैव कल्पकः; न मरणस्येत्यत्र नियामकाभावात् ।

न च यथोक्तसामग्रीजनितसंशयवानेवं तर्कयति 'योग्यानुपलब्धिजनितो गृहाभावनिश्चयः सुदृढः इति जीवननियमग्राहकयोरेकं बाध्यं, विरुद्धयोरन्यतरस्याप्रमाणत्वनियमात्, तदिह मरणं कल्पयित्वा जीवनग्राहकं बाध्यतामुत, बहिःसत्वं कल्पयित्वा गृहनियमग्राहकं; तत्र बहिःसत्त्वकल्पने गृहनियमग्राहकमात्रबाधः; मरणकल्पने तु शतवर्षजीवी देवदत्तो शतवर्षजीवी गृह एवेति नियमद्वयस्यापि बाधः स्यात्' इति । ततश्चोक्ततर्कबलात् बहिःसत्त्वमेव कल्पयति न मरणमिति वाच्यम् । उक्ततर्कसहकारेण गृहाभावनिश्चयस्य अनुमानविधया बहिःसत्त्वानुमितिकरणत्वोपपत्तौ अक्लृप्तार्थापत्तिविधया कल्पकत्वाभिधानायोगात् । देवदत्तो जीवत्येवेति निश्चयदशायां उपलब्धस्य गृहाभावस्य बहिःसत्त्वकल्पकत्वाभावप्रसङ्गाच्च । प्रमाणत्वेनाभिमतगृहाभावनिश्चयरूपार्थापत्तेः संशयजनकत्वायोगाच्च । मृतपुरुषेऽपि उक्तसामग्रीजनितैवंविधसंशयसहकृतस्य गृहाभावनिश्चयस्य बहिःसत्त्वव्यवस्थापकत्वप्रसङ्गाच्च । प्रमाणविज्ञातस्य वास्तवत्वनियमात् ।

न च प्रमाणस्यापि गृहाभावनिश्चयस्य दोषेण प्रमाशक्तितिरोधानात् अव्यवस्थापकत्वमुपपन्नमिति वाच्यम् । तादृशदोषानिरूपणात् । न च जीवननियमग्राहकयोः अन्यतराभासत्वं दोषः इति वाच्यम् । तस्य गृहाभावनिश्चयनिष्ठत्वाभावात् । अन्यतराप्रामाण्यस्य सार्वत्रिकत्वेन अर्थापत्तिजन्यबहिःसत्त्वज्ञानमात्रस्य अप्रामाण्यप्रसङ्गाच्च । न च यदुपपत्त्यर्थं अर्थापत्तिरर्थान्तरं कल्पयति तद्ग्राहकस्याप्रामाण्यं दोषः इति वाच्यम् । अन्यनिष्ठाप्रामाण्यस्य अन्यत्राभासताप्रयोजकत्वाभावात् ।

अस्तु तर्हि उपपाद्यस्य इदानीं असत्त्वं दोषः इति चेत् । न । भ्रान्तिवशात् मरणोपपत्तये बहिःसत्त्वकल्पनां उपपाद्याभिमतासत्त्वेऽपि अर्थापत्तेः प्रमाजनकत्वे तस्य तत्राप्रयोजकत्वायोगात् ।

यदपि 'संशयः करणं' इति । तदपि न । कोटिद्वयावलम्बिनः संशयस्य अन्यतरकोट्युपपादकनिश्चयजनकत्वायोगात् । अन्यथा संशयादेव सर्वत्र निर्णयसंभवे अनुमानादिप्रमाणानां वैयर्थ्यं स्यात् । अप्रमाणस्य संशयस्य नियमेन प्रमाजनकत्वायोगाच्च ।

**अन्ये मन्यन्ते**— 'अनुपपत्तिरर्थापत्तिः । जीवी देवदत्तो गृहे नास्तीति ज्ञानानन्तरं बहिःसत्त्वं विना गृहासत्त्वमनुपपन्नमित्यनुपपत्तिप्रतिसंधानवतो बहिरस्तीति धीदर्शनात् । तत्र अन्वयव्यतिरेकाभ्यां अनुपपत्तिज्ञानं करणमित्यवधार्यते । न च 'देवदत्तो बहिरस्ति । जीवित्वे सति गृहेऽसत्त्वात् । यो जीवन् यत्र नास्ति स ततोऽन्यत्र वर्तते । यथाऽहम्' इत्यनुमानेनैव बहिःसत्त्वज्ञानसंभवे किमर्थापत्त्या इति वाच्यम् । व्याप्त्यप्रतिसंधानदशायामपि अनुपपत्तिदर्शनमात्रेण बहिःसत्त्वज्ञानात्' इति ।

**अत्र वक्तव्यम्**— यद्यनुपपत्तिरर्थापत्तिः तर्हि जीवतो देवदत्तस्य गृहासत्त्वानुपपत्तिः, यज्ञदत्तस्य बहिःसत्त्वं कुतो न गमयतीति । नियामकं विना, देवदत्तस्यैव बहिःसत्त्वं गमयतीति नान्यस्येति कल्पनाऽयोगात् । यस्य गृहासत्त्वं यद्बहिःसत्त्वमन्तराऽनुपपन्नं तत् तस्यैव गमकं नान्यस्येति चेत् । तर्हि अङ्गीकृतमर्थापत्तेरनुमात्वम् । तेन विनाऽनुपपत्तेः तदभावे सत्यभावरूपायाः व्यतिरेकव्याप्तित्वेन तद्बलेन गमकत्वाङ्गीकारात् । न हि व्याप्तिबलेनार्थगमकत्वमन्तरा अनुमानत्वं नामास्ति । येनार्थापत्तिरनुमानात् पृथक् प्रमाणं स्यात् । सत्यमनुपपत्तिर्नाम व्यतिरेकव्याप्तिः । तथाऽपि नार्थापत्तिरनुमानम् । व्याप्तेरनुमाने ज्ञातोपयुक्तत्वात् इह चाज्ञाताया एवोपयुक्तत्वात् इति चेत् । न । तेन विनेदमनुपपन्नमिति विज्ञानाभावदशायां अर्थापत्तेरगमकत्वात् । स्वरूपसत्या एवानुपपत्तेः गमकत्वे अर्थापत्त्याभासप्रवृत्तिश्च न स्यात् ॥

## ॥ इति अर्थापत्तेः परोक्तपृथक्प्रामाण्यभङ्गः ॥

॥ **श्रीरामचंद्राय नमः** ॥ परार्थानुमानस्य न्यायसापेक्षत्वात् न्यायो निरूप्यते । अनुमितिचरमकारणज्ञानजनकं वाक्यं न्यायः । तज्जनकत्वं च साक्षाद्वा जिज्ञासादिजननद्वारा वेति विवक्षितमिति वह्निव्याप्यधूमवानयमित्याप्तवाक्ये प्रतिवाद्युक्तन्यायवाक्ये वा नाव्याप्तिः । आप्तवाक्यस्य साक्षादेव

परामर्शजनकत्वात् । वादिवाक्यस्य गृहीतव्याप्तिकस्य तत्स्मरणजननद्वारा, अगृहीतव्याप्तिकस्य जिज्ञासाजननद्वारा परामर्शजनकत्वात् ।

न च न्यायावयवे अतिव्याप्तिः । तस्यापि कञ्चित् प्रति महावाक्यं विना परामर्शजनकत्वे लक्ष्यत्वात् । न्यायान्तरावयवत्वेऽपि न्यायत्वाविघातात् । व्याप्त्यादिस्मृतिजिज्ञासाजनकत्वं च साक्षात् विवक्षितम् । अतो धूमादिपदसङ्केतग्राहके वृद्धव्यवहारे नातिव्याप्तिः ।

यद्यपि परोपदेशवाक्यं प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवसहितं अनुमितिजनकज्ञानजनकं दृश्यते । तथापि न परोपदेशस्य पञ्चावयवत्वनियमः । कस्यचित् प्रतिज्ञाहेतूदाहरणैः, अन्यस्योदाहरणोपनयनिगमनैः, अपरस्य उदाहरणोपनयाभ्यामेव अनुमित्युपयोगिज्ञानदर्शनात् । संभवन्ति चान्ये प्रकाराः । पर्वतोऽग्निमान् धूमवत्त्वात् महानसवत् इति वा । धूमवान्पर्वतोऽग्निमान् इति हेतुगर्भपक्षवचनं वा । विवादेनैव प्रतिज्ञासिद्धौ, कुतः पर्वतोऽग्निमान् ? इति प्रश्ने, धूमवत्त्वात् इति हेतुमात्रं वा पर्वतस्याग्निमत्त्वे किं प्रमाणम् ? इति प्रश्ने, धूमवत्त्वमिति लिङ्गोक्तिमात्रं वा, धूमवन्महानसवत् पर्वतोऽग्निमानिति सप्रतिज्ञहेतुगर्भ दृष्टान्तवचनं वा । अग्निना व्याप्तः धूमोऽत्र पर्वतेऽस्तीत्युपनयो वा, व्याप्त्यादिमद्धूमवत्त्वात्पर्वतोऽग्निमानिति निगमनं वा इति । सांव्यावहारिकाश्चैते प्रकाराः सर्वशास्त्रेषु ।

## ॥ इति स्वमते परोपदेशनिरूपणम् ॥

**॥ श्रीकृष्णाय नमः ॥ मणिकारस्तु–** 'अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यं न्यायः । प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते । तेन च विशिष्टवैशिष्ट्यावगाहिमानान्तरं उत्थाप्यते । तेन चरमपरामर्शः उत्पद्यते इति न्यायजन्यस्य शाब्दज्ञानस्य परामर्शप्रयोजकता' इत्याह ।

अत्र अनुमितिचरमकारणत्वं अनुमित्युत्पत्तिनियतत्वम् । अनुमितौ कर्तव्यायां स्वोत्तरभाविज्ञानानपेक्षत्वं इति यावत् । ईदृशो यो लिङ्गपरामर्शः तज्जनकजनकशाब्दज्ञानजनकं यद्वाक्यं तादृशवाक्यं न्यायः इत्यर्थः ।

अत्र– 'उपनयान्त एव चतुरवयवे महावाक्ये न्यायलक्षणं मा प्रसाङ्क्षीत् इत्यनुमितिचरमकारणेत्यादिविशेषणम् । नह्युपनयजन्यः परामर्शः चरमकारणम् । अबाधितत्वाज्ञाने ततोऽनुमित्य-

नुत्पत्तेः। लिङ्गपरामर्शपदं च स्वरूपकथनाय। तज्जनकशाब्दज्ञानेत्येवोक्तौ असंभवः इति जनक-जनकत्ववाचकं प्रयोजकपदं उपात्तम्। न हि शब्दजन्यमेव ज्ञानं उक्तपरामर्शजनकम्। तज्जनक-ज्ञानस्य मानसत्त्वात्। शाब्दज्ञानपदं तु कण्टकोद्धाररूपे न्यायभिन्ने महावाक्ये अतिव्याप्तिवारणाय। तद्धि अनुमितिचरमकारणपरामर्शजनकव्याप्तिज्ञानादिजनकयोग्यताज्ञानजनकतया तज्जनकजनकज्ञान-जनकम्। नायमाभासः इत्यनेन व्याप्त्यादिवैशिष्ट्यधीजनकयोग्यताज्ञानजननात्। न च शाब्दपद-दानेप्येष दोषः। शाब्दज्ञानत्वेन तादृशप्रयोजकत्वस्य विवक्षितत्वात्। न च योग्यताज्ञानं तथा जनकम्। योग्यताज्ञानत्वेन जनकत्वात्। न्यायजन्यमहावाक्यार्थज्ञाने तु शाब्दज्ञानत्वेनैव जनकत्वम्। वाक्यपदं तु आप्तोक्तवह्निव्याप्यवानयमिति वाक्यावयवावयवे वह्न्यादिपदे अतिव्याप्ति-वारणाय। तस्यापि तादृशपरामर्शजनकज्ञानजनकत्वात् इति सर्वं सार्थकम्' इति पक्षधरः।

**तन्न**। अनुमितिकारणपरामर्शप्रयोजकं वाक्यं न्यायः; इत्येतावतैव पूर्वत्वेन चरमकारणेत्यादि-विशेषणवैयर्थ्यात्।

**यदत्रोक्तम्**— 'उपनयान्त एव चतुरवयवे महावाक्ये न्यायलक्षणं मा प्रसाङ्क्षीत् इत्यनु-मितिचरमकारणेत्यादिविशेषणं' इति। तन्न। उपनयनान्तवाक्यजन्यपरामर्शेनापि अनुमितिदर्शनेन तस्यापि न्यायवाक्यत्वेन लक्ष्यत्वात्। अन्यथा तत्र अतिव्याप्तिरपरिहार्या स्यात्।

**यदत्रोक्तम्**— उपनयजन्यपरामर्शः नानुमितिचरमकारणं; अबाधितत्वाज्ञाने ततोऽनुमित्यनुत्पत्तेः' इति। तन्न। बाधाभावस्यैव प्रयोजकत्वेन अबाधितत्वज्ञानस्यानपेक्षितत्वात्। अन्यथा अबाधितत्व-निश्चयोपायाभावेन न्यायवाक्येन क्वाप्यनुमित्युत्पत्तिः न स्यात्। न च निगमनवाक्यं तन्निश्चयोपायः। परस्य परस्मिन् आप्तनिश्चयेन साध्यनिश्चयाजनकस्य तस्य अबाधितत्वनिश्चयोपायत्वाभावात्। साध्यनिश्चयजनकत्वे च कृतमनुमानेनावयवान्तरेण च।

**यदपि**— 'कण्टकोद्धाररूपे न्यायभिन्ने महावाक्येऽतिव्याप्तिवारणाय शाब्दज्ञानपदं' इति। तदपि न। यस्य यावता विना न लिङ्गपरामर्शोदयः तं प्रति तस्य सर्वस्यापि न्यायवाक्यत्वेन तस्यापि लक्ष्यत्वात्। अन्यथा तस्यापि शाब्दज्ञानजनकत्वेन तत्रातिव्याप्तिः दुष्परिहारा स्यात्।

**यदत्रोक्तम्**— 'शाब्दज्ञानत्वेन अनुमितिजनकपरामर्शप्रयोजकं यद्ज्ञानं तज्ज्ञानजनकत्वं विवक्षितम्। न च कण्टकोद्धारजनितज्ञानं शाब्दज्ञानत्वेन परामर्शप्रयोजकं, अपि तु योग्यताज्ञानत्वे-

नेति तत्रातिव्याप्तिपरिहारः' इति । तदपि न । न्यायजन्यज्ञानस्यापि शाब्दज्ञानत्वे न परामर्शप्रयोजकत्वाभावेन असंभवप्रसङ्गात् । न हि शाब्दज्ञानत्वं परामर्शप्रयोजकतावच्छेदकं; परामर्शाप्रयोजकशाब्दज्ञानेऽपि सत्त्वेनाधिकदेशवृत्तित्वात् । वह्निव्याप्यधूमवानयमिति आप्तवाक्यजन्यज्ञानस्य साक्षादेव परामर्शजनकत्वात् उक्तपरामर्शजनकज्ञानजनकत्वरूपप्रयोजकत्वाभावेन तत्राव्याप्तेश्च । न चाप्तवाक्यं न न्यायः इति युक्तम् । तज्जन्यपरामर्शस्य परार्थानुमानत्वात् । परार्थानुमानस्य च न्यायसापेक्षत्वात् । न्यायवाक्यस्यापि अगृहीतव्याप्तिकं प्रति व्याप्त्यादिजिज्ञासाजनकतया ज्ञानजनकत्वाभावेन उक्तलक्षणस्य अगृहीतव्याप्तिकं प्रत्युपदिष्टन्यायवाक्येऽव्याप्तेश्च ।

## ॥ इति मण्युक्तन्यायलक्षणभङ्गः ॥

**शिरोमणिस्तु–** 'उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम् । प्रतिज्ञात्वादिकं पुनरुदासीनवाक्यवारकन्यायान्तर्गतत्वगर्भमेवोपादेयमिति नान्योन्याश्रयः' इत्याह । अस्यार्थः– आनुपूर्व्याः उचितत्वं नाम प्रतिज्ञानन्तरं हेतोरेवोपन्यासः, तदनन्तरं उदाहरणस्यैवेत्येवं कथकसंप्रदायसिद्धत्वम् । तथा च कथकसंप्रदायसिद्धानुपूर्वीकप्रकृतसाध्यानुमित्युपयोगिप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वमिति ।

अत्र प्रतिज्ञादिपञ्चकसमुदायत्वमात्रोक्तौ व्युत्क्रमोक्तप्रतिज्ञादिपञ्चकसमुदायेऽतिव्याप्तिः स्यात् । तत्परिहाराय उचितानुपूर्वीकेति विशेषणम् । न च व्युत्क्रमोक्तप्रतिज्ञादिपञ्चकसमुदायस्य अनुमित्युपयोगित्वाभावादेव निरासः इति वाच्यम् । न्यायवत् न्यायाभासस्यापि प्रकृतानुमित्युपयोगित्वात् । उचितानुपूर्वीकवाक्यसमुदायत्वमात्रं तु गामानयेत्यादिवाक्ये अतिव्याप्तम् । तत्परिहाराय प्रतिज्ञादिपञ्चकसमुदायत्वमित्युक्तम् ।

न च गामानयेतिवाक्ये प्रतिज्ञानन्तरं हेतोरुपन्यासः इत्यादि कथकसंप्रदायप्राप्तानुपूर्वीकत्वाभावात् अतिव्याप्तिप्रसक्तिरेव नास्तीति वाच्यम् । प्रतिज्ञादिपञ्चकसमुदायपदसमभिव्याहारलभ्यस्य तस्यार्थस्य उचितानुपूर्वीकपदमात्रेणालाभेन अतिव्याप्तेरवर्जनात् ।

पञ्चकपदत्यागे तु प्रतिज्ञादिकतिपयावयवसमुदाये अतिव्याप्तं स्यात् । तद्वारणाय पञ्चकपदोपादानम् । प्रकृतानुमित्युपयोगीति विशेषणात् प्रकृतसाध्यसाधनयोरेव साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धान्तरेण व्याप्तिग्राहकस्य प्रकृतानुमित्युपयोगिदैशिकव्याप्त्यतिरिक्तकालिकव्याप्तिग्राहकोदाहरणस्य वाऽन्तर्भावेन यत्प्रतिज्ञादिपञ्चकं तद्व्युदासः । समुदायपदं तु न्यायवाक्यस्य व्यासज्यवृत्तित्वस्फोरणायेति ।

ननु न्यायावयवत्वे सति प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकवाक्यत्वं प्रतिज्ञात्वम्। एवं हेत्वादिलक्षणेऽपि न्यायावयवत्वं प्रविष्टम्। ततश्चान्योन्याश्रयः इत्यतः आह— 'प्रतिज्ञात्वादिकं तु' इति। न्यायलक्षणान्तर्गतप्रतिज्ञात्वादिनिर्वचने उदासीनवाक्यवारकन्यायान्तर्गतत्व-विशेषणं नोपादीयते इत्यर्थः।

एतेन प्रतिज्ञात्वादीनां न्यायान्तर्गतत्वशून्यत्वे न्यायवाक्यस्य तत्समुदायत्वाभिधानमयुक्तं स्यादिति परास्तम्। प्रतिज्ञादीनां न्यायावयवत्वमङ्गीकृत्य तन्निर्वचनावसर एव तद्विशेषणबहिर्भावस्या-भिमतत्वात्' इति।

**तन्न**। उचितानुपूर्वीकप्रकृतानुमित्युपयोगिप्रतिज्ञादिसदृशोदासीनवाक्यपञ्चकसमुदायेऽतिव्याप्तेः। न्यायलक्षणान्तर्गतप्रतिज्ञादिलक्षणे उदासीनवारकन्यायावयवत्वलक्षणविशेषणबहिर्भावस्य तेनैवाभिधानात्। मीमांसकाभिमतप्रतिज्ञाहेतूदाहरणात्मके उदाहरणोपनयनिगमनात्मके च न्यायवाक्ये बौद्धाभिमतो-दाहरणोपनयात्मके न्यायवाक्ये च अव्याप्तेः। न च मीमांसकबौद्धौ न कथकौ न वा तेषां संप्रदायो न संप्रदायः। पञ्चावयवनियमस्य उत्तरत्र निरसिष्यमाणत्वात्।

॥ इति **शिरोमण्युक्तन्यायलक्षणभङ्गः** ॥

**श्रीरस्तु** ॥ न्यायवाक्यैकदेशत्वं अवयवत्वम्। अत्र अवयवैकदेशे अतिव्याप्तिं परिहर्तुं न्यायवाक्येति विशेषणम्। न च विवादेनैव प्रतिज्ञासिद्धौ धूमादिति यदा प्रयुज्यते तस्मिन् हेतु-वाक्येऽव्याप्तिः। तस्य न्यायैकदेशत्वाभावात् इति वाच्यम्। तत्र तस्यैव न्यायत्वेन न्यायावयवत्वा-भावात्। न च न्यायस्य नियतावयवत्वमस्ति। येन तस्य न्यायत्वं न स्यात्। यदा तु धूमवान् पर्वतो वह्निमानित्यादिहेतुगर्भा प्रतिज्ञा न्यायः तदा धूमवानित्यादिपदानां अवयवत्वं बोध्यम्।

॥ इति **स्वमते अवयवलक्षणनिरूपणम्** ॥

**मणिकारस्तु**— 'अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानकवाक्यत्वं अवयवत्वं' इत्याह। अस्यार्थः॥ अनुमितिचरमकारणस्य लिङ्गपरामर्शस्य कारणं यन्मानसज्ञानं तज्जनकं यच्छाब्दज्ञानं न्यायवाक्यार्थज्ञानं तज्जनकं यत्प्रतिज्ञाद्यवान्तरवाक्यार्थज्ञानं तज्जनकशब्दत्वं अवयवत्वमिति।

अत्र न्यायजन्यज्ञानजनकज्ञानजनकवाक्यत्वं इत्येव लक्षणम् । अनुमितिचरमकारणलिङ्गपरामर्श-प्रयोजकत्वस्य न्यायजन्यज्ञानस्वरूपकथनपरत्वात् । शाब्दपदस्य सम्पातायातत्वात् । अत्र च न्यायबहिर्भूतवाक्यातिव्याप्तिवारणाय न्यायजन्यज्ञानजनकेति । न च अवयवावयवेऽतिव्याप्तिः । तस्य न्यायजन्य-ज्ञानजनकजनकत्वेन न्यायजन्यज्ञानजनकत्वाभावात् । अत एव कण्टकोद्धाररूपे वाक्ये नातिव्याप्तिः । तस्यापि न्यायजन्यज्ञानजनकव्याप्तिज्ञानादिजनकयोग्यताज्ञानजनकत्वेन तज्जनकत्वाभावात् । आत्मादौ अतिव्याप्तिवारणाय वाक्यपदं' इति ॥

तन्न । प्रतिज्ञाद्यवान्तरवाक्यजन्यज्ञानानां आशुतर-विनाशिनां हेत्वादिप्रयोगव्यवहितकालो-त्पत्तिकमहावाक्यार्थज्ञानं प्रति कारणत्वाभावेनासम्भवित्वात् ।

यदत्रोक्तम् रुचिदत्तेन-- 'अवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थज्ञानकारणत्वमतानुसारेण प्रवृत्तत्वात् नासम्भवः' इति । तन्न । तन्मतेऽपि महावाक्यार्थज्ञानं प्रति अव्यवहितपूर्वकालिकावान्तर-वाक्यार्थविषयकमानसज्ञानस्यैव कारणत्वेन व्यवहितस्य अवान्तरवाक्यजन्यज्ञानस्य कारणत्वा-भावात् ।

## ॥ इति मण्युक्तावयवलक्षणभङ्गः ॥

**शिरोमणिस्तु**– 'अवयवत्वं तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वं, प्रतिज्ञाद्यघटकत्वे सति 'उभयघटकभागद्वयाघटितत्वं वा विवक्षितम् । उभयं च प्रतिज्ञाहेतू, हेतूदाहरणे, उदाहरणोपनयौ उपनयनिगमने इति विशिष्य वक्तव्यमिति' इत्याह ।

अत्र अन्यतरान्यतमशब्दौ अव्युत्पन्नौ स्वभावात् द्विबह्वात्मकसमुदायेषु प्रत्येकं एकैकस्य वाचकौ । तत्र अन्यतरशब्दः द्वयोर्मध्ये प्रत्येकं एकैकत्र विश्रान्तः । अन्यतमशब्दस्तु बहुषु प्रत्येकं एकैकत्र विश्रान्तः इति विवेकः ।

एतेन– 'अन्यतम इति किं डतमान्तः आहोस्वित् तमबन्तः । नाद्यः । विधायकाभावात् । न द्वितीयः । अतिशयेन पश्चान्यत्वप्रतीतिप्रसङ्गात् । अतिशायने तमपो विधानात्' इति परास्तम् ।

अत्र आद्यलक्षणे न्यायबहिर्भूतवाक्ये अतिव्याप्तिवारणाय सत्यन्तम् । तावन्मात्रं च अवयव-द्वयात्मकसमुदाये गतम् । अतः प्रतिज्ञाद्यन्यतमत्वमिति विशेषणम् । प्रतिज्ञाद्येकदेशभिन्नत्वे सति उभयशब्दाभिधेयावयवद्वयसमुदायघटकभागद्वयाघटितत्वं अवयवत्वमिति द्वितीयलक्षणार्थः ।

प्रतिज्ञाद्येकदेशेषु अतिव्याप्तिवारणाय प्रतिज्ञाद्यघटकत्वे सतीति विशेषणम् । तावन्मात्रं च प्रतिज्ञाहेतुरूपभागद्वयसमुदाये गतम् । अतः उभयघटकभागद्वयाद्यघटितत्वमिति पदम् । अत एव महावाक्ये अतिव्याप्तिः निरस्ता । तस्य उभयघटकभागद्वयघटितत्वात् । अत्रापि न्यायान्तर्गतत्वे सतीत्यनुषञ्जनीयम् । अतो नोदासीनवाक्यातिव्याप्तिः ।

ननु 'वह्निव्याप्याद्वह्निमान्' इति निगमने अव्याप्तिः । तस्य वह्निमान् इति प्रतिज्ञाघटकभागेन वह्निव्याप्येत्युपनयस्थभागेन च घटितत्वात्; इत्यतः उभयशब्दस्य विवक्षितमर्थमाह ॥ 'उभयं च इति' इति ॥

तन्न । न्यायान्तर्गतत्वे सतीति विशेषणवैयर्थ्यात् । न च न्यायबहिर्भूतवाक्येऽतिव्याप्तिवारणाय तदिति वाच्यम् । न्यायान्तर्गतवाक्यानामेव प्रतिज्ञादिशब्दाभिधेयत्वेन बहिर्भूतवाक्यानामप्रतिज्ञादित्वात् । अन्यथा वक्ष्यमाणप्रतिज्ञादिलक्षणेषु न्यायबहिर्भूतवाक्यवारकं न्यायान्तर्गतत्वे सतीति विशेषणमनुपादेयं स्यात् ।

द्वितीयलक्षणेऽपि उभयघटकभागद्वयाघटितत्वविशेषणवैयर्थ्यात् ।

यदत्रोक्तम् । 'अवयवद्वयसमुदायेऽतिव्याप्तिवारणाय तत्' इति । तन्न । तस्य न्यायान्तर्गतत्वे सतीति विवक्षितविशेषणेनैव तद्वारणसंभवात् । द्वयोः समुदायस्य पञ्चसमुदायात्मकन्यायसमानाधिकरणत्वेऽपि तत्समुदायित्वरूपतदन्तर्गतत्वाभावात् । तत्समुदायित्वस्यैव न्यायवाक्यान्तर्गतशब्दार्थत्वेन विवक्षितत्वात् ।

## ॥ इति शिरोमण्युक्तावयवलक्षणभङ्गः ॥

प्रमाणाप्रतिपादकत्वे सति साध्यवत्तया पक्षतावच्छेदकावच्छिन्नपक्षवचनं प्रतिज्ञा । प्रमाणोपन्यासपूर्वं विप्रतिपन्नार्थवचनरूपत्वात् न निगमने प्रसङ्गः । न वा पर्वतस्याग्निमत्त्वसंशयानन्तरमुक्ते 'किञ्चिद्वह्निमत्' इति वाक्येऽतिव्याप्तिः । तस्य पक्षतावच्छेदकावच्छिन्नपक्षवचनत्वाभावात् ।

न च पर्वतोऽग्निमानित्युदासीनवाक्येऽतिव्याप्तिः । यं प्रति योऽर्थो विप्रतिपन्नः तं प्रति तादृशार्थवत्तया पक्षवचनत्वस्य विवक्षितत्वात् । न च द्वयोः विवदमानयोः सतोरेकं प्रति मध्यस्थेनोक्ते पर्वतोऽग्निमानितिवाक्येऽतिव्याप्तिः । तस्यापि प्रतिज्ञात्वात् । अत एव श्रोता तं प्रति प्रतिवक्ता भवति 'न हि प्रतिज्ञामात्रेणार्थः सिद्ध्यति; प्रमाणं वद' इति ।

न च धूमवान्पर्वतोऽग्निमानिति प्रतिज्ञावाक्येऽव्याप्तिः । प्रमाणं विना विप्रतिपन्नार्थप्रतिपादकत्वाभावात् इति वाच्यम् । तस्य न्यायत्वेन प्रतिज्ञात्वानङ्गीकारात् । तदेकदेशस्य प्रतिज्ञात्वेऽपि लक्षणवत्त्वात् ।

न च वह्निमानिति निगमनभागेऽतिव्याप्तिः । अवयवानवयवत्वे सति पक्षवचनत्वस्य विवक्षितत्वात् । तस्य निगमनावयवत्वात् ।

न च पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति प्रयोगस्थप्रतिज्ञायामव्याप्तिः । पक्षतावच्छेदकस्यैव हेतुत्वेन प्रमाणविषयत्वात् इति वाच्यम् । तत्प्रतिज्ञालक्षणे प्रमाणाप्रतिपादकत्वे सतिः इत्यनेन प्रमाणत्वज्ञापकत्वस्य विवक्षितत्वात् । अनया च पृथिवीत्वस्य प्रमाणत्वाज्ञापनात् । अन्यथा प्रमाणाकाङ्क्षा न स्यात् ।

न चैवं धूमवान् पर्वतोऽग्निमानिति न्यायवाक्ये अतिव्याप्तिः । तस्यापि प्रमाणत्वाज्ञा(ख्या)पकत्वात् इति वाच्यम् । पर्वतोऽग्निमानिति वक्तव्यत्वेन अधिकोपादानस्य प्रमाणत्वख्यापनार्थत्वात् । अत एव प्रमाणजिज्ञासानुदयात् तत्र प्रमाणानुपन्यासः ।

न च 'अयं गौः सास्नादेः' इत्यादिप्रयोगस्थप्रतिज्ञायां अव्याप्तिः । साध्यसंबन्धस्य संयोगादेरभानेन साध्यवत्तया पक्षवचनत्वाभावात् इति वाच्यम् । संयोगादेरभावेऽपि साध्यतावच्छेदकसंबन्धरूपतादात्म्यस्य भानेन तेन संबन्धेन पक्षवचनत्वस्य भावात् ॥

॥ इति स्वमते प्रतिज्ञालक्षणनिरूपणम् ॥

**मणिकारस्तु**— 'उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकवाक्यत्वं प्रतिज्ञात्वम् । उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति लिङ्गाविषयकशाब्दज्ञानजनकवाक्यत्वं वा, हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा, लिङ्गाविषयकलिङ्गिज्ञानजनकन्यायावयववाक्यत्वं वा' इत्याह ।

तस्यार्थः । उद्देश्यानुमितिहेतुः योऽयं लिङ्गपरामर्शः तत्प्रयोजकं तज्जनकमानसज्ञानजनकं यन्महावाक्यार्थज्ञानं तज्जनकत्वे सति उद्देश्यानुमितिविषयतासमव्याप्तविषयताकशाब्दज्ञानजनकवाक्यत्वं इति ।

अत्र सत्यन्तभागे वाक्यार्थपदं, उत्तरभागे शाब्दपदं, च संपातायातम् । ततश्च उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकज्ञानजनकत्वे सति उद्देश्यानुमितिविषयतासमन्याप्तविषयताकज्ञानजनकवाक्यत्वं इत्येव लक्षणं पर्यवसितम् । न्यायबहिर्भूते प्रतिज्ञासमानाकारे पर्वतोऽग्निमानिति वाक्येऽतिव्याप्तिवारणाय सत्यन्तम् । यद्वा पुरुषभेदेन वह्न्यनुमितिजननाय समानाकारन्यायद्वयं प्रवृत्तं तदा पुरुषान्तरीयन्यायावयवप्रतिज्ञायाः अन्यदीयन्यायावयवत्वं मा भूदिति प्रथमोद्देश्यपदम् । अन्यदीयावयवभूतप्रतिज्ञायाः अन्यदीयन्यायोद्देश्यानुमितिहेतुपरामर्शप्रयोजकज्ञानजनकत्वेऽपि एतदीयन्यायोद्देश्यानुमितिहेतुपरामर्शप्रयोजकज्ञानजनकत्वाभावात् तद्व्युदासः ।

असंभववारणाय द्वितीयं उद्देश्यपदम् । अन्यथा पर्वतोऽग्निमानित्यादि प्रतिज्ञायाः शब्दोऽनित्यः इत्याद्यनुमितिविषयतासमन्याप्तविषयताकज्ञानजनकत्वाभावात् असंभवः स्यात् ।

प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय अनुमितिविषयतासमव्याप्तविषयताकेत्युक्तम् । अत एव–'सत्त्वं सर्वपदार्थवृत्तिः केवलान्वयिधर्मत्वात् वस्तुत्ववत्' इत्यादिप्रतिज्ञायां अव्याप्तिः, तत्र सर्वस्यापि अनुमितिविषयत्वेन अनुमितिविषयातिरिक्ताप्रसिद्ध्या तदनतिरिक्तविषयत्वस्य वक्तुमशक्यत्वात्' इति परास्तम् । अनुमित्यन्यूनानतिरिक्तविषयत्वशब्देन अनुमितिविषयतासमव्याप्तविषयताकत्वस्यैव विवक्षितत्वात् । आत्मादौ अतिव्याप्तिवारणाय वाक्यपदमिति । द्वितीयलक्षणे सत्यन्तं न्यायान्तर्गतत्वपरम् ।

लिङ्गाविषयकज्ञानजनकत्वपदं तु नञ्व्यत्यासेन लिङ्गविषयकज्ञानजनकत्वनियतावयवान्यत्वपरम् । तेन पृथिवी इतरेभ्यो भिद्यते । पृथिवीत्वात्; इति प्रयोगस्थप्रतिज्ञायां पृथिवीत्वहेतोः पक्षतावच्छेदकत्वेन लिङ्गविषयकज्ञानजनकत्वस्य स्फुटत्वेन याऽव्याप्तिः सा परास्ता । लिङ्गाविषयकज्ञानजनकत्वपदेन लिङ्गविषयकज्ञानजनकत्वनियतावयवेभ्यः हेत्वादिचतुर्भ्यः भिन्नत्वस्य विवक्षितत्वात् ।

वाक्यपदं अवयवावयवान्यत्वपरम् । तेन एतद्देशकालावच्छिन्नः पर्वतोऽग्निमानिति प्रतिज्ञैकदेशे 'एतद्देशकालावच्छिन्नपर्वत' इति वाक्येऽतिव्याप्तिः परास्ता ।

ततश्च न्यायान्तर्गतत्वे सति हेत्वादिचतुष्टयान्यत्वे सति अवयवावयवान्यत्वं प्रतिज्ञात्वमिति पर्यवसितं भवति ।

तृतीयलक्षणेऽपि वाक्यपदं न्यायावयवत्वपरम् । तेन न्यायबहिर्भूते हेत्वभिधानप्रयोजकजिज्ञासाजनकप्रतिज्ञासमानार्थवाक्ये अतिव्याप्तिः परास्ता ।

चतुर्थलक्षणेऽपि लिङ्गपदं संघातायातम्। लिङ्गविषयकज्ञानजनकपदं पूर्ववत् नञ्व्यत्यासेन लिङ्गविषय[क]ज्ञानजनकत्वनियतावयवान्यत्वपरम्। अन्यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् इत्यादि प्रयोगस्थप्रतिज्ञायां अव्याप्तिः स्यात्। तस्याः पक्षतावच्छेदकीभूतलिङ्गविषयकज्ञानजनकत्वात्। ततश्च लिङ्गविषयकज्ञानजनकत्वनियतावयवान्यत्वे सति न्यायावयवत्वं इति पर्यवसितं भवति।

तत्र आद्यं लक्षणं तावदयुक्तम्। महावाक्यार्थज्ञानं प्रति अवान्तरवाक्यस्य कारणत्वाभावेन असंभवित्वात्। न च महावाक्यार्थज्ञानं प्रति अवान्तरवाक्यस्य अवान्तरवाक्यार्थज्ञानद्वारा कारणत्वमस्तीति वाच्यम्। आशुतरविनाशिनो ज्ञानस्य स्वजन्यसंस्कारेणान्यथासिद्धस्य कारणत्वे मानाभावात्। वह्निमानित्याद्यनुमितौ पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यसंसर्गस्य पर्वतोऽग्निमानित्यादि प्रतिज्ञायां च वह्निमद्भेदस्य भासमानत्वेन द्वयोः समव्याप्तविषयताकत्वाभावाच्च।

न च प्रतिज्ञायां वह्निमद्भेदो न भासते इति वाच्यम्। सामानाधिकरण्यस्याभेदे व्युत्पन्नत्वात्। अन्यथा 'नीलं उत्पलं' इत्यादौ अभेदधीः न स्यात्।

द्वितीयलक्षणमपि अयुक्तम्। अवयवावयवान्यत्वमिति विशेष्यवैयर्थ्यात्। अवयवावयवस्य अवयवान्तर्गतत्वेऽपि न्यायान्तर्गतत्वाभावेन न्यायान्तर्गतत्वे सतीत्यनेनैव अवयवावयवातिव्याप्तिवारणसंभवात्।

न्यायान्तर्गतत्वपदेन प्रतिज्ञादिपञ्चसमुदायात्मकन्यायं प्रति समुदायित्वस्य विवक्षितत्वात्। न हि घटपटसमुदायं प्रति घटपटावयवः समुदायी। येन अवयवावयवः न्यायं प्रति समुदायी स्यात्। न्यायान्तर्गतत्वपदस्य उक्तार्थत्वानङ्गीकारे च प्रतिज्ञादिपञ्चानामवयवावयवेषु अतिव्याप्तिः स्यात्। लघुभूतं प्रथमन्यायावयवत्वं प्रतिज्ञात्वमिति लक्षणं अकृत्वा अनेकान्यत्वघटितलक्षणकरणायोगाच्च।

तृतीयलक्षणमपि अयुक्तम्। शब्दानित्यत्वसाधके कृतकत्वादिहेतुवाक्ये प्रतिवाद्यसिद्धेऽतिव्याप्तेः। तस्यापि कृतकत्वसाधकप्रयत्नानन्तरीयकत्वरूपहेत्वभिधानप्रयोजकाकाङ्क्षाजनकत्वात्। कथमन्यथा प्रयत्नानन्तरीयकत्वमभिदध्यात्। प्रकृतानुमितिप्रयोजकेति हेतुविशेषणस्य त्वयाऽनुपादानात्। उपादानेऽपि हेतुसाधकहेतोरपि प्रकृतानुमितिप्रयोजकत्वेन अतिव्याप्त्यपरिहाराच्च।

प्रकृतानुमितिकारणेति हेतुविशेषणादानाददोषः इति चेत्। प्रतिबन्धवशात् अनुमित्यनुत्पादस्थलीयप्रतिज्ञायां अव्याप्तेः। अनुमितिकारणहेत्वभिधानप्रयोजकाकाङ्क्षाजनकत्वाभावात्। योग्यत्व-

विवक्षायां कृतकत्वहेतौ अतिव्याप्तेः । तद्व्याप्यव्याप्यस्य सुतरां तद्व्याप्यत्वात् प्रयत्नानन्तरीयकत्वहेतोरपि अनुमितिजननयोग्यत्वेन तदभिधानप्रयोजकाकाङ्क्षाजनकत्वस्यानिवारणात् ।

चतुर्थलक्षणमपि अयुक्तम् । आद्यावयवपदवैयर्थ्यात् । लिङ्गविषयकज्ञानजनकत्वनियतान्यत्वे सति इत्येतावतैव पूर्णत्वात् ॥

## ॥ इति मण्युक्तप्रतिज्ञालक्षणभङ्गः ॥

**श्रीरस्तु ॥ शिरोमणिस्तु–** 'प्रकृतन्यायावयवत्वे सति प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं प्रतिज्ञात्वम् । अत्र न्यायबहिर्भूते प्रतिज्ञासमानाकारे वाक्येऽतिव्याप्तिवारणाय सत्यन्तम् । यदा पुरुषभेदेन पर्वतोऽग्निमान् धूमवत्त्वात् इति न्यायद्वयं प्रवृत्तं, तदा यज्ञदत्तीयन्यायान्तर्गतप्रतिज्ञाया देवदत्तीयन्यायप्रतिज्ञात्वं मा भूदिति आद्यं प्रकृतपदम् । तस्य अन्यदीयन्यायवाक्यत्वेऽपि प्रकृतन्यायावयवत्वाभावात् व्युदासः । प्रकृतन्यायावयवत्वे सति अनुमित्यन्यूनानतिरिक्तविषयकत्वमात्रोक्तौ उपनये अतिव्याप्तिः । तथा च धूमवानित्याद्युपनये स्वस्वन्यायावयवत्वस्य अयं वह्निव्याप्यधूमवान् तत्कार्यवत्त्वात् इत्यादि प्रयोगजन्यानुमित्यन्तरान्यूनानतिरिक्तविषयकज्ञानजनकत्वस्य सत्त्वात् । तद्वारणाय द्वितीयं प्रकृतपदम् । तथा च यत्पुरुषीययत्संबन्धावच्छिन्नयत्साध्यकयद्धर्मावच्छिन्नयत्पक्षकयद्धर्मावच्छिन्नयद्धेतुकन्यायावयवत्वं तज्जन्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं इति पर्यवसितम् ।

अन्यूनपदपरित्यागे 'धूमात् मक्षिकानिवृत्तिमान् पर्वतो वह्निमान् धूमात्' इति प्रयोगस्थहेतौ अतिव्याप्तिः स्यात् । तत्र तदनुमितौ धूमादित्यस्य भानेन तदनुमित्यनतिरिक्तविषयकत्वस्य तत्रापि भावात् । तद्वारणायान्यूनेति पदम् । तस्य चानुमितिन्यूनविषयत्वाद्व्युदासः । अनतिरिक्तपदपरित्यागे निगमनमात्रेऽतिव्याप्तिः स्यात् । तस्यापि अनुमित्यन्यूनविषयकज्ञानजनकत्वात् ।

न च तत्र पक्षवाचकपदाभावात् अन्यूनविषयत्वं असिद्धमिति वाच्यम् । 'तथा चायं' इत्युपनयस्थायमितिपदानुषङ्गाङ्गीकारात् । अन्यथा न्यूनता स्यात् । तत्परिहारार्थं अनतिरिक्तग्रहणम् । तत्र च हेतुविषयकज्ञानजनकत्वस्यापि भावात् तद्व्युदासः । यदि च नायंपदस्यानुषङ्गः, वाक्यैकवाक्यतया विशिष्टार्थलाभादिति विभाव्यते; तदाऽपि नानतिरिक्तपदस्य वैयर्थ्यम् । हेतोः साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्यवत्त्वभानात् । पक्षे सामानाधिकरण्यविशिष्टहेतुमत्ताबोधकोपनये तथा सिषाधयिषया प्रयुक्ते पर्वतो वह्निमान् वह्निमत्त्वात्पर्वतवदिति प्रयोगस्थोदाहरणोपनययोरतिव्याप्ति-

-वारणार्थत्वात् । उपनयस्य पक्षे सामान्यतः हेतोः साध्यसामानाधिकरण्यबोधकत्वेऽपि लिङ्गविषयकत्वेन अतिरिक्तविषयकत्वात् व्युदासः । यत्र वह्निः तत्र वह्निः यथा पर्वत इति उदाहरणस्य व्याप्तिविषय-कत्वेन अधिकविषयत्वात् व्युदासः । अत एव 'तथा चायं' इत्युपनयस्यापि व्युदासो बोध्यः' इत्याह ॥

**तन्न** । प्रथमप्रकृतपदवैयर्थ्यात् । यदत्रोक्तम्– 'न्यायान्तरावयवप्रतिज्ञायाः न्यायान्तर-प्रतिज्ञात्वपरिहाराय तत्' इति । तन्न । प्रतिज्ञालक्षणे अप्रतिज्ञायाः प्रतिज्ञात्ववारणार्थमेव विशेषणस्य देयत्वेन प्रतिज्ञायाः एवान्यदीयत्वरूपधर्ममात्रवारणाय विशेषणस्य अदेयत्वात् । अन्यथा घटलक्षणे घटस्य देवदत्तीयत्ववारणाय विशेषणं देयं स्यात् ।

ननु वह्निव्याप्यसाध्यकप्रतिज्ञालक्षणस्य वह्निसाध्यकोपनये अतिव्याप्तिवारणाय प्रथमप्रकृतपदम् । अन्यथा वह्निव्याप्यधूमवानयमित्युपनये वह्निसाध्यकन्यायावयवत्वस्य वह्निव्याप्यसाध्यकानुमित्यन्यूनान-तिरिक्तविषयकत्वस्य च सत्त्वेन अतिव्याप्तिः स्यात् इति चेत् । न । सामान्यलक्षणे विशेषण-वैयर्थ्ये चोदिते विशेषलक्षणे तत्प्रयोजनाभिधानस्य अनुचितत्वात् । विशेषलक्षणमेवैतत् न सामान्य-लक्षणमिति चेन्न । सामान्यलक्षणमनभिधाय विशेषलक्षणाभिधाने कारणाभावात् ।

किञ्चास्य विशेषलक्षणत्वे प्रकृतन्यायावयवत्वे सति प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्द-ज्ञानजनकत्वं प्रकृतन्यायावयवप्रतिज्ञात्वं इति प्राप्तम् । अत्र वक्तव्यम् । प्रकृतन्यायावयवत्वे सतीति विशेषणं किं प्रतिज्ञाविशेषस्य प्रकृतन्यायसंबन्धित्वघटकं ? आहोस्वित् प्रतिज्ञात्वस्यैव घटकम् ? आद्ये तथाचायमित्युपनये प्रतिज्ञात्वमपरिहार्यम् । तत्र प्रकृतन्यायसंबन्धित्वघटकविशेषणाभावेऽपि प्रतिज्ञात्वघटकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वस्य भावात् । न हि देवदत्तीयत्व-प्रापकशून्ये सास्नादिमति गोत्वव्यतिरेकोऽस्ति । येनेह प्रतिज्ञात्वप्राप्तिः न स्यात् ।

न द्वितीयः । न्यायान्तरप्रतिज्ञायाः प्रतिज्ञात्वाभावापातात् । प्रतिज्ञात्वघटकैतन्न्यायावयवत्व-शून्यत्वात् । न हि प्रतिज्ञात्वं नानेत्यत्र मानमस्ति । येनैकप्रतिज्ञात्वाऽभावेऽपि प्रतिज्ञान्तरत्वं स्यात् ।

अत एव द्वितीयमपि प्रकृतपदं व्यर्थम् । यत्किञ्चिदनुमित्यन्यूनानतिरिक्तविषयकत्वेन प्रति-ज्ञात्वस्य उपनयलक्षणाक्रान्तत्वेन उपनयत्वस्यापि संभवेन तन्निवारणस्य अकर्तव्यत्वात् । न हि प्रतिज्ञात्वे विद्यमानेऽपि उपनयत्वप्रवेशमात्रेण अलक्ष्यत्वं भवति । येन तद्वारणं उचितं स्यात् । किञ्च— प्रतिज्ञाविशेषलक्षणत्वपक्षे अन्यूनपदं व्यर्थम् । प्रकृतानुमित्यनतिरिक्तविषयकज्ञानजनकत्वेनैव हेत्वाद्यवयववारणसंभवात् ।

**यदत्रोक्तम्**— 'धूमात् मक्षिकानिवृत्तिमान् पर्वतो वह्निमान् धूमात् इत्यादि प्रयोगस्थहेतौ अतिव्याप्तिवारणाय तत्' इति । **तन्न** । तत्प्रतिज्ञालक्षणे तस्य सार्थक्येऽपि पर्वतो वह्निमानित्यादि प्रतिज्ञालक्षणेषु तद्वैयर्थ्यापरिहारात् । किञ्च सिषाधयिषया 'सर्वं अभिधेयं प्रमेयत्वात् घटवत्' इति यदा प्रयोगः तदा तत्प्रतिज्ञालक्षणस्य असंभवः । तदनुमितेः सर्वविषयकत्वेन अनुमितिविषयातिरिक्तविषयाप्रसिद्ध्या तदविषयत्वस्य प्रतिज्ञायां वक्तुमशक्यत्वात् ।

**यदत्रोक्तम्**— 'प्रकृतानुमितिविषयताविलक्षणविषयताशून्यविषयकत्वं ज्ञानस्य अनुमित्यनतिरिक्तविषयकत्वं विवक्षितं' इति । **तन्न** । सर्वमभिधेयमिति प्रतिज्ञालक्षणे अनतिरिक्तपदपरित्यागस्यैव उचितत्वेन प्रयोजनविधुरं पदं दत्वा असम्भववारणाय विवक्षाकरणायोगात् । अत एव अनतिरिक्तविषयकपदस्य प्रकृतहेतुकप्रकृतसाध्यकानुमित्युपयोगिव्याप्यविषयकत्वार्थकत्ववर्णनमपास्तम् ।

किञ्च पर्वतोऽग्निमानित्यादिप्रतिज्ञायामव्याप्तिः । अनुमितेः वह्निसंसर्गविषयकत्वेन प्रतिज्ञायाः वह्निमदभेदविषयकत्वेन अनुमित्यन्यूनानतिरिक्तविषयकत्वाभावात् ।

**यदत्रोक्तम्**— 'यादृशपक्षसाध्यकाः पक्षे यादृशयादृशविशिष्टार्थवत्त्वबोधिकाः प्रतिज्ञाः संप्रदायसिद्धाः तादृशानां बोधानां अन्यतमेनापि अनिवर्त्यस्य संशयस्यानिवर्तको यः तावतां बोधानां अन्यतमो बोधः तज्जनकत्वं प्रतिज्ञात्वं वक्तव्यम् । एवं च तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य, संयोगेन समवायेन वा वह्नौ वह्निमदभेदस्य, समवायेन पाकस्य कृतौ पाककृतिमत्त्वस्य पाककर्त्रभेदस्य, विशेषणतया इतरेभ्यो भेदे इतरभेदवत्त्वस्य इतरान्याभेदस्य इतरभेदवत्त्वस्य इतरभिन्नाभेदस्य बोधाः विशिष्य वक्तव्याः इति दिक्' इति ।

**तस्यार्थः**— यादृशपक्षसाध्यकाः पक्षे यादृशयादृशविशिष्टार्थवत्त्वबोधिकाः प्रतिज्ञाः संप्रदायसिद्धाः- चैत्रपक्षक- कृतिसाध्यकानुमितौ तिस्रः प्रतिज्ञाः संप्रदायसिद्धाः । पचतीत्येका पाककृतिवैशिष्ट्यबोधिका । एवं पाककृतिमानित्यपरा कृतिसमवाय्यभेदबोधिका । पक्तेत्यन्या पाककृतिप्रकारकधर्म्यभेदबोधजनिका । एवं संयोगेन समवायेन वा वह्नौ साध्ये वह्निमानिति प्रतिज्ञा संप्रदायसिद्धा । इयं च वह्निमदभेदबोधिका । एवं अनुमित्यन्तरप्रतिज्ञाः संप्रदायप्रसिद्धाः द्रष्टव्याः । तावद्बोधानां अन्यतमेनापि अनिवर्त्यस्य संशयस्यानिवर्तकः इति वाक्यं तद्बोधानतिरिक्तविषयकत्वपरम् । अधिकविषयत्वे तदनिवर्त्यसंशयनिवर्तकत्वस्य अवर्जनीयत्वेन तदनिवर्त्यसंशयानिवर्तकत्वोक्त्या तदनति-

रिक्तविषयकत्वस्यैव लाभात् । तावतां बोधानां अन्यतमो यो बोधः तज्जनकत्वं इत्युक्तिस्तु तदन्यून-विषयकज्ञानजनकत्वपरा । संप्रदायप्राप्तप्रतिज्ञाजन्यबोधं प्रति आधुनिकवाक्यस्य जनकत्वायोगेन सादृश्याभिप्रायेणैव अभेदोक्तेः नेयत्वात् । सादृश्यस्य वाऽन्यूनविषयकत्वेनैव ग्राह्यत्वात् । न्यूनविषयत्वे आधुनिकप्रतिज्ञानां संप्रदायसिद्धप्रतिज्ञानुसारित्वव्याघातापातात् । न्यायबहिर्भूतवाक्यवारणाय न्यायावयवत्वे सतीति विशेषणं बोध्यम् ।

निगमनादौ अतिव्याप्तिवारणाय अनतिरिक्तविषयकत्वार्थकं पूर्वदलम् । प्रतिज्ञैकदेशे अतिव्याप्तिवारणाय अन्यूनविषयत्वार्थकं उत्तरदलम् । ततश्च पूर्वोक्तसंप्रदायसिद्धप्रतिज्ञाजन्यबोधानामन्यतमेनापि बोधेन अनिवर्त्यो यः संशयः तस्यानिवर्तकः यः पूर्वोक्तबोधान्यतमसदृशबोधः तज्जनकत्वं प्रतिज्ञात्वं इति ।

इदमुक्तं भवति । वह्निमानितिप्रतिज्ञायां अनुमित्यन्यूनानतिरिक्तविषयकत्वं चेन्न लभ्यते, मा लाभि । अनुमित्यन्यूनानतिरिक्तविषयकत्वं परित्यज्य यस्मिन् यस्मिन् प्रयोगे याः याः प्रतिज्ञाः संप्रदायसिद्धाः तज्जन्यबोधं गृहीत्वा तदन्यूनानतिरिक्तविषयकज्ञानजनकत्वस्यैव लक्षणत्वेन विवक्षितत्वात् ।

न चैवं सति पर्वतोऽग्निमानिति प्रतिज्ञायामव्याप्तिः भवति । तत्र अनुमित्यन्यूनानतिरिक्तविषयकत्वाभावेऽपि संप्रदायसिद्धपर्वतोऽग्निमानित्यादिप्रतिज्ञाजन्यज्ञानान्यूनानतिरिक्तविषयकज्ञानजनकत्वस्य भावात् ।

ननु पर्वतपक्षकवह्निसाध्यकप्रतिज्ञायाः संप्रदायसिद्धपर्वतोऽग्निमानितिप्रतिज्ञाजन्यज्ञानानिवर्त्यसंशयानिवर्तकज्ञानजनकत्वं लक्षणम् । एवमन्यान्यसाध्यकान्यान्यपक्षकप्रयोगप्रतिज्ञानां संप्रदायसिद्धतत्तत्प्रतिज्ञाजन्यबोधजनकत्वं प्रतिज्ञात्वं इत्युक्तम् । तदयुक्तम् । तत्तत्प्रतिज्ञालक्षणे तत्तत्प्रतिज्ञाप्रवेशेन आत्माश्रयात् इत्यत आह 'एवं च' इति ।

तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य बोधो विशिष्य वक्तव्यः । संयोगेन समवायेन वा वह्नौ साध्ये वह्निमदभेदस्य बोधो विशिष्य वक्तव्यः । समवायेन पाककृतौ साध्यायां पाककृतिमत्त्वस्य पाककर्त्रभेदस्य च बोधो विशिष्य वक्तव्यः । विशेषणतया इतरेभ्यो भेदे साध्ये चतस्रः प्रतिज्ञाः संप्रदायसिद्धाः । पृथिवी इतरेभ्यो भिद्यते इत्येका । इयं तु भेदसंसर्गबोधिका । पृथिवी इतरान्या इत्यपरा । इयं तु इतरान्याभेदबोधिका । सामानाधिकरण्यस्य अभेद एव व्युत्पन्नत्वात् । पृथिवी

नेतराणि, इत्यन्या, इतरप्रतियोगिकभेदाधिकरणबोधिका । पृथिवी इतरभिन्ना इत्यपरा प्रतिज्ञा । इयं च इतरभिन्नाभेदस्य बोधिका । तथा च चत्वारो बोधाः विशिष्य वक्तव्याः इत्यर्थः ।

इदमुक्तं भवति । तत्तत्प्रतिज्ञालक्षणे प्रतिज्ञाजन्यबोधानां प्रतिज्ञाजन्यबोधत्वेन न प्रवेशः । येन आत्माश्रयः स्यात् । किं तु यस्मिन् यस्मिन् प्रयोगे याः याः प्रतिज्ञाः संप्रदायसिद्धाः वस्तुगत्या तज्जन्याः बोधाः विशिष्यैव तत्तल्लक्षणे प्रवेश्यन्ते । तथा हि– पर्वतोऽग्निमानितिशाब्दबोधानिवर्त्य-संशयानिवर्तकतद्बोधसदृशज्ञानजनकत्वे सति प्रकृतन्यायावयवत्वं एतत्प्रतिज्ञात्वम् । एवमेव तत्तत्प्रतिज्ञा-लक्षणमूह्यम्' इति ॥

तन्न । निगमनेऽतिव्याप्तेः । तस्यापि संप्रदायसिद्धपर्वतोऽग्निमानिति प्रतिज्ञाजन्यज्ञानानिवर्त्य-संशयानिवर्तकतज्ज्ञानसदृशज्ञानजनकत्वात् ।

यद्यपि निगमनजन्यज्ञाने धूमो विषयः । तथाऽपि नैतज्ज्ञानं धूमसंशयनिवर्तकम् । वादि-वाक्यजन्यज्ञानस्य संशयानिवर्तकत्वात् । अन्यथा प्रतिज्ञामात्रेण पूर्तेः हेत्वाद्यभिधानवैयर्थ्यं स्यात् । संप्रदायसिद्धप्रतिज्ञासदृशन्यायावयवत्वं प्रतिज्ञात्वमित्येतावता पूर्णे तज्जन्यबोधेत्यादिगुरुभूतलक्षणानुसरणा-योगात् । न च आत्माश्रयभिया एतल्लक्षणपरित्यागः । लक्ष्यलक्षणानामननुगतत्वेन अन्यप्रतिज्ञालक्षणे तदन्यप्रतिज्ञाप्रवेशस्य अदोषत्वात् ।

अत एव विशिष्य बोधाः वक्तव्याः इत्युत्तरवाक्यमप्यनुपपन्नम् । संप्रदायसिद्धप्रतिज्ञाजन्यत्वेनैव लक्षणान्तःप्रवेशे बाधकाभावात् । आत्माश्रयनिरासप्रकारस्य प्रागुक्तत्वात् ।

किञ्च विशिष्यैव बोधग्रहणे पर्वतोऽग्निमानितिज्ञानानिवर्त्यसंशयानिवर्तकतज्ज्ञानसदृशज्ञानजनकत्वं अग्निसाध्यकानुमानप्रतिज्ञात्वं इत्युक्ते, कुत एतत् धूमादितिज्ञानानिवर्त्यसंशयानिवर्तकतद्बोधसदृशज्ञान-जनकत्वं प्रतिज्ञात्वं इति शङ्का स्यात् । तन्निवारणाय पर्वतोऽग्निमानितिज्ञानस्य संप्रदायसिद्धप्रतिज्ञा-जन्यत्वरूपविशेषस्य निरूपणीयत्वात् ।

**यदपि–** 'पक्षविशेष्यकत्वे सति लिङ्गाविषयकन्यायावयवत्वं प्रतिज्ञात्वम् । ह्रदो निर्धूमः निर्वह्नित्वात् इत्यस्य यत्र धूमः तत्र वह्निः यथा महानस इति व्यतिरेकोदाहरणे अतिव्याप्तिनिरासाय सत्यन्तम् । तस्य पक्षविशेष्यकज्ञानजनकत्वाभावात् व्युदासः । उपनये अतिव्याप्तिवारणाय लिङ्गा-विषयकेति' इति ।

**तदपि न ।** पृथिवी इतरेभ्यो भिद्यते इत्यत्र प्रतिज्ञायां अव्याप्तेः । तत्र पक्षतावच्छेदकलिङ्गयोरैक्येन पक्षतावच्छेदकविषयकज्ञानस्य लिङ्गाविषयकत्वायोगेन तादृशज्ञानजनकत्वाभावात् ।

न च पक्षाविशेषणत्वेन लिङ्गाविषयकज्ञानजनकत्वं विवक्षितम् । इह च पक्षविशेषणत्वेनैव लिङ्गं भासते इति नोक्तदोषः इति वाच्यम् । अयं वह्निसामग्रीमान् वह्नेः इत्यनुमानप्रतिज्ञायां अव्याप्तेः। एतज्जन्यज्ञाने पक्षाविशेषणत्वेन लिङ्गस्य विषयत्वात् ।

न च पक्षाविशेषणत्वेन साध्याविशेषणत्वेन च लिङ्गाविषयकज्ञानजनकत्वं विवक्षितम् । एतज्जन्यज्ञाने च साध्यविशेषणत्वेन लिङ्गस्य भासमानत्वात् नोक्तदोषः इति वाच्यम् । प्रमेयत्वं अभिधेयं प्रमेयत्वात् इत्यत्राव्याप्तेः । अत्र पक्षहेत्वोः ऐक्येन प्रतिज्ञाजन्यज्ञाने पक्षाविशेषणत्वेन साध्याविशेषणत्वेन च लिङ्गस्य भासमानत्वात् ।

**यदत्रोक्तम्**— 'पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वं तद्बहिर्भावेन लिङ्गविषयकत्वस्याभावो वाच्यः । अत्र पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् इत्यस्य प्रतिज्ञायां अव्याप्तिवारणाय पक्षतावच्छेदकविशिष्ट इति । गोत्वाभावो न सास्नादिमान् गोत्वाभावात् इत्यनुमानप्रतिज्ञायां, दधि द्रव्यं दध्नः इत्यनुमानप्रतिज्ञायां च अव्याप्तिवारणाय पक्ष इति । अयं वह्निसामग्रीमान् वह्नेः इत्यस्य प्रतिज्ञायामव्याप्तिवारणाय साध्यतावच्छेदकेति । ततश्च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहनपार्थक्येन लिङ्गविषयत्वशून्यशाब्दज्ञानजनकन्यायावयववाक्यत्वमिति पर्यवसितं' इति ॥

**तदपि न ।** घटः परिमाणवान् एकत्वात् इत्यनुमानप्रतिज्ञायां अव्याप्तेः । तस्याः पक्षतावच्छेदकविशिष्टे घटे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वबहिर्भावेनैव नुवर्थसंख्यावगाहिज्ञानजनकत्वात् । न हि सङ्ख्या पक्षः पक्षतावच्छेदकं साध्यं साध्यतावच्छेदकं तद्वैशिष्ट्यं वा । येन पक्षतावच्छेदकावच्छिन्ने पक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यावगाहनबहिर्भावेन लिङ्गविषयत्वं न स्यात् ।

**यत्तु**— प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्व्याप्तिविषयकत्वं तच्छून्यपक्षविशेष्यकज्ञानजनकन्यायावयवत्वं प्रतिज्ञात्वम् । गमकतौपयिकं व्याप्तिविषयकत्वं च द्विविधम् । हेतौ साध्यव्याप्यतावगाहित्वं हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्याभावव्यापकतावगाहित्वं च' इत्युक्तम् । अत्र लक्षणार्थस्तु सुगमः ।

ननु अस्य लक्षणस्य व्यतिरेक्युपनयेऽतिव्याप्तिः । तत्रापि हेतुतावच्छेदकावच्छिन्न साध्यतावच्छेदकावच्छिन्नसाध्यगमकतौपयिकं यत् व्याप्तिविषयकत्वं हेतौ साध्यव्याप्यतावगाहित्वरूपं तच्छून्यज्ञानजनकन्यायावयवत्वस्य विद्यमानत्वात् इत्यत आह– 'गमकतौपयिकं' इति । हेतुतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यव्याप्यतावगाहित्वं तथा हेतुभूतो योऽभावः तत्प्रतियोगितावच्छेदकावच्छिन्न साध्याभावव्यापकतावगाहित्वं चेति द्वयमपि साध्यगमकतौपयिकव्याप्तिविषयत्वमित्यर्थः ।

ननु हेतौ साध्यव्याप्यत्वविषयकत्वं तथा साध्याभावव्यापकाभावप्रतियोगित्वविषयकत्वं चेति द्वयं गमकतौपयिकव्याप्तिविषयकत्वं इत्यनभिधाय हेतुभूताभावप्रतियोगिनि साध्याभावव्यापकताग्राहित्वं इति किमर्थमुक्तमिति चेत् । उच्यते । अत्यन्ताभावतत्प्रतियोगिनौ परस्पराभावरूपौ, अन्योन्याभावप्रतियोगिनौ न तथा । किन्तु अन्योन्याभावस्याभावः प्रतियोगितावच्छेदकः । अन्योन्याभावस्तु प्रतियोगिन एवाभावः । न प्रतियोगितावच्छेदकस्य । ततश्च पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् इत्यत्र साध्यस्य इतरभेदस्य योऽभावः जलाद्यन्यतमतादात्म्यं, तस्य द्वे व्यापके । पृथिवीत्वात्यन्ताभावः पृथिव्यन्योन्याभावश्च । तत्र पृथिवीत्वाभावस्य साध्याभावव्यापकताग्रहे तत्प्रतियोगिताज्ञानं हेतौ सुग्रहम् । पृथिव्यन्योन्याभावस्य व्यापकताग्रहे तु न पृथिवीत्वहेतौ साध्याभावव्यापकाभावप्रतियोगिताग्रहः संभवति । तस्य तत्प्रतियोगितावच्छेदकत्वेन क्लृप्तत्वात् । प्रतियोगितावच्छेदकस्याप्रतियोगित्वात् । ततश्चानुमितिः न स्यात् । तथा च तत्रापि अनुमित्युत्पत्तये हेतुभूताभावप्रतियोगिनि साध्याभावव्यापकताग्राहित्वं च गमकतौपयिकं व्याप्तिविषयकत्वमित्युक्तम् ।

एवं च सति साध्याभावव्यापकस्य अभावत्वविषयकत्वं हेतोः साध्यगमकतौपयिकं व्याप्तिविषयकत्वमिति लभ्यते । तच्च पृथिवीत्वाभावस्य साध्यव्यापकताग्रहे पृथिव्यन्योन्याभावस्य व्यापकताग्रहेऽपि न विहन्यते । पृथिवीत्वस्य उभयाभावरूपत्वात् ।

द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवान् पक्षः द्रव्यवान् गुणात् इत्यनुमानप्रतिज्ञायामव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नस्येति । द्रव्यत्वव्याप्यसंयोगवद्वृत्तीति प्रतिज्ञागृहीतव्याप्तेः हेतुभूतसंयोगस्य साध्यतावच्छेदकावच्छिन्नसाध्यगमकतौपयिकत्वेऽपि हेतुतावच्छेदकावच्छिन्नस्य तद्गमकतौपयिकत्वाभावात् अव्याप्त्युदासः ।

गुणव्याप्यरूपवान् पक्षः स्पर्शवान् रूपात् इत्यनुमानप्रतिज्ञायां अव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नेति । एतत्प्रतिज्ञागृहीतव्याप्तेः हेतुतावच्छेदकावच्छिन्नस्य साध्यगमकतौपयिकत्वेऽपि साध्यतावच्छेदकावच्छिन्नसाध्यगमकतौपयिकत्वाभावात् अव्याप्त्युदासः ।

'हेतुत्वं पक्षः । अभिधेयं मेयत्वात्' इति प्रयोगस्थहेतुवाक्ये अतिव्याप्तिः । हेतुवाक्यमात्रस्य पञ्चम्यर्थहेतुविशेष्यकधीजनकत्वस्वाभाव्यात्, प्रकृते च हेतुत्वस्यैव पक्षत्वेन पक्षविशेष्यकधीजनकत्व-प्राप्तेः विशेषणान्तरवत्त्वस्य च स्फुटत्वात् । तत्परिहाराय पक्षविशेष्यकज्ञानजनकपदस्थाने हेत्वन्यत्वे सतीति विशेषणं देयम् । ततश्च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्न-साध्यगमकतौपयिकं व्याप्तिविषयकत्वं तच्छून्यत्वे सति हेत्वन्यन्यायावयवत्वं प्रतिज्ञात्वं इति फलितम्' इति ॥

**तन्न** । हेतुतावच्छेदकावच्छिन्नेति अवच्छेदकपदवैयर्थ्यात् । यदत्रोक्तम्— 'द्रव्यत्व-व्याप्यसंयोगवद्वृत्तिधर्मवानयं पक्षः द्रव्यत्ववान् गुणात्, इति प्रयोगप्रतिज्ञायां अव्याप्तिवारणाय तत्' इति । तन्न । तत्प्रतिज्ञालक्षणे तस्य सार्थक्येऽपि पर्वतोऽग्निमानिति प्रतिज्ञालक्षणे वैयर्थ्यानिस्तारात् । एवमेव एतत्प्रतिज्ञालक्षणे साध्यतावच्छेदकावच्छिन्नेति विशेषणवैयर्थ्यं द्रष्टव्यम् ॥

## ॥ इति शिरोमण्युक्तप्रतिज्ञालक्षणभङ्गः ॥

साधनत्वख्यापकविभक्तिमल्लिङ्गवचनं हेतुः । ननु विभक्तिख्यापितं साधनत्वं नाग्निमत्त्वं प्रति । लिङ्गस्यैव अग्निकार्यत्वेन अग्निं प्रति तस्यासाधनत्वात् । नाप्यग्निज्ञानं प्रति । अग्निमान् धूमवत्त्वात् इत्यादिप्रतिज्ञाहेत्वोरनन्वयापातात् इति चेत् ।

उच्यते— द्विविधं हेतुत्वम् । अनन्यथासिद्धनियतपूर्वभावित्वरूपं एकम् । तद्यथा 'दण्डात् घटः' इत्यत्र घटं प्रति दण्डस्य । द्वितीयं तु तन्निश्चयजननद्वारा तदज्ञानसंशयविपर्ययनिरासकत्वम् । 'यस्ता विजानात् स पितुष्पिता सत्' इति जनकातिरिक्ते लोकानां संशयविपर्ययनिरासके भगवन्निश्च-यजनके भगवत्पितृत्वव्यपदेशात् ।

अत्र च धूमस्य अविशेषेण हेतुत्वमुच्यते । धूमाग्न्योश्च दण्डघटवत् हेतुहेतुमद्भावाभावेऽपि अपरस्य भावात् हेतुहेतुमद्भावेनान्वयो न विरुद्धः । एकविशेषबाधे योग्यतावशात् विशेषान्तरबोधस्य बहुलं उपलम्भात् । अत एव धूमात् वह्निरित्युक्ते धूमस्य किं आद्यं हेतुत्वं ? उत द्वितीयं ? इति मन्दाशङ्कानिवृत्तये धूमादिति पञ्चम्युक्तहेतुत्वविवरणाय 'यो यो धूमवान् सः सः अग्निमान्' इति व्याप्तिं प्रदर्श्य, 'यथा महानसः' इति दृष्टान्तः उच्यते । तेन च तज्ज्ञानजनकत्वलक्षणं हेतुत्वं ख्यापितं भवति ।

तथा च 'अग्निमान् धूमात्' इत्यत्र 'धूमात् हेतोः अग्निमान्' इति शाब्दबोधः धूमलक्षण-प्रमाणात् वह्निस्थितिरित्यवगाहते । जन्यजनकभावाभावेऽपि द्रव्यत्वस्य गुणवत्त्वाधीनत्ववत् मायावा-दिमते जीवेशभेदस्य अविद्याधीनत्ववत् प्रमेयस्य प्रमाणाधीनत्वात् 'धूमात् वह्निमान्' इति प्रयोगो नानुपपन्नः ।

साधनत्वव्यापकविभक्तेश्च, इन्द्रशब्दस्य परमेश्वरे पुरन्दरे च मुख्यत्वेऽपि तारतम्यवत्, जनकत्वे प्रमाणत्वे च तारतम्येन मुख्यत्वान्न लक्षणा ।

न च पर्वतोऽग्निमानित्युक्ते किमत्र प्रमाणमिति प्रश्ने धूमः इति यदोत्तरं तत्राव्याप्तिः इति वाच्यम् । साधनत्वव्यापकविभक्तियुक्तस्यैव हेतुत्वेन तत्र हेतुत्वानङ्गीकारात् ।

न च निगमनावयवे अतिव्याप्तिः । तस्यापि लक्ष्यत्वात् । तदुक्तम्– 'हेतुपुरःसरं पक्षे साध्योपसंहारो निगमनं' इति । एवमेव व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्यादिप्रयोगाः तत्स्थिति-नियामकत्वरूपहेतुत्वपराः द्रष्टव्याः ॥

**मणिकारस्तु**— 'अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्द-धीजनकहेतुविभक्तिमच्छब्दत्वं हेतुत्वं' इत्याह ।

## ॥ इति स्वमते हेतुलक्षणनिरूपणम् ॥

**रुचिदत्तस्तु**— 'हेतुसदृशन्यायाप्रविष्टवाक्ये अतिव्याप्तिवारणाय कारणेत्यन्तं धीविशेषणम् । तस्य च न्यायावयवत्वार्थकत्वात् अतिव्याप्तिव्युदासः । तस्मादिति निगमनांशे अतिव्याप्तिवारणाय साध्याविषयकेति । तस्य च वह्निव्याप्यतया धूमावगाहित्वेन साध्यविषयत्वात् व्युदासः ।

अत्र साध्यतावच्छेदकप्रकारेण साध्याविषयकत्वं विवक्षितम् । तेन 'प्रमेयवान् अभिधेयत्वात्' इति प्रयोगस्थहेतौ अव्याप्तिरिति निरस्तम् । वस्तुतः साध्यविषयकत्वेऽपि साध्यतावच्छेदकप्रमेयत्वेन रूपेण साध्यविषयकत्वाभावात् ।

न चैवमपि 'वायुः प्रत्यक्षः । प्रत्यक्षस्पर्शाश्रयत्वात्' इति प्रयोगस्थहेतौ अव्याप्तिः । नियमेन साध्यविषयकशाब्दधीजनकावयवभिन्नत्वस्य विवक्षितत्वात् ।

'यो यो धूमवान्' इत्युदाहरणांशे अतिव्याप्तिवारणाय हेतुविभक्तिमदिति। सामान्यवत्त्वे सति अस्मदादिबाह्यकरणप्रत्यक्षत्वात् इत्यस्य अग्रिमभागे अतिव्याप्तिः। अतः शाब्दपदम्। तथा च शब्दाधिक्यात् अर्थाधिक्यमितिन्यायेन यावदवच्छेदेन हेतुविभक्तिसमभिव्याहृतत्वं तावदवच्छिन्न-शब्दत्वं विवक्षितम्। प्रकृते च सतिसप्तमीबलात् विशिष्ट एव हेतुविभक्तिसमभिव्याहारः' इत्याह ॥

**तन्न**। साध्याविषयकेति पदस्य शाब्दपदस्य च वैयर्थ्यात्। न च 'निगमनांशे अतिव्याप्ति-वारणाय साध्याविषयकेति पदम्। तथा सामान्यवत्त्वे सति अस्मदादिबाह्यकरणप्रत्यक्षत्वात् इत्यस्या-ग्रिमभागे अतिव्याप्तिवारणाय शाब्दपदमित्युक्तम्' इति वाच्यम्। न्यायावयवत्वार्थकेन अनुमिति-कारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणेति पदेनैव तद्वारणात्। न च निगमनावयवः हेत्व-वयवश्च न्यायावयवः। येन तत्रातिव्याप्तिपरिहारो न्यायावयवार्थकेन पदेन न स्यात्।

न्यायावयवत्वे सति यावदवच्छेदेन हेतुविभक्तिसमभिव्याहृतत्वं तावदवच्छिन्नशब्दत्वं हेतुत्वं इत्येतावतैव पूर्णत्वेन साध्याविषयकधीजनकेत्यस्यापि वैयर्थ्याच्च। निगमनेऽतिव्याप्तिः। यावदवच्छेदेन हेतुविभक्तिसमभिव्याहृतत्वं तावदवच्छिन्नशब्दत्वमिति विवक्षयैव परिहारात्। निगमनस्य हेतुविभक्ति-समभिव्याहारावच्छेदकादधिकावच्छिन्नशब्दत्वात्। निगमनभागातिव्याप्तिः न्यायावयवत्वविवक्षयैव परिहारात्।

**शिरोमणिस्तु**— 'कारणान्तं (जनकान्तं) न्यायावयवार्थकम्। निगमनवारणाय साध्या-विषयकेत्यादि। साध्याविषय(क)त्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भावेन वाच्यम्। तेन पूर्वोपदर्शितहेतौ नाव्याप्तिः। इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात्; अयं न धूमादालोकवान् आर्द्रेन्धनशून्यत्वात्, इत्यादौ व्यतिरेक्युदाहरणस्य, हेतुन्वपक्षके साध्यान्वित-स्वार्थबोधकेदंपदशालिनः उपनयस्य च वारणाय हेतुविभक्तिमदिति। तदर्थश्च–प्रकृतसाध्यान्वयबोध-समर्थोपस्थितिजनकहेतुविभक्तिमत्त्वम्। हेत्विति संपातायातम्।

यदि च पर्वते पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वं च सिषाधयिषया च न्यायप्रयोगः तत्र यथा तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यतिरेक्यु-दाहरणे अतिव्याप्तिरित्युच्यते तदा अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम्। उदाहरणान्यत्वेन वा विशेषणीयम्' इत्याह ॥

**तस्यार्थः**— ननु न्यायावयवत्वे सति साध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वं हेतुत्व-मित्ययुक्तम्। अयं वह्निमान् वह्निसामग्रीमत्त्वात् इत्यत्र अव्याप्तेः। तस्य हेतुतावच्छेदकतया साध्य-

विषयत्वेन साध्याविषयकत्वाभावात् । तथा धूमादिः हेतुः हेतुत्वेन प्रमीयमाणत्वात् इति प्रयोगस्थहेतौ अव्याप्तिः । हेतुतया प्रमीयमाणत्वादितिहेतोरपि हेतुतया प्रमीयमाणत्वरूपधर्मे तादात्म्येन साध्यतया हेतुसाध्ययोरैक्येन हेतुवाक्यस्य साध्यविषयकत्वात् । न हि हेतुसाध्ययोरैक्ये विद्यमानेऽपि हेतुविषयकं न साध्यविषयकमिति संभवति । येन अव्याप्तिः न स्यात् । तथा अयं अभिधेयवान् प्रमेयत्वात् इति प्रयोगस्थहेतौ अव्याप्तिः । तस्यापि अभिधेयमात्रस्य साध्यत्वेन साध्यात्मकहेतुसंसर्गविषयकत्वात् । तथा– 'इदं हेतुत्वम् । हेतुत्वेन प्रमीयमाणत्वात्' इति प्रयोगस्थहेतावव्याप्तिः । पञ्चम्यर्थस्यैव साध्यतया साध्यविषयकत्वात् इत्यत आह– 'साध्याविषयत्वं' चेति ।

हेतुतावच्छेदकबहिर्भावेन हेतुबहिर्भावेन वैशिष्ट्यशब्दाभिधेयहेतुसंबन्धबहिर्भावेन पञ्चम्यर्थ-हेतुताबहिर्भावेन यत्साध्यविषयकत्वं तच्छून्यत्वमित्यर्थः ।

विशेषणचतुष्टयकृत्यमाह– 'तेन' इति । आद्ये हेतुतावच्छेदकत्वेन, द्वितीये हेत्वात्मकतया, तृतीये संबन्धात्मकतया, चतुर्थे विभक्त्यर्थात्मकतया साध्यविषयकत्वेऽपि एतच्चतुष्टयबहिर्भावेन साध्य-विषयकत्वाभावात् न तत्र अव्याप्तिरित्यर्थः ।

विभक्तिमच्छब्दस्य कृत्यमाह— 'इदं न दण्डाज्जातं' इति । यत्र द्रव्यत्वे सति दण्डाज्जातत्वं तत्र दण्डसंयोगजन्यद्रव्यत्वं' इति व्यतिरेकोदाहरणे हेतुतावच्छेदकहेतुसंबन्धविभक्त्यर्थबहिर्भावेन साध्या-विषयकशाब्दज्ञानजनकत्वस्य विद्यमानत्वात् अतिव्याप्तिप्रसक्तौ तथा यत्र धूमज्ञाप्यालोकशब्दाभिधेय-वह्निमत्त्वं तत्रार्द्रेन्धनमिति व्यतिरेकोदाहरणे च अतिव्याप्तिप्रसक्तौ तथा हेतुत्वं अभिधेयं प्रमेयत्वात् इति प्रयोगस्थ–तथाचेदमित्युपनये च अतिव्याप्तिप्रसक्तौ तद्वारणाय हेतुविभक्तिमदिति विशेषणं इत्यर्थः ।

साध्याविषयकशाब्दधीजनकत्वमात्रविवक्षायां उदाहरणद्वये अतिव्याप्तिः; हेतुत्वविषयकत्वस्यापि लक्षणप्रवेशे उक्तोपनये अतिव्याप्तिः इति विवेकः ।

ननु उक्तविशेषणेन उक्तोपनयातिव्याप्तिपरिहारेऽपि नोदाहरणयोरतिव्याप्तिपरिहारः । तत्रापि हेतुविभक्तिसद्भावात् इत्यत आह 'तदर्थश्चेति । प्रकृतसाध्यान्वयबोधे क्षमो योऽर्थः हेतुत्वरूपोऽर्थः । तदुपस्थितिजनकहेतुविभक्तिमत्त्वं हेतुविभक्तिमच्छब्दार्थः इत्यर्थः । उक्तोदाहरणयोस्तु हेतुविभक्ति-मत्त्वेऽपि तद्बोध्यहेतुत्वस्य प्रकृतसाध्यान्वयबोधक्षमत्वाभावात् अतिव्याप्तिव्युदासः इति भावः ।

ननु सिषाधयिषया प्रवृत्तस्य 'पर्वतः पर्वतभिन्नत्वप्रकारकज्ञानाभाववान् पर्वतभिन्नत्वप्रकारकज्ञानाभावात्' इति प्रयोगस्य यत्र पर्वतभिन्नत्वप्रकारकं ज्ञानं तत्र पर्वतभिन्नत्वप्रकारकं ज्ञानं यथा पर्वतभिन्नत्वप्रकारकज्ञानाभावादुत्पन्नं ज्ञानं इति दृष्टान्तशालिनि व्यतिरेक्युदाहरणे अतिव्याप्तिः । तत्रापि हेतुतावच्छेदकहेतुसंबन्धविभक्त्यर्थानन्तर्भावेन साध्याविषयकत्वस्य प्रकृतसाध्यान्वयबोधक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वस्य च सत्त्वात् । पर्वतभिन्नत्वप्रकारकज्ञानाभावात् इत्यस्यैव हेतुत्वेन साध्यान्वयबोधक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वस्य अवर्जनीयत्वात् । अन्यथा अत्रैव हेतुवाक्ये अव्याप्तिः स्यादित्याशङ्क्याह– 'यदि च' इति ।

अत्र हेतुसाध्ययोः ऐक्याभिधानं साध्याविषयकत्वोपपादनाय । अनुमानप्रवृत्त्यर्थं सिषाधयिषोक्तिः । प्रकृतसाध्यान्वयबोधक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वप्रदर्शनाय तादृशज्ञानाभावादिति पदोपादानम् । ज्ञानाभावादुत्पन्नं ज्ञानं तद्विषयकज्ञानमिति बोध्यम् ।

अत्र उदाहरणे अतिव्याप्तिरिति यदि उच्यते तर्हि अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम् । अथवा उदाहरणान्यत्वे सतीति वा वक्तव्यमित्यर्थः ।

तथा च प्रकृतन्यायावयवत्वे सति हेतुतावच्छेदकहेतुतत्संबन्धविभक्त्यर्थबहिर्भावेन साध्याविषयकत्वे सति अवयवान्तरोपस्थापितार्थान्वयबोधक्षमस्वार्थबोधकविभक्तिमत्त्वं हेतुत्वं इति पर्यवसितम् । तथा प्रकृतन्यायावयवत्वे सति हेतुतावच्छेदकहेतुतत्संबन्धविभक्त्यर्थबहिर्भावेन साध्याविषयकत्वे सति उदाहरणान्यत्वे सति प्रकृतसाध्यान्वयबोधक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वं हेतुत्वं इति च पर्यवसितं लक्षणम्' इति ।

**सः स्थूलदृश्वा** । तेन पूर्वोपदर्शितहेतौ नाव्याप्तिरिति वह्निसामग्रीमत्त्वात्, हेतुत्वेन प्रमीयमाणत्वात्, प्रमेयत्वात्, हेतुत्वेन प्रमीयमाणत्वात् इति हेतुचतुष्टये विशेषणानां अव्याप्तिनिवारकत्वाभिधानात् । स्वस्वलक्षणस्य स्वस्मिन् असंभवित्वेन असंभवनिवारकत्वस्यैव वक्तव्यत्वात् । अन्यहेतुलक्षणस्य हेत्वन्तरे अव्याप्तिमाशङ्क्य विशेषणदानस्य अज्ञानमूलकत्वात् ।

यदपि 'हेतुपदं संपातायातं' इति । तदपि न । हेतुविभक्तिमच्छब्दत्वमिति हेतुपदसमभिव्याहारलब्धप्रकृतसाध्यान्वयबोधक्षमार्थोपस्थितिजनकविभक्तिमत्त्वमित्यर्थं गृहीत्वा हेतुपदस्य प्रामादिकत्वाभिधानायोगात् । अन्यथा 'मतुप एव एतावानर्थः' इत्युक्त्वा विभक्तिपदमपि संपातायातमिति वदन् परोऽपि कृती स्यात् ॥

**मणिकारस्तु** – 'हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं हेतुत्वं' इत्याह ।

**शिरोमणिस्तु**— 'विभक्त्यर्थहेतुविशेष्यकान्वयबोधजनकन्यायावयवत्वमित्यर्थः । हेतुत्वं प्रमेयं इत्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति । 'तस्मात् इतरेभ्यो भिद्यते' इत्यादि निगमनवारणाय हेतुत्वेति विशेष्येति च । 'घटोऽयं दण्डात्, वह्निः धूमात्' इत्यादिका तु न प्रतिज्ञा । तद्वृत्तेर-तदात्मनश्च तद्धर्मव्यापकत्वायोगात् । सम्प्रदायविरोधाच्च । तेन तत्रत्यनिगमने नातिव्याप्तिरिति भावः' इत्याह ।

**अस्यार्थः**— वाक्यत्रयं सुगमम् । ननु विभक्त्यर्थहेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्वं हेतुत्वमिति लक्षणमयुक्तम् । घटोऽयमिति पक्षः, दण्डादिति साध्यम्, घटत्वात्, इति यदा हेतुः तदा तस्मादयं दण्डादिति निगमनं वाच्यम् । तथा च तत्रातिव्याप्तेः । दण्डादिति विभक्त्यर्थ-हेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्वस्य विद्यमानत्वात् । तथा 'वह्निः पक्षः, धूमादिति पञ्चम्यर्थहेतुत्वं साध्यधर्मः, वह्नित्वं च यदा हेतुः तदा तस्मादयं धूमादितिनिगमनं वाच्यम् । तथा च तत्रातिव्याप्तिः । धूमादिति विभक्त्यर्थहेतुत्वविशेष्यकबोधजनकन्यायावयवत्वात् इत्यत आह– 'घटोऽयं' इति । घटो दण्डादिति प्रतिज्ञैव न संभवति । दण्डादिति पञ्चम्यर्थहेतुत्वस्य घटावृत्तित्वेन घटधर्मघटत्वाव्यापकत्वात् । वह्निर्धूमादित्यपि न प्रतिज्ञा । धूमादिति पञ्चम्यर्थज्ञापकत्वस्य वह्न्यवृत्तित्वेन वह्निधर्मवह्नित्वव्यापकत्वायोगादित्यर्थः ।

ननु जनकत्वं हेतुत्वं वा यदि पञ्चम्यर्थो भवेत् तदा साध्यस्य व्यापकत्वाभावो भवेत् । न चैवम् । किन्तु जन्यत्वं ज्ञाप्यत्वं च पञ्चम्यर्थ इत्यत आह– 'सम्प्रदायविरोधाच्च' इति । 'घटो दण्डजन्यः, वह्निर्धूमज्ञाप्यः' इत्येव सम्प्रदासिद्धा प्रतिज्ञा । तस्मात् घटजन्य इत्येव निगमनं, तस्मात् धूमज्ञाप्यः, इत्येव निगमनं, न तु पञ्चम्यन्तं; इति न तत्रातिव्याप्तिरिति भावः' इति ॥

तन्न । असम्भवित्वात् । धूमादित्यादिहेतुवाक्यस्य धूमविशेष्यकबोधजनकत्वेन पञ्चम्यर्थहेतुत्व-विशेष्यकबोधजनकत्वाभावात् । अन्यथा अग्निमान्, धूमात्, इत्यनयोरनन्वयः स्यात् । प्राधान्येन ज्ञापितेन धूमधर्मेण हेतुत्वेनाग्निरसम्बन्धात् । धूमेनैव सह हेतुहेतुमद्भावेनान्वयात् । पर्वतोऽग्निमानिति प्रतिज्ञाते प्रमेयस्य प्रमाणाधीनत्वात् अग्निमत्त्वनियामकेन प्रमाणेन भाव्यमित्याशयेन, कुतः पर्वतोग्निमान्? इति प्रश्न धूमादिति हेतुवाक्ये प्रमाणमेवन प्राधान्येन वक्तव्यम् । 'धूमरूपप्रमाणात्

पर्वतोऽग्निमान्' इत्यन्वयसम्भवात् । न तु धूमधर्मो हेतुत्वं प्राधान्येन वक्तव्यम् । कुतः पर्वतोऽग्निमानिति प्रश्नानुत्तरत्वात् ।

न चैवं— कुतः पर्वतोऽग्निमानिति प्रश्ने नियमेन धूमादित्युत्तरं न स्यात् । कदाचित् धूमो हेतुरित्यप्युत्तरं स्यात् । प्राधान्येन धूमबोधस्याविदिष्टत्वात् इति वाच्यम् । पञ्चमीतृतीयान्यतरोपस्थित-हेतुत्वविशेषणकोपस्थितेरेव वह्निमानितिप्रतिज्ञोपस्थितार्थान्वयप्रतियोग्युपस्थितित्वात् । हेतुपदेन हेतुत्वोपस्थितावपि अन्वयप्रतियोग्युपस्थितित्वलाभार्थं हेतुशब्दात् पञ्चमी प्रयोक्तव्या । अत एव धूमाद्धेतोः, अस्मात्कारणात्, इत्यादि प्रयोगाः पञ्चम्यन्ताः दृश्यन्ते । तद्यथा घटमानयेति विभक्त्युपस्थितकर्मत्वादिविशिष्टपदार्थानामेव अन्वयबोधः । न तु घटः कर्मत्वं आनयनं कृतिरित्यादिशब्दोपस्थितानामन्वयबोधः ।

किञ्च पञ्चम्यर्थस्य यदि बोधः इष्यते तर्हि घटादिपदार्थानां क्वापि विशेष्यतया बोधो न स्यात् । संख्यातिरिक्तविभक्त्यर्थस्य विशेष्यतया बोध इति त्वयाऽङ्गीकारात् । ततश्च घटमानयेत्यादौ आनयनपदार्थस्य घटमितिपदेन विशेष्यतया उपस्थितकर्मत्वादिनैव अन्वयः स्यात् ।

ननु 'चैत्रस्येदं न मैत्रस्य' इत्यादौ मैत्रसंबन्धः निषेधप्रतियोगितया भासते । निषेधप्रति-योगित्वं विशेष्यतया भानमन्तरा न संभवतीति षष्ठ्यर्थस्य विशेष्यतया भानं अकामेनापि अङ्गीकार्यं इति चेत् । न । स्वर्गो ध्वस्तः इत्यादौ उपसर्जनतया प्रतीतस्यापि स्वर्गस्य ध्वंसप्रतियोगित्वेन अन्वयवत् इहापि देवदत्तविशेषणतया उपस्थितसंबन्धस्यापि निषेधप्रतियोगित्वेन अन्वयबोधसंभवात् । अन्यथा 'देवदत्तस्य पुत्रः' इत्यत्रापि संबन्धस्यैव पुत्रान्वयः स्यात् । न पुनर्देवदत्तस्य । प्राधान्येन उपस्थितिविरहात् । न हि 'नञर्थस्य प्रतियोगित्वेन अन्वयार्थं प्राधान्येन उपस्थितिरपेक्षिता । पुत्राद्यन्वयार्थं तु नापेक्षिता' इति राज्ञामाज्ञाऽस्ति ॥

**मणिकारस्तु**— 'उदाहरणप्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकावयवत्वं वा इत्याह । तन्न । प्रतिज्ञायां अतिव्याप्तेः । धूमादित्युक्तमात्रेण उदाहरणाकाङ्क्षाया अनुत्पादात् , 'वह्निमान् , धूमात्' इति वाक्यार्थज्ञानद्वयानन्तरं तदुत्पादात् प्रतिज्ञाहेत्वोर्द्वयोरपि उदाहरणप्रयोजकाकाङ्क्षाजनकज्ञान-जनकत्वस्य वक्तव्यत्वात् । शाब्दपदवैयर्थ्याच्च ।

**मणिकारस्तु**— 'साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा' इत्याह ।

**रुचिदत्तस्तु**— 'अत्र जनकेत्यन्तं शब्दविशेषणं तस्मादिति निगमनांशेऽतिव्याप्तिवारणार्थम् । तदर्थश्च साध्यतावच्छेदकप्रकारेण साध्याविषयत्वम् । एतेन प्रमेयवान् अभिधेयात् इत्यत्र साध्या-विषयकज्ञानाप्रसिद्धिरिति परास्तम् । उदाहरणांशेऽतिव्याप्तिवारणाय 'हेतुपञ्चम्यन्तेति' । उदासीन-वाक्येऽतिव्याप्तिवारणाय अनुमितिपरेति । न्यायप्रविष्टवाक्यत्वमित्यर्थः । यद्वा अनुमितिपरशब्देन न्यायावयवत्वं विवक्षितम् । तथा च साध्याविषयकज्ञानजनकन्यायावयवत्वं हेतुपञ्चम्यन्तं न्यायावयवत्वं वा लक्षणद्वयं बोध्यमित्याह ॥

**तन्न** । साध्याविषयकज्ञानजनकेति विशेषणवैयर्थ्यात् । यदत्रोक्तं- 'निगमनांशेऽतिव्याप्ति-वारणाय तत्' इति । तन्न । अनुमितिपरशब्देनैव तद्वारणसंभवात् । तस्य च न्यायावयवार्थकत्वात् । निगमनांशस्य न्यायावयवावयवत्वेन न्यायावयवत्वाभावात् ।

न च अनुमितिपरशब्देन न्यायप्रविष्टवाक्यत्वं विवक्षितं इति वाच्यम् । तस्य न्यायावयवत्व-परत्वसंभवे न्यायप्रविष्टत्वमात्रं विवक्षित्वा अतिव्याप्तिं प्रापय्य विशेषणान्तरदानायोगात् ।

**यदपि**— 'साध्याविषयकज्ञानजनकन्यायावयवत्वं हेतुपञ्चम्यन्तं न्यायवयवत्वं वा' इति लक्षणद्वयं विवक्षितं' इति । तदपि न । आद्यस्य अभावसाध्यकव्यतिरेक्यनुमानस्य व्यतिरेक्युदाहरणे अतिव्याप्तेः । द्वितीयस्य तृतीयान्तहेतुवचने अव्याप्तेः ॥

**मणिकारस्तु**— 'प्रतिज्ञावाक्यजधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वं वा' इत्याह ॥

**रुचिदत्तस्तु**— 'उदासीनस्य अप्रतिज्ञात्वेन प्रतिज्ञावाक्यजधीजन्याकाङ्क्षानिवर्तकत्वमवयव-स्यैवेति पञ्चम्यन्तोदासीनवाक्ये निगमनैकदेशे च नातिप्रसङ्गः । सामान्यवत्त्वे सतीत्यादौ हेत्ववयवावयवे परम्परया उक्तज्ञानजनकेऽतिव्याप्तिवारणाय हेतुविभक्तिमत्त्वं विशेषणम् । न च तथाऽपि बाह्यकरण-प्रत्यक्षत्वादित्यत्रांशे अतिव्याप्तिरिति वाच्यम् । हेतुत्वान्वितैकार्थावच्छिन्नवाक्यत्वस्य विवक्षितत्वात् । हेत्ववयवान्तर्गतखण्डवाक्यस्य च तथात्वाभावात्' इत्याह ॥

**तन्न** । धूमवत्त्वात् इति वाह्यवाक्ये अतिव्याप्तेः । तस्यापि प्रतिज्ञावाक्यजन्यधीजन्यकारणा-काङ्क्षानिवर्तकत्वे सति हेतुविभक्तिमद्वाक्यत्वात् । न हि प्रतिज्ञावाक्यश्रवणानन्तरं उत्पन्ना कारणाकाङ्क्षा

न्यायान्तर्गतेनैव हेतुवाक्येन निवर्तते, न तु तत्समानविषयेणापि बाह्यवाक्येनेति संभवति । अनुभवविरोधात् । हेतुविभक्तिमदिति विशेषणवैयर्थ्याच्च ।

**यदत्रोक्तम्**— 'सामान्यवत्त्वे मतीत्यादौ हेत्ववयवावयवे अतिव्याप्तिवारणाय तत्' इति । तन्न । जनकशब्दलब्धसाक्षाज्जनकत्वेनैव तत्रातिव्याप्तिवारणसंभवे जनकशब्देन साक्षात्परम्परासाधारणजनकत्वं विवक्षित्वा अतिव्याप्तिं प्रापय्य तत्परिहाराय विशेषणदानायोगात् । अन्यथा परम्परया हेतुविभक्तिमत्त्वस्यापि सत्त्वेन तत्र अतिव्याप्तिः दुरुद्धरा स्यात् ॥

**पक्षधरस्तु**— 'धूमवान् यतः इत्यादौ अतिव्याप्तिवारणाय हेतुविभक्तीति पदं' इत्याह । तन्न । प्रतिज्ञाजन्याकाङ्क्षानिवर्तकज्ञानजनकेति विशेषणेन पञ्चम्यन्तोदासीनवाक्ये अतिव्याप्तिनिवृत्तिः भवतीत्यस्य अलौकिकत्वात् । एतस्य न्यायान्तर्गतत्वाङ्गीकारे च सुतरां तत्र अतिव्याप्तिं आशङ्क्य तत्परिहाराय विशेषणदानं अयुक्तम् ।

**मणिकारस्तु**— 'पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा हेतुत्वम् । हेतुपदेन ज्ञानलक्षणात् । अन्यथा लिङ्गस्य अहेतुत्वेन हेतुविभक्त्यनन्वयात् तथैवाकाङ्क्षानिवृत्तेः इत्याह ॥

**रुचिदत्तस्तु**— 'न्यायाप्रविष्टहेतुसदृशे वाक्ये अतिव्याप्तिवारणाय अनुमितिपरेति न्यायप्रविष्टत्वार्थकम् । निगमनेऽतिव्याप्तिवारणाय लाक्षणिकेति । तस्मादिति सर्वनाम्नश्च बुद्धिस्थवाचकतया ज्ञानरूपस्यार्थस्य बुद्धिविषय(क)त्वाच्छक्त्यैवोपस्थितिसंभवेन लक्षणानङ्गीकारात् । साध्यपदे लक्षणेति प्रतिज्ञायामतिव्याप्तिवारणाय पञ्चम्यन्तेति । न च तत्र लक्षणायां मानाभावः । साध्यस्य हेतुवाक्यार्थेन हेतुना अन्वयासंभवात् । तस्य तदकार्यत्वात्' इत्याह ॥

**तन्न** । धूमादित्यादिहेतुवाक्यस्य लाक्षणिकपदवत्त्वाभावेन असंभवित्वात् ।

**यदत्रोक्तं**— 'लिङ्गस्य साध्यं प्रति हेतुत्वाभावेन हेतुत्ववाचकविभक्त्यनन्वयपरिहाराय लिङ्गवाचकेषु पदेषु ज्ञानलक्षणा' इति । तन्न । लिङ्गज्ञानस्यापि कारणत्वाभावेन हेतुत्वानन्वयापरिहारात् । त्वयैव 'व्यापाराभावात् न परामर्शः करणं, इति तत्त्वैव । किन्तु व्याप्तिज्ञानं करणं परामर्शोऽवान्तरव्यापारः' इति परामर्शवादे अभिधानात् । न च परामर्शरूपस्य लिङ्गज्ञानस्य करणत्वाभावेऽपि कारणत्वसद्भावात् हेतुत्वान्वयो नानुपपन्नः इति वाच्यम् । पर्वतोऽग्निमानिति प्रति-

ज्ञानानन्तरं करणाकांक्षाया एवोदयेन तन्निवर्तकहेतुवाक्ये पञ्चम्या करणत्वस्यैव बोधनीयत्वात् । अन्यथा 'पर्वतोऽग्निमान् कालात्' इत्याद्यपि हेतुवाक्यं स्यात् । कालस्य कार्यमात्रं प्रति कारणत्वेन पञ्चम्युक्तहेतुत्वान्वयसम्भवात् ।

ज्ञानलक्षणापक्षे पर्वतोऽग्निमानितिप्रतिज्ञावाक्येन अन्वयासम्भवेन ज्ञानलक्षणाङ्गीकारायोगाच्च । न हि पर्वतस्याग्निमत्त्वं धूमज्ञानाधीनम् । वह्निविनाशानन्तरमपि 'आसीदत्र धूमः' इति शाब्दधूमज्ञानसम्भवेन वह्निमत्त्वापातात् ।

धूमज्ञानं यत्कालावच्छेदेन स्वविषयधूमसत्त्वमवगाहते तत्कालावच्छेदेन पर्वतस्याग्निमत्त्वम् । न तु ज्ञानकाले पर्वतस्याग्निमत्त्वं इति चेत् । आगतं तर्हि धूमाधीनत्वं वह्नेः । ततश्च हेतुत्वान्वयोऽपि धूम एवोपपन्नः ।

अन्वीयमानं च हेतुत्वं न जनकत्वम् । अपि तु प्रमाणत्वम् । ततश्च नानन्वयदोषः ।

किञ्च न हेतुपदे ज्ञानलक्षणा युक्ता । धूमज्ञानादित्येव प्रयोगसंभवे नियमेन लाक्षणिकपदप्रयोगप्रयोजनाभावात् । मार्गाश्चलन्तीत्यादाविव रूढलक्षणात्वाभावात् । अपि च ज्ञानलक्षणायां विशेष्यतया उपस्थिते धूमादिज्ञान एव गमकत्वाकाङ्क्षा स्यात् । ततश्च धूमादिव्याप्त्यभिधायकोदाहरणं असङ्गतं स्यात् ।

ननु ज्ञानस्यैव गमकत्वाकाङ्क्षाः कथमस्य गमकत्वं इति । ततश्च व्याप्तिपक्षधर्मताविषयकत्वात् इदं ज्ञानं गमकं इति समाधानं मनसि निधाय कथमेतज्ज्ञानविषयस्य धूमादेः व्याप्तिपक्षधर्मतेत्याशङ्कापनुत्तये उदाहरणादिप्रवृत्तिरिति चेत् । न । वह्निव्याप्यविषयकमेव ज्ञानं वह्निगमकं न घटादिविषयं इति नियमस्य वह्निव्याप्यनिष्ठगमकताविरहेण अयोगात् । लिङ्गगमकतायाश्च उपपादितत्वात् ।

किञ्च वह्न्यनुमितिसिद्धये धूम एव बोधनीयः । तज्ज्ञानस्यैव अनुमितिहेतुत्वात् । न तु धूमज्ञानज्ञानम् । सति चैवं क्वास्ति लक्षणाप्रत्याशा ।

**शिरोमणिस्तु**— 'दाहो दहनात् । न जलात् । जलं स्पर्शवत् रूपात् । न गन्धात् नापि शब्दात् । इत्यादौ पञ्चम्यन्तस्य नञर्थान्वयानुरोधात् जन्यस्वरूपं हेतुमत्त्वं जन्यज्ञानविषयत्वरूपं च ज्ञाप्यत्वं पञ्चम्यर्थः । हेतुमत्त्वे शक्ताया अपि पञ्चम्याः ज्ञाप्यत्वे लक्षणैव' इत्याह ।

**तन्न** । पञ्चम्या ज्ञाप्यत्वलक्षणाङ्गीकारे पर्वतोऽग्निमानिति प्रतिज्ञाहेत्वोरनन्वयापातात् । न हि पर्वतोऽग्निमान् धूमज्ञाप्यत्वमित्येतद् द्वयं अन्वितं भवति । 'दाहो दहनात् । न जलात्' इति वाक्यस्य, दहनात्कारणात् दाहो जायते; जलात्कारणात् न जायते । जलं दाहे न कारणं

इत्यर्थकत्वेन, तथा जलं स्पर्शवत् रूपात् । न गन्धात् । नापि शब्दात्, इति वाक्यरूपप्रमाणात्, जलं स्पर्शवत् न गन्धप्रमाणात् । नापि शब्दलक्षणप्रमाणात्, स्पर्शवत् । गन्धः शब्दश्च न स्पर्शे प्रमाणमित्यर्थकत्वेन पञ्चम्याः जन्यत्वं ज्ञाप्यत्वं अर्थः इत्यर्थस्य एतद्वाक्यद्वयेन अलाभात् ।

**यच्चोक्तं रुचिदत्तेन**— 'साध्यपदे लक्षणासद्भावात् प्रतिज्ञायामतिव्याप्तिः । तद्वारणाय पञ्चम्यन्तेति पदं' इति । तन्न । प्रतिज्ञालक्षणे अनुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वमिति विशेषणेन प्रतिज्ञानुमित्योः समानविषयकत्वस्य उक्तत्वेन अनुमित्यविषयज्ञानलक्षकत्वाभिधानायोगात् ।

॥ इति **मण्युक्तहेतुलक्षणभङ्गः** ॥

सम्यक् व्याप्तिप्रदर्शनपूर्वकं दृष्टान्ताभिधानं उदाहरणम् । दृष्टान्तोपमानेन पक्षे लिङ्गस्य उपसंहारः उपनयः । हेतुपुरःसरं पक्षे साध्योपसंहारः निगमनम् ।

॥ **इति स्वमते उदाहरणादिलक्षणम्** ॥

**मणिकारस्तु**— 'तस्य न्यायवाक्यस्य प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अवयवाः । तत्र प्रतिज्ञा तावदवश्यंभाविनी । हेत्वभिधानप्रयोजकजिज्ञासाजनकत्वात् । न हि साध्याभिधानं विना हेतोराकाङ्क्षा । न वा हेतुवाक्यस्य अन्वयबोधजनकत्वं संभवति । अनन्तरं च साधनताभिव्यञ्जक-विभक्तिमल्लिङ्गवचनमेव उचितमिति प्रतिज्ञानन्तरं हेतूपन्यासः । जिज्ञासितं विहाय अन्याभिधानस्य अनाकाङ्क्षितत्वात् । हेतौ उक्ते, कथमस्य गम्यगमकता ? इत्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोरुपदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तद्दर्शनाय उदाहरणम् । उदाहरणानन्तरं, भवतु व्याप्तिः, तथापि व्याप्तं किं पक्षे वर्तते न वेत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वदर्शनाय उपनयः । उपनयानन्तरं निगमनम् । न च व्याप्तिपक्षधर्मतयोः चतुर्भिरेवावयवैः पर्याप्तिः किं तेनेति वाच्यम् । अबाधितत्वासत्प्रतिपक्षितत्वयोरलाभेन चतुर्णामप्यपर्यवसानात्' इत्याह ॥

**तन्न** । बौद्धादिभिर्विवादं कुर्वता तार्किकेण पञ्चावयवनियममन्तरा कतिपयावयवप्रयोगेणाप्य-नुमित्यनुकूलपरामर्शो भवतीति अङ्गीकर्तव्यत्वात् । अन्यथा बौद्धादिभिः सह विवादानुपपत्तिः । तथा हि– यदि विवादवेलायां तार्किकः पञ्चावयवं वाक्यं प्रयुञ्ज्यात् तर्हि बौद्धः आधिक्येन निगृह्णीयात् । ततश्च कथापरिसमाप्तौ अर्थसिद्धिः न स्यात् ।

यदि च समयबन्धानुसारेण अवयवाः प्रयोक्तव्याः इति न निग्रहस्थानमित्युच्यते । तदा वक्तव्यम्– 'समयबन्धानुसारेण द्व्यवयवादिप्रयोगे अनुमितिजनकीभूतपरामर्शो भवति न वेति । नेति पक्षे समयबन्धः तदनुसारेणावयवप्रयोगनियमश्च अनुपपन्नः स्यात् । कथं वा कार्याक्षमं समयबन्धं प्राश्निकाः कुर्युः । आद्ये कथमवयवनियमः । कतिपयावयवप्रयोगे भवत्येव परामर्शः । आवश्यकश्च पञ्चावयवप्रयोगनियमः इत्यस्यायोगात् । न्यायवाक्यस्य आगमतया बोधकत्वाभावेन आकाङ्क्षाद्यनुसारेण पञ्चावयवनियमाभिधानायोगाच्च । न हि इदं न्यायवाक्यं आगमतयोपपत्तिबोधकम् । येन आकाङ्क्षा-क्रमेण पञ्चावयवसापेक्षं स्यात् । न चैवम् । परस्यत् परस्मिन् आप्तत्वनिश्चयात्, निश्चये वा साध्यस्यैव बोधकत्वसंभवे उपपत्तिबोधनस्य वैयर्थ्यप्रसङ्गात् ।

न च साध्यस्यैवेदं न्यायवाक्यं बोधकम् । नोपपत्तेः इति युक्तम् । तथा सति प्रतिज्ञामात्रेणैव पूर्तेः हेत्वाद्यभिधानवैयर्थ्यप्रसङ्गात् । न्यायवाक्यं हि गृहीतव्याप्त्यादिकस्य पुरुषस्य तत्स्मारकत्वेन उपयुज्यते । यो यो धूमवान् सोऽग्निमान् इत्युदाहरणवाक्येन अनवधारणात्मकैककोटिकव्याप्तिज्ञाने सति पूर्वानुभूतव्याप्तिस्मरणावश्यंभावात् । अगृहीतव्याप्त्यादिकं प्रति तु तज्जिज्ञासाजनकत्वेन उपयुज्यते । तदुभयं च प्रयोजनं कस्यचित् प्रतिज्ञाहेतुभ्यां, कस्यचित् हेतूदाहरणाभ्यां अपरस्य उदाहरणोपनयाभ्यां, अन्यस्य उदाहरणोपनयनिगमनैः अपरस्य प्रतिज्ञाहेतूदाहरणैः अन्यस्य हेतुगर्भ-वचनादिना भवतीति अवयवनियमो व्यर्थः ।

**यदपि**— 'अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्यवसानं' इति निगमनप्रयोजनमुक्तम् । तदपि न । (अ)परस्य परस्मिन् आप्तत्वनिश्चयेन 'तस्मात्तथा' इति प्रयोगेऽपि अबाधितत्वाद्यलाभात् । न हि पर्वतस्य अग्निमत्त्वनिश्चयं विना अबाधितत्वनिश्चयो युज्यते । न च निगमनवाक्यं वह्निमत्त्व-निश्चायकं इति नाबाधितत्वनिश्चयः निगमनप्रयोजनम् ॥

## ॥ इति मण्युक्तावयवनियमभङ्गः ॥

**श्री वेदव्यासाय नमः** ॥ निर्दोषोपपत्तेरेव तत्त्वज्ञानसाधनत्वात्, दोषाभावज्ञानाय दोषो निरूप्यते ।

यत्सद्भावे लिङ्गाभिमतं ज्ञानं न जनयति संशयविपर्ययौ वा करोति सः दोषः । सः त्रिविधः पक्षहेतुदृष्टान्तवृत्तिभेदेन । पक्षवृत्तिदोषः द्विविधः प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेति । प्रबलप्रमाणविरोधो यथा 'वह्निरनुष्णः पदार्थत्वात्' इत्यस्य प्रत्यक्षविरोधः । समबलप्रमाणविरोधो

यथा– 'शब्दो नित्यः अनित्यधर्मरहितत्वात्' इत्यस्य 'शब्दोऽनित्यः नित्यधर्मरहितत्वात्' इत्यनेन विरोधः । अभिमानतः द्वयोरपि समबलत्वात् । यद्यपि एतद्द्वयं पक्षनिष्ठं तथापि अनुमानस्य दोषो भवति । तदुपाध्यानुमितिप्रतिबन्धकत्वात् । एवं उत्तरत्रापि द्रष्टव्यम् ।

हेतुवृत्तिः द्विविधः असिद्धिरव्याप्तिश्चेति । समुचितस्थले लिङ्गस्याप्रमितिः असिद्धिः । तद्यथा अयोगोलकं पक्षीकृत्य 'वह्निमत् धूमात्' इत्यत्र ।

व्याप्यभावोऽव्याप्तिः । सा त्रिविधा । साध्यसंबन्धे सत्यपि साध्याभावसंबन्धात् विज्ञेया । साध्याभावमात्रसंबन्धविज्ञेया । उभयसंबन्धाभावात् उद्भाव्या चेति । यद्यपि उभयसंबन्धाभावो-ऽसंभावितः । साध्यतदभावान्यतरसंबन्धस्य अवर्जनीयत्वात् । तथापि उभयसंबन्धाभावशब्देन सपक्ष-विपक्षशून्यता विवक्षितेति नोक्तदोषः ।

यद्यपि सपक्षविपक्षशून्यत्वादुद्भाव्याऽव्याप्तिः सन्येवेति न नियमः । सर्वं अभिधेयं प्रमेयत्वा-दित्यत्र व्याप्तिसद्भावात् । तथापि उद्भावनमात्रेण पराजयहेतुत्वात् सा दोषः ।

दृष्टान्तवृत्तिः द्विविधः । साधनवैकल्यं साध्यवैकल्यं चेति । आद्यो यथा– 'पर्वतोऽग्निमान् धूमात् अयोगोलकवत्' इति । द्वितीयो यथा– 'पर्वतो धूमवान् वह्नेः अयोगोलकवत्' इति ॥

## ॥ इति स्वमते अनुमानदोषनिरूपणम् ॥

**मणिकारस्तु–** 'अथ हेत्वाभासाः तत्त्वनिर्णयविजयप्रयोजकत्वात् निरूप्यन्ते । तत्रानुमिति-कारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् । यद्विषयत्वेन लिङ्गज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्त्वं वा । ज्ञायमानं सद्यदनुमितिप्रतिबन्धकं तत्त्वं वा हेत्वाभासत्वं' इत्याह ॥

**तन्न** । व्यभिचारादौ आभासधर्मेऽतिव्याप्तेः । अनुमितिकारणस्य व्यभिचारज्ञानाभावस्य प्रतियोगिभूतं यद् व्यभिचारादिज्ञानं तद्विषयत्वस्य तत्रापि सत्त्वात् ।

**यदत्रोक्तं शिरोमणिना**— 'यथाश्रुतमिदं हेतुदोषाणां लक्षणम् । तद्वत्त्वं च दुष्टहेतूनां' इति । तन्न । हेत्वाभासाः निरूप्यन्ते, इति प्रतिज्ञाय प्रवृत्तस्य ग्रन्थस्य हेत्वाभासलक्षणपरतयैव व्याख्येयत्वेन दोषलक्षणनिरूपणपरतया व्याख्यानायोगात् । दोषरूपलक्ष्यनिर्देशकपदाभावाच्च । न हि लक्ष्यमनिर्दिश्य लक्षणाभिधानं क्वापि दृष्टचरम् । येनेदं दोषलक्षणाभिधानं स्यात् ।

यदपि 'तद्वत्त्वं दुष्टहेतूनां लक्षणं' इति । तदपि न । व्यधिकरणदोषेण दुष्टे कालात्ययाप-दिष्टेऽव्याप्तेः । न हि कालात्ययापदिष्टः अनुमितिकरणीभूताभावप्रतियोगियथार्थज्ञानविषयबाधरूप-

**दोषवान्** । पक्षतावच्छेदकसमानाधिकरणसाध्याभावप्रमारूपस्य आत्मवृत्तित्वात् । तत्सामानाधिकरण्यविशिष्टसाध्याभावरूपबाधस्य पक्षवृत्तित्वेन हेतुवृत्तित्वाभावात् ।

**रुचिदत्तस्तु**— 'ज्ञानस्य अनुमितिप्रतिबन्धकतावच्छेदकीभूताः ये धर्माः सव्यभिचारत्वादयः तद्वत्त्वगोचरयथार्थज्ञानविशेष्यत्वं हेत्वाभासत्वम् । तेषामवच्छेदकत्वं च लिङ्गान्यत्वे सति अनुमितिप्रतिबन्धकज्ञाने विषयतया अवच्छेदकत्वमेव विवक्षितम् । तथाच न दोषेऽतिव्याप्तिः । तस्य तादृशयथार्थज्ञानविशेष्यत्वाभावात्' इत्याह ॥

**तन्न** । सत्प्रतिपक्षसद्धेतौ अव्याप्तेः । सत्प्रतिपक्षत्वस्य अवास्तवत्वेन तद्वत्त्वगोचरज्ञानस्य यथार्थत्वाभावेन तत्रोक्तलक्षणाभावात् । न च तद्वत्त्वं तात्कालिकं विवक्षितम्; अभिमानतः समबलत्ववेलायां तु सत्प्रतिपक्षत्वमस्त्येवेति सत्प्रतिपक्षत्वज्ञानं प्रमेति वाच्यम् । समबलत्वाभिमानदशायामपि अन्यतरस्य वस्तुतो हीनबलत्वेन वास्तवसत्प्रतिपक्षत्वाभावेन तज्ज्ञानस्य भ्रमत्वात् ।

**यदपि**— 'स्थापनाहेतौ विरोधिपरामर्शविषयीभूतप्रतिसाधनस्यैव दोषत्वेन तत्संबन्धस्य तत्राभावेन तद्वत्त्वगोचरयथार्थज्ञानाभावेन उक्तलक्षणस्याव्याप्तिरित्याशङ्क्य 'इदं लिङ्गं अनेन सत्प्रतिपक्षेण सत्प्रतिपक्षत्वविशिष्टं' इति ज्ञानस्य यथार्थत्वेन सकलसिद्धतया ज्ञानरूपसंबन्धस्य स्वरूपसंबन्धविशेषस्य वा कल्प्यत्वात् । तत्संबन्धेन ज्ञानस्य यथार्थत्वात्' इति समाधानम् । तदपि न । एकस्य प्रतिपक्षस्य हीनबलत्वेन वास्तवप्रतिपक्षत्वाभावात्, 'अनेन प्रतिपक्षेण सत्प्रतिपक्षितं इति ज्ञानस्य भ्रमत्वानपायात् । न हि अभिमानमात्रेण दुर्बलस्य प्रबलसमानत्वं भवति । कस्यचिदभिमानमात्रेण सूकरस्य गजसाम्यप्रसङ्गात् । कालात्ययापदिष्टेऽव्याप्तेश्च । तस्य पक्षनिष्ठेन बाधरूपदोषेण आभासस्य तद्वत्त्वगोचरप्रमाविशेष्यत्वाभावात् ।

न च सामानाधिकरण्यसंबन्धेन पक्षनिष्ठसाध्याभावरूपो बाधः हेतौ अस्तीति वाच्यम् । तस्य अनैकान्तिकत्वेन पृथग्दूषणत्वाभावापातात् । पक्षे साध्याभावप्रमायाः ग्राह्याभावावगाहित्वेन अनुमितिप्रतिबन्धकत्वसंभवे बाधस्य हेतुवृत्तित्वप्रतिपादनप्रयासवैयर्थ्याच्च ।

**यदपि मणौ** – 'यद्विषयत्वेन लिङ्गज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वम्' इति । 'लिङ्गं व्यभिचारि' इत्यादिरूपेण लिङ्गज्ञानस्य यत्प्रकारकत्वेन अनुमितिप्रतिबन्धकत्वं प्रकारीभूततादृशव्यभिचारादिमत्त्वं हेत्वाभासत्वं इति तस्यार्थः ।

तदपि न । कालात्ययापदिष्टाव्याप्तेः । तत्र 'पक्षे न साध्यं' इति ज्ञानस्यैव ग्राह्याभावावगाहितया अनुमितिप्रतिबन्धकत्वेन लिङ्गज्ञानस्य प्रतिबन्धकत्वाभावेन उक्तलक्षणाभावात् । सत्प्रतिपक्षाव्याप्तेश्च । तत्र प्रतिपक्षलिङ्गपरामर्शस्यैव प्रतिबन्धकत्वात् । हेतुज्ञानस्य स्वोत्पाद्यानुमितिप्रतिबन्धकत्वाभावेन उक्तलक्षणाभावात् ।

**पक्षधरस्तु**— 'लिङ्गं तावत् स्वज्ञानद्वारा अनुमितिप्रयोजकं अप्रयोजकं च । तत्र प्रयोजकत्वं लिङ्गवृत्तिना व्याप्त्यादिनैव; अप्रयोजकत्वं लिङ्गवृत्तिनैव धर्मेण अवच्छिद्यते । तथा च व्यभिचारादिहेतुवृत्तिधर्माणां अनुमितिप्रतिबन्धकतावच्छेदकत्वं नाम तद्धेतुसाध्यकानुमितिं प्रति तद्धेतोरजनकतायां प्रयोजकीभूतं यद्धेतुविषयकव्यभिचारादिज्ञानं तद्विषयतायां अवच्छेदकत्वमेव । नान्यत् । तद्वत्त्वं वा तद्वत्त्वप्रमाविषयत्वं वा हेत्वाभासलक्षणम् । एवं च साधारणानैकान्तिकमिदं लिङ्गमिति ज्ञानविषयत्वं लिङ्गस्य अनुमित्यजनकतावच्छेदकम् । तथा च अजनकतावच्छेदकं यज्ज्ञानं तद्विषयतावच्छेदकं यत्साधारणत्वं तद्वत्त्वं यथा साधारणे लिङ्गेऽस्ति तथा कालात्ययापदिष्टेऽपि अनुमित्यजनकतावच्छेदकं रूपमस्ति । साध्याभाववत्त्वप्रमाविषयकपक्षकतया ज्ञायमानत्वस्य तथात्वात् । तथा सत्प्रतिपक्षे अनुमित्यजनकतावच्छेदकं रूपमस्ति । विरुद्धव्याप्यवत्त्वोपस्थितिविषयपक्षकत्वेन ज्ञायमानस्य तथात्वात् । एवं च सति कालात्ययापदिष्टे सत्प्रतिपक्षे नाव्याप्तिः' इत्याह ॥

तत्र वक्तव्यम्— बाधिते पक्षे साध्याभावविज्ञानं नानुमितिप्रतिबन्धकम् । अपि तु साध्याभाववत्पक्षवृत्तित्वज्ञानमेव प्रतिबन्धकमित्युच्यते ? उत उभयमपि अनुमितिप्रतिबन्धकं इत्युच्यते ? नाद्यः । पक्षे साध्याभावप्रमायां अनुमितिप्रतिबन्धदर्शनात् । पक्षे साध्याभावज्ञानस्य अप्रतिबन्धकत्वे साध्याभाववत्पक्षवृत्तित्वज्ञानस्यापि अप्रतिबन्धकत्वापाताच्च । न हि पक्षे साध्याभावप्रमायाः प्रतिबन्धकत्वं विना साध्याभाववत्पक्षवृत्तित्वज्ञानस्य प्रतिबन्धकत्वे नियामकमस्ति । अन्यथा साध्यव्यापकवत्पक्षवृत्तित्वज्ञानमपि अनुमितिप्रतिबन्धकं स्यात् । अविशेषात् ।

न द्वितीयः । पक्षे साध्याभावप्रमारूपप्रतिबन्धकेनैव अनुमितिप्रतिबन्धसंभवे प्रतिबन्धकान्तरकल्पनवैयर्थ्यात् । साध्याभाववत्पक्षवृत्तित्वज्ञानात् पुरेव पक्षे साध्याभावज्ञानादनुमितिप्रतिबन्धदर्शनात् । एवं सति सत्प्रतिपक्षस्थले विरुद्धव्याप्यवत्त्वोपस्थितिरेव प्रतिबन्धिका । न तु विरुद्धव्याप्यवत्त्वोपस्थितिविषयपक्षकत्वज्ञानमित्यूह्यम् ।

**केचित्तु**— 'यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तः तदुत्तरं अनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टे पक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदक-

विशिष्ट-साध्यनिरूपित-व्याप्तिविशिष्ट-हेतुतावच्छेदक-विशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकः तत्त्वं हेतुदोषत्वं इत्याहुः ॥ तस्यार्थः । लिङ्गनिश्चयस्य विरोधिव्यभिचारादिविषयताप्रयुक्तः अनन्तरं अनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टे पक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य व्यतिरेको भवति । तथा अनाहार्यमानसज्ञाने पक्षतावच्छेदकविशिष्टे पक्षे साध्यतावच्छेदकविशिष्ट-साध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य व्यतिरेकः । तत्त्वं उक्तधर्मद्वय-व्यतिरेकप्रयोजकलिङ्गज्ञानविषयत्वं हेतुदोषत्वं' इति ॥

**तन्न** । लिङ्गं व्यभिचारीत्यादिरूपेण विरोधिविषयकज्ञानानन्तरं अनुमितिपरामर्शयोः सर्वथा अनुत्पादेन अनुमित्याद्यभावस्यैव वक्तव्यत्वेन ज्ञानद्वये वैशिष्ट्यावगाहित्वव्यतिरेकाभिधानायोगात् । विरोधिविषयकलिङ्गज्ञानानन्तरं पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकवैशिष्ट्यानवगाह्यनुमित्युत्पादे सत्येव यज्ज्ञानस्य विरोधिविषयताप्रयुक्तः अनुमितौ पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्ट-साध्यवैशिष्ट्यावगाहित्वव्यतिरेकः इति वक्तव्यत्वात् । न चानुमितिः भवतीति तथा वचनमनुपपन्न-मिति ।

**यदपि मणौ**— 'ज्ञायमानं सद्यदनुमितिप्रतिबन्धकं तत्त्वं हेत्वाभासत्वं' इति । तदपि न । व्यभिचारादिहेतुदोषेष्वतिव्याप्तेः । तेषां ज्ञायमानत्वे सत्यनुमितिप्रतिबन्धकत्वात् । हेतुदोषाणामेव अनुमितिप्रतिबन्धकत्वात् हेत्वाभासेष्वसंभवाच्च । न च तत्त्वमित्यनेन अनुमितिप्रतिबन्धकीभूतज्ञान-विषयदोषवत्त्वं विवक्षितम् । अतो नासंभवो नाप्यतिव्याप्तिश्च न वा कश्चित्क्षुद्रोपद्रवः इति वाच्यम् । कालात्ययापदिष्टे सत्प्रतिपक्षे चाव्याप्तेः । प्रतिबन्धकीभूतज्ञानविषयधर्मवत्त्वस्य उभयत्राभावात् । न हि गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्याभासे दोषोऽस्ति । पक्षनिष्ठेनैव दोषेण बाधेन अनुमितिप्रतिबन्धस्य सर्वानुभवसिद्धत्वात् ॥

## ॥ इति मण्युक्तहेत्वाभाससामान्यलक्षणभङ्गः ॥

**मणिकारस्तु**— 'सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधितभेदेन हेत्वाभासाः पञ्च । सव्यभिचारः त्रिविधः । साधारणासाधारणानुपसंहारिभेदात् । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम् । उभयकोट्योः साध्यतदभावकोट्योः उपस्थापकतावच्छेदकं यद्रूपं साधारणत्वं, असाधारणत्वं, अनुपसंहारित्वं, तद्वत्त्वं इति यावत् । एतेषां तेनैव रूपेण ज्ञातानां प्रतिबन्धकत्वात् । परस्य तथैव उद्भावनाच्च ।

'यद्विषयत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं' इति हेत्वाभासलक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वम् । न चैवं आधिक्ये विभागव्याघातः । स्वरूपसतां अनुगतरूपेण त्रयमेकीकृत्य विभागकरणात् ।

यद्वा— विरुद्धान्यपक्षवृत्तित्वे सति अनुमितिविरोधिसंबन्धाव्यावृत्तिः अनैकान्तिकत्वम् । विरुद्धान्यपक्षवृत्तौ यदनुमित्यौपयिकव्याप्त्यादिसंबन्धशून्यत्वं तद्वत्त्वं अनैकान्तिकत्वं इति यावत् ।

अथवा— 'साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं अनैकान्तिकत्वम् ।

विपक्षवृत्तित्वं साधारणत्वं; तन्मात्रस्य दूषकत्वात् । सर्वसपक्षविपक्ष(भ्यां) व्यावृत्तोऽसाधारणः । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र हेतुत्वेन(हेत्व)अभिमतः सोऽनुपसंहारी । अन्वयेन व्यतिरेकेण वा व्याप्तिग्रहाय सपक्षस्य विपक्षस्य वा धर्मिणोऽभावः यत्र सोऽनुपसंहारी इति यावत् । केवलान्वयिधर्मावच्छिन्नपक्षको वा अनुपसंहारी । 'सर्वं अभिधेयं प्रमेयत्वात्' इति सद्धेतौ न केवलान्वयी पक्षतावच्छेदकः । निश्चितसाध्यवद्वृत्तित्वात् । साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वम् । यद्वा— वृत्तिमतः साध्यवदवृत्तित्वम् । साध्यवद्वृत्तित्वानधिकरणत्वम् । साध्यासमानाधिकरणधर्मत्वं साध्यवद्वृत्तित्वानधिकरणधर्मत्वं वा विरुद्धत्वम् । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं सत्प्रतिपक्षत्वम् । असिद्धिः त्रिविधा । आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्चेति । सा च प्रत्येकमेव दोषः । प्रत्येकस्य ज्ञानादुद्भावनाच्च । परामर्शविषयाभावत्वेन अनुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृतः इति न विभागविरोधो हेत्वाभासाधिक्यं च । साध्याभाववत्त्वप्रमाविषयपक्षकत्वं प्रमितसाध्याभाववत्पक्षकत्वं पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वा बाधितत्वं' इत्याह ॥

तत्र यत्तावत् 'सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधिताः पञ्च हेत्वाभासाः' इत्युक्तम् । तत्तावदयुक्तम् । व्याप्तेरेव हेतुत्वप्रयोजकत्वात् व्याप्तिमतोरसिद्धसत्प्रतिपक्षयोः हेतुत्वेन हेत्वाभासत्वाभावात् । एवं बाधस्यापि हेतोः कार्योत्पत्तिप्रतिबन्धकत्वेऽपि हेत्वाभासत्वाप्रयोजकत्वेन बाधितस्य हेत्वाभासत्वाभावाच्च । न हि गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वात् इत्यत्र बाधः पृथिवीत्वहेतोराभासत्वं प्रयोजयति । न वा यागी हिंसा अधर्मसाधनं हिंसात्वात् इत्यत्र बाधः हिंसात्वस्य हेत्वाभासत्वं गमयति । न हिंस्यात् सर्वा भूतानि इत्यागमसिद्धव्याप्तिकत्वेन सद्धेतुत्वात् ।

एवं व्यभिचारोऽपि व्याप्तिसद्भावे न हेत्वाभासत्वं प्रयोजयति । तदुक्तम् – 'उत्सर्गतोऽपि यत्प्राप्तं अपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यति' इति । हेतुसाध्यव्याप्तेरक्षतेः ।

व्यभिचारसङ्कीर्णो बाधितस्तु 'वह्निरनुष्णः पदार्थत्वात्' इत्येवमादिरूपः व्याप्त्यभावादेव हेत्वाभासः । न तु बाधात् । नापि व्यभिचारात् । बाधस्योद्भावनं तु न निवार्यते । लिङ्गस्यानुमितिजनकता-विरोधित्वेन हेतुदोषत्वात् । न च बाधेन हेतोः दुष्टत्वे बाधितविषयत्वस्य हेतुदोषत्वमवर्जनीयमिति वाच्यम् । दोषमात्रस्य आभासत्वाप्रयोजकत्वात् । तात्पर्यभ्रमेण शक्तिभ्रमेण वा दुष्टस्यागमस्य आगमा-भासत्वप्रसङ्गात् ।

किञ्च यद्यसिद्धो हेत्वाभासः स्यात् तर्हि अन्यत्रापि साध्यं न प्रमापयेत् । आभासस्य प्रमापक-त्वायोगात् । न हि यत्र स्वयमस्ति तत्र नाभासः, यत्र च नास्ति तत्राभासः इति संभवति । स्वाधि-करणेषु घटादयो नाभासाः स्वाभावाधिकरणेषु तु आभासाः इति प्रसङ्गात् । न हि प्रकाश्यदेशेषु अविद्यमानः प्रदीपादिः प्रदीपाभासो भवति । येन पक्षेऽविद्यमानो हेतुः हेत्वाभासः स्यात् । अनाभासत्वेऽपि अनुमित्यजनकत्वं तु पक्षधर्मतारूपसहकारिविरहात् उपपद्यते इति नाभासत्वं प्रयोजयति । अन्यथा सहकारिविरहात् कार्याजनकानां दण्डादीनां आभासत्वप्रसङ्गो दुर्वारः स्यात् ।

व्याप्त्यादिमतो लिङ्गस्य प्रतिपक्षमात्रेण आभासत्वाभिधानं तु अयुक्तमेव । वास्तवप्रतिपक्षा-संभवात् । द्वयोः व्याप्त्यादिमत्त्वायोगात् । आभिमानिकसत्प्रतिपक्षत्वस्य स्वरूपापलापाहेतुत्वात् । अन्यथा कोशराज्यामात्यादिसंपन्नोऽपि राजा आभिमानिकदुर्बलसत्प्रतिपक्षमात्रेण राजा न स्यात् ।

विरुद्धस्य हेत्वाभासत्वेऽपि व्यभिचारिवत् व्याप्तिवैधुर्येण दुष्टत्वसंभवे साध्याभावव्याप्तिरूपो-पाधिना दुष्टत्वाभिधानायोगाच्च । न हि दुष्टतायां साध्याभावसंबन्धित्वमात्रं नालं; येन साध्याभाव-व्याप्तिः अपेक्षिता स्यात् । 'अयं हेतुः साध्यासाधकः साध्याभावेन सह नियतसंबन्धवत्त्वात्' इत्यनुमाने नियतपदवैयर्थ्याच्च । तस्मादकामेनापि 'व्याप्तिविकल एव हेत्वाभासः नान्यः' इति अभ्युपगन्तव्यम् ॥

## ॥ इति मण्युक्तहेत्वाभासविभागभङ्गः ॥

**यदपि**— 'उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं सव्यभिचारत्वम् । स च त्रिविधः । साधारणोऽसाधरणोऽनुपसंहारी च' इति । तदपि न । साधारणस्य साध्याभाववद्गामित्वेन सव्यभि-चारत्वसंभवेऽपि असाधरणानुपसंहारिणोः साध्याभाववद्गामित्वाभावेन सव्यभिचारित्वाभावात् । लक्षणस्य अव्याप्तेश्च । साधारणस्य साध्यतदभावसंबन्धित्वेन उभयकोट्युपस्थापकरूपवत्त्वेऽपि असाधा-

रणानुपसंहारिणोः उभयकोट्युपस्थापकरूपवत्त्वाभावात् । न हि असाधारणः अनुपसंहारी वा साध्यतदभावाभ्यां सहचरित उपलब्धः । येन उभयकोट्युपस्थापकौ स्याताम् । कथं वा तदभावे उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं स्यात् । न च असाधारणस्य साध्यतदभावसहचरितत्वाभावेऽपि साध्यतदभाववद्व्यावृत्ततया विज्ञातस्य उभयकोट्युपस्थापकत्वं संभवतीति वाच्यम् । अन्वयव्यतिरेकिण्यतिव्याप्तेः । तस्यापि साध्यव्याप्यतया साध्याभावव्यापकाभावप्रतियोगितया च उपस्थितस्य उभयकोट्युपस्थापकत्वात् । अन्यथा एतस्यापि न स्यात् । न च साध्यसन्देहजनकोभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं विवक्षितं इति नातिव्याप्तिरिति वाच्यम् । पक्षताप्रयोजकसंशयरूपकोट्युपस्थित्यैव अनुमितिप्रतिबन्धकीभूतसंशयसंभवे असाधारणधर्मदर्शनजन्यकोट्युपस्थितेः अनुमितिप्रतिबन्धकीभूतसंशयजनकत्वे मानाभावेन साध्यसन्देहजनककोट्युपस्थापकतावच्छेदकवत्त्वस्य वक्तुं अशक्यत्वात् । एतत्संशयस्य च व्याप्यानुपलम्भसहकृतमनोजन्यत्वेन अनुमितिप्रतिबन्धकत्वसंभवेन तदर्थं कोटिस्मृतिविशेषस्य एतत्संशयजनकत्वाङ्गीकारायोगात् ।

**यत्तु**— 'पक्ष एवोभयसाहचर्येण अनुपसंहारी साध्यतदभावोपस्थापकः' इति । तदतीव मन्दम् । उभयसाहचर्यस्य अनुपलब्धत्वात् । स्वरूपसदुभयसाहचर्यस्य अप्रयोजकत्वात् । उपलब्धौ च साधारण्यमेव स्यात् । न त्वनुपसंहारित्वम् । ययोः पक्षैकदेशयोः साध्यतदभावौ निश्चितौ, यत्र च साध्यं सन्दिग्धं तेषामेव यथायोगं पक्षसपक्षविपक्षत्वेन हेतोः पक्षसपक्षविपक्षवृत्तित्वस्य सिद्धत्वात् । 'सर्वं प्रमेयं अभिधेयत्वात्' इति केवलान्वयिसाध्यकानुपसंहारिणि अव्याप्तेश्च । तत्र साध्याभावकोटेरप्रसिद्धत्वेन उभयोपस्थापकतावच्छेदकरूपवत्त्वासंभवात् ।

**यदत्रोक्तं रुचिदत्तेन**— 'अव्याप्यलक्ष्यत्वात्, व्याप्तिनिश्चयविरोधिसन्देहजनककोट्युपस्थितेः विवक्षितत्वात् वा नाव्याप्तिः । तादृशश्च साध्यतदभावसंशयः साध्ये पक्षवृत्तित्वसंशयश्च भवति' इति । तन्न । शब्दादिना व्याप्यग्रहदशायां सपक्षविपक्षशून्यस्य सद्धेतुत्वासंभवात् हेत्वाभासत्वे वक्तव्ये अन्यत्रान्तर्भावानङ्गीकारेण अनुपसंहारित्वस्यैव वक्तव्यत्वेन अलक्ष्यत्वाभिधानायोगात् ।

**यदपि**— 'साध्यतदभावसंशयः साध्ये पक्षवृत्तित्वसंशयश्च व्याप्तिनिश्चयविरोधी' इति । तदपि न । प्रमेयत्वस्य केवलान्वयित्वानुसन्धानवतः पक्षे साध्यतदभावकोटिकसंशयोत्पादासंभववत् साध्ये पक्षवृत्तित्वतदभावकोटिकसंशयस्याप्यसंभवात् ।

**यदपि**— 'विरुद्धान्यपक्षवृत्तित्वे सति अनुमितिविरोधिसंबन्धाव्याप्तिरनैकान्तिकत्वं' इति । तस्यार्थः— विरुद्धान्यपक्षवृत्तौ यदनुमित्यौपयिकव्याप्त्यादिसंबन्धशून्यत्वं तद्वत्त्वं इति । तेन न स्वरूपासिद्ध्यादिसङ्कीर्णा अव्याप्तिः । तत्र पक्षवृत्तित्वाभावेऽपि विरुद्धान्यपक्षवृत्त्यनैकान्तिकान्तरे यदनुमित्यौपयिकव्याप्त्यादिसंबन्धशून्यत्वं तद्वत्त्वस्य विद्यमानत्वात् । अनुमित्यौपयिकत्वं अनुमितिकारण-लिङ्गपरामर्शविषयतावच्छेदकत्वम् । एतेन बाधिते सत्प्रतिपक्षे चातिव्याप्तिः, बाधिते अनुमित्यौपयिका-बाधितत्वरूपसंबन्धशून्यत्वस्य सत्त्वात् इति परास्तम् । अबाधितत्वासत्प्रतिपक्षत्वयोः परामर्शविषयत्वेन विवक्षितानुमित्यौपयिकशब्दार्थत्वाभावेन तच्छून्यत्वस्यालक्षणत्वेन अतिव्याप्त्यभावात् । न च स्वरूपा-सिद्धे विरुद्धे चातिव्याप्तिः । स्वरूपासिद्धे विरुद्धे हि अनुमित्यौपयिकसंबन्धशून्यत्वं पक्षवृत्तित्वशून्यत्वं (त्व)सहचरितत्वशून्यत्वम् । न च तदुभयं विरुद्धान्यपक्षवृत्तौ वर्तते । प्रथमस्य अपक्षधर्मे द्वितीयस्य विरुद्ध एव वृत्तेः इति ।

तदपि न । 'पृथिवी गन्धवती । आकाशात्' इति पक्षधर्मत्वासिद्धे अतिव्याप्तेः । तत्रापि पक्षवृत्तित्वसामानाधिकरणविरुद्धान्यत्वसमानाधिकरणानुमित्यौपयिकसाध्यसामानाधिकरण्यरूपसंबन्धशून्य-त्वस्य सद्भावात् । भागासिद्धे अतिव्याप्तेश्च । 'आकाशमनसी नित्ये विभुत्वात्' इति भागासिद्ध-विभुत्वे पक्षवृत्तित्वसमानाधिकरणविरुद्धान्यत्वसमानाधिकरणानुमित्यौपयिकयावत्पक्षवृत्तित्वरूपसम्बन्ध-शून्यत्वस्य सद्भावात् । स्वरूपासिद्धेऽतिव्याप्तेश्च । 'शब्दो नित्यः चाक्षुषत्वात्' इति स्वरूपासिद्धे पक्षवृत्तित्वविरुद्धान्यत्वसमानाधिकरणानुमित्यौपयिकपक्षसंबन्धशून्यत्वस्य सत्त्वात् । न हि असिद्धिरूप-सामान्यदोषः पक्षवृत्तित्वसमानाधिकरणो नेति वक्तुं युक्तम् । पक्षवृत्तौ भागासिद्धेः वर्तमानत्वात् । विरुद्धे अतिव्याप्तेश्च । तत्रापि विरुद्धान्यत्वपक्षवृत्तित्वसमानाधिकरणानुमित्यौपयिकसाध्यसमानाधि-करणत्वरूपसंबन्धशून्यत्वस्य सद्भावात् ॥

**शिरोमणिस्तु**— 'यद्यद्धर्मिवृत्तित्वं हेतोः ज्ञायते तत्र तत्र अनुमितिविरोधि-साध्ये हेतु-सामानाधिकरण्यग्रहाविरोधि यद्रूपं तद्वत्त्वं अनैकान्तिकत्वम् । अत्र बाधिते प्रतिपक्षे च अतिव्याप्ति-वारणाय यत्र यत्र हेतुः ज्ञायते तत्र तत्र साध्यानुमितिविरोधि यद्रूपं तद्वत्त्वं अनैकान्तिकत्वं इत्युक्तम् । बाधप्रतिरोधौ तु धर्मिविशेषे साध्यानुमितिविरोधिनावपि न हेत्वधिकरणमात्रे साध्यानुमितिविरोधिना-विति न तयोरतिव्याप्तिः । पदार्थत्वेन हेतुना अग्नेरनुष्णत्वसाधने बाधेनानुमितिप्रतिबन्धेऽपि जलस्य तत्साधने तेन अनुमित्यप्रतिबन्धदर्शनात् । तथा पुरुषप्रवृत्त्यविषयस्थलवृत्त्यङ्कुरं पक्षीकृत्य कार्यत्वेन हेतुना सकर्तृकत्वसाधने 'नेदं सकर्तृकं पुरुषप्रवृत्त्यविषयस्थलवृत्तित्वात्' इति प्रतिरोधेनानुमितिप्रतिरोधेऽपि

घटादिकं पक्षीकृत्य कार्यत्वेन तत्साधने अनुमितिप्रतिबन्धादर्शनात् । विरुद्धेऽतिव्याप्तिवारणाय 'साध्य-हेतुसामानाधिकरण्यग्रहाविरोधि' इति, अनुमितिविरोधिरूपविशेषणम् । विरुद्धत्वस्य यत्र यत्र हेतुः प्रतीयते तत्र तत्र साध्यानुमितिविरोधित्वेऽपि हेतुसाध्यसामानाधिकरण्यग्रहविरोधित्वेनोक्तलक्षणाभावात् विरुद्धेऽतिव्याप्तिर्व्युदासः । असिद्धे. अधिकरणविशेष एव अनुमितिविरोधित्वेन यत्र यत्र हेतुः प्रतीयते तत्र सर्वत्र अनुमितिविरोधित्वाभावात् . न तत्र अतिव्याप्तिः' इत्याह ॥

तन्न । 'इदमन्नं इष्टसाधनं अन्नत्वात्' इत्याद्यनुमानात् अनुमितिदर्शनेन साधारण्यस्य यत्र यत्र हेतुः ज्ञायते तत्र तत्र अनुमितिप्रतिबन्धकत्वाभावेन साधारणाव्याप्तेः । साधारणस्य त्वया नित्यदोषतया अङ्गीकारात् । साध्यसामानाधिकरण्यग्रहाविरोधीति विशेषणवैयर्थ्याच्च ।

न च 'विरुद्धेऽतिव्याप्तिवारणाय तत्' इति वाच्यम् । तस्य अनैकान्तिकानङ्गीर्णोदाहरणाभावे-नानैकान्तिकत्वात् । न च साध्याभाववद्गामित्वशून्यं विरुद्धं नामास्ति । येन तत्र अतिव्याप्तिवारणाय विशेषणं सार्थकं स्यात् ।

**यदपि मणौ** 'साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं अनैकान्तिकत्वं' इति लक्षणान्तरमुक्तम् । तदपि न । 'पृथिवी रूपवती गन्धवत्त्वात्' इत्यसाधारणाव्याप्तेः । रूप-व्या(प्त)प्यस्य गन्धवत्त्वस्य साध्यवन्मात्रवृत्त्यन्यत्वाभावात् । 'पृथिवी द्रव्यं गन्धवत्त्वात्' इत्यसाधा-रणाव्याप्तेश्च । तस्य विरुद्धत्वेन साध्याभाववन्मात्रवृत्त्यन्यत्वाभावात् । निश्चितसाध्यवन्मात्रवृत्त्यन्यत्वे सति निश्चितसाध्याभाववन्मात्रवृत्त्यन्यत्वं विवक्षितं इति चेत् । न । सन्दिग्धसाध्यवत्पक्षवृत्तिधूमे अतिव्याप्तेः । तस्य निश्चितसाध्यतदभाववन्मात्रवृत्त्यन्यत्वात् । 'अयं घटः एतद्घटभिन्नः एतद्घटत्वात्' इति बाधसङ्कीर्णेऽव्याप्तेश्च । तस्य निश्चितसाध्याभाववत्पक्षमात्रवृत्तित्वेन निश्चितसाध्याभाववन्मात्रवृत्त्य-न्यत्वाभावात् ॥

**कश्चिदत्तस्तु**— 'साध्यवन्मात्रवृत्तित्व-साध्याभाववन्मात्रवृत्तित्वरूपोभयनिश्चयविरोधिहेत्वाभास-त्वप्रयोजकोपाधिमत्त्वं अनैकान्तिकलक्षणत्वेन विवक्षितम् । तादृशश्चोपाधिः सपक्षविपक्षगामित्वमनुप-संहारित्वमसाधारणत्वं च' इत्याह । तन्न । केवलव्यतिरेकिसत्प्रतिपक्षे अतिव्याप्तेः । तस्यापि उक्त-निश्चयद्वयविरोधिहेत्वाभासताप्रयोजकसत्प्रतिपक्षत्वरूपोपाधिमत्त्वात् । न हि प्रतिपक्षेण पक्षे साध्य-सन्देहानन्तरमपि वादिहेतोः साध्यवन्मात्रवृत्तित्वनिश्चयः तदभाववन्मात्रवृत्तित्वनिश्चयश्च घटते । येन उक्तनिश्चयविरोधिहेत्वाभासत्वोपाधिमत्त्वं तस्य न स्यात् ॥

॥ इति मण्युक्तसव्यभिचारसामान्यलक्षणभङ्गः ॥

**यत्तु मणौ**— 'विपक्षवृत्तित्वं साधारणत्वम् । तन्मात्रस्य दूषकत्वात् । विरुद्धस्यापि तत्त्वाज्ञाने विपक्षवृत्तिताज्ञानदशायां साधारणत्वात् । अन्यथा तस्य हेत्वाभासान्तरतापत्तेः । उपाधेः असङ्कर एव । । 'सर्वं अनित्यं मेयत्वात्' इत्यनुपसंहारी, 'शब्दो नित्यः शब्दत्वात्, भूः नित्या गन्धवत्त्वात्' इत्यसाधारणं च वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारणोऽपि पक्षतादशायां उद्भावयितुं न शक्यते इत्युभयोः भेदेन उपन्यासः' इति ॥

**तन्न** । हेतोः साध्येन सह व्याप्तिसद्भावे विपक्षवृत्तित्वेऽपि अनुमितिदर्शनेन तस्य दूषकताबीजत्वाभावात् । न च विपक्षगामिनो हेतोः व्याप्तिरसंभाविता इति वाच्यम् । साध्यात्यन्ताभाववति अधोदेशे वर्तमानस्य नदीपूरस्य वृष्ट्यनुमापकत्वाभावप्रसङ्गात् । हिंसात्वस्य क्रत्वङ्गहिंसायां कर्तव्यत्वसमानाधिकरणत्वेऽपि अकर्तव्यत्वेन व्याप्तिदर्शनात् । अन्यथा 'न हिंस्यात् सर्वा भूतानि' इति वाक्यं अप्रमाणं स्यात् । आवश्यकव्याप्त्यभावस्यैव दूषकत्वसंभवे विपक्षवृत्तित्वस्य दूषकताबीजत्वकल्पनाऽयोगाच्च ।

**यदपि**— 'विरुद्धस्य तत्त्वाज्ञानदशायां साधारणत्वमेव' इति । तदपि न । विरुद्धस्य सर्वदा साधारण्यस्यैव वक्तव्यत्वेन दशाविशेषे साधारण्याभिधानायोगात् । अन्यथा दशाविशेषे साधारणलक्षणस्य विरुद्धेऽतिप्रसङ्गो दुर्वारः स्यात् । विरुद्धत्वोपस्थितिदशायामपि अनेनैव रूपेण दूषणत्वसंभवे पृथक् हेत्वाभासत्वकल्पनायोगाच्च ।

किञ्च यदि विपक्षवृत्तित्वं स्वत एव दूषणं स्यात् तर्हि 'अयमेतत्संयोगी एतत्त्वात्' इति हेतुमपि दूषयेत् । संयोगात्यन्ताभावस्य पक्षेऽपि सत्त्वेन हेतोः विपक्षवृत्तित्वात् । ननु साध्यविरोधिसाध्याभाववद्गामित्वमेव दूषणं; संयोगात्यन्ताभावश्च न साध्यविरोधीति न तदनुमानं दुष्यतीति चेत् । अत्र वक्तव्यम्— 'कुतः साध्यविरोधिसाध्याभाववद्गामित्वमेव दूषणम् । न पुनः साध्याभाववद्गामित्वमात्रं' इति । व्याप्त्यभावज्ञापकत्वात् साध्यविरोधिसाध्याभाववद्गामित्वं दूषणं न पुनः साध्याभाववद्गामित्वमात्रमिति चेत् । अङ्गीकृतं तर्हि व्याप्त्यभावः एव दूषणम् । विपक्षवृत्तित्वं तु तज्ज्ञापकं' इति ।

**यदपि**— 'सर्वमनित्यं मेयत्वात्, भूः नित्या गन्धवत्त्वात्' इत्यनुपसंहार्यसाधारणयोः वस्तुगत्या साध्याभाववद्गामित्वेन साधारणत्वेऽपि पक्षतादशायां तदुद्भावयितुं न शक्यते इति भेदेनोपन्यासः' इति । तदपि न । 'सर्वं अभिधेयं मेयत्वात्' इत्यनुपसंहारिणः, 'भूः रूपवती गन्धवत्त्वात्' इति

असाधारणस्य च साध्याभाववद्गामित्वाभावात् साधारणत्वासंभवेन तयोः पृथगभिधानस्य आवश्यकत्वात् ; उद्भावयितुमशक्यत्वात् पृथगभिधानमिति समाधानायोगात् । असाधारणानुपसंहारिणोः साधारणासङ्कीर्णोदाहरणाभाव एवास्य समाधानस्य वक्तव्यत्वात् । न च सद्धेतुरसाधारणोऽनुपसंहारी च हेत्वाभासः एव न भवतीति वाच्यम् । शब्दादिना व्याप्तिग्रहदशायां अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वस्यैव हेत्वाभासत्वात् ॥

शिरोमणिस्तु- 'अथ साध्यात्यन्ताभाववद्वृत्तित्वरूपं व्यभिचारं तथा साध्यवद्भिन्नवृत्तित्वरूपव्यभिचारं चोपादाय विपक्षवृत्तित्वं साधारणत्वमिति लक्षणकरणे परम्पराव्याप्तिः । साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयत्वेन अभावद्वयमनुगमय्य साध्यवत्ताज्ञानविरोधिज्ञानविषयाभावद्गामित्वं साधारणत्वं इति लक्षणकरणेऽपि हेतुमति तादृशाभाववत्त्वरूपसाधारणस्य तथा तादृशाभाववति हेतुमत्त्वरूपस्य तादृशाभावे हेतुसामानाधिकरण्यरूपस्य तथा साध्ये साध्यवति च हेतुसमानाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रहः इति चेत् ।

अत्र वदन्ति । प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य यदन्वयव्याप्तिग्रहविरोधित्वं साधारणत्वं इति विवक्षणात् नासंग्रहदोषः । उक्तानां हेतुमति तादृशाभाववत्त्वादिरूपाणां धर्माणां विज्ञाने सति अन्वयव्याप्तिग्रहात् । तज्ज्ञानस्य साध्यसामानाधिकरण्यग्रहाविरोधित्वाच्च ।

अत्र- विरुद्धत्ववारणाय साध्यसाधनसामानाधिकरण्यग्रहाविरोधिनः इति ज्ञानविशेषणम् । विरुद्धत्वज्ञानस्य हेतुसाध्यसामानाधिकरण्यग्रहविरोधित्वात् व्युदासः ।

न च व्याप्यत्वासिद्धे अतिव्याप्तिः । तस्यापि लक्ष्यत्वाङ्गीकारात् । यदि च व्याप्यत्वासिद्धः पृथगेव हेत्वाभासः, नासाधारणः, नहि साध्यतावच्छेदकावच्छिन्नसाध्यसाधनतावच्छेदकावच्छिन्नसाधनयोः सामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य यद्विषयतया व्यापकत्वग्रहविरोधितावच्छेदकं तत्त्वं साधारणत्वम् । व्याप्यत्वासिद्धेस्तु विषयतासंबन्धेन ज्ञाननिष्ठव्याप्यताग्रहविरोधितावच्छेदकत्वेऽपि व्यापकताग्रहविरोधितावच्छेदकत्वाभावात् व्युदासः ।

यद्वा साध्यतद्वतोरत्यन्तान्योन्याभावौ साध्याभावव्याप्यादिष्वावृत्तेन साध्यवत्ताग्रहविरोधित्वेन अनुगमय्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साधारणत्वम् । अस्यार्थः- साध्यात्यन्ताभावसाध्यवदन्योन्याभावौ साध्याभावव्याप्यादौ अविद्यमानेन साध्यवत्ताग्रहविरोधित्वेन अनुगमय्य तस्मिन् अनुगतीकृताभावद्वये हेतुना सामानाधिकरण्याभावग्रहविरोधित्वं इति ।

अस्ति चेदं लक्ष्ये लक्षणम् । साध्यात्यन्ताभावे साध्यवदन्योन्याभावे च साध्यवत्ताग्रहविरोधित्वस्य उक्ताभावयोः हेतुसामानाधिकरण्याभावग्रहविरोधित्वस्य च प्रतीयमानत्वात् । न हि व्यभिचारनिरूपकः साध्याभावः स्वस्य हेतुना सामानाधिकरण्यग्रहविरोधी । येन इदं लक्षणं न स्यात् । उक्ताभावनिष्ठहेतुसामानाधिकरण्याभावग्रहविरोधित्वस्यैव लक्षणार्थत्वात् ।

'अयमेतत्संयोगी एतत्वात्' इत्यत्र अतिव्याप्तिवारणाय साध्यवत्ताग्रहविरोधी[धिनी]त्यभावविशेषणम् । विरुद्धत्वनिरूपकसाध्याभावमुपादाय तत्रातिव्याप्तिनिवृत्तये अनुगमकधर्मस्य साध्याभावव्याप्यादिव्यावृत्तेनेति विशेषणम् । विरुद्धत्वनिरूपकान्यनिष्ठेनेति तदर्थः' इत्याह ॥

तत्र शङ्का तावदयुक्ता । साध्यात्यन्ताभाववद्वृत्तेः साध्यवदन्योन्याभाववद्वृत्तेश्चैक्येनान्यतरोपादाने अव्याप्तेरयोगात् । यदपि— 'साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयाभाववद्गामित्वं साधारणत्वं इति विवक्षाकरणेऽपि हेतुमति तादृशाभाववत्त्वादेरसंग्रहः' इति । तत्र वक्तव्यं— हेतुमति तादृशाभाववत्त्वादिधर्माणां लक्षणतयाऽसंग्रहः इत्युच्यते ? उत लक्ष्यतयाऽसंग्रहः इत्युच्यते ? नाद्यः । लक्षणाभिधानाय प्रवृत्तेन लक्ष्याणामेव अव्याप्तिपरिहाराय संग्राह्यत्वेन लक्षणासंग्रहस्य अदोषत्वात् । न हि एकस्य एकमेव लक्षणम् । येन तल्लक्षणमभिधाय कृती स्यात् । नापि द्वितीयः । हेतुमति तादृगाभाववत्त्वादेः साधारण्यघटकत्वेन तदसंग्रहस्य अदोषत्वात् ।

यदपि— 'अत्र वदन्ति' इति समाधानम् । तदपि न । प्रकृतसाध्यसामानाधिकरण्यग्रहाविरोधिन इति विशेषणवैयर्थ्यात् । न च विरुद्धवारणाय तदिति वाच्यम् । विरुद्धस्य व्यभिचारासंकीर्णोदाहरणाभावेन तस्य अव्यावर्तनीयत्वात् ।

यदपि— 'साध्यतावच्छेदकावच्छिन्नसाध्य-साधनतावच्छेदकावच्छिन्नसाधनयोः सामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य यद्विषयतासंबन्धेन व्यापकत्वग्रहविरोधितावच्छेदकं तत्त्वं' इति । तदपि न । साध्यसाधनसामानाधिकरण्यग्रहाविरोधिन, इति विशेषणवैयर्थ्यात् । यदपि 'साध्याभावव्याप्यादिव्यावृत्तसाध्यवत्ताज्ञानविरोधिनि हेतुसामानाधिकरण्याभावग्रहविरोधित्वं' इति ॥ तदपि अत एव परास्तम् । व्यर्थविशेषणत्वस्य उक्तत्वात् ॥

**॥ इति मण्युक्तसाधारणदूषकताबीजभङ्गः ॥**

**यत्तु मणौ–** 'सर्वसपक्षविपक्षाभ्यां व्यावृत्तोऽसाधारणः' इति असाधारणलक्षणं उक्तम्। तन्न। 'पृथिवी रूपवती गन्धवत्त्वात्' इत्यनुमाने आप्तवाक्यादिजन्यव्याप्तिनिश्चयविषये अतिव्याप्तेः। तस्यापि सर्वसपक्षविपक्षव्यावृत्तत्वात्। न च आप्तवाक्यजन्यव्याप्तिज्ञानस्य पक्षनिष्ठसाध्यविषयतया पक्षस्यैव सपक्षत्वात् तत्र वर्तमानस्य गन्धवत्त्वस्य न सर्वसपक्षव्यावृत्तत्वं इति वाच्यम्। व्याप्तिग्रहस्य पक्षीय-साध्यविषयकत्वेऽपि पृथिवी रूपवतीति पक्षे साध्यनिश्चयाभावेन तस्य सपक्षत्वाभावात्। अन्यथा सामान्यप्रत्यासत्तिजन्यव्याप्तिग्रहस्यापि पक्षीयसाध्यविषयत्वेन धूमानुमानेऽपि पक्ष एव सपक्षः स्यात्। न च हेत्वाभासत्वेन विशेषणान्न तत्रातिव्याप्तिरिति वाच्यम्। असाधारण्यस्यैव हेत्वाभासताप्रयोजकत्वेन असाधारण्ये सिद्धे हेत्वाभासतासिद्धिः। तत्सिद्धौ च असाधारण्यसिद्धिरिति अन्योन्याश्रयः॥

**रुचिदत्तस्तु–** 'संशयविरोधिविशेषदर्शनविरहकालीनस्य सर्वसपक्षविपक्षव्यावृत्तत्वं असाधारण्यं' इत्याह। तन्न। वह्निसंशयविरोधिप्रकाराविशेषदर्शनवन्तं प्रति 'महानसोऽग्निमान् धूमात्' इत्यनुमानस्य असाधारणत्वाभावप्रसङ्गात्। न चेष्टापत्तिः। व्याप्त्यग्रहदशायां तस्यापि अनुमितिजनकत्वप्रसङ्गात्। आभासताप्रयोजकदोषान्तराभावात्। न चेदं व्याप्यत्वासिद्धयैव दुष्टं नासाधारण्येनेति वाच्यम्। असाधारणमात्रे व्याप्यत्वासिद्धेरुद्भावयितुं शक्यत्वेन असाधारण्यस्यानुद्भाव्यतापातात्। नेदं स्वसाध्यसाधकं सर्वसपक्षविपक्षव्यावृत्तत्वात् इत्यत्र सपक्षव्यावृत्तत्वादित्येतावतैव पूर्णत्वेनाधिक्याच्च। विपक्षव्यावृत्तत्वस्य गुणत्वेनानुद्भाव्यत्वाच्च।

**अथ मतम्–** 'असाधारणो हेतुः साध्यवतः तदभाववतश्च व्यावृत्तत्वेन ज्ञातोऽर्थात् व्यतिरेकि-तया पक्षे साध्यं तदभावं च साधयेत्; अविशेषात्। अन्यथा पक्षवृत्तित्वानुपपत्तिः इति साध्यतद-भावोत्थापकतया स्वार्थानुमाने दोषः। सत्प्रतिपक्षे द्वौ तथा। अत्र त्वेक एवेति ततो भेदः। असा-धारणेन व्यतिरेकिप्रयोगे परस्य सर्वसपक्षव्यावृत्तिरेवोद्भाव्या। साध्याभावोपपादकत्वात्। न तु विपक्ष-व्यावृत्तत्वमपि। प्रतिकूलत्वात् व्यर्थत्वाच्च। लक्षणं तु सर्वसपक्षव्यावृत्तत्वमेव। न विपक्षव्यावृत्तत्व-मपि। असाधकतानुमानदशायां व्यर्थत्वात्। विरुद्धोऽपि अनेनोपाधिना असाधारण एव। अन्यथा एतदवगमे विरुद्धत्वाज्ञाने हेत्वाभासान्तरतापत्तेः' इति।

**तन्न।** असाधारणलिङ्गस्य विरुद्धाभ्यां साध्यतदभावाभ्यां युगपदेकस्य व्याप्तिग्रहसंभवेन अर्था-पत्तिविधया व्यतिरेकिविधया वा साध्यं तदभावं च साधयेदविशेषात् इत्युभयसाधकत्वाभिधानायोगात्। न च नात्र साध्यतदभावानुमितिजनकत्वमुच्यते किं तर्हि असाधारणं हेतुं पश्यतः पुरुषस्य मानसो

विचारः उच्यते इति वाच्यम् । तथा सति साध्याभाववद्व्यावृत्तो हेतुः साध्यं साधयेत् तर्हि साध्यवद्व्यावृत्तत्वात् साध्याभावमपि साधयेत् इति वक्तव्यत्वेन साध्यं तदभावं च साधयेत् इत्यभिधानस्य अयुक्तत्वापरिहारात् ।

**यदपि**— 'साध्यतदभावोत्थापकतया असाधारणः स्वार्थानुमाने दोषः' इति । तदपि न । परार्थानुमान इव साध्याभावोत्थापकत्वस्यैव दोषत्वेन साध्योपस्थापकत्वस्य अदोषत्वात् । न हि हेतोः साध्योपस्थापकत्वं दोषत्वेन मान्याः मन्यन्ते । किं तु गुणत्वेन मन्यन्ते । लिङ्गनिष्ठसाध्याभावोपस्थापकत्वस्य असाधारण्यप्रयुक्तत्वेऽपि साध्योपस्थापकत्वस्य असाधारण्यप्रयुक्तत्वाभावाच्च । सर्वसपक्षव्यावृत्तेरेव असाधारण्यशब्दार्थत्वात् । सकलसपक्षविपक्षव्यावृत्तिरेव असाधारण्यशब्दार्थः न तु सपक्षव्यावृत्तिमात्रं; इति चेत् । एवं तर्हि साध्याभावोपस्थापकत्वमपि नासाधारण्यप्रयुक्तम् । तस्य सपक्षव्यावृत्तिमात्रप्रयुक्तत्वेऽपि विपक्षव्यावृत्तत्वे सति सपक्षव्यावृत्तत्वरूपविशिष्टाप्रयुक्तत्वात् ।

**पक्षधरस्तु**— 'यदि शब्दत्वं सर्वनित्यव्यावृत्तं भवेत् सर्वानित्यव्यावृत्तं कथं न भवेत् । नित्यत्वसामानाधिकरण्यग्राहकस्येवानित्यत्वसामानाधिकरण्यग्राहकस्याप्यभावात् । उभयव्यावृत्ततायां च पक्षवृत्तित्वानुपपत्तेः । पक्षस्य तदन्यतरकोटिनियमेन वृत्तिमद्धर्मस्यान्यतरवृत्तिनियमेन च शब्दवृत्तित्वेन प्रतीतस्य तदुभयसकलव्यावृत्तत्वे शब्दवृत्तित्वानुपपत्तेः इति साध्यतदभावोत्थापकतया साध्यवदभावव्याप्तिग्राहकविरोधिसामग्रीभूतव्यतिरेकसहचारद्वयज्ञानविषयतया असाधारणो दोषः' इत्याह ॥

तन्न । साध्याभावव्याप्तिग्राहकसहचारधीविषयत्वस्यैव दोषत्वात् । तस्यैव वक्तव्यत्वेन साध्यव्याप्तिग्राहकसहचारधीविषयत्वस्य अवक्तव्यत्वात् ।

**शिरोमणिस्तु**— 'पक्षधर्मतया ज्ञायमानो हेतुः साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानात् साध्यस्य, साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च साध्याभावस्य, साधनायोन्मुखः मिथोविरोधेन नैकमपि साधयति । न च शब्दे नित्यत्वानित्यत्वसन्देहे तदुभयव्यापकत्वं शब्दत्वाभावस्य गृहीतुमशक्यम् । व्यापकत्वाभिमतशब्दत्वाभावप्रतियोगिशब्दत्ववच्छब्दवृत्तित्वस्य नित्यत्वानित्यत्वयोः सन्दिह्यमानत्वेन अनैकान्त्यसन्देहाहितव्यापकत्वसन्देहावर्जनात् इति वाच्यम् । तथात्वेऽपि तादृशशङ्काभावदशायां तथात्वनिश्चये तदुभयव्यापकीभूताभावप्रतियोगिशब्दत्ववत्त्वस्य शब्दे प्रतिसन्धातुं

शक्यत्वात् । सा मदसाधारणस्य शब्दो नित्यः शब्दत्वात् इत्यनुमानं उदाहरणं; पक्षे साध्यतदभावकोटिकसन्देहवेलायां शब्दत्वस्य साध्यतदभावव्यापकीभूताभावप्रतियोगित्वस्य निश्चेतुमशक्यत्वात् । तथापि 'चन्दनं न पृथिवी सुरभित्वात्' इत्यनुमानं असाधारणोदाहरणं भविष्यति । वायूपनीतस्य सौरभ्यस्य आश्रयविधुरस्य ग्रहानन्तरं पृथिवीत्ववति पाषाणादौ सौरभ्याभावदर्शनेन पृथिवीत्वव्यापकाभावप्रतियोगित्वस्य तथा, पृथिवीत्वाभाववति पानीयादौ सौरभ्याभावदर्शनेन पृथिवीत्वाभावव्यापकाभावप्रतियोगित्वस्य सुग्रहत्वात् । न चास्मिन्नपि उदाहरणे पूर्वोदाहरणवत् साध्यतदभावयोः व्याप्तिग्रहणवेलायां सन्दिग्धानैकान्तिकत्वं भवति । प्रतियोगिज्ञानं विना शब्दत्वाभावस्य नित्यत्वानित्यत्वरूपसाध्यतदभावव्यापकत्वग्रहासंभवेन प्रतियोगिनि शब्दत्वे ज्ञातव्ये यत्राधिकरणे शब्दत्वरूपव्यापकाभावनिश्चयः तस्मिन् शब्दरूपेऽधिकरणे साध्यतदभावरूपव्याप्यद्वयसन्देहसद्भावेन निश्चितव्यापकाभाववति व्याप्यसन्देहेन सन्दिग्धानैकान्त्यप्राप्तिवत् उक्तोदाहरणे प्रतियोगिनो निरधिकरणतयैव प्रतीतत्वेन सन्दिग्धानैकान्त्यप्राप्त्यभावात् ।

न चायं सत्प्रतिपक्ष एव स्यादिति वाच्यम् । सत्प्रतिपक्षे द्वौ हेतू साध्यतदभावसाधकौ; इह तु एक एवेति ततो भेदात् । न चैवं भेदेन पार्थक्यकरणेऽतिप्रसङ्गः । स्वतन्त्रेच्छायाः (यां) नियन्तुमशक्यत्वात् इति ग्रन्थकृतैव अभिधानात्' इत्याह ॥

तन्न । प्रतिपक्षविषयाऽसाधारण्यं दोष इति वदता साध्यव्यापकीभूताभावप्रतियोगितयाऽनुसन्धीयमानो हेतुः स्वप्रतिबद्धतया स्वसाध्यं न साधयतीत्येव वक्तव्यत्वेन 'मिथो विरोधेन नैकमपि साधयति इत्युक्त्ययोगात् । न हि असाधारण्यं पक्षादिप्रविभागात् पुराऽस्ति । किन्तु शब्दं पक्षीकृत्य नित्यत्वसाधनाय शब्दत्वे प्रयुक्तेऽसाधारण्यं भवति । सति चैवं नित्यत्वानुमितेरेव प्रतिबन्धो वक्तव्यः । असाधारण्यस्य नित्यत्वसाधनाय प्राप्तानुमानप्रयोगप्रयुक्तत्वात् । न हि साध्यविशेषप्रयुक्तासाधारण्ये प्राप्ते साध्यान्तरानुमितिप्रतिबन्धाभिधानस्य उपयोगोऽस्ति । येन परस्परप्रतिबन्धेन अनुमितिद्वयप्रतिबन्धानुमानं युक्तिमत् स्यात् । शब्दत्वहेतोः साध्याभावसाधकत्वस्य असाधारण्यान्तरप्रयुक्तत्वात् पूर्वासाधारण्येन अनुमितिप्रतिबन्धनिरूपणवेलायां अवक्तव्यत्वात् । शब्दो नित्यत्वव्याप्यशब्दत्ववानयमिति परामर्शवेलायां अनित्यत्वव्याप्यशब्दत्ववानयमिति परामर्शासंभवेन प्रतिपक्षासंभवाच्च ।

ननु मा भूत् अन्वयव्याप्तिद्वयप्रकारकपरामर्शद्वयम् । तथापि नित्यत्वाभावव्यापकीभूताभावप्रतियोगिशब्दत्ववानयं, तथा, नित्यत्वव्यापकीभूताभावप्रतिगिशब्दत्ववानयमिति परामर्शः संभवति इति

चेत् । न । व्याप्तिप्रकारकपरामर्शद्वयानिरूपणात् । व्यभिचारज्ञानविरोधिप्रकारकपरामर्शद्वयं निरूपितं, तस्यैवावश्यकत्वात् इति चेत् । न । अव्यभिचाराप्रकारकस्य व्यभिचारग्राहकसामग्रीविरोध्यप्रकारकत्वे च व्यभिचारधीविरोधिप्रकारकत्वस्यैवायोगात् । परामर्शद्वयस्य हेतोः साध्यतदभावव्यभिचारधीविरोधिविषयकत्वे च तदुभयगोचरानुमितिरेव स्यात् । न तु परस्परप्रतिबन्धेन अनुमितिद्वयविलोपः । अयमेतत्संयोगी एतत्त्वादित्यनुमानेन संयोगानुमानवत् एतत्संयोगाभाववान् एतत्त्वात् इति तदभावानुमितेः तदैव दर्शनात् ।

न च साध्यतदभावयोः विरोधज्ञानेन प्रतिबन्धात् नानुमितिद्वयापत्तिरिति वाच्यम् । प्रमाणद्वयेन एकस्मिन्नधिकरणे साध्यतदभावप्राप्तौ क्षीणशक्तिकस्य विरोधज्ञानस्य प्रतिबन्धकत्वायोगात् । अन्यथा क्षित्यादिकर्तृत्वेन ईश्वरसिद्धौ तस्य ज्ञानादिगुणयोगित्वं अशरीरत्वं चेत्यर्थद्वयं न सिध्येत् । तयोः विरोधज्ञानसद्भावेन तत्साधकप्रमाणप्रवृत्त्ययोगात् ।

न चैवं सत्प्रतिपक्षोच्छेदः । द्वयोः हेत्वोः व्याप्त्यादिग्रहे सुदृढनिर्णयाभावे च सत्येव सत्प्रतिपक्षावतारसंभवात् । उभयत्रापि व्याप्त्यादेः सुदृढनिर्णये तु साध्यद्वयसिद्धिः दुर्वारा । अन्यतरलिङ्गस्य व्याप्त्यादिसुदृढनिर्णये अन्यतरस्य अन्यतरेण बाध एव । अस्माभिस्तु त्वया व्युत्पादितव्याप्त्यादिग्रहदार्ढ्यमेव निराकृतम् । न तु सर्वथा व्याप्त्यादिग्रहस्य असंभवः एवोपपादितः ।

अस्तु तर्हि द्विविधव्याप्तिज्ञानमात्रेण सत्प्रतिपक्षावतारः इति चेत् । न । सर्वसपक्षव्यावृत्त्या झडिति प्रतीयमानव्याप्तिवैधुर्येणैव दूषकत्वसंभवे प्रतिपक्षमुखेन दूषकत्वाभिधानायोगात् । सकलसपक्षव्यावृत्तेः व्याप्तिग्रहोपयोगिसहचारज्ञानविरोधित्वेन व्याप्तिवैधुर्यस्यैव झडिति प्रतिभानात् । अन्यथा विरुद्धत्वेनैव दूषणं स्यात् । प्रतिपक्षविधया दूषणत्वमङ्गीकुर्वताऽपि साध्याभावव्याप्तेरादरणीयत्वात् ।

**यदत्रोक्तं रुचिदत्तेन**— 'नासाधारणस्य विरुद्धे अन्तर्भावः । साध्यव्यापकाभावप्रतियोगित्वज्ञानस्य विरोध्यविषयतया तत्र प्रतिबन्धकत्वानभ्युपगमात्' इति । तन्न । तस्य विरोध्यविषयकत्वेऽपि तदुत्पन्नस्य साध्याभावव्याप्ता हेतुरिति विज्ञानस्य प्रकृतव्याप्तिविरुद्धविषयकस्य प्रतिबन्धकत्वात् ।

एवं 'चन्दनादिकं न पृथिवी सुरभित्वात्' इत्यसाधारणोदाहरणे सकलसपक्षव्यावृत्तिदर्शनोपस्थितव्याप्तिवैधुर्यमुखेनैव दूषणत्वं बोध्यम् ।

**यदपि मणौ**– 'परस्य सर्वसपक्षव्यावृत्तिरेव उद्भाव्या । न विपक्षव्यावृत्तिरपि । व्यर्थत्वात्' इत्यादि । तदपि न । सर्वसपक्षव्यावृत्तस्यापि आप्तोपदेशादिना गृहीतव्याप्तिकस्य लिङ्गस्य साधुत्व-दर्शनेन सर्वसपक्षव्यावृत्तेरदूषणत्वात् ।

किञ्च(श्चेदं) तावदयं प्रष्टव्यः– 'सर्वसपक्षव्यावृत्तिवत् सपक्षैकदेशव्यावृत्तिरपि कुतो न दूषणं' इति । सर्वसपक्षव्यावृत्तौ व्याप्तिग्रहोपायवैधुर्यं भवति, न तु सपक्षैकदेशव्यावृत्त्या भवतीति तद् दूषणमिति चेत् । तर्हि आगतं अव्याप्तिरेव दूषणं. सर्वसपक्षव्यावृत्तिस्तु तज्ज्ञाप(पि)केति ।

**|| इति असाधारणस्य मण्युक्तदूषकताबीजभङ्गः ||**

**यत्तु मणौ**— 'व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहारी । स चान्वयेन व्यतिरेकेण वा; सर्वस्य (सर्वे) पक्षत्वे दृष्टान्ताभावात्' इति । तन्न । सर्वत्र विप्रतिपत्ति-दशायां सर्वं अभिधेयं मेयत्वात् इति सद्धेतौ अतिव्याप्तेः ।

**यदत्रोक्तं**– 'विप्रतिपत्त्या साध्यानिश्चयदशायां सर्वस्य पक्षत्वे अनुपसंहार्येव' इति । तन्न । व्याप्त्यादिविशिष्टस्य सद्धेतोः हेत्वाभासत्वानुपपत्तेः । न च अनुमित्यजनकत्वात् हेत्वाभासत्वं युक्तं इति वाच्यम् । हेत्वाभासत्वं विनाऽपि व्याप्तिग्रहरूपसहकारिविरहेण अनुमित्यजनकत्वोपपत्तेः । अन्यथा सहकारिविरहेण घटाजनकस्य दण्डस्य कारणाभासतापत्तिः दुर्वारा स्यात् ।

न च व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभाववत्त्वे सति हेत्वाभासोपाधिमत्त्वं इति विवक्षितं इति वाच्यम् । हेत्वाभासोपाधेः सव्यभिचारत्वस्य साधारणत्वासाधारणत्वानुपसंहारित्वत्रितयान्यतमधर्मवत्त्व-रूपत्वेन उदाहृतानुमानेऽनुपसंहारित्वसद्भावेन अतिव्याप्तिपरिहाराभावात् । न च हेत्वाभासोपाधिमत्त्वात् तस्य लक्ष्यत्वमेवेति वाच्यम् । तस्य हेत्वाभासोपाधित्वेन त्वयोक्तत्वेऽपि वास्तवोपाधित्वाभावात् ।

किञ्च अनुपसंहारशब्देन सहचाराभावः विवक्षितः । उत सहचारनिश्चयाभावो विवक्षितः । नाद्यः । सर्वमनित्यं प्रमेयत्वात् इत्यनुपसंहारिणि अव्याप्तेः । सहचारस्य वास्तवत्वात् । न च मेयत्वस्य अनित्यत्वेन सहचारमात्रसद्भावेऽपि व्याप्तिग्रहानुकूलसहचाराभावात् नाव्याप्तिरिति वाच्यम् । तत्सहचारदर्शिनः व्याप्तिभ्रमानुदयप्रसङ्गेन तत्सहचारोऽपि व्याप्तिग्रहानुकूलः इति वक्तव्यत्वात् । नापि द्वितीयः । ज्ञातदोषस्यैव हेत्वाभासताप्रयोजकत्वेन अज्ञातदोषस्य सहचारनिश्चयाभावस्य हेत्वा-भासत्वाप्रयोजकत्वेन अनुपसंहारिणो हेत्वाभासताऽभावापातात् ।

**यदपि**— 'केवलान्वयिधर्मावच्छिन्नपक्षकोऽनुपसंहारी' इति लक्षणान्तरम् । तदपि अत एव निरस्तम् । सर्वमभिधेयं मेयत्वात् इति केवलान्वयिधर्मावच्छिन्नपक्षके सद्धेतौ अतिव्याप्तिः । दशाविशेषे तस्य हेत्वाभासत्वं तु प्रागेव दूषितम् ।

किञ्च न दृश्यतेऽसङ्कीर्णोदाहरणमिति नायं पृथक् हेत्वाभासः; सर्वमभिधेयं प्रमेयत्वादित्यस्य सत्त्वात् सर्वं अनित्यं प्रमेयत्वात् इत्यस्य व्याप्यत्वासिद्धत्वात् । सर्वमनित्यं कृतकत्वात् इत्यस्य भागासिद्धत्वात् । एवमुदाहरणान्तरेऽपि दोषान्तरसन्निपातो द्रष्टव्यः ।

**यदपि** 'व्यतिरेकिसाध्याभाववद्वृत्तित्वाज्ञानदशायां इदं दूषणम् । तदवगमे साधारणसङ्कर एव इति । तन्न । साध्याभाववद्वृत्तित्वाज्ञानदशायां व्याप्यत्वासिद्धेरेव उद्भाव्यत्वेन अस्यानुद्भाव्यत्वात् । यदत्रोक्तं— 'व्याप्यत्वासिद्धत्वज्ञाने तदुद्भावने वा अयं व्यभिचारवदुपजीव्यत्वात् दूषणम्' इति । **तन्न ।** सर्वत्रापि व्याप्यत्वासिद्ध्युपजीव्यस्यैव दूषणत्वप्रसङ्गेन व्याप्यत्वासिद्धेरदूषणत्वापातात् । आवश्यकव्याप्यत्वासिद्धेरेव हेतुदूषणत्वसंभवे अनुपसंहारित्वस्य दूषणत्वकल्पनाऽयोगाच्च । सर्वमभिधेयं मेयत्वात् इत्यत्र आगमादिना व्याप्त्यवगमे केवलान्वयिधर्मावच्छिन्नपक्षकत्वस्य व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावस्य च विज्ञानेऽपि अनुमितिप्रतिबन्धादर्शनेन द्वयोरपि दूषकतावीजत्वायोगाच्च ॥

## ॥ इत्यनुपसंहारिणो मण्युक्तदूषकतावीजभङ्गः ॥

**यत्तु मणौ**— 'साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वम्' इति । तन्न । 'आत्मा द्रव्यं ज्ञानवत्त्वात्' इति सद्धेतौ अतिव्याप्तेः । ज्ञानस्यापि संयोगवदव्याप्यवृत्तित्वेन द्रव्यत्वव्यापकीभूताभावप्रतियोगित्वात् । व्यधिकरणसाध्यके लिङ्गे साध्यव्यापकीभूताभावप्रतियोगित्वविज्ञानेऽपि अनुमापकत्वदर्शनेन अस्य दूषकतावीजत्वासंभवाच्च ।

**यत्तु**— 'साध्यव्यापकप्रतियोगिव्यधिकरणाभावप्रतियोगित्वं विवक्षितं' इति । तन्न । व्यधिकरणसाध्यकसद्धेतावतिव्याप्तेः । अयमाकाशवान् द्रव्यत्वादिति विरुद्धाव्याप्तेश्च । साध्यस्य निरधिकरणत्वेन साध्यव्यापकीभूताभावप्रतियोगित्वस्य तत्राभावात् ।

**यदपि मणौ**— 'वृत्तिमतः साध्यवदवृत्तित्वं' इति लक्षणान्तरम् । तदप्यत एव परास्तम् । व्यधिकरणसाध्यके नदीपूरादौ अतिव्याप्तेः । अत एवास्य दूषकतावीजत्वमपि निरस्तम् । साध्यवदवृत्तित्वरूपदूषकतावीजस्य असाधारणेऽपि सत्त्वेन अस्य असाधारणात् भेदाभावप्रसङ्गाच्च । अत एव

साध्यवद्वृत्तित्वानधिकरणत्वं, साध्यासमानाधिकरणधर्मत्वं विरुद्धत्वमित्यपि लक्षणान्तरं निरस्तम् । व्यधिकरणसाध्यके अतिव्याप्तेः ।

किञ्च विरुद्धो न पृथक् हेत्वाभासः । साध्यवदवृत्तित्वज्ञानस्य स्वतोऽप्रतिबन्धकत्वात् । व्याप्तिविरहोन्नयनमुखेन दूषकत्वे च आवश्यकत्वात् व्याप्तिविरह एव दूषणमस्तु । उपजीव्यत्वात् विरुद्धत्वमेव दूषणमिति चेत् । न । उपजीव्यत्वात् विरुद्धत्वग्राहकसामग्र्येव दूषणं, न तु विरुद्धत्वं; इत्यापातात् । उपाधिरेव दूषणं उपजीव्यत्वात्, न तु व्यभिचारादीत्यापाताच्च ॥

## ॥ इति विरुद्धस्य मण्युक्तपृथक्हेत्वाभासत्वभङ्गः ॥

**यत्तु मणौ**— 'साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं सत्प्रतिपक्षत्वम् । बलं च व्याप्तिपक्षधर्मते' इति । तन्न । सत्प्रतिपक्षस्य हेत्वाभासत्वाभावप्रसङ्गात् । ज्ञायमानं सद्यदनुमितिप्रतिबन्धकं रूपं तद्वत्त्वं हेत्वाभासत्वमिति स्वयैवोक्तत्वात् । न च समानबलेन प्रतिरुद्धकार्यत्वज्ञानं अनुमितिप्रतिबन्धकम् । येन तद्रूपवत्त्वेन सत्प्रतिपक्षत्वनिरूपणं सङ्गतं स्यात् । हेत्वाभासत्वज्ञापनाय हेतुदोषस्य वक्तव्यत्वेन दोषकार्यस्य अनुमितिप्रतिबन्धस्य अभिधानायोगाच्च ।

समबलागमेन प्रतिरुद्धकार्ये सत्प्रतिपक्षेऽव्याप्तेश्च । आगमस्य व्याप्तिपक्षधर्मताभ्यां समबलत्वाभावात् । न च आगमेन प्रतिपक्षासंभवः । वादिना साध्यसाधनाय अनुमानमुपन्यस्य व्याप्त्याद्यङ्गकलापमुपन्यस्य स्थिते यदा प्रतिवादी आगममुपन्यस्य आकाङ्क्षायोग्यतादिकमुपन्यस्य स्थितो भवति तदा मध्यस्थस्य वादिप्रतिवादिप्रमाणयोः प्राबल्यदौर्बल्यविवेकाभावेन अनुमानेनार्थनिर्णयाभावस्य अनुभवसिद्धत्वात् ।

प्रत्यक्षेण प्रतिरुद्धकार्ये सत्प्रतिपक्षेऽव्याप्तेश्च । न च प्रत्यक्षेण प्रतिपक्षासंभवः । अतिदूरप्रदेशे प्रत्यक्षेण जलं पश्यतः, जलाभावसाधनाय केनचिदनुमाने प्रयुक्ते अनुमानप्रतिबन्धदर्शनात् । न च प्रत्यक्षेण बाध एव अनुमानस्येति युक्तम् । अर्थनिश्चयाभावात् । अन्यथा निश्शङ्कप्रवृत्तिः स्यात् ।

'विरोधिबोधकान्यगमकतौपयिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं सत्प्रतिपक्षत्वं' इति मण्युक्तं लक्षणान्तरम् । अस्यार्थः । साध्यविरोधिबोधकं यत्प्रमाणं तदन्यत्वेन तथा साध्याभावगमकतायां यदुपयुक्तं रूपं साध्याभावव्याप्त्यादिकं तद्वत्तया ज्ञायमानेन प्रतिबद्धकार्यत्वं सत्प्रतिपक्षत्वं' इति ।

तदपि न । प्रबलप्रमाणान्यत्वेन ज्ञायमानेन प्रतिबद्धकार्यत्वं, इत्येतावतैव पूर्णत्वेन अधिक-वैयर्थ्यात् ।

**यत्तु मणौ**— 'दूषकताबीजं च समबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वं न तु व्याप्तिपक्षधर्मताविरह एव । सद्धेतोरपि सत्प्रतिपक्षत्वात् । एकत्र व्याप्तिभङ्गज्ञानद्वारा वाऽस्य दोषत्वम्' इति ।

**तन्न** । निर्णयाजनकतायामेव बीजस्य वक्तव्यत्वेन निर्णयाजनकत्वस्य बीजत्वाभिधानायोगात् । **न हि** निर्णयाजनकत्वेन भाव्यं लिङ्गस्य दूषणं नामास्ति । **येन** निर्णयाजनकत्वं दूषकता[त्वं]बीजं स्यात् ।

**रुचिदत्तस्तु**– 'नेदं लिङ्गस्य निर्णयाजनकतायां बीजमुक्तम् । अपि तु व्याप्त्यादिमतः हेत्वाभासत्वे बीजमुक्तम् । सद्धेतुश्च विरोधिपरामर्शविषयीभवन् न निर्णयं जनयतीति हेत्वाभासो **भवति** । न तु व्याप्त्याद्यभावात्' इत्याह ।

**तन्न** । सद्धेतोः हेत्वाभासत्वं अनुमित्यजनकत्वमेव नान्यदिति पारिभाषिकहेत्वाभासत्वे तस्यैव बीजत्वायोगात् । नेदं हेत्वाभासतायां बीजम् । किन्तु हेत्वाभासव्यवहारे कारणमिति चेत् । न । कथायां असाधकत्वबीजस्यैव वक्तव्यत्वेन हेत्वाभासव्यवहारे बीजाभिधानायोगात् ।

यदपि च 'चक्षुरादेश्च नानुमानेन प्रतिरोधः । तदुपस्थितावपि फलदर्शनेन तस्याधिक-बलत्वात्' इति । तन्न । जलादिना इन्द्रियसन्निकर्षे तदभावसाधकलिङ्गोपस्थितौ जलादिविषयकैक-कोटिकसंशयोदयेऽपि प्रत्यक्षफलस्य अवधारणात्मकज्ञानस्य अदर्शनेन अनुमानप्रतिबध्यत्वस्य वक्त-व्यत्वात् । प्रत्यक्षस्य जात्या प्रबलत्वेऽपि दोषसंभावनादशायां प्रत्यक्षानुमानयोः समबलत्वाभि-मानोपपत्तेः ।

यथाकथञ्चित् ज्ञानजनकत्वात् नानुमानप्रतिबध्यत्वं प्रत्यक्षस्येति चेत् । न । सत्प्रतिपक्ष-हेतुनाऽपि ज्ञानोत्पादेन अनुमानप्रतिबध्यत्वाभावप्रसङ्गात् । न हि वादिनोपन्यस्तमनुमानं प्रतिवादी प्रत्यनुमानं वक्ष्यतीति निश्चित्य न ज्ञानमुत्पादयतीति युक्तम् । येनानुमानं सर्वथा ज्ञानाजनकमिति प्रत्यनुमानप्रतिरुद्धं न प्रत्यक्षमिति विवेकः स्यात् ।

यदि सत्प्रतिपक्षेण ज्ञानमुत्पद्यते कथं तर्हि प्रतिपक्षो दूषणमिति चेत् । उच्यते । वादिप्रयुक्तं अनुमानं प्रतिपक्षसंभावनावतः एककोटिकसंशयरूपामनुमितिं जनयति । तत्संभावनाशून्यस्य तु निश्चय-

रूपामेव जनयति । ततः प्रतिवादिना प्रतिसाधने उपन्यस्ते तदपि साधनं एककोटिकसंशयरूपामेव अनुमितिं जनयति । न कदापि निश्चयरूपाम् । तदनन्तरं संशयः उदेति 'किं विप्रतिपन्नोऽर्थोऽस्ति न वा' इति । ततो वादिप्रतिवादिसाधनं युगपदेवानुसन्धत्ते । अनुसंहिते च साधने, परस्पर-प्रतिबन्धात् न स्वार्थनिश्चयाय प्रभवतः । इदमेव परस्परप्रतिरोधेन कार्याजनकत्वं; न तु प्रथममेव सर्वथा ज्ञानाजनकत्वम् । सर्वथा ज्ञानाजनकत्वपक्षे प्रतिपक्षमुद्भावयतो मौढ्यं स्यात् । वादिसाधनेन प्रतिरुद्धं मत्साधनं ज्ञानजनकमेव नेति वदता ज्ञानजननाय उपन्यासात् ।

न ज्ञानजननाय प्रतिवादिना प्रतिपक्षः उपन्यस्यते । वादिसाधनप्रतिरोधायैव उपन्यस्यते, इति चेत् । न । साध्याभावज्ञानाजनकस्य प्रतिरोधकत्वायोगात् । अन्यथा कचटतपानां जबगडदत्वात् इत्युक्त्वापि कृती स्यात् ।

किञ्च प्रतिपक्षो न हेत्वाभासः । वास्तवप्रतिपक्षस्य क्वाप्यभावात् । समबलत्वभ्रमप्रयुक्त-सत्प्रतिपक्षत्वस्य हेतुत्वविघटकसामर्थ्याभावात् । अन्यथा भ्रमप्रतिपन्नेन दोषेण ब्राह्मणोऽप्यब्राह्मणः स्यात् ।

यद्यपि निश्चयरूपानुमितिलक्षणकार्यप्रतिबन्धोऽस्ति । तथापि न हेत्वाभासः । गोक्षुरकादिना प्रतिबद्धस्य गजत्वदर्शनात् । दोषान्तरसद्भावे तु तत एव हेत्वाभासो न तु सत्प्रतिपक्षात् । हेत्वाभास-त्वाप्रयोजकत्वेऽपि निग्रहहेतुत्वात् उद्भाव्य एव प्रतिपक्षः ॥

॥ इति सत्प्रतिपक्षस्य मण्युक्तलक्षणभङ्गः ॥

**यत्तु मणौ**– 'असिद्धिः त्रिविधा । आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्चेति । सा च प्रत्येकमेव दोषः । प्रत्येकस्य ज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धात्' इति ॥ तन्न । दोषान्तरा-भावे आश्रयासिद्ध्या अनुमितिप्रतिबन्धस्य अदर्शनात् ।

**तथा हि**– केयं आश्रयासिद्धिः ? आश्रयस्य ज्ञानाभावो वा ? अथाश्रयस्यासत्त्वं ? द्वितीयेऽपि किमनुमितिकाले असत्त्वं ? किं वा सर्वदा असत्त्वं ? ।

**आद्यस्तु**— अनुमितिसामग्रीविरहरूपत्वात् भवत्येव दूषणम् । तथापि नाभासत्वप्रयोजकः । सामग्रीविरहप्रयुक्तकार्याजनकस्य अतिप्रसङ्गेन आभासत्वायोगात् । द्वितीयेऽपि नाद्यः । अतीतघटादि-

पक्षकानुमितिदर्शनात् । नापि द्वितीये द्वितीयः । 'शशविषाणं असत् सत्त्वावेदकप्रमाणशून्यत्वात्' इत्यनुमानेनापि अनुमितिदर्शनात् !

न च असतो निःस्वरूपत्वेन धर्माधिकरणतया अनुमितिः कथं इति वाच्यम् । असत्स्वरूप-साध्यस्य प्रमाणशून्यत्वरूपसाधनस्य च धर्मिसत्तानिरपेक्षधर्मत्वेन असद्धर्मतया प्रतीतेन साधनेन असद्धर्मतयैव साध्यानुमितिसंभवात् । अन्यथा शशविषाणं सदिति वद(तो)ता नैयायिकस्य नियतः पराभवः स्यात् । सत्त्वनिषेधाय प्रमाणोपन्यासायोगात् ।

यस्य हेतोः पक्षत्वेनाभिमतो धर्मी निश्चितसाध्यवान् स हेतुः आश्रयासिद्धः इति चेत् । अस्तु । एवमपि नाश्रयासिद्धेः दूषणत्वं सिध्यति । अनुमित्यप्रतिबन्धकत्वात् । न हि तत्र अनुमितिः न भवत्येवेति युक्तम् । अनुभवविरोधात् । न हि साध्यसन्देहं विना अनुमितिः नोदेतीति युक्तम् । घनगर्जितादौ साध्यसन्देहाभावेऽपि अनुमितिदर्शनात् ।

ननु 'सुवर्णमयोऽद्रिः अग्निमान् धूमवत्त्वात्' इत्यत्र पक्षविशेषणासिद्ध्या हेतुः आश्रयासिद्धः । असद्विशेषणविशिष्टधर्मिणि अनुमितिः नोदेतीत्यस्य सर्वानुभवसिद्धत्वात्, इति चेत् । न । तत्र बाधेन अनुमितिप्रतिबन्धाङ्गीकारात् ।

**यदत्रोक्तं रुचिदत्तेन**— 'यस्य ज्ञानं परामर्शविघटनद्वारा अनुमितिं प्रतिबध्नाति सः न बाधः । यज्ज्ञानं परामर्शे जाते साक्षात् प्रतिबन्धकं स एव बाधः । प्रकृते च काञ्चनमयत्वाद्यभाव-ज्ञानं तद्विशिष्टपक्षधर्मतावगाहिपरामर्शविघटनद्वारैव प्रतिबन्धकः न तु साक्षात्; इति पक्षविशेषणा-सिद्धिः आश्रयासिद्धित्वेनैव दूषणं' इति ।

तन्न । प्रतिज्ञानन्तरमेव पक्षविशेषणासिद्धिं जानतः झडिति बाधबुद्ध्युदयेन बाधेनैव अनु-मितिप्रतिबन्धस्य वक्तव्यत्वात् । कुतस्तर्हि अरविन्दत्वेन हेतुना गगनारविन्दे सौरभ्यासिद्धिरिति चेत् । न । सौरभ्यस्य धर्मिसत्तासापेक्षत्वेन तदभिज्ञस्य बाधेनैवानुमितिप्रतिबन्धात् । न च गगनार-विन्दं न सुरभि इति बाधबुद्ध्युदयासंभवः । सौरभ्याभावस्य धर्मिसत्तानिरपेक्षधर्मत्वेन तद्बुद्धौ बाधकाभावात् ।

स्वरूपासिद्धस्य हेतोः अनुमित्यजनकत्वेऽपि हेत्वाभासत्वम् । स्वाभाववति प्रदेशे छिदारूप-कार्याजनकस्यापि परशोः तदाभासत्वादर्शनात् । न हि आकाशमनित्यं कृतकत्वात् इति प्रयुक्तं

कृतकत्वं आकाशे असिद्धया अनित्यत्वप्रमां अजनयत् न क्वापि अनित्यत्वप्रमां जनयतीत्यस्ति । येन हेत्वाभासः स्यात् । घटादौ अनित्यत्वप्रमाजनकत्वदर्शनात् । परं तु आकाशे स्वयं नास्तीति कृत्वैव न प्रमां जनयति ।

व्याप्यत्वासिद्धिस्तु हेत्वाभासत्वप्रयोजिका । परं तु अव्याप्तौ अन्तर्भवति । यत्तु– 'व्यर्थविशेषणासिद्धो व्याप्यत्वासिद्धः' इति । तन्न । व्यर्थविशेषणासिद्धे नीलधूमादौ वह्निव्यभिचाराभावेन व्याप्तिसद्भावात् ॥

## ॥ इति मण्युक्तासिद्धिनिरूपणभङ्गः ॥

**यत्तु मणौ** — 'साध्याभाववत्त्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वं, पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वा बाधितत्वम् । विवक्षितविवेकेन साध्याभावप्रमैव दोषः । सा च प्रमात्वेन ज्ञाता; न स्वरूपसती । हेत्वाभासत्वात् । प्रमात्वज्ञानं विना अधिकबलवत्त्वाभावेन अदोषत्वात् । अप्रमायामपि प्रमात्वज्ञानेनानुमितिप्रतिबन्धाच्च' इत्युक्तम् ॥

**तन्न** । 'अयमेतत्संयोगी एतत्त्वात्' इत्यबाधितहेतौ आद्यलक्षणस्य अतिव्याप्तेः । तत्रापि साध्याभाववत्त्वप्रकारकप्रमाविषयपक्षकत्वस्य सत्त्वात् । न च प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नसाध्याभाववत्त्वप्रमाविषयपक्षकत्वं विवक्षितम्; एतत्त्वरूपहेतोः प्रतियोगिसामानाधिकरण्यावच्छेदकैतद्वृक्षत्वावच्छिन्नसाध्याभाववत्त्वप्रकारकप्रमाविषयपक्षकत्वेऽपि प्रतियोगिवैयधिकरण्यावच्छेदकैतद्वृक्षान्यत्वावच्छिन्नसाध्याभाववत्त्वप्रकारकप्रमाविषयपक्षकत्वाभावात् न तत्र अतिव्याप्तिः इति वाच्यम् । पक्षे साध्यात्यन्ताभावप्रमाविरहदशायां पक्षस्य साध्यवदन्यत्वेन ज्ञानेन बाधिते वह्निर्गुणः पदार्थत्वात् इति पदार्थत्वानुमानेऽव्याप्तेः ।

न च 'पक्षः साध्यवदन्यः' इति ज्ञानं न बाधः इति युक्तम् । हेत्वाभासाधिक्यप्रसङ्गात् । न च साध्यविरोधिप्रकारकप्रमाविषयपक्षकत्वं बाधितत्वमिति वाच्यम् । पर्वते वह्न्यभावभ्रमेण बाधिते धूमानुमानेऽव्याप्तेः । न चासौ न बाधितः इति युक्तम् । बाधेन अनुमितिप्रतिबन्धस्य सर्वानुभवसिद्धत्वात् । सद्धेतुत्वादबाधितत्वे प्रतिपक्षदशायां सत्प्रतिपक्षोऽपि न स्यात् ।

न च साध्यविरोधिप्रकारकनिश्चयविषयपक्षकत्वं इति विवक्षितमिति वाच्यम् । शङ्खः पीतः इति भ्रमदशायां शङ्खः श्वेतः शङ्खत्वात् इत्यनुमानेऽतिव्याप्तेः । शङ्खे प्रतीयमानपैत्यस्य श्वैत्यरूप-

साध्यविरोधित्वात् । नापि साध्यानुमितिविरोधिसाध्यविरोधिप्रकारकनिश्चयविषयपक्षकत्वं विवक्षितमिति वाच्यम् । 'परब्रह्म मेयं अभिधेयत्वात्' इति वादिनोक्ते शब्दावाच्यं ब्रह्मेति मन्यमानस्य मायावादिनो मेयत्वानुमित्यजनके वाच्यत्वादिहेतौ अतिव्याप्तिः । तत्रापि मेयत्वानुमितिविरोधिमेयत्वरूपसाध्यविरोध्य-वाच्यत्वप्रकारकनिश्चयविषयपक्षक(ब)त्वस्य विद्यमानत्वात् । न चासावपि हेतुः तं प्रति बाधित एव । साध्याभावगोचरप्रमायाः तद्भ्रमस्य वा तत्राभावात् ।

अत एव प्रमितसाध्याभाववत्पक्षकत्वमिति द्वितीयमपि लक्षणं परास्तम् । शब्दोऽभिधेयः प्रमेयत्वादिति प्रमेयत्वानुमाने बाधभ्रमेण अनुमित्यजनके अव्याप्तिः । न चायं सद्धेतुत्वात् न बाधितः इति वाच्यम् । सद्धेतुत्वेऽपि पक्षीयसाध्याभावनिश्चयरूपप्रतिबन्धेन बाधितत्वस्य अवश्यं वक्तव्यत्वात् । अन्यथा सद्धेतोः सत्प्रतिपक्षत्वं न स्यादित्युक्तम् ।

यत्तु— 'पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं बाधितत्वं' इति लक्षणान्तरम् । तस्यार्थः— पक्षनिष्ठं यत् प्रमाविषयत्वं, पक्षः साध्याभाववान् इति प्रमाविषयत्वं, तत्र प्रकारीभूतो योऽभावः तत्प्रतियोगिसाध्यकत्वं बाधितत्वम्' इति । तन्न । 'अयमेतत्संयोगी एतत्त्वात्' इति सद्धेतौ अतिव्याप्तिः । अस्तु बाधितत्वं यत्किञ्चित् । बाधो न हेत्वाभासताप्रयोजकः । उपक्रमोपसंहारादि-तात्पर्यलिङ्गानां उपसंहारादिबलवद्विरोधेन बाधेऽपि स्वस्वसाध्ये सद्धेतुत्वदर्शनात् । कथमन्यथा उप-संहारादिविरोधाभावे तात्पर्यरूपं स्वसाध्यं प्रमापयेत् ।

न च 'नोपक्रमादिमात्रं तात्पर्यलिङ्गं; अपि तु बाधकाभावविशिष्टम् । तस्य च न बाधः' इति वाच्यम् । उपक्रमादिषु प्राबल्यदौर्बल्यचिन्तावैयर्थ्यप्रसङ्गात् । बाधकाभावविशिष्टानां सर्वेषां साम्येन प्राबल्यदौर्बल्यायोगात् । उक्तं च जैमिनिना— 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये परदौर्बल्यं अर्थविप्रकर्षात्' इति । स्मर्यते च— 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीयः स्यात् एवमागमनिर्णय' इति ।

**ननु—** साधनत्वाभिमतोपक्रमाद्यधिकरणे साध्याभावप्रमितावपि उपक्रमादिकमेव लिङ्गम् । न तु बाधकाभावे सतीति विशेषणं देयमित्युच्यते । तर्हि वह्नौ प्रमेयत्वमेव लिङ्गम् । ह्रदादौ तेन वह्न्यसिद्धिस्तु प्रमाणबाधात् इति स्यादिति चेत् । न । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्युपक्रमादीनां, 'श्रुतिर्लिङ्गं समाख्या च' इति श्रुत्यादीनां

च तात्पर्यलिङ्गत्वस्य प्रमाणसिद्धत्वात् । प्रमेयत्वस्य च वह्निलिङ्गत्वे प्रमाणाभावात् । अप्रामाणिकस्य-च असत्त्वनियमात् । विषयतासंबन्धेन पक्षनिष्ठस्य साध्याभावप्रमारूपबाधस्य हेतुदूषकत्व(ा)संभवात्, हेतुनिष्ठत्वलाभाय तादृशपक्षकत्वं बाधितत्वमित्यभिधानमयुक्तमेव । 'वह्निरनुष्णः' इति प्रतिज्ञानन्तरं उत्पन्नेन पक्षधर्मिकसाध्याभावविज्ञानमात्रेण तादृशपक्षत्वविज्ञानमन्तरेव अनुमितिप्रतिबन्धदर्शनात् ।

**यदपि**– 'विवक्षितविवेकेन साध्याभावप्रमैव दोषः । सा च प्रमात्वेन ज्ञाता । न स्वरूप-सती । हेत्वाभासत्वात् । प्रमात्वज्ञानं विना अधिकबलवत्त्वाभावेन अदोषत्वात् । अप्रमायामपि प्रमात्वज्ञानेन अनुमितिप्रतिबन्धाच्च' इति । तदपि न । साध्याभावभ्रमरूपनिश्चयस्य साध्यवदन्यत्व-निश्चयस्य च दोषत्वदर्शनेन साध्याभावप्रमैव दोषः इत्यभिधानायोगात् । सर्वत्र अप्रामाण्यशङ्का-शून्यसाध्याभावनिश्चयस्यैव दूषणत्वसंभवेन प्रमात्वनिश्चयस्य आवश्यकत्वाभावाच्च । न हि सर्वत्र प्रामाण्यसन्देहोऽस्ति । येन तन्निवृत्त्यर्थं प्रमात्वनिर्णयापेक्षा स्यात् । अन्यथा प्रामाण्यग्राहके प्रामाण्य-सन्देहापत्त्या प्रामाण्यग्रहणपरम्परया अनवस्था स्यात् । उपजीव्यत्वेनापि बलवत्त्वसंभवेन बलवत्त्व-सिद्धये प्रामाण्यग्रहणस्य आवश्यकत्वाभिधानायोगाच्च ।

**पक्षधरस्तु**— 'तत्प्रमात्वं ज्ञातं प्रतिबन्धकं, अतो विवक्षितविवेकेन तत्प्रमात्वमेव दोषः' इत्याह । तन्न । प्रमात्वनिश्चयस्य साध्याभावानवगाहित्वेन साध्याभावज्ञानप्रमात्वस्य दोषत्वायोगात् । न च, साध्याभावप्रमात्वज्ञानं, साध्याभाववति साध्याभावप्रकारकं इदं ज्ञानमित्येवमाकारम् ; ततश्च प्रामाण्यज्ञानं पक्षस्य साध्याभाववत्त्वावगाहीत्युपपन्नं तस्यानुमितिप्रतिबन्धकत्वमिति वाच्यम् । साध्या-भावावगाहित्वस्य आवश्यकत्वे साध्याभावज्ञानत्वेनैव प्रतिबन्धकत्वसंभवे साध्याभावावगाहिप्रमात्वज्ञानेन प्रतिबन्धकत्वाङ्गीकारायोगात् । ज्ञानस्य यद्विषयकत्वमन्तरा प्रतिबन्धकत्वं अनुपपन्नं तज्ज्ञानेनैव प्रतिबन्धकत्वस्य उचितत्वात् ॥

## ॥ इति मण्युक्तबाधलक्षणभङ्गः ॥

**यत्तु मणौ**– 'हेत्वाभासानां असाधकतासाधकत्वेन सदुत्तरत्वम् । जात्यादीनां स्वस्यापि असाधकत्वप्रसङ्गेन परानुमानासाधकतासाधकत्वाभावेन असदुत्तरत्वम् । अथ विरुद्धत्वादिज्ञानादेव स्वार्थानुमितेरिव परार्थानुमितेः प्रतिबन्धे किमसाधकतानुमानेन । 'यद्वचसि दूषणावगतिः सः निगृहीतः' इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रं उद्भाव्यम् । अन्यथा अर्थान्तरत्वात् इति चेत् ।

न । द्वयं उद्देश्यम् । परानुमितिप्रतिबन्धः । स्थापनायाः असाधकतासाधनं च । तत्र आद्यं दूषणमात्रज्ञानादेव । द्वितीयं तु अलिङ्गत्वज्ञापनात् । प्रतिबन्धकत्ववदनेनापि रूपेण दूषणत्वसंभवः; इत्यभिप्रायेण वा असाधकत्वसाधनम् ।

असाधकत्वं च स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वम् । यद्वा अनुमितिप्रतिबन्धकरूपवत्त्वं असाधकत्वं' इति ॥

**तन्न** । परानुमितिप्रतिबन्धकत्वाभावेनैव जातेरदूषणत्वस्य वक्तव्यत्वेन परानुमानासाधकतासधकत्वाभावस्य अदूषणत्वे निमित्तत्वेन अवक्तव्यत्वात् । परानुमितिप्रतिबन्धकत्वस्यैव दूषणत्वे तन्त्रत्वात् ।

**यत्तु**— 'विरुद्धत्वादिकमेवोद्भाव्यं; किमसाधकतासाधनेन इत्याशङ्क्य, उद्देश्यं द्वयं, परानुमितिप्रतिबन्धः स्थापनायाः असाधकतासाधनं च' इत्यादि समाधानम् । तदपि न । अनुमितिप्रतिबन्धस्यैव उद्देश्यत्वेन असाधकतासाधनस्य अनुद्देश्यत्वात् । न हि प्रतिपक्षादिना लिङ्गस्य अनुमितिप्रतिबन्धे सति लिङ्गस्य असाधकत्वज्ञापनेन प्रयोजनमस्ति । येन असाधकत्वसाधनस्यापि उद्देश्यत्वं स्यात् ।

**यदपि**— 'प्रतिबन्धकत्वेन असाधकतासाधकत्वेनापि हेत्वाभासस्य दूषणत्वमित्यभिप्रायेण असाधकत्वसाधनं' इति । तदपि न । अनुमितिप्रतिबन्घकत्वस्यैव दूषणताप्रयोजकत्वेन असाधकताज्ञापकत्वस्य दूषणत्वाप्रयोजकत्वात् । अन्यथा तज्ज्ञापकस्य आप्तवाक्यस्य दूषणत्वं स्यात् ।

**यदपि**— 'अनुमितिप्रतिबन्धकरूपवत्त्वं असाधकत्वं' इति । तदपि न । व्यभिचारादेरेव अनुमितिप्रतिबन्धकरूपवत्त्वेन तेनैव तत्साधने साध्यावैशिष्ट्यात् । न च उपाधिविशेषस्य अनुमेयत्वात् न साध्याविशेषः इति वाच्यम् । तज्ज्ञापनस्य प्रयोजनाभावात् ॥

॥ असाधकत्वानुमानस्य मण्युक्तावश्यकत्वभङ्गः ॥

॥ हेत्वाभासाः समाप्ताः ॥

**श्री रामचन्द्राय नमः** ॥ एवं हेतु-तदाभासविवेके सिद्धे सन्मीमांसासहकृतवेदनिकरैः अनन्तगुणपूर्णतया परमेश्वरः सिध्यति ।

अत्र अद्वैतवादिनो वदन्ति– 'नेश्वरस्य अनन्तगुणपूर्णत्वं युक्तम् । जीवाभिन्नत्वात् । न च तत्र मानाभावः । तत्त्वमसीति श्रुतेरेव तन्मानत्वात् । न च 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्' इति भेदश्रुतिविरोधः । उपक्रमादितात्पर्यलिङ्गसद्भावेन अद्वैतश्रुतेः बलवत्त्वात् ।

तथा हि– 'एकमेवाद्वितीयं ब्रह्म' इति तावदुपक्रमोऽध्यक्षसिद्धः । एवं 'तत्त्वमसी'त्युपसंहारोऽपि । तथा 'तत्त्वमसि, तत्त्वमसि' इति नवकृत्वोऽभ्यासः । तथा अद्वैतस्य प्रमाणान्तराप्राप्तत्वेन अपूर्वत्वम् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येत, अथ संपत्स्यते' इतिश्रुत्या. तस्य ब्रह्मज्ञानिनः, तावदेव तावत्कालमेव. ब्रह्मप्राप्तये, चिरं विलम्बः; यावत्कालपर्यन्तं प्रारब्धकर्मणः सकाशात् नैव मोक्ष्येत; अथ प्रारब्धकर्मक्षयानन्तरं, ब्रह्म संपत्स्यते-प्राप्नोति. इति फलं श्रूयते । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं' इत्यर्थवादश्च श्रूयते । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति मृत्पिण्डादिदृष्टान्तेनोपपादनात् उपपत्तिश्च । तदेवं तात्पर्यलिङ्गैः वेदान्तानां अभेद एव तात्पर्यावगमात् अभेदः सिद्धः ।

न च अभेदः जीवेश्वरयोः निर्धर्मकत्वमन्तरा युज्यते इति नेश्वरस्य अनन्तगुणपरिपूर्णत्वम् । न च जीवे प्रतीयमानाः दुःखादयो धर्माः मिथ्याभूताः ये ब्रह्मतादात्म्यविरोधिनः । ब्रह्म तु सगुणमेवेति युक्तम् । अनुभवसिद्धानां जीवधर्माणां मिथ्यात्वमङ्गीकृत्य ब्रह्मधर्माणां प्रामाणिकत्वमङ्गीकृत्य तादात्म्यप्रतिपादनस्य अयुक्तत्वात् । न हि जीवधर्मविदकः साक्षी मिथ्याभूतार्थगोचरः ब्रह्मधर्मप्रतिपादकश्च वेदः पारमार्थिकधर्मगोचरः इत्यत्र किञ्चिन्मानम् । येन जीवधर्माणां मिथ्यात्वं, ब्रह्मधर्माणां नेति स्यात् । श्रौतजीवब्रह्मतादात्म्यान्यथानुपपत्त्या मिथ्यात्वसिद्धिस्तु जीवधर्माणामिव ब्रह्मधर्माणामपि । अविशेषात् । अन्यथा ईश्वरस्य गुणपूर्णत्वं जीवस्य तन्नेति विरुद्धधर्माधिकरणत्वं दुष्परिहरं स्यात् ।

न च संसारदशायामपि जीवेऽनभिव्यक्ताः ईश्वरधर्माः कल्प्यन्ते इति वाच्यम् । अन्योन्याश्रयप्रसङ्गात् । जीवस्य परमेश्वरैक्यसिद्धौ ईश्वरधर्माधिकरणत्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति । न च प्रमाणद्वयसिद्धजीवब्रह्मधर्माणां मिथ्यात्वकल्पनापेक्षया तादात्म्यस्यैव मिथ्यात्वकल्पनं वरं इति युक्तम् । तादात्म्यस्य उपासनाफलत्वेनाभिधानात् । अपि च उपासनार्थं हि गुणाभिधानम् । उपासनं च गुणैः मिथ्याभूतैरेवोपपन्नम् । 'वाचं धेनुमुपासीत' इत्यादौ तथा दर्शनात् । न च मिथ्योपासनेन फलासंभवः । राजत्वेन उपासितामात्यात् उत्कृष्टफलदर्शनात् । 'साक्षी चेता केवलो निर्गुणश्च' इति निर्गुणत्वाभिधानाच्च' इति ॥

**अत्रोच्यते**— भवत्येव परमेश्वरोऽनन्तगुणपरिपूर्णः । 'बृहन्तो ह्यस्मिन् गुणाः ॥' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' 'सत्यकामः सत्यसङ्कल्पः ॥' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ।' 'यतो वा इमानि भूतानि जायन्ते ।' 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ।' 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् ।' 'एष सर्वेश्वरः एष भूताधिपतिः एष भूतपालः' इत्यादि श्रुतेः ।

'ब्रह्मेशानादिभिः देवैः समेतैः यद्गुणांशकः ॥ नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा' ॥ 'मय्यनन्तगुणेऽनन्तगुणतोऽनन्तविग्रहे' ॥ 'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः । परः पराणां' । इत्यादिस्मृतेः ।

नन्वेतेषां श्रुतिवाक्यानां सगुणब्रह्मपरत्वेन निर्गुणे ब्रह्मणि न गुणसिद्धिः । अन्यपरेण अन्यत्राभिलषितसिद्ध्ययोगात् इति चेत् । न । प्रमाणाभावेन सगुणब्रह्मातिरिक्तनिर्गुणब्रह्मण एवाभावात् । 'जीवब्रह्मणोः भेदः न वास्तवः' इति वदता सगुणनिर्गुणब्रह्मणोः वास्तवभेदाङ्गीकारायोगात् । भेदस्य मिथ्यात्वे तु वास्तवाभेदसद्भावात् सगुणविषयकश्रुत्यादिना निर्गुणत्वेनाभिमतस्य गुणसिद्धिः दुर्वारा ।

न चैतेषां वाक्यानां उपासनापरत्वेन गुणेषु तात्पर्याभावात् न तद्बलेन गुणसिद्धिरिति युक्तम् । 'गुणोत्कर्षे देवदेवस्य विष्णोः महातात्पर्यं नैव चान्यत्र सत्यम् ॥ अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततोऽतः ॥१॥ न तादृशी प्रीतिरीडयस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वः ततो वेदाः तत्पराः सर्व एव ॥२॥' इत्यादिश्रुत्या; 'मुख्यं च वेदानां तात्पर्यं श्रीपतेः परम् ॥ उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम्' इत्यादिस्मृत्या च गुणप्रतिपादकवाक्यानां गुणेषु तात्पर्यावधारणात् । 'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' इत्यादिश्रुत्या ईश्वरमहिम्नः सत्यत्वाभिधानात् । 'अस्य-परमात्मनः, सः-जगत्सर्जनादिरूपो महिमा सत्यः, विप्रराज्ये विप्रप्रधानेषु यज्ञेषु, शवः-सुखमुद्दिश्य, गृणे-स्तौमि' इति श्रुत्यर्थः ।

न च जीवब्रह्माभेदान्यथानुपपत्त्या ईश्वरधर्माणां मिथ्यात्वसिद्धिः । अभेदस्यैव अप्रामाणिकत्वात् ।

**यदत्रोक्तं**— 'तत्त्वमसि' इत्यागम एव तत्र प्रमाणं' इति । तन्न । विरुद्धस्वभावयोः जीवब्रह्मणोः ऐक्यस्य अत्यन्तासंभावितत्वेन श्रुतेः अन्यार्थत्वात् । 'नाहमीश्वरः' इत्यनुभवविरुद्धोऽत्यन्तासंभावितश्च अभेदः श्रुत्यर्थः इति न हि संभवति । नानया श्रुत्या तत्त्वंपदवाच्ययोः विशिष्टयोः

अभेदः उच्यते। येन प्रत्यक्षादिविरोधः स्यात्। किन्तु भागत्यागलक्षणया चिन्मात्रयोः ऐक्यमुच्यते इति चेत्।

अत्र वक्तव्यम्— कोऽयं भागत्यागो नाम। किमप्रतिपादनं ? उत भस्मीकरणम् ? नाद्यः। अप्रतिपादनमात्रेण विरुद्धस्वभावानपायात्। नापि द्वितीयः। विनाशकारणाभावेन तत्त्वमसीत्युक्त्या भस्मीकरणायोगात्। 'यः श्यामः स रक्तः' इत्यत्र श्यामरूपोपलक्षितस्य धर्मिणो रक्तरूपधर्मिणेव अज्ञत्वाद्युपलक्षितजीवचैतन्यस्य सार्वज्ञादिधर्मिणा चैतन्येनाभेदो नासंभावित इति चेत्। न। श्यामरूपधर्मिणो रक्तरूपधर्मिणश्च विरुद्धस्वभावत्वाभावेनैक्योपदेशस्य सम्भवेऽपि जीवब्रह्मचैतन्ययोः विरुद्धस्वभावत्वेन ऐक्योपदेशायोगात्। न हि विरुद्धस्वभावयोः जलानलयोर्भागत्यागेनैक्योपदेशो युक्तः। येनेह तथा स्यात्।

न च 'जीवेश्वरौ न विरुद्धस्वभावौ' इति वक्तुं युक्तम्। जीवस्य नियमेन दुःखभोक्तृत्वं ईश्वरस्य तन्नेति वैलक्षण्यस्य स्वभावविशेषमन्तराऽयोगात्।

न च कर्मयोगायोगाभ्यां तदुपपन्नमिति वाच्यम्। तदर्थमपि स्वभाववैलक्षण्यस्य अनुसर्तव्यत्वात्। उपाधिभावाभावयोरपि तदधीनत्वात्। सुखदुःखादीनां मिथ्यात्वात् न तदधिकरणत्वाय स्वभावविशेषोऽभ्युपगन्तव्यः इति चेत्। न। अनिर्वचनीयदुःखाद्यधिकरणत्वायैव स्वभावविशेषस्य अनुसर्तव्यत्वात्। अन्यथा ईश्वरस्य घटाद्यचेतनस्य च तत्स्यात्।

कस्तर्हि तत्त्वमसीति श्रुत्यर्थः इति चेत्। अभेदप्रतिनिधिः सादृश्यमेव तदर्थः इति गृहाण। तदुक्तं– 'सादृश्याभेदसंश्रयात्' इति। त्वयोदाहृतानि उपक्रमादिलिङ्गानि तु सादृश्यरूपगौणाभेद एव तात्पर्यग्राहकाणि; इति न तद्विरोधः।

**यदपि**— 'साक्षी चेता केवलो निर्गुणश्च' इति निर्गुणश्रुत्यभिधानम्। तदपि न। तस्य लौकिकगुणवैधुर्यपरत्वात्। अन्यथा साक्षी चेतेति साक्षित्व-ज्ञातृत्वरूपधर्मं विधाय 'निर्गुणः' इति गुणमात्रवैधुर्यप्रतिपादने व्याहतं स्यात्।

॥ इति ईश्वरस्यानन्तगुणपूर्णत्वसमर्थनम् ॥

**मणिकारस्तु**— 'एवमनुमाने निरूपिते तस्मात् जगन्निर्मातृपुरुषधौरेयसिद्धिः। क्षित्यादौ कार्यत्वेन घटवत् सकर्तृकत्वानुमानात्। 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ॥

संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः' इत्यादि श्रुतयः, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्यादिस्मृतयश्च भगवति मानत्वेन अनुसन्धेयाः' इत्याह ॥

**रुचिदत्तस्तु**– 'विश्वतश्चक्षुः– विश्वविषयकसाक्षात्कारवान् । विश्वतोमुखः– विश्वविषयक-वचनवान् । विश्वतो बाहुः– विश्वविषयकप्रयत्नवान् । विश्वतस्पात्–विश्वव्यापी । बाहुभ्यां–धर्माधर्माभ्यां, पतत्रैः– परमाणुभिः, संधमति–संयोजयति । किमर्थं इत्यत आह द्यावेति । द्यावेत्यूर्ध्व-लोकसप्तकं; भूमीत्यधोलोकसप्तकं उपलक्षितम् । समिति पदद्वयं, व्यवहिताश्चेति सूत्रेण, छन्दस्युपसर्गाणां व्यवधानाभिधानात् धमनजननाभ्यां अन्वीयते'; इति श्रुत्यर्थं आह ॥

**तन्न** । क्षित्यादिशब्देन अवच्छेदकविधुरेण घटादेरपि संग्रहापत्त्या तत्र च सकर्तृकत्वस्य सिद्धत्वेन अंशतः सिद्धसाधनात् । नित्यत्वेन त्वदभिमताकाशादेरपि ग्रहणापत्त्या अंशे बाधापाताच्च । आदिशब्दपरित्यागेन क्षितिमात्रं पक्षीक्रियते इति चेत् । न । तेन कर्तृमात्रसिद्धावपि ईश्वरत्वेन कर्त्रसिद्ध्या उद्देश्यासिद्धिप्रसङ्गात् ।

ननु क्षितिकर्तृत्वेन पुरुषमात्रसिद्धौ तस्यानन्यसाध्यक्षितिकर्तृत्वेन पुरुषधौरेयत्वसिद्धिरिति चेत् । न । कण्टकं भक्षयितुरुष्ट्रस्य कदलीफलभक्षणे सामर्थ्यादर्शनेन अशक्यकर्तृत्वस्य सर्वोत्तमत्वेन व्याप्त्य-भावात् ।

**यत्तु मणौ**– 'अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि पक्षीक्रियन्ते' इत्युक्तम् ।

**रुचिदत्तस्तु**– 'अत्र उपादानपदं स्वोपादानपरम् । तथा च स्वोपादानगोचरजन्यकृतिजन्याः घटादयः प्रसिद्धाः । तदन्यत्वे सति जन्यसमवेतत्वं पक्षतावच्छेदकम् । एतेन 'उपादानपदं यदि यत्किञ्चिदुपादानपरं तदाऽदृष्टाद्वारकरूपाद्युपादानमृदङ्गादिगोचरास्मदादिकृतिजन्यानां शब्दादीनां पक्षता न स्यात् । क्षित्याद्युपादानपरत्वेऽप्रसिद्धि'रिति परास्तम् । न चैवं अदृष्टाद्वारकेति विशेषणवैयर्थ्यम् । शब्दादीनां अदृष्टद्वारकरूपाद्युपादानमृदङ्गादिगोचरजन्यकृतिजन्यत्वेऽपि स्वोपादानगोचरजन्यकृतिजन्या-न्यत्वेन असंग्रहाभावात् इति वाच्यम् । तपोजन्यकालीशरीरनिष्ठगौररूपस्य पक्षतासिद्धये विशेषणस्या-वश्यकत्वात् । अन्यथा गौररूपस्य स्वोपादानीभूतकालीशरीरगोचरतपश्चरणलक्षणजन्यकृतिजन्यत्वात् तद्भिन्नत्वाभावेन पक्षता न स्यात् । ध्वंसे गोत्वादौ च अतिव्याप्तिवारणाय, समवेत-जन्यपदे' इत्याह ॥

**तन्न** । ईश्वरसिद्धेः पुरा जन्यमात्रस्य नियमेन जन्यकृतिजन्यत्वग्रहवतः क्षित्यादौ जन्यकृतिजन्यभिन्नत्वग्रहासंभवात् । उपायाभावेन जन्यत्वस्य गृहीतुमशक्यत्वाच्च । न हि आधुनिकानामादिकालोत्पन्नगिरिदर्यादीनां जन्यत्वग्राहकं प्रमाणमस्ति ।

न च सावयवत्वहेतुना जन्यत्वग्रहः । यदि सावयवत्वं नाम अवयवजन्यत्वं तदा पूर्वोक्तदोषानिस्तारः । अथ अवयवैः सहावस्थितत्वं, तर्हि घटावयवैः सहावस्थिते द्रव्यत्वादौ व्यभिचारः, इति पक्षद्वये बाधकसद्भावात् । एतेन 'सावयवत्वं स्वावयवैः सह वर्तमानत्वं' इति परास्तम् । अवयवानां स्वजनकत्वरूपस्वकीयत्वस्य गृहीतुमशक्यत्वात् ।

किं चेदं सकर्तृकत्वम् ? यदि पुरुषजन्यत्वं तदा सिद्धसाधनम् । अदृष्टद्वारा जीवानां तत्र कारणत्वात् । यदि च उपादानापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं तदापि सिद्धसाधनमेव । यत्किञ्चिदुपादानापरोक्षज्ञानचिकीर्षाकृतिमतां अस्मदादीनां अदृष्टद्वारा क्षित्यादिकारणत्वात् ।

**यदत्रोक्तं**— 'अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं सकर्तृकत्वं' इति । अदृष्टपदं प्रकृतकार्यजनकादृष्टपरम् । ततश्च प्रकृतकार्यजनकादृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं सकर्तृकत्वं इत्यर्थः ।

अदृष्टद्वारा क्षित्यादिजनकस्य यत्किञ्चिदुपादानहविरादिगोचरास्मदादिज्ञानादेः क्षित्यादिजनकादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वेन नास्मदादिजन्यत्वेन सिद्धसाधनता । घटादिजनककुलालज्ञानादिकं स्वस्मात् पश्चाद्भाव्यदृष्टप्रागभावव्याप्यप्रागभावप्रतियोग्येवेति घटादौ साध्याभावात् व्यभिचारः स्यात् । तत्परिहारार्थं प्रकृतकार्यजनकेत्यदृष्टविशेषणम् । घटजनकादृष्टस्य तु उपादानगोचरकुलालज्ञानादेः पूर्वमेव उत्पन्नत्वेन, 'यदा कुलालज्ञानादिप्रागभावः तदा घटजनकादृष्टप्रागभावः' इति व्याप्त्यभावात्, प्रकृतकार्यजनकादृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वमस्तीति न व्यभिचारः' इति ॥

**तन्न** । कृतिमज्जन्यमित्येतावतैव ईश्वरसिद्धिसंभवेन ज्ञानचिकीर्षाग्रहणवैयर्थ्यात् । अभिमतसिद्ध्यर्थं तद्ग्रहणे संयोगादिगुणग्रहणमपि स्यात् । तत्सिद्धेरप्यभिमतत्वात् । क्षित्यादिकार्याणां भिन्नभिन्नस्वसमसङ्ख्याककर्तृजन्यत्वेनापि कार्यत्वहेतोः संभवे ईश्वरासाधकतया अर्थान्तरत्वात् ।

**यदत्रोक्तं**— 'लाघवसहकृतेन कार्यत्वलिङ्गेन क्षित्यादीनामेककर्तृकत्वसिद्धौ ईश्वरसिद्धिः । यद्यपि नानुमानमात्रे लाघवं सहकारि तथापि यत्र प्रमाणे लघुगुरुविषयता संभवति तत्रैव लाघवस्य सहकारिता इति ।

**तन्न** । युगपदनेकदेशेषु जायमानानां अनेककार्याणां अनेककर्तृकताया एव दर्शनेन 'क्षित्यादिकं अनेककर्तृकं युगपदनेकदेशेषु जायमानानन्तकार्यत्वात् । युगपदनेकदेशेषु जायमानानेकघटवत्' इति मानविरुद्धेऽर्थे लाघवस्य सहकारित्वायोगात् । अन्यथा 'क्षित्यादिकं सोपादानं भावकार्यत्वात्' इति लाघवतर्कसहकृतेन अनुमानेन उपादानं सिध्यदेकमेव सिद्ध्येत् । यदि अनेकद्रव्याणां अनेकोपादानता-दर्शनेन क्षित्यादीनामनेकोपादानतासिद्धिः तर्हि युगपदनेकदेशेषु जायमानकार्यत्वादनेककर्तृकतासिद्धिः ।

किञ्च लाघवोपगृहीतेन अनुमानेन उपादानापरोक्षज्ञानचिकीर्षाकृतिमदेकजन्यत्वसिद्धावपि नेश्वर-सिद्धिः । क्षित्यादिकर्तुः सार्वज्ञासिद्धेः । धर्मिग्राहकमानेन उपादानगोचरज्ञानादिसिद्धावपि धर्माधर्मादि-गोचरज्ञानासिद्धेः । न हि धर्मादिकं कस्यचिदुपादानम् । येन तदपरोक्षज्ञानं क्षित्यादिकर्तुः सिद्ध्येत् । कर्तुश्च निमित्तकारणापरोक्षज्ञाननियमाभावात् । नापि धर्मादीनां कार्यत्वात् तदपरोक्षज्ञानसिद्धिः । कर्तुः कार्यापरोक्षज्ञाननियमाभावात् । कथमन्यथा देवदत्तो धर्माधर्मादिकं उत्पादयेत् ॥

**प्राञ्चस्तु**— 'यमर्थमनवलम्ब्यमाना अनुमितिः पक्षे साध्यसंबन्धं न विषयीकरोति सः पक्षधर्मताबलात् सिद्ध्यति । तदिह अनादिद्व्यणुकादिकार्यप्रवाहस्य पक्षत्वे तदुपादानगोचरज्ञानस्य अनादित्वं अविषयीकृत्य नोपादानगोचरज्ञानजन्यत्वं अनादिकार्यप्रवाहस्य अनुमितिः आलम्बते इति कर्तृज्ञानस्य अनादित्वसिद्धिः । अनादिभावत्वादेव च तस्य ध्वंसाप्रतियोगित्वं सिद्ध्यति । लाघवादेकत्वम् । द्व्यणुकादिकार्यप्रवाहकारणेषु सर्वप्रवेशात् सर्वविषयता च सिद्ध्यति' इत्याहुः ॥

**तन्न** । ज्ञानस्य अनादितामविषयीकृत्यैव ज्ञानप्रवाहस्यानादितां विषयीकृत्य अनादिप्रवाह-पतितानन्तकार्याणां अनादिप्रवाहपतितानन्तज्ञानचिकीर्षाकृतिमज्जन्यत्वस्य अनुमित्या विषयीकर्तुं शक्यत्वेन कर्तृज्ञानस्य अनादित्वासिद्धेः । अनादित्वासिद्धेरेव तन्मूलकनित्यत्वसिद्धिरपि परास्ता ।

यत्तु— 'द्व्यणुकाद्यनन्तकार्यकारणेषु सर्वप्रवेशात् तज्ज्ञानस्य सर्वविषयकत्वसिद्धिः' इति । तदपि न । कुलालजन्यघटादिकारणानां मृत्पिण्डादीनां द्व्यणुकादिकारणेषु अप्रवेशात् । घटादीनामपि पक्षत्वेन तत्कारणेषु मृत्पिण्डादिप्रवेशात् तज्ज्ञानसिद्धिरिति चेत् न । घटादेः सकर्तृकत्वस्य सिद्धत्वेन

सिद्धसाधनताप्रसङ्गात्। अथ मा भूद्घटादीनां पक्षकोटौ प्रवेशः। तथापि क्षित्यादिकर्तृज्ञानस्य घटादिविषयता दुर्वारा। ज्ञानस्य विषयनियमो हि कारणाधीनः। नित्याच्च पारमेश्वरज्ञानात् करणनिवृत्तौ विषयनियमनिवृत्तेरावश्यकत्वात् इति चेत्। न। तन्नित्यत्वासिद्धेरुक्तत्वात्।

अथ द्व्यणुकाद्यनन्तकार्यकर्तुः तदुपादानगोचरज्ञानसिद्धौ तस्य च अनन्तत्वे गौरवात् एकमेवानन्तोपादानविषयकं सिद्ध्यति। लाघवात्। तस्य च सादित्वे ततः पूर्वं कार्योत्पत्तिः न स्यात्। न चेष्टापत्तिः। कार्यप्रवाहस्य इदम्प्रथमताशून्यत्वात्। तथा च अनाद्येव तज्ज्ञानमभ्युपेयमिति चेत्। न। ज्ञानमात्रस्य अनित्यत्वदर्शनेन प्रमाणमनभिधाय लाघवमात्रेण तन्नित्वाभिधानायोगात्। अन्यथा द्व्यणुकाद्यनन्तकार्यकारणतयाऽदृष्टसिद्धौ तस्यैकत्वं लाघवात्; सादित्वे कार्यप्रवाहस्य इदम्प्रथमताप्रसङ्गेन अनादित्वं; एवं अनन्तकार्यप्रागभावानां एकत्वं इत्यपि स्यात्।

अनन्तार्थप्रतिपादकवेदनिर्मातृत्वेन तस्य सार्वज्ञसिद्धिरिति चेत्। न। वेदनिर्मातृत्वेनैव ईश्वरसिद्धिसंभवे क्षित्यादिपक्षकानुमानवैयर्थ्यात्। वेदेनैव सार्वज्ञाद्यनन्तगुणपूर्णेश्वरसिद्धिमनभिधाय असिद्धेन वेदकर्तृत्वेन सार्वज्ञसाधनायोगाच्च। वेदापौरुषेयत्वस्य वक्ष्यमाणत्वेन ईश्वरे तदभावात्। ईश्वरसार्वज्ञसिद्धिः पुरा त्वन्मते वेदप्रामाण्यासम्भवेन वेदकर्तृत्वेन सार्वज्ञस्य साधनायोगाच्च।

ननु कार्यत्वहेतोः पक्षधर्मताबलात् क्षित्यादिकर्तुः ज्ञानं नित्यमेव सिद्ध्यति। न च बुद्धिरनित्यैवेति व्याप्तिग्राहकप्रत्यक्षेण प्रतिबन्धात् नानुमानेन नित्यज्ञानसिद्धिरिति वाच्यम्। तस्य अस्मदादिबुद्धिमात्रविषयकत्वेन भिन्नविषयत्वात्। एकविषयविरोधिज्ञानस्यैव प्रतिबन्धकत्वात्। नित्यत्वानित्यत्वयोः एकजातीयद्रव्येऽविरोधात् इति चेत्। न। कार्यत्वहेतोः क्षित्यादिकर्तृज्ञानस्य नित्यत्वमन्तरापि पक्षधर्मत्वसम्भवेन पक्षधर्मताबलेन ज्ञाननित्यत्वसिद्ध्ययोगात्। न हि येन विना यस्य पक्षधर्मत्वं नानुपपन्नं तत्पक्षधर्मताबलेन तत्सिद्धिः युक्ता। अन्यथा कार्यत्वहेतोः पक्षधर्मताबलात् ईश्वरस्य शृङ्गित्वं सिद्ध्येत्। अविशेषात्।

**यदपि**— ज्ञानमनित्यमेवेतिव्याप्तिग्राहकप्रत्यक्षविरोधमाशङ्क्य तस्य भिन्नविषयत्वेनाप्रतिबन्धकत्वाभिधानम्। तदपि न। सामान्यलक्षणप्रत्यासत्त्या सर्वोपसंहारेण व्याप्तिग्राहकप्रत्यक्षस्य ईश्वरानीश्वरज्ञानमात्रविषयकत्वेन भिन्नविषयकत्वाभावात्। एवं कृतेः चिकीर्षायाः अपि न नित्यत्वसिद्धिः। कृतेः चिकीर्षाजन्यत्वस्य, चिकीर्षायाश्च ज्ञानजन्यत्वस्य अवधारणात्।

अपि च चिकीर्षाकृत्योः नित्यत्वे ततः पूर्वमेव तत्स्यात् । चिकीर्षाकृत्योः पूर्वमपि भावात् । पारमेश्वरचिकीर्षाकृत्योः मोघत्वायोगात् । चिकीर्षाकृत्योः पूर्वं सद्भावेऽपि पृथिव्यादिविषयकत्वाभावात् न नियतकालात् पूर्वं पृथिव्याद्युत्पत्तिः इति चेत् । न । चिकीर्षाकृत्योः तत्तद(द्)विषयकत्वस्य स्वाभाव्येन पूर्वमपि सत्त्वात् ।

ननु सृष्टिकालाभावात् न पूर्वं सृष्टिः इति चेत् । न । काले स्वाभाविकविशेषस्य त्वया अनङ्गीकारात् । कालस्तु अखण्डः एक एव । सृष्ट्याद्युपाधिवशात्तु सृष्टिकालः इत्यादिरूपेण उपचर्यते इति त्वया अङ्गीकारात् । एवं क्षित्याद्युत्पत्त्यनन्तरमपि चिकीर्षादिसद्भावे परमेश्वरो मूढः स्यात् । पामरोऽपि कार्यसिद्ध्यनन्तरं न चिकीर्षाकृतिमान् दृश्यते । कथं नाम परमेश्वरः तद्वान् स्यात् ।

अपि च कृतेः नित्यत्वे ज्ञानचिकीर्षे न स्याताम् । तयोः साक्षात् व्यापाराभावात् ।

अथ यदि स्वतन्त्रान्वयव्यतिरेकसद्भावात् कृतिवत् ज्ञानचिकीर्षयोः आवश्यकत्वं अभ्युपगम्यते तर्हि प्रसिद्धांकुरादिषु अन्वयव्यतिरेकाभ्यां देहस्य कारणतावधारणात् पक्षीकृतांकुरादीनामपि कारणतया देहसिद्धिः स्यात् । न चेष्टापत्तिः । त्वया विग्रहानङ्गीकारात् ।

यत्तु— 'स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं सकर्तृकत्वं' इति । **तत्र वक्तव्यम्**— अत्र उपादानपदेन स्वोपादानं विवक्षितं उत यत्किंचिदुपादानं विवक्षितम् ? नाद्यः । स्वजनकादृष्टोत्तरेति विशेषणवैयर्थ्यापातात् । क्षेत्रज्ञानां क्षित्याद्युपादानगोचरज्ञानाभावेन तज्जन्यत्वेन सिद्धसाधनताप्रास्त्यभावात् । न च कालीयभाविरूपोपादानभूतकालीदेहगोचरापरोक्षज्ञानचिकीर्षाकृतीनां अदृष्टद्वारा कालीरूपं प्रति कारणत्वेन कालीरूपे स्वोपादानापरोक्षज्ञानचिकीर्षाकृतिमत्कालीजन्यत्वस्य सिद्धत्वेन सिद्धसाधनतापरिहाराय तद्विशेषणमिति वाच्यम् । कालीरूपातिरिक्तस्यैव पक्षीकरणसंभवे कालीरूपं पक्षीकृत्य सिद्धसाधनतावारणाय विशेषणदानस्य अयुक्तत्वात् । अन्यथा घटादिकमपि पक्षीकृत्य क्षेत्रज्ञेन सिद्धसाधनतावारणाय विशेषणान्तरं देयं स्यात् ।

न द्वितीयः । सार्वज्ञादिवैशिष्ट्येन ईश्वरसिद्धये स्वोपादानगोचरज्ञानादिमज्जन्यत्वस्यैव साधनीयत्वेन यत्किञ्चिदुपादानगोचरज्ञानादिमज्जन्यत्वस्य असाधनीयत्वात् । यदपि— 'कार्यत्वात्' इति हेत्वभिधानम् । तदपि न । साध्याभाववद्ध्वंसगामित्वेन व्यभिचारित्वात् ।

**यदत्रोक्तं**– 'समवेतत्वे सति प्रागभावप्रतियोगित्वं कार्यत्वं' इति । तदपि न । समवायस्य अप्रामाणिकत्वेन असिद्धेः । विशेषणवैव्यर्थ्याच्च । न च ध्वंसे व्यभिचारपरिहारार्थं तत् । अभाव-प्रतियोगिकाभावानङ्गीकारेण ध्वंसे प्रागभावप्रतियोगित्वस्य अभावात् । औपचारिकघटादिरूपप्राग-भावप्रतियोगित्वमादाय व्यभिचारमाशङ्क्य तत्परिहाराय विशेषणदानायोगात् । 'क्षित्यादिकं त्रिकर्तृकं । शरीराजन्यत्वात् । आत्मवत्' इति सत्प्रतिपक्षत्वाच्च ।

**यदत्रोक्तं**— 'नेश्वरसाधकानुमानस्य अनेन प्रतिपक्षो युक्तः । भिन्नविषयत्वात् । तथा हि । शरीराजन्यत्वानुमानं प्रसिद्धकर्तृजन्यत्वाभावमेव साधयति । न तु अप्रसिद्धकर्तृजन्यत्वाभावम् । अप्रसिद्धकर्तृजन्यत्वस्य अप्रसिद्धत्वेन तदभावस्य निरूपयितुमशक्यत्वात् । स्थापनानुमानं तु पक्षधर्मता-बलात् अप्रसिद्ध(द्धं)कर्तृजन्यत्वं अनुमापयति । व्यक्तिसाधकस्य विशेषतः अप्रसिद्धव्यक्तिसाधकत्व-नियमात् । अन्यथा अनुमानवैयर्थ्यात् ।

किञ्च– क्षित्यादौ शरीराजन्यत्वं असिद्धम् । अदृष्टद्वारा तज्जन्यत्वात् । अपि च शरीराजन्यत्वे व्यर्थविशेषणत्वम् । लाघवेन अजन्यत्वस्यैव व्याप्यत्वात् । तत्परित्यागे च स्वरूपासिद्धिः । तद्ग्रहणे च व्याप्यत्वासिद्धिः' इति ॥

**तन्न** ॥ यत्र शरीरजन्यत्वाभावः तत्र कर्तृजन्यत्वाभावः इति सर्वोपसंहारेण व्याप्तिग्रहसहकृतेन शरीरजन्यत्वाभावरूपलिङ्गेन प्रसिद्धाप्रसिद्धप्रतियोगिकसामान्याभावस्यैव साधनेन भिन्नविषयत्वाभावात् । अन्यथा 'वायू रूपाभाववान्महत्त्वे सत्यचाक्षुषत्वात्' इत्यनेनापि वायौ परिचितापरिचितरूपसामान्याभावो न सिध्येत् । तत्र प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिज्ञानमात्रस्य अभावनिरूपकत्वात् रूप-सामान्याभावसिद्धिरिति चेत् । मोच्चैर्वोचः । परोऽपि श्रोष्यति । अत एवाप्रसिद्धकर्तृजन्यत्वस्या-प्रसिद्धत्वेन तदभावस्य निरूपयितुमशक्यत्वादिति परास्तम् । प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रति-योगिज्ञानस्यैव सामान्याभावबुद्धिहेतुत्वात् ।

**यदपि**— 'शरीरजन्यत्वस्य असिद्ध्यभिधानं; तदपि न । क्षेत्रज्ञशरीरस्य अदृष्टजननोपक्षीणत्वेन क्षित्याद्यहेतुत्वात् । न हि कल्पान्तरभाव्यनन्तक्षेत्रज्ञशरीराणां क्षित्यादिहेतुत्वे मानमस्ति । येन अदृष्ट-द्वारा शरीरजन्यत्वं क्षित्यादेः स्यात् । यदपि— शरीराजन्यत्वहेतोः व्यर्थविशेषणत्वमुक्तम् ; तदपि न । शरीरजन्यत्वाभावस्य इह हेतुत्वेन विवक्षितत्वात् । अखण्डाभावरूपत्वे च हेतौ विशेषणस्यैव अभावात् ।

**यदत्रोक्तम्** — 'नाखण्ड: शरीरजन्यत्वाभावो हेतु: । व्याप्तिवैधुर्यात् । यदि हि शरीरजन्यत्वं सकर्तृकत्वे प्रयोजकं स्यात् तदा तदभावप्रयुक्त: सकर्तृकत्वाभाव: इति तस्य साध्यव्याप्यता स्यात् । न चैवम् । किंतु जन्यत्वं लाघवात् तथा । तथा च अजन्यत्वमुपाधि: । स्थापनानुमानसाध्यव्याप्याभाव: स्थापनानुमानसाध्याभावव्यापक: इति नियमेन तस्य प्रतिपक्षानुमानसाध्यव्यापकता. निश्चयात् । स्थापनानुमानसाध्याभावस्यैव प्रतिपक्षानुमानसाध्यत्वात् सकर्तृकत्वशरीरजन्यत्वयो: व्याप्यभावेन तदभावयोरपि व्याप्यभाव: इति व्याप्यत्वासिद्धत्वाच्च' इति ।

**तदपि न** । शरीरजन्यत्वस्यैव सकर्तृकत्वे प्रयोजकत्वेन तदभावस्य सकर्तृकत्वाभावेन व्याप्ति: दुरपह्नवत्वात् । कर्ता हि शरीरावच्छिन्न एव कार्यं करोति । मृतस्य कार्यादर्शनात् । न च शरीरप्रेरणां अशरीर एव देवदत्त: करोतीति वाच्यम् । मृतस्य शवप्रेरकत्वादर्शनेन सशरीरस्यैव शरीरप्रेरकताया: वक्तव्यत्वात् । न हि कर्तु: कार्यजनकतायां यत्सहकारिभूतं शरीरं तज्जन्यं न भवति, भवति च तज्जन्यं इति सम्भवति । कुलालसहकारिभूतचक्राद्यजन्यत्वेऽपि घटस्य कुलालजन्यत्वप्रसङ्गात् । सत्यपि शरीरे शरीरव्यापाराभावात् सुप्तो मुग्धो वा न कर्ता भवति इति शरीरं कर्तु: कर्तृतायां प्रयोजकम् । शरीरमङ्गं पुरुषोऽङ्गी इति लौकिकपरीक्षकव्यवहारश्च शरीरस्य कर्तु: कार्यमात्रे सहकारितां गमयति । स्मृतिसिद्धं च शरीरस्य अङ्गत्वम् । 'अङ्गमङ्गी समादाय यथा कार्यं करोत्यसौ' इति ।

अथ वा मा भूत् शरीरजन्यत्वं सकर्तृकत्वे प्रयोजकम् । तथापि शरीरजन्यत्वाभावस्य सकर्तृकत्वाभावेन गगनादौ अव्यभिचरितसहचारदर्शनेन व्याप्ति: सिद्धा भविष्यति ।

**यदपि**– अजन्यत्वं उपाधिरिति । तदपि न । साध्यव्यापकत्वाभावेन अनुपाधित्वात् । उपादानाभावेन उपादानापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वरूपसकर्तृकत्वाभाववति ध्वंसे अजन्यत्वाभावात् ।

'मा भूत् अनेनानुमानेन ईश्वरसिद्धि: । अपि तु– 'क्षित्यादिकं कारणगोचरापरोक्षज्ञानादिमज्जन्यम् । कार्यत्वात्' इत्यनेन ईश्वरसिद्धि: । तथा च अस्मद्विवक्षितसकर्तृकत्वस्य ध्वंसेऽपि भावेन साध्यव्यापकत्वात् भवेदेवायं उपाधि: अकर्तृकत्वसाध्यके प्रतिपक्षानुमाने इति चेत् । न । क्षित्यादिकं नोपादानगोचरापरोक्षज्ञानादिमज्जन्यं; शरीरजन्यत्वाभावात् इत्यनुमानेन परमेश्वरसिद्धिविघातानिस्तारात् । पूर्वानुमानेन कारणगोचरज्ञानादिमत्सिद्धौ अनेनानुमानेन च पर्यवसानगत्या क्षित्यादिकर्तृत्वेन सिद्धस्य उपादानज्ञानासिद्धौ तस्यानीश्वरत्वानपायात् ।

अस्तु वा पूर्वानुमानेन क्षित्यादिकारणगोचरापरोक्षज्ञानसिद्धिः । अथापि तस्य घटादिकारणगोचरज्ञानासिद्ध्या अनीश्वरत्वमेव । न हि क्षित्यादिजनक एव घटादिजनकः इत्यत्र किञ्चिन्मानम् । येन घटादिकारणज्ञानसिद्धिः तस्य स्यात् ।

यदपि– 'विश्वतश्चक्षु'रित्यादि श्रुत्या, 'उत्तमः पुरुषस्त्वन्यः' इत्यादिस्मृत्या चेश्वरसिद्धिः' इति । तदपि न । आगमप्रणेतुः सार्वज्ञ्यादिरूपपारमैश्वर्यसिद्धौ आगमप्रामाण्यसिद्धिः । तत्सिद्धौ च सार्वज्ञ्यादिसिद्धिरित्यन्योन्याश्रयात् । उदाहृतश्रुत्या सशरीरेश्वरसिद्धावपि त्वदभिमताशरीरेश्वरासिद्धेश्च । यत्तु कश्चिदत्रायं– विश्वतश्चक्षुरित्यादिपदानां विश्वविषयकसाक्षात्कारवानित्यादिलाक्षणिकार्थपरत्वेन व्याख्यानम् । तदपि न । मुख्यार्थबाधकाभावात् । प्राकृतदेहस्य दुःखाद्यापादकत्वेऽपि चिदानन्दाद्यात्मकप्राकृतदेहस्य तदनापादकत्वात् ॥

## ॥ इति मण्युक्तेश्वरसाधकमानभङ्गः ॥

अयं चेश्वरः न मायावाद्युक्तरीत्या निर्गुणः । 'गुणाः श्रुताः सुविरुद्धाश्च देवे' इति श्रुतिविरुद्धत्वात् । नापि तार्किकोक्तरीत्या अष्टगुणः । 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इत्यादिस्मृतिविरुद्धत्वात् । अपि तु ज्ञानाद्यनन्तगुणयोगी विचित्रशक्तिः अघटितघटनास्वभावः । अत एव श्रुत्युक्तं सृष्ट्यादिकर्तृत्वमुपपन्नं भवति । विचित्रशक्तिवैधुर्ये च श्रुतिप्रतिपन्नस्यापि सृष्ट्यादिकर्तृत्वस्य निश्चयो न स्यात् । 'उत्ताना वै देवगवाः वहन्ति' इति श्रुतिप्रतिपन्नस्यापि उत्तानानां देवगवानां वाहकत्वस्य अपवाददर्शनात् ।

ननु न परमेश्वरस्य सर्वकारणत्वम् । घटादौ कुलालादीनामपि कर्तृत्वस्य अनुभवसिद्धत्वात् । 'आत्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी' इति वाय्वादीनां आकाशादिजन्यत्वश्रवणात् । न चाकाशादीनि उपादानकारणानि । अतः तज्जन्यत्वश्रुतावपि नेश्वरकारणत्वहानिः । ईश्वरान्यस्य कर्तुरश्रवणादिति वाच्यम् । 'आत्मन आकाशः संभूतः' इति निमित्तकारणप्रायपाठात् ।

अस्तु वा आकाशादीनामुपादानत्वम् । तथापि नेश्वरे कुलालादिवैलक्षण्येन स्वातन्त्र्येण कर्तृता । साधनसापेक्षकर्तृत्वात् । न जातुचिदीश्वरः इष्टं कालं, अधिष्ठानं, उपादानं, करणं वा विहाय कार्यं करोति । येन स्वतन्त्रकर्ता स्यात् । अवश्यं चेश्वरस्य अदृष्टाद्यधीनत्वं अभ्युपेयम् ।

कथमन्यथा निर्निमित्तं कांश्चित् सुखयन्, कांश्चिद् दुःखयन्, विषमो निर्घृणश्च न स्यात् । वैषम्य-नैर्घृण्यादिदोषित्वे च दुःखी स्यात् । दोषस्य दुःखहेतुत्वात् । फलदातुरीश्वरस्य पुण्यपापानपेक्षत्वे च पुण्यस्य स्वर्गादिहेतुताप्रतिपादकस्य पापस्य नरकादिहेतुताप्रतिपादकस्य वेदस्य अप्रामाण्यं स्यात् । तदप्रामाण्ये च ज्ञानादिगुणप्रतिपादकवेदभागस्यापि अप्रामाण्यापत्त्या नेश्वरस्यापि सिद्धिः स्यात् । न हि अपौरुषेयत्वाविशेषे काचन श्रुतिः प्रमाणं, काचन अप्रमाणं इति संभवति । अत एवास्याघटित-घटनासामर्थ्यमपहस्तितं भवति । परतन्त्रस्य तदयोगात् । अघटितघटनाऽसंभवाच्च । अघटितत्वे घटनस्य, घटने च अघटितत्वस्य चायोगात्; इति चेत् ॥

**उच्यते**— भवत्येवेश्वरो जगत्कर्ता । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति' इति श्रुतेः । न च जीवकारणतानुभवविरोधः । जीवस्यापि अस्वतन्त्रकर्तृत्वाङ्गीकारात् । न हि दारुप्रतिमाजन्यतयाऽनुभूयमानं चलनादिकं तन्मात्रजन्यम् ; येन जीवस्यैव घटादिकर्तृत्वं नेश्वरस्येति स्यात् । किं नाम चेष्टकपुरुषजन्यम् । न च जीवः स्वतन्त्रोऽभ्युपगन्तुं युक्तः । हिता-करणाहितकरणयोः अभावप्रसङ्गात् । 'न ऋते त्वत्क्रियते किञ्चनारे' इति सर्वस्य भगवन्नियम्यत्वोक्तेश्च ।

एतेनैव यदुक्तं— 'आकाशादीनां वाय्वादिकारणत्वश्रवणात् नेश्वरस्य सर्वकारणत्वं' इति; तत्परास्तम् । तत्र आकाशादीनां ईश्वरप्रेरितानां वायुप्रभृत्युपादानत्वस्य. आकाशादिप्रविष्टस्य आका-शादिशब्दवाच्यस्य भगवतो निमित्तत्वस्य च अभिधानात् । तत्सृष्ट्वा तदेवानुप्राविशदिति. आकाशादीन् सृष्ट्वा. नियमनाय भगवतः तत्र प्रवेशाभिधानात् । न च ईश्वरस्यापि उपादानादृष्टादिसापेक्षत्वात् न स्वातन्त्र्यम् । तेन विना स्रष्टुं समर्थस्य लीलया तदुपादानस्य सामर्थ्याविघटकत्वेन स्वातन्त्र्याविरोधि-त्वात् । न हि गतिसमर्थो मल्लराजो लीलया दण्डमवष्टभ्य गच्छन् दण्डायत्तगतिः भवति । येन परमेश्वरः दृष्टादृष्टसाधनाधीनसृष्टिः स्यात् । साधनानि विहाय स्रष्टुं समर्थत्वात् । उक्तं च—

'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।
साधनानां साधनत्वं यतः किं तस्य साधनैः' इति ।

ननु साधनानि विहाय ईश्वरः कर्तुं समर्थः; इत्ययुक्तम् । क्लृप्तेषु उपादानादिसाधनेषु किञ्चित् विहाय स्रष्टृत्वस्य क्वाप्यदर्शनादिति चेत् । न । उपादानं विना सर्जकत्वस्य बहुलमुपलम्भात् । तथा हि— अस्ति तावत् द्वित्व-त्रित्वादिरूपा संख्या अपेक्षाबुद्धिजन्या । न च तस्याः संख्यायाः उपादानं दृश्यते । न च गुण्येव द्वित्वादिसंख्योपादानं इति युक्तम् । विनष्टयोरपि घटपटयोः अपेक्षाबुद्ध्या द्वित्वोत्पाददर्शनात् ।

न च धर्मिविनाशानन्तरं धर्मोत्पाद एवासंभावितः इति वाच्यम् । तस्य प्रतियोगित्वादिवत् धर्मिसत्तानिरपेक्षधर्मत्वेन धर्मिविनाशानन्तरं उत्पत्तौ बाधकाभावात् । न चान्यदेव किञ्चिदुपादानं कल्प्यम्; कल्पकस्याभावात् । न च जन्यभावस्य सोपादानत्वनियमात् उपादानं कल्प्यते इति वाच्यम् । नियमस्य प्रायिकत्वात् । अन्यथा जन्यमात्रस्य सोपादानत्वनियममङ्गीकृत्य ध्वंसस्याप्युपादानं कल्प्यं स्यात् । उपादानं विनाऽपि ध्वंसोत्पत्तिदर्शनात् न कार्यमात्रस्य सोपादानत्वम् । किन्तु भावकार्यस्येति चेत् । उपादानं विनाऽपि द्वित्वादिभावोत्पत्तेः दर्शनात् न जन्यभावमात्रस्य सोपादानत्वं; अपि तु तद्विशेषस्य; इति किं नाभ्युपगम्यते ।

**किञ्च**— 'तत् श्रुत्वा तेऽतिसन्त्रस्ताः विमुच्य सहसोदरम् । सांबस्य ददृशुः तस्मिन् मुसलं खल्वयस्मयम् ॥' इति विप्रशापेन सद्यो मुसलोत्पत्तिः श्रूयते । न च तस्योपादानादिकं दृश्यते इति निरुपादानैव तत्सृष्टिः । एवं द्यूतसमये अनन्तवस्त्रोत्पत्तिः द्रौपद्याः स्मर्यते । न चोपादानं दृश्यते इति निरुपादानैव सा सृष्टिः । एवं कामधेनुप्रभृतीनां प्रासादोद्गिरणादिकं स्मर्यते । उपादानानुपलम्भात् सापि निरुपादानैव । सौभरिप्रभृतीनां तपःप्रभावात् अनेकप्रासादोत्पत्तिः सद्यः श्रूयते । उपादानादर्शनात् सापि सृष्टिः निरुपादानैव । न चोदाहृतेषु किञ्चिदुपादानं कल्पयितुं शक्यम् । कल्पकाभावात् । अप्रामाणिकानेकोपादानकल्पनापेक्षया जन्यभावोत्पत्तेः उपादानपूर्वकत्वनियमस्य लाघवात् प्रायिकत्वाङ्गीकारस्यैव युक्तत्वाच्च ।

एवं श्रोत्रं विनापि चक्षुषैव सर्पादिभ्यः श्रावयति । पादौ विनैव गमयति इत्यचिन्त्यशक्तिः परमेश्वरस्य सिद्ध्यति । एवं आदर्शादौ गजतुरगादिप्रतिमां विनैवोपादानं उत्पादयतीति अचिन्त्यमहिमा विष्णुः । न च दर्पणमेव तस्योपादानम् । दर्पणस्य अविकृतत्वात् । दर्पणवैलक्षण्येन बाह्यगजवत् त्वगाद्यात्मकत्वदर्शनात् । न च प्रतिबिम्बस्य मिथ्यात्वेन सृष्ट्यभावः । सूर्यकान्तशिलादौ सूर्यादिप्रतिबिम्बस्य अग्निजनकत्वेन अर्थक्रियाकारित्वात् ।

**किञ्च**– गजादिकं लोहोपादानद्रव्यान्तरवत् तदुपादानकं उत तद्विलक्षणम्? नाद्यः । त्वचोपलम्भप्रसङ्गात् । त्वचाऽनुपलम्भे कारणाभावात् । दर्पणक्रियामन्तरा हस्तपादक्रियाभावप्रसङ्गात् । कर्माराग्निव्यापारं विनोत्पादाभावप्रसङ्गाच्च । लोहोपादानकगजादौ कर्मारव्यापारदर्शनात् । कर्मारकृतलोहोपादानकगजादौ लोहत्वानुभववत् प्रतिबिम्बिते लोहत्वानुभवप्रसङ्गाच्च । न द्वितीयः । लोहोपादानकद्रव्यान्तरवैलक्षण्ये दर्पणोपादानकत्वायोगात् ।

यदि उपादानं विनापि परमेश्वरः स्रष्टुं समर्थः तर्हि प्रकृत्या सत्वरजस्तमोगुणान् गुणैश्च महत्तत्त्वं इत्यादिसृष्टिं न कुर्यादिति चेत् । न । प्रकृत्यादीनां कार्यकारणभावप्रतिपादकागमप्रामाण्याय प्रकृत्यादीन् उपादानीकृत्य सृष्टिंकरोतीत्यङ्गीकारात् ।

तस्मात् यस्य उपादानसद्भावे प्रमाणमुपलभ्यते तत्सोपादानं कार्यमभ्युपेयम् । यदुपादाने प्रमाणं नास्ति ध्वंसवत् तन्निरुपादानमेवाभ्युपेयम् । अन्यथा ध्वंसस्यापि किञ्चिदुपादानं कल्प्यं स्यात् ।

**यच्चोक्तं**— 'अवश्यं ईश्वरस्य अदृष्टाद्यधीनत्वमभ्युपेयम् । अन्यथा वैषम्यनैर्घृण्ये स्यातां' इति । तदपि न । श्रुत्यादिप्रामाण्यसंरक्षणाय स्वाधीनावेव धर्माधर्मौ निमित्तीकृत्य फलदातुरीश्वरस्य पारतन्त्र्याभावात् । न हि स्वाधीनामेवामात्यं पुरतः कृत्वा प्रवर्ततो गजः पारतन्त्र्यं भवति । येनेह तथा स्यात् । न च स्वाधीनावेव धर्माधर्मौ आदाय सुखादिदातुः ईश्वरस्य पुनर्वैषम्यनैर्घृण्ये स्यातामिति वाच्यम् । इष्टत्वात् ।

**तथाहि** -- किं वैषम्यनैर्घृण्यरूपमापाद्यं अप्रामाणिकत्वादनिष्टम् ? उत प्रामाणिकहानरूपत्वात् ? नाद्यः । वेदप्रामाण्यानापादकवैषम्यनैर्घृण्यस्य प्रामाणिकत्वात् न द्वितीयः । प्रामाणिकापलापरूपत्वाभावात् । उक्तं च सूत्रकृता -- 'उपपद्यते चाप्युपलभ्यते च' इति । न च प्रामाणिकत्वेऽपि अधर्मापादकत्वादनिष्टत्वम् । नित्यमुक्तस्य तदनापादकत्वात् । तद्दर्शनमात्रेण कर्मलेपो यदा प्रणिनां निवर्तते तदा न तस्य कर्मलेपः इति किमु वक्तव्यम् । अन्यथा सर्वसंहर्तृत्वमपि नाभ्युपेयं स्यात् । वैषम्यनैर्घृण्यादपि अतिशयेन संहर्तृत्वस्य अधर्मापादकत्वात् ।

ननु प्रतिबिम्बस्य उपादानाभाववर्णनं तत्त्वनिर्णयटीकाविरुद्धम् । 'यथा बिम्बसन्निधिरादर्शपरिणतिहेतुः एवं तदपायोऽपि विपरीतपरिणतिहेतुः । विपरीतपरिणतिहेतौ च प्रतिबिम्बगर्भितता नश्यत्येव' इत्यभिधानात् इति चेत् । न । तत्त्वनिर्णयटीकाया अङ्गीकारवादेन प्रवृत्तत्वेनादोषत्वात् । अत एव 'यथा हि सुवर्णरजतादीनां मूषाग्निसन्निधाने लब्धद्रवावस्थानां तदपाये पुनः घनीभावः तथाऽत्रापि किं न स्यादि'त्युक्तम् । अन्यथा 'अत्रापि भवती'त्यवक्ष्यत् ।

ननु यदि निरुपादानाऽपि सृष्टिः क्वचित् स्यात् तर्हि निरुपादानत्वेन स्वाप्नपदार्थानामसत्त्वमाशंक्य वासनोपादानकत्ववर्णनं सिद्धान्ते न स्यात् इति चेत् । न । स्वप्नपदार्थानां वासनोपादानकत्वे प्रमाणसद्भावेन प्रामाणिकवासनोपादानकत्वेनैव समाधानाभिधानस्यैव युक्तत्वात् । न हि निरुपादानं किञ्चिद्दृष्टमिति सोपादानमपि निरुपादानत्वेन वक्तुं युक्तम् । येन स्वाप्नपदार्थस्य निरुपादानत्वमङ्गीकृत्य

निरुपादानकत्वेऽपि ध्वंसवत् सत्यत्वं सूत्रकारः समादध्यात् । ननु 'युक्तेः शब्दान्तराच्च । पटवच्च' इति सूत्रद्वयेन ईश्वरसृष्टिमात्रस्य ईश्वरातिरिक्तसाधनजन्यत्वस्य अभिहितत्वात् तद्विरोधः इति चेत् न । सूत्रद्वयस्य महदादीश्वरसृष्टिविषयत्वेन विद्यातपोदेवताप्रसादजन्यकार्यविषयत्वाभावात् । अगस्त्येन समुद्रपानस्य कारितत्वात्, सीताऽऽभरणादेः द्विधाकृतत्वात्, कामधेनु-कल्पवृक्ष-चिन्ताम-ण्यादीनां विचित्रकार्यकारितायाश्च कृतत्वात् अघटितघटकत्वसिद्धिः ।

**यदत्रोक्तं**— 'अघटितत्वं चेत् न घटना । घटना चेत् नाघटितत्वं इति व्याघातः' इति । **तन्न** । अन्यैरघटितस्येश्वरेण घटनाऽङ्गीकारात् ॥

## ॥ इति ईश्वरस्याचिन्त्यैश्वर्यसमर्थनम् ॥

यथा परमेश्वरोऽनन्तशक्तिमान् तथाऽन्ये चेतनाः अचेतनाश्च स्वस्वकार्यानुकूलशक्तिमन्तः । इयांस्तु विशेषः । परमेश्वरोऽनन्ताघटितकार्यहेतुत्वात् अनन्तशक्तिः, अन्ये कतिपयकार्यहेतुत्वात् अल्पशक्तिमन्तः ।

ननु न शक्तिर्नाम पदार्थो विद्यते । सहकारिवशादेव कार्योत्पत्तिसम्भवात् । ननु यादृशादेव करतलानलसंयोगात् दाहो जायते तादृशादेव मणिसमवधाने न जायते इत्यनुभवसिद्धम् । न च तत्कार्याजनकत्वं मणेः वह्निनिष्ठशक्तिप्रतिबन्धकत्वं विना सम्भवतीति मणिप्रतिबध्या शक्तिः अभ्युपगन्तव्या इति चेत् । न । मण्यभावस्य कारणत्वेन कारणाभावादेव कार्याभावोपपत्तौ शक्तेः तत्प्रतिबन्धकत्वस्य वा अप्रकल्प्यत्वात् । न च वन्ध्यास्त्रीसंप्रयोगे अपत्योत्पादो न दृश्यते । अन्यासु च दृश्यते इति तद्वैलक्षण्याय, वन्ध्यासु नापत्यजननशक्तिः, अन्यासु अपत्यजननशक्तिरस्तीत्यभ्युपेयम् । दुरदृष्टस्य प्रतिबन्धकत्वेन वन्ध्यास्वपत्याभावोपपत्तेः । न च 'दुरदृष्टस्य प्रतिबन्धकत्वान्यथानुपपत्त्यैव शक्तिः सिध्यति । कारणशक्तिविघटकस्यैव प्रतिबन्धकत्वात्' इति वाच्यम् । कारणीभूतस्वाभाव-विघटकत्वेनैव प्रतिबन्धकत्वसम्भवे कारणेषु शक्तिं प्रकल्प्य तद्विघटकत्वाङ्गीकारायोगात् । अत एव हि सर्वेऽपि लौकिकाः परीक्षकाश्च 'सर्वाऽपि सामग्री वृत्ता; अस्य दुरदृष्टवशात्तु कार्यं न जातं' इति वदन्ति । 'प्रतिबन्धकीभूतदुरदृष्टनिवृत्तये च अश्वत्थसेवादिकं आचरन्ति' इति चेत् ।

अत्रोच्यते - 'अस्त्येव पदार्थेषु शक्तिर्नाम पदार्थः । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । आत्मा हि परमः स्वतन्त्रः सर्ववित् सर्वशक्तिः परमसुखः परमो जीवः

तद्वशोऽल्पज्ञोऽल्पशक्तिरार्तोऽल्पकः' इत्यादिश्रुतेः । 'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन्' [तत्तच्छक्तिप्रबोधकः] इत्यादिस्मृतेः । दण्डादिः घटोत्पादनशक्तिमान् । तज्जनकत्वात् । यन्नैवं तन्नैवं यथा रासभादिः इत्यादियुक्तेश्च ।

किञ्च यः पाषाणादिः दृढांगेन विंशतिवार्षिकेण उद्ध्रियते, नासौ बालेन उद्ध्रियते इत्यनुभवसिद्धम् । तदेतद् वैषम्यं शक्त्यशक्तिकृतमेव । 'अयमस्योद्धरणे शक्तो नायं' इति व्यवहारात् । न चैवं बाल्ये स्थूलपाषाणोद्धरणसामर्थ्याभावात् शक्तेः सहजत्वं न स्यादिति वाच्यम् । बाल्येऽपि तच्छक्त्यङ्गीकारात् । कथं तर्हि शक्त्यभावोक्तिः ? तदा कार्याभावश्चेति चेत् । न । अभिव्यक्तशक्तेरेव कार्योन्मुखत्वेन तादृशशक्त्यभावेन बाल्ये कार्याभावस्य शक्तिर्नेति व्यवहारस्य चोपपत्तेः । उपवासादिना शक्तिह्रासस्य भोगादिना तद्वृद्धेश्च अनुभवसिद्धत्वेन च न शक्त्यपलापो युक्तः ।

अपि च गच्छन् गजः गोक्षुरकादिप्रतिबन्धके न गच्छतीत्यनुभवसिद्धम् । न च गोक्षुरकादिप्रतिबद्धशक्तित्वाभावे तदुपपन्नम् । गत्युपयोगिदार्ढ्यादिसम्पन्नस्य सहसैव गतिनिवृत्तौ निमित्ताभावात् । न च गोक्षुरकाभावः सहकारी, तदभावात् गत्यनुदयः इति वाच्यम् । गोक्षुरकस्य प्रतिबन्धकत्वाभावप्रसङ्गात् । न हि कारणाभावं प्रतिबन्धकं मान्याः मन्यन्ते । दण्डाभावस्यापि प्रतिबन्धकत्वापातात् ।

किञ्च मणिर्हि दाहप्रतिबन्धकः । मन्त्रस्तु उत्तेजकः इति व्यवहरन्ति । प्रतिबन्धकोत्तेजकशब्दार्थपर्यालोचनया शक्तिः सिद्धा भवति । प्रतिबन्धं करोतीति प्रतिबन्धकः; उत्तेजयति कार्योन्मुखं करोतीति उत्तेजकः इत्यर्थावगमात् । कारणस्य कार्यानुन्मुखत्वातिरिक्तप्रतिबन्धस्य कार्योन्मुखशक्तिकत्वातिरिक्तोत्तेजनस्य चाभावात् । 'प्रतिबद्धत्वात् गजो नेदानीं गन्तुं शक्नोति; अन्यदा तु सत्यपि प्रतिबन्धके उत्तेजकसद्भावात् गच्छति' इति व्यवहरन्ति । एतेनैव 'उत्तेजकाभावविशिष्टमणिः प्रतिबन्धकः' इति वदन्तः परास्ताः वेदितव्याः । सत्यपि प्रतिबन्धके उत्तेजकेन कार्यमिति व्यवहारविरोधात् ।

ननु यदि कार्योत्पादार्थं कारणे शक्तिरङ्गीक्रियते तर्हि भावकार्यस्योपादानजन्यत्वनियमात् शक्त्युपादाने दण्डादौ शक्तिजननोपयोगिशक्त्यन्तरं अभ्युपेयं स्यात् । एवं तच्छक्तिसिद्ध्यर्थं शक्त्यन्तरं अभ्युपेयं स्यात् । ततश्च एकस्मिन् दण्डे अनेकशक्तिकल्पनाप्रसङ्गः इति चेत् । न । दण्डनिष्ठघटजननशक्तेः दण्डेन सहैव दण्डकारणजातत्वेनापूर्ववर्तिनो दण्डस्यानुपादानत्वात् ।

ननु यदि शक्तेः दण्डो नोपादानं तर्हि रूपरसस्पर्शादीनां अपि दण्डो नोपादानं स्यात् । सहजत्वाविशेषात् । ततश्च उपादानाभावात् सृष्टिः न स्यात् । न च दण्डोपादानमेव दण्डगुणानामप्युपादानमिति वाच्यम् । तथा सति रूपादीनां दण्डावयवगतत्वप्राप्त्या दण्डस्य रूपादिशून्यतापातात् । न च तदिष्टम् । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वाभावेन अचाक्षुषतापातात् । 'दण्डो रूपवान्' इत्याद्यनुभवविरोधाच्च इति चेत् । न । सहजगुणानां निरुपादानैव सृष्टिः । धर्मिसत्तासापेक्षागन्तुकगुणानां धर्म्येवोपादानमित्यङ्गीकारात् । न च सोपादानदण्डाभिन्नस्य रूपादेः निरुपादानत्वमयुक्तमिति वाच्यम् । स्पार्शनघटाभिन्नस्य रूपादेः विशेषबलेनास्पार्शनत्ववत् इन्द्राभिन्नस्यार्जुनस्य तदपेक्षया न्यूनत्ववच्च सोपादानदण्डाभिन्नस्य सहजस्य रूपादेः विशेषबलेन निरुपादानत्वोपपत्तेः ।

ननु दण्डः प्रथमे क्षणे निर्गुण एवोपपद्यते । पश्चात्समवेता गुणाः उत्पद्यन्ते । तथा च दण्ड एव स्वगुणोपादानमिति चेत् । अत्र वक्तव्यम्– किमेवं अनुभवबलात् उच्यते । उत भावकार्यस्य सोपादानत्वनियमात् । आहोस्वित् स्वसमयानुरोधात् । नाद्यः अनुभवाभावात् । प्रत्युत प्रथमक्षण एव सगुणत्वानुभवाच्च । नापि द्वितीयः । नियमस्य प्रायिकत्वात् । नापि तृतीयः । तत्समयस्य अप्रामाणिकत्वात् ॥

## ॥ इति स्वमते सहजशक्तिनिरूपणम् ॥

**मणिकारस्तु**— 'नास्त्येव शक्तिर्नाम पदार्थः । मानाभावात् । ननु ईश्वरवत् शक्तिरपि कार्येणैव अनुमीयते । तथा हि यादृशादेव करतलानलसंयोगात् दाहो जायते तादृशादेव प्रतिबन्धकसत्त्वे न जायते । अतो यदभावात् कार्याभावः तद् वह्न्यादौ अभ्युपेयम् । अन्यथा प्रतिबन्धकवेलायां कार्याभावो न सिद्ध्येत् । क्लृप्तसकलकारणसद्भावे कार्यानुत्पादायोगात् इति चेत् । न । प्रतिबन्धकवेलायां प्रतिबन्धकाभावरूपकारणाभावेनैव कार्याभावोपपत्तेः ।

अथ न प्रतिबन्धकाभावः कारणम् । उत्तेजकवेलायां सत्यपि प्रतिबन्धके कार्यदर्शनात् इति चेत् । न । उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वाङ्गीकारात् । उत्तेजकदशायां च मणिसद्भावेऽपि उत्तेजकाभावविशिष्टमण्यभावो न विरुद्धः ।

ननु विशेषणविशेष्यतत्संबन्धातिरिक्तविशिष्टानङ्गीकारात् कदाचित् विशेषणाभावः, कदाचित् विशेष्याभावः, कदाचिदुभयाभावः कारणमिति वाच्यम् । तथा च परस्परव्यभिचारात् नैकस्यापि

हेतुत्वमिति चेत्। न। विशेषणविशेष्यसंबन्धाभावस्य एकस्यैव कारणत्वाङ्गीकारात्। तथा हि— विशेषणविशेष्ययोः संबन्धात् विशिष्टव्यवहारः इति, तयोः संबन्धाभावात् विशिष्टाभावव्यवहारः; यथा घटसत्त्वासत्त्वाभ्यां घटतदभावव्यवहारौ। यस्य यत्र यः संबन्धः स एव तत्र वैशिष्ट्यं स च संबन्धाभावो विशेषणाभावात्, विशेष्याभावात्, उभयाभावात्, सर्वत्राविशिष्टः एकः विशेषणविशेष्योभयाभावानां व्यापकोऽनुगतविशिष्टाभावव्यवहारादिहेतुः। एवं च प्रतिबन्धको–त्तेजकाभावयोः संबन्धाभावो दाहकारणम्। स च प्रतिबन्धकाभावे प्रतिबन्धको–त्तेजकसद्भावे उभयाभावे चास्ति, सर्वत्र प्रतिबन्धको–त्तेजकाभावयोः संबन्धो नास्तीति प्रतीतेः।

ननु यत्र प्रतिबन्धकं उत्तेजकभावश्चेति द्वावपि स्तः। तत्रापि दाहः स्यात्। कारणत्वेनाभिमतस्य उत्तेजकाभावप्रतिबन्धकयोः संसर्गाभावस्य सत्त्वात्। अभावेन सहाधिकरणस्य संयोगसमवायरूपसंबन्धानङ्गीकारात् इति चेत्। न। संयोगादिसम्बन्धाभावेऽपि स्वरूपसम्बन्धाङ्गीकारात्। यत्र चोत्तेजकप्रतिबन्धके स्तः तत्र तयोः स्वरूपसंबन्धसद्भावेन तदभावरूपकारणाभावात् न दाहोत्पत्तिः।

ननु अभावाधिकरणयोः स्वरूपमेव सम्बन्धः इत्ययुक्तम्। उत्तेजकस्थलेऽपि दाहाभावप्रसङ्गात्। तत्र मणेः स्थलान्तरीयोत्तेजकाभावस्य च संबन्धात्मकस्वरूपद्वयानपायात्। उत्तेजकाभावसम्बद्धमणेरेव प्रतिबन्धकत्वात् इति चेत्। न ब्रूमो वयं नाधिकरणाभाववेव स्वरूपसंबन्धः। येनोक्तदोषः स्यात्। किं नाम उपश्लिष्टस्वभावत्वम्। उपश्लिष्टस्वभावत्वं च संबन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वम्। न च स्थलान्तरीयोत्तेजकाभावेन मणेः विशिष्टप्रत्ययजननयोग्यत्वमस्ति। येनोत्तेजकेऽपि दाहो न स्यात्। तादृशस्वरूपसंबन्धाभावश्च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चाविशिष्ट एव।

यद्वा यथाऽदण्डपुरुषस्याभावे दण्डी पुरुषो यथा न प्रतियोगी, तस्यादण्डत्वाभावात्। किंतु तदन्यः प्रतियोगी। तस्य च अभावो दण्डिसद्भावेऽपि दण्डमात्रसद्भावे उभयासत्त्वे चाविशिष्ट इति; तस्मात् केवलपुरुषाभावव्यवहारोऽनुगतः। तथा केवलप्रतिबन्धकाभावे उत्तेजकसहकृतः प्रतिबन्धको न प्रतियोगी तस्य केवलत्वाभावात्। किन्तु तदन्यः। तदन्यस्य च केवलप्रतिबन्धकस्याभावः उत्तेजकप्रतिबन्धकसत्त्वे उत्तेजकमात्रसत्त्वे उभयासत्त्वे च अविशिष्ट एवेति नाननुगमः। उत्तेजकापनये च केवलप्रतिबन्धोऽस्तीति न तदभावः इति न दाहो भवति' इत्याह ॥

तन्न ॥ 'पराऽस्य शक्तिर्विविधैव श्रूयते। विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः। सर्वैर्युक्ता शक्तिभिर्देवता सा' इत्यादिश्रुत्या, 'शक्तयः सर्वभावानां अचिन्त्यज्ञानगोचराः ॥ यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः' इत्यादिस्मृत्या च शक्तेः सिद्धत्वात्।

किञ्च प्रतिबन्धकस्य प्रतिबन्धकत्वानुपपत्त्यैव शक्तिसिद्धिः । कारणसामर्थ्यविघटकस्यैव प्रतिबन्धकत्वात् । न च प्रतिबन्धकाभावस्य कारणत्वात् तद्विघटनरूपत्वेनैव प्रतिबन्धकत्वमुपपन्नमिति न तदन्यथानुपपत्त्या शक्तिसिद्धिरिति वाच्यम् । प्रतिबन्धकाभावस्य अकारणत्वात् । अन्यथा प्रतिबन्धकस्य प्रतिबन्धकत्वं न स्यात् । कारणाभावादेव कार्याभावोपपत्तौ मण्यादेः प्रतिबन्धकता-वाचोयुक्तेः अयुक्तत्वात् । दण्डाभावादौ प्रतिबन्धकत्वव्यवहाराभावात् ।

किञ्च प्रतिबन्धकाभावस्य कारणत्वे प्रतिबन्धकीभूतैकमणिसद्भावेऽपि मण्यन्तराभावात् कार्यं स्यात् । कारणतावच्छेदकावच्छिन्नयत्किञ्चित्कारणसद्भावे कार्यनियमात् । न च मणिसामान्या-भावस्य कारणत्वम् । एकमणिसामान्याभावाभावात् न दाहोत्पत्तिरिति वाच्यम् । मन्त्रसद्भावदशायां मणिसामान्याभावस्य सद्भावेन दाहोत्पत्तिप्रसङ्गात् । न च दाहप्रतिबन्धकसामान्याभावो दाहकारणम् । तत्र प्रतिबन्धकसामान्याभावाभावात् न दाहोत्पत्तिरिति वाच्यम् । मण्यादीनां कारणीभूताभावप्रतियो-गित्वरूपप्रतिबन्धकत्वसिद्धौ प्रतिबन्धकसामान्याभावत्वेन प्रतिबन्धकाभावस्य कारणत्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिः; इत्यन्योन्याश्रयात् ।

ननु न कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम् । अपि तु कार्यानुत्पादप्रयोजकत्वम् । एवं च मण्याद्यभावस्य कारणत्वग्रहं विनाऽपि मण्यादेः प्रतिबन्धकत्वं ज्ञातुं शक्यमेवेति नान्योन्याश्रयः इति चेत् । न । अनादिकार्यानुत्पादं प्रति सादिप्रतिबन्धकस्य प्रयोजकत्वायोगात् । कार्यानुत्पाद-प्रयोजकत्वं नाम कार्यप्रागभावस्योत्तरकालसंबन्धप्रयोजकत्वम् । तच्च सादित्वेऽपि मण्यादीनामुपपन्नमिति चेत् । न । कारणविघटकस्य कारणाभावत्वज्ञानानन्तरा अनुत्पादप्रयोजकत्वस्य ज्ञातुमशक्यत्वेन मण्या-द्यभावस्य कारणत्वसिद्धौ कारणाभावत्वेन मण्यादीनां कार्यानुत्पादप्रयोजकत्वरूपप्रतिबन्धकत्वसिद्धिः । तत्सिद्धौ च मण्याद्यभावस्य प्रतिबन्धकाभावत्वेन कारणत्वसिद्धिः इत्यन्योन्याश्रयात् ।

अपि च उत्तेजकदशायां मणिसद्भावेऽपि कार्योदयदर्शनात् न प्रतिबन्धकसामान्याभावः कारणम् । न च उत्तेजकाभावविशिष्टप्रतिबन्धकाभावः कारणम् । उत्तेजकदशायां प्रतिबन्धकसद्भावेऽपि उत्तेजका-भावविशिष्टप्रतिबन्धकाभावोऽस्त्येवेति वाच्यम् । विशिष्टाभावस्य कारणत्वे विशिष्टस्यैव कारणीभूता-भावप्रतियोगित्वेन प्रतिबन्धकत्वापत्त्या केवलमण्यादेः प्रतिबन्धकत्वाभावापातात् । न च विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धात्मकत्वेन विशेष्यस्यापि कारणीभूतविशिष्टाभावप्रतियोगित्वात् प्रतिबन्धकत्व-मुपपन्नमिति वाच्यम् । एवं सति विशेषणतत्सम्बन्धयोरपि तथात्वेन तयोरपि प्रतिबन्धकत्वापातात् ।

ननु न मणित्वावच्छिन्नमण्यभावः दाहकारणम् । नापि विशिष्टाभावः । किन्तु उत्तेजकाभावावच्छिन्नमण्यभावः । न च अस्याभावस्य मण्यधिकरणेऽसंभवः । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसत्त्वस्यैवाभावविरोधित्वेन प्रतियोगिसत्त्वमात्रस्य अविरोधित्वात् । गुणकर्मादौ गुणकर्मान्यत्वावच्छिन्नत्वाभावस्य दर्शनात् इति चेत् । न । उत्तेजकस्य प्रतिबन्धकत्वबेलायां उत्तेजकाभावावच्छिन्नमण्यभावस्य सत्त्वेन दाहोत्पत्तिप्रसङ्गात् ।

यत्तु — 'प्रतिबन्धकोत्तेजकाभावयोः संबन्धाभावो दाहकारणम्' इति । तन्न । कारणीभूताभावप्रतियोगित्वेन संबन्धस्यैव प्रतिबन्धकत्वापत्त्या संबन्धाधिकरणस्य मण्यादेः प्रतिबन्धकत्वाभावापातात् । त्वन्मते अभावाधिकरणयोः संबन्धाभावेन उत्तेजकाभावकालिकप्रतिबन्धकवेलायां दाहप्रसङ्गात् । अभावाधिकरणयोः अतिरिक्तसंबन्धानङ्गीकारेऽपि स्वरूपसंबन्धोऽङ्गीक्रियते इति चेत् । न । उत्तेजकसमवधानकालेऽपि दाहाभावप्रसङ्गात् । तदापि प्रतिबन्धकस्य देशान्तरगतोत्तेजकाभावेन संबन्धसद्भावात् ।

**यदत्रोक्तम्**– 'नाधिकरणाभावावेव स्वरूपसंबन्धः । किं नाम उपश्लिष्टस्वभावत्वम् । उपश्लिष्टस्वभावत्वं च संबन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वं' इति । तदपि न । संबन्धतदभावौ विना विशिष्टप्रत्ययजनकत्वाजनकत्वयोरसंभवात् । यत्र हि संबन्धः संभावितः सः विशिष्टप्रत्ययजननस्वभावयोग्यः, यत्र तु संबन्धोऽसंभावितः नासौ विशिष्टप्रत्ययजननयोग्यः इति नियमात् ।

**यदपि**– 'केवलप्रतिबन्धकाभावे उत्तेजकसहकृतः प्रतिबन्धको न प्रतियोगी । तस्य केवलत्वाभावात् । किन्तु तदन्यः । तदन्यस्य च केवलप्रतिबन्धकस्य अभावः उत्तेजकसहितप्रतिबन्धकसत्त्वे उत्तेजकमात्रसत्त्वे उभयासत्त्वे चाविशिष्ट एवेति नाननुगमः । उत्तेजकापनये च केवलप्रतिबन्धकोऽस्तीति न तदभावः इति न दाहो भवति' इति ॥

**तन्न** । प्रतिबन्धकदशायां उत्तेजकाभावेऽपि दाहप्रसङ्गात् । कारणीभूतस्य केवलप्रतिबन्धकाभावस्य तत्रापि सत्त्वात् । न च केवलमणिसद्भावात् तदभावासंभवः । तत्रत्यप्रतिबन्धकस्य क्षणादिविशिष्टत्वेन केवलत्वाभावात् । न च प्रतिबन्धकस्य केवलत्वं नामोत्तेजकाभाववैशिष्ट्यं विवक्षितम् । न तु विशेषणमात्रवैधुर्यमिति वाच्यम् । उत्तेजकाभावविशिष्टमण्यभावस्य कारणतायाः प्रागेव दूषितत्वात् ।

**यदपि चोक्तम्**– 'प्रतिबन्धकस्य संसर्गाभावो हेतुः। तेन प्रतिबन्धकवेलायां तदन्योन्याभावसत्त्वेऽपि न कार्यं इति ॥ तन्न। मणिप्रागभावतत्प्रध्वंसयोः मण्यवयववृत्तित्वेन करायवृत्तितयाऽकारणत्वेन तत्संग्रहाय मणिसंसर्गाभावः कारणमिति वचनस्य अयुक्तत्वात्।

ननु संसर्गाभावविशेषः कारणम्। न प्रागभावप्रध्वंसौ। न चात्यन्ताभावरूपस्य तस्य नित्यत्वात्, प्रतिबन्धकवेलायामपि कार्योत्पत्तिः। नित्योऽपि प्रतिबन्धकाभावः प्रतिबन्धकवेलायां न करादिना संसृज्यते। ततश्च संसर्गाभावात् न प्रतिबन्धकवेलायां कार्योदयः इत्यङ्गीकारात् इति चेत्। न। त्वन्मते अभावस्य धर्मिणा स्वरूपसंबन्धातिरिक्तसंबन्धा(न्तरा)भावात्, स्वरूपसंबन्धस्य च नित्यत्वेन कार्यस्य कादाचित्कत्वाभिधानायोगात्। उपश्लिष्टस्वभावत्वाभावात् न कार्यं इति चेत्। न। संबन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वस्योपश्लिष्टत्वस्य कादाचित्कत्वायोगात्। निर्निमित्तस्य कादाचित्कत्वादर्शनात्। प्रतियोगिसंबन्धः उपश्लिष्टस्वभावत्वहानिहेतुः। तदपगमश्च पुनरुत्पत्तिहेतुरिति चेत्। न। प्रतियोगिसंबन्धदशायामपि प्राचीनप्रतियोगिसंबन्धध्वंसेन उपश्लिष्टस्वभावत्वोत्पादप्रसङ्गात्। कारणे सति कार्यावश्यंभावनियमात्।

ननु मणिप्रतियोगिकवर्तमानसंबन्धात् न प्राचीनसंसर्गध्वंसस्य कार्यहेतुत्वमिति चेत्। अत्र वक्तव्यम्– वर्तमानसंबन्धः किं कारणीभूताभावप्रतियोगित्वात् प्रतिबन्धकः? उत कारणशक्तिविघटकत्वात्। नाद्यः। कारणत्वेनाभिमतं प्राचीनसंसर्गप्रध्वंसं प्रति वर्तमानसंबन्धस्याप्रतियोगित्वात्। न द्वितीयः। त्वया शक्त्यनङ्गीकारात्। अङ्गीकारे च सिद्धं नः समीहितम्।

किञ्च प्रतिबन्धकीभूतमन्त्रविनाशेऽपि दाहादर्शनात् न प्रतिबन्धकाभावः कारणम्। मन्त्रस्य त्वन्मते आशुविनाशित्वात्।

यदत्रोक्तं– 'न मन्त्रः प्रतिबन्धकः। किन्तु उद्देश्यज्ञानाहितसंस्कारविशिष्टः प्रहरादिरूपः कालः प्रतिबन्धकः इति, प्रतिबन्धकसद्भावात् न प्रहराभ्यन्तरे दाहः' इति। तदपि न। 'मन्त्रः प्रतिबन्धकः इति प्रामाणिकव्यवहारविरोधात्। संस्कारविशिष्टकालस्य सर्वगतत्वेन सर्वत्रादाहप्रसङ्गाच्च। न च 'एनं मा दह' इति अग्निविशेषस्य प्रहरपर्यन्तं अदाहकतया पुरुषविशेषस्य अदाह्यतया च सङ्कल्पात् न पुरुषान्तरस्य वह्न्यन्तरेणादाहः इति वाच्यम्। दाहाभावस्य सङ्कल्पाधीनत्वेन सङ्कल्पस्यैव प्रतिबन्धकतौचित्येन 'कालः प्रतिबन्धकः' इति वचसो रिक्तत्वापातात्। न चाशुविनाशित्वात् मन्त्रस्येव सङ्कल्पस्यापि प्रतिबन्धकत्वासंभवः। 'द्वादशाब्दं वनवासं करिष्यामः' इति पाण्डवसङ्कल्पस्य वनवासहेतुत्ववदुपपत्तेः।

**कश्चिदत्रस्तु**— 'सङ्कल्पविषयः काल एव प्रतिबन्धकः । सङ्कल्पस्य च न विशेषणत्वम् । किन्तु स्वविषयीभूतकालोपलक्षणत्वं' इत्याह । **तन्न** । मन्त्रप्रयोगे दाहाभावः तदप्रयोगे च दाहः इत्यन्वयव्यतिरेकाभ्यां मन्त्रस्यैव प्रतिबन्धकत्वावगमात् । न च विनष्टस्य मन्त्रस्य प्रतिबन्धकत्वासंभवः । प्रयुज्यमानो मन्त्रः प्रयोक्तृपुरुषसङ्कल्पानुसारेण विवक्षितकालपर्यन्तरं कारणशक्तिं कुण्ठयतीति सिद्धान्तात् । तद्यथा दृढाङ्गो युवा बलीयसा दण्डेनाभिहतो मुहूर्तपर्यन्तं मूर्च्छावस्थां गतः शेते । अनन्तरं उत्थाय कर्म करोति । न च दण्डाघातः मुहूर्तावस्थायी न वा मुहूर्तमूर्च्छा प्रत्यकारणम् । येनाशुविनाशिमन्त्रः प्रतिबन्धको न स्यात् ।

## ॥ इति मण्युक्तसहजशक्तिनिरासभङ्गः ॥

**श्रीरस्तु** ॥ न केवलं ईश्वरः स्वाभाविकशक्तिमेव नियमयति । किन्तु सहकारिसंपत्तिवशात् अभिनवामपि शक्तिं आदधाति । तथा हि— वेत्रबीजेषु कदलीजनकस्वाभाविकशक्तिविधुरेषु दावदहनलक्षणसहकारिवशेन विलक्षणशक्त्याधानदर्शनात् । न च दावदहनेन वेत्रबीजं नष्टमेव । द्रव्यान्तरं चोत्पन्नम् । तस्य च कदलीकाण्डजनकत्वं सहजशक्त्यैवेति नाधेयशक्तिसिद्धिरिति वाच्यम् । दावदहनदग्धे तस्मिन् वेत्रबीजमित्यबाधितव्यवहारदर्शनेन आपरमाण्वन्तभङ्गेन द्रव्यान्तरोत्पत्तिरकल्पनीयत्वात् ।

अपि च तिलतैलस्य कर्पूरयोगेन मारकत्वं दृश्यते । न च मारकत्वशक्तिः तस्य स्वभावः । न च शक्तिमन्तरा मारकत्वं युज्यते इति आधेयशक्तिः । न च सहकारिवशादेव कार्योत्पत्तिसंभवे न आधेयशक्तिकल्पनं युक्तमिति वाच्यम् । तज्जनकशक्तिविधुरस्य सहकारिशतसंपत्तावपि तज्जनकत्वायोगात् । अन्यथा सहजाऽपि शक्तिः न स्यात् । सहकारिवशेनैव कार्योत्पत्तिरिति वक्तुं शक्यत्वात् । न चेष्टापत्तिः । घटार्थिना दण्डादौ प्रवृत्त्यभावापातात् । फलोपहितकारणत्वस्य दुर्ज्ञानत्वात् । योग्यताज्ञानात् प्रवृत्तिरिति चेत् । न । शक्तेरेव योग्यताशब्दार्थत्वात् ।

**अपि च**— 'व्रीहीन् प्रोक्षति' इति होम्यानां व्रीहीणां प्रोक्षणं विधीयते । न च तस्य प्रयोजनान्तरं दृश्यते । प्रोक्षणमन्तराप्यवघातादेः संभवात् । ततो मन्यामहे— 'प्रोक्षितानां यज्ञोपयोगेन यागस्य अपूर्वजनने सहकारित्वं; न प्रोक्षणविधुराणाम् । यागोपयोगित्वं च शक्तिमन्तरा न संभवति इति प्रोक्षणेन व्रीहिषु यागजन्यापूर्वजननानुकूला शक्तिः आहिता भवति' इति ।

'न च प्रोक्षणेन न व्रीहिषु अभिनवा शक्तिराधीयते अपि तु यजमाने अदृष्टं उत्पद्यते। विहित-क्रियायाः कर्तृसमवेतव्यापारजनकत्वनियमात्' इति वाच्यम्। प्रोक्षणस्य व्रीहिनिष्ठातिशयजनकत्वाभावे प्रोक्षितानामेव यज्ञोपयोगाभावप्रसङ्गात्। पुरुषसमवेतादृष्टजननाय व्रीहीन् संप्रोक्ष्य अप्रोक्षितव्रीहिभिः यज्ञानुष्ठानेऽपि यज्ञफलप्राप्तिसंभवात्। न च 'व्रीहीन् प्रोक्षति' इति प्रोक्षणं विधाय 'व्रीहीन् अवहन्ति' इत्यवघातविधानात् तेषामेव यज्ञोपयोगो नान्येषाम्। बाधकाभावे व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात् इति वाच्यम्। व्रीहिषु प्रोक्षणजन्यातिशयाभावे प्रोक्षितानामेव ग्रहणे प्रयोजनाभावेन तन्नियमस्य अयुक्तत्वात्। अवघातजन्यतुषविमोचनलक्षणफलस्येव प्रोक्षणजन्यफलस्यापि बाधकाभावेन व्रीहिनिष्ठत्वकल्पनस्यैव उचितत्वाच्च। 'अमन्त्रमन्नं यत्किञ्चित् हूयते च हुताशने॥ संवत्सरकृतं पापं तत्पावमानीभिरहं पुनामि' इति मन्त्रासंस्कृतान्नहोमस्य अनिष्टसाधनत्वाभिधानेन मन्त्रेण अन्नेषु संस्कारविशेषस्य कल्प्यत्वाच्च।

सा च शक्तिः व्रीहीणां अन्नादिजननस्वाभाविकशक्तिवत् प्रातिस्विकी नानैव। सर्वव्रीहीणां भाव्यदृष्टहेतुत्वात्। अन्यथा दण्डचक्रा(चीवरा)दिषु एकैव घटजननानुकूला शक्तिः स्यात्। प्रत्येकं कारणत्वात् प्रत्येकं शक्तिः चेत्। आहिताऽपि शक्तिः तथैव। व्रीहीणां प्रत्येकं कारणत्वात्।

न च प्रोक्षितव्रीहिषु कतिपयव्रीहिनाशे अदृष्टाभावप्रसङ्गः। पटार्थं संपादिततन्तुषु कतिपय-नाशेऽपि पटसिद्धिवदुपपत्तेः।

ननु यत्किञ्चित्तदवयवनाशात् सकलव्रीहिनाशेन खण्डव्रीहीणां उत्पत्तिः। तत्र शक्त्याधायक-प्रोक्षणाद्यभावात्। आहितशक्तिविधुराणां यज्ञोपयोगो न स्यात्। न च नास्त्येव तेषां यज्ञोपयोगः इति युक्तम्। प्रोक्षितानामेव अवघातः, अवहतानामेव यज्ञोपयोगः इति भवद्भिः अङ्गीकारात्। अवहनने च आपरमाण्वन्तं भङ्गेन द्रव्यान्तरोत्पादस्य आवश्यकत्वात्। तथा च प्रोक्षणादीनां शक्त्या-धायकत्वकथनं अयुक्तम् इति चेत्। न। आपरमाण्वन्तं भङ्गस्य पुनरुत्पत्तेश्च अप्रामाणिकत्वात्।

अस्तु वा आपरमाण्वन्तं भङ्गेन पुनरुत्पादः। तथापि न तेषां यज्ञोपयोगाभावः। प्रोक्षण-दशायां व्रीहिष्विव तदारम्भकपरमाणुष्वपि शक्त्यन्तरस्य उत्पन्नत्वेन द्व्यणुकादिक्रमेण उत्पन्नेषु पूर्व-शक्तिसजातीयशक्तेः कारणवशेन उत्पत्तिसंभवात्। अन्यथा अन्नादेः आपरमाण्वन्तं भङ्गेन पुनरुत्पादे तृप्तिजनकत्वं न स्यात्। द्व्यणुकादिक्रमेणोत्पन्नस्य तृप्तिजननशक्त्युत्पादे तु इहापि अप्रोक्षितव्रीहिविलक्षण-शक्त्युत्पादोऽस्तु॥

॥ इति स्वमते आधेयशक्तिसमर्थनम् ॥

**श्रीरस्तु ॥ मणिकारस्तु**— 'व्रीहीन् प्रोक्षतीति विहितप्रोक्षणसाध्यत्वेन न व्रीहिषु आधेय-शक्तिः कल्पनीया । प्रोक्षणस्य कर्तृसमवेतादृष्टजनकत्वस्यैव मानसिद्धत्वात् । तथाहि प्रोक्षणमपूर्व-जनकम् । दृष्टद्वाराभावे सति कालान्तरभाविफलजनकतया विहितत्वात् । यागवत्, तदङ्गवत् ।

किञ्च प्रोक्षणजन्योऽतिशयः व्रीहिनिष्ठः सन्नानेकः । आत्मवृत्तेरेकस्मादपि उक्तन्यायेन कार्यो-पपत्तेः । नाप्येकः । कार्यनाशे आश्रयमात्रनाशस्य जनकत्वात् एकव्रीहिनाशेन तन्नाशात् अप्रोक्षित-व्रीहीणां अनन्वयापत्तेः ।

ननु प्रतिष्ठादिना प्रतिमादौ पूज्यता श्रूयते । न च तत्र पूज्यत्वप्रयोजकमदृष्टम् । भोगादिना तन्नाशेऽपि पूज्यत्वदर्शनात् । तत्सत्त्वेऽपि अस्पृश्यस्य स्पर्शे पूज्यत्वाभावदर्शनात् । नापि प्रतिष्ठाध्वंसः प्रयोजकः । तस्मिन् सत्यपि चाण्डालादिस्पर्शे अपूज्यत्वदर्शनात् । प्रतिष्ठाप्रयोजकत्वभङ्गापत्तेश्च । भावाभावयोरेकत्र प्रयोजकत्वादर्शनात् । तस्मात् प्रतिष्ठाजन्या अस्पृश्यस्पर्शादिनाश्या प्रतिमानिष्ठा शक्तिः अभ्युपेया इति चेत् ।

अत्र ब्रूमः— 'प्रतिष्ठितं पूजयेत्' इति वाक्येन प्रतिष्ठायाः कारणत्वं न बोध्यते । किन्तु भूतार्थे क्तानुशासनात् अतीतप्रतिष्ठे पूज्यत्वं बोध्यते । तथा च प्रतिष्ठाध्वंसः, प्रतिष्ठाकालीनो यः यावदस्पृश्यस्पर्शादिप्रतियोगिकानादिसंसर्गाभावः तत्सहितः, पूज्यत्वप्रयोजकः । स च प्रागभावो-ऽत्यन्ताभावश्चेति ।

ननु कामिनीचरणाभिघातात् तिलकवृक्षस्य पुष्पोद्गमो दृश्यते । तथा दोहदेन दाडिमवृक्षस्य पुष्पोद्गमो दृश्यते । येन अतिशयिता फलादिसमृद्धिर्भवति तद्दोहदम् । दाडिमीवृक्षस्य दोहदं धूपः । तदुक्तम्— 'मत्स्याज्यत्रिफलालेपैः मांसैराज्यामिषोद्भवैः । लेपिता धूपिता सूते फलं तार्डाव दाडिमी' इति । न च कालान्तरभाविनोः चरणाभिघातदोहदयोः कारणत्वं युज्यते इति वृक्षे शक्त्याधायकत्वमेव अभ्युपगन्तव्यं इति चेत् । न । समयविशेषावच्छिन्नचरणसंयोगदोहदध्वंसयोरेव तत्कारणत्वात् ननु— ताम्रादौ भस्मादिना शुद्धिः श्रूयते । सैव आधेयशक्तिः इति चेत् । न । भस्मादिसंयोग-समानकालीनो योऽस्पृश्यस्पर्शनादिप्रतियोगिको यावदनादिसंसर्गाभावः तत्सहितस्य भस्मादिसंयोगध्वंसस्यैव शुद्धिपदार्थत्वात् । अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नोऽभिमन्त्रणध्वंस एव व्यथा-(घ)पनायकः । तत्तन्मन्त्रदेवतासन्निधिरेव वा; इति न तदन्यथानुपपत्त्या आधेयशक्तिसिद्धिः ।

**यदि न सहजा नाप्याधेया शक्तिः कस्तर्हि शक्तिपदार्थः इति चेत्। उच्यते– कारणत्वं** शक्तिपदार्थः। कारणत्वं च स्वस्वव्याप्येतरसकलसम्पत्तौ कार्याभावव्यापकाभावप्रतियोगित्वम्।

अथ वा यस्य कार्याभावव्याप्यता इतराभावावच्छिन्ना तत् कारणम्। बीजे अंकुराभावव्याप्यता न बीजत्वेन अवच्छिद्यते। इतरसमवधाने सति बीजादंकुरसंभवात्। किन्तु इतराभावेनावच्छिद्यते। इतराभावे बीजस्य अंकुराभावनियमात्।

अथवा अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं कारणत्वम्।

अन्यथासिद्धत्वं च त्रेधा। येन सहैव यस्य यं प्रति पूर्ववर्तित्वं अवगम्यते। यथा घटं प्रति दण्डरूपस्य। अन्यं प्रति पूर्ववर्ति[वृद्धि]त्वे ज्ञात एवान्यं प्रति यस्य पूर्ववर्तित्वं अवगम्यते। यथा– शब्दं प्रति पूर्ववर्तित्वे ज्ञात एव ज्ञानं प्रति आकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतत्वम्। यथा गन्धवति गन्धानुत्पादात् गन्धप्रागभावस्य नियतपूर्ववर्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावानां अन्यथासिद्धत्वम्। एतत्त्रितयव्यतिरेके नियतपूर्ववर्तित्वं कारणत्वम्' इत्याह ॥

**तन्न**। प्रोक्षितानामेव यज्ञोपयोगितया प्रेक्षावदुपादानान्यथानुपपत्त्या प्रोक्षणेन व्रीहिष्वेव अप्रोक्षितव्रीहिव्यावृत्तयज्ञफलजननानुकूलशक्त्याधानस्य सिद्धत्वेन अपूर्वसाधनताङ्गीकारस्यायुक्तत्वात्।

ननु न नियमेन प्रोक्षितव्रीह्युपादानान्यथानुपपत्त्या तत्र आधेयशक्तिसिद्धिः। उपादानस्य विध्यधीनत्वात्। अवघातविधेश्च सन्निहितप्रोक्षितव्रीहिकर्मकावघातपरत्वात्। व्यक्तिवचनानां प्रकरणादिना सन्निहितव्यक्तिविशेषपरत्वनियमात् इति चेत्। न। प्रोक्षितव्रीहिषु अप्रोक्षितव्रीहिभ्योऽतिशयाभावेऽवघातविधेः अप्रोक्षितव्रीहिपरित्यागेन प्रोक्षितव्रीह्यवघातपरत्वायोगेन तदर्थमेव प्रोक्षितेषु अतिशयस्य कल्प्यत्वात्। न हि श्रुतिः भावियागफलानुपयुक्तं यागे विनियुङ्क्ते। येन तत्रैव तात्पर्यं स्यात्।

**न च**– प्रोक्षितव्रीहिषु प्रोक्षणजन्यादृष्टवदात्मसंयोगो विशेषः। तस्य अप्रोक्षितेष्वपि सद्भावात्। आत्मसंयुक्तानामेव उपयोगः नत्वन्यसंयुक्तानामित्यत्र नियामकाभावेन कुड्यादिसंयोगस्यापि विशेषत्वापातात्। अनुमानं तु आयुर्वेदविहितौषधपानादौ व्यभिचारित्वात् अयुक्तम्। औषधपानजन्यनाडीसाम्यस्य प्रत्यक्षत्वाभावेन औषधपानस्य दृष्टद्वारा कालान्तरभाविफलहेतुत्वाभावेन हेतोः तत्र सत्त्वात्। धर्मजनकत्वरूपसाध्यस्य अभावाच्च।

**यदत्रोक्तं रुचिदत्तेन–** 'शब्द-तदुपजीविप्रमाणमात्रप्रयोज्यश्रीविषयद्वारेतरद्वारं दृष्टपदेन विवक्षितम्। न चैवं दृष्टपदविवक्षायामपि औषधपानादौ व्यभिचारो भवति। अन्वयव्यतिरेक-प्रमाणादिमूलकप्रमाणस्यापि कदाचित् तत्र संभवात् इति।

**तन्न।** एवं व्यभिचारपरिहारेऽपि प्रोक्षणस्यापूर्वजनकत्वेन व्रीहिषु अतिशयाधायकत्वाभावे अप्रोक्षितव्रीहीणामपि विनियोगापत्त्या तत्परिहाराय व्रीहिगतातिशयजननस्य अवश्यं वक्तव्यत्वेन शक्तिनिरासकत्वानुपपादनात्। प्रोक्षणस्य व्रीहिनिष्ठातिशयजनकत्ववादिनं प्रति अतिशयजनकत्वा-भावस्यैव साधनीयत्वेन अपूर्वजनकत्वसाधनप्रयुक्तार्थान्तरत्वापरिहाराच्च।

**यदपि–** प्रोक्षणजन्यातिशयस्य नानात्वे दूषणाभिधानं; तदपि न। व्रीहिनिष्ठातिशयमन्तरा व्रीहीणां यागनिष्पत्तिद्वारा फलसाधनत्वायोगेन अतिशयसिद्धौ तन्नाशप्रसङ्गेन एकत्वायोगे परिशेषेण अनेकत्वस्य सिद्धत्वात्। अन्यथा आत्मवृत्त्यदृष्टवशात् अप्रोक्षितव्रीहीणामपि उपयोगः स्यात्।

**यदपि–** 'प्रतिष्ठितं पूजयेदित्यत्र न प्रतिष्ठायाः पूज्यताप्रयोजकत्वमुच्यते। अपि तु प्रतिष्ठाध्वंसस्य प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शादिप्रतियोगिकानादिसंसर्गाभावसहितस्य पूज्यताप्रयोजक-त्वमुच्यते' इति।

**तदपि न।** क्तप्रत्ययेन प्रतिष्ठाध्वंसस्य कथञ्चित् प्राप्तावपि प्रतिष्ठासमानकालीनयावदस्पृश्य-स्पर्शादिप्रतियोगिकानादिसंसर्गाभावप्रापकाभावेन तद्विशिष्टस्य पूज्यताप्रयोजकत्वाभिधानायोगात्। प्रतिष्ठाविधिप्राप्तदेवतासन्निधेरेव पूज्यताप्रयोजकत्वेन प्रतिष्ठाध्वंसस्य तदप्रयोजकत्वाच्च। कथमन्यथा प्रतिमापूजाद्यनुसारेण फलसिद्धिः। प्रतिष्ठाध्वंसस्य प्रतिमायाश्च अचेतनत्वेन पूजानुसारेण फलदातृत्वा-योगात्।

न च प्रतिमायां देवतासन्निधानमेव अनुपपन्नम्। एकस्याः देवतायाः युगपदनेकत्र सन्निधाना-संभवात्; इति वाच्यम्। अचिन्त्यसामर्थ्यसद्भावेनोपपत्तेः। न च तत्र प्रमाणाभावः।

पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः।

अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः॥ इत्यादि प्रमाणसद्भावात्।

**यदपि–** समयविशेषावच्छिन्नकामिनीचरणसंयोगविशेषदोहदसंयोगध्वंसयोरेव पुष्पोद्गमहेतुत्वा-भिधानम्। तदपि न। यागध्वंसस्यैव स्वर्गादिहेतुताप्रसङ्गात्। यागस्य स्वर्गादिहेतुताप्रतिपादका-

-गमात् यागस्वर्गयोः कार्यकारणभावः इति चेत् । नर्हि कामिनीचरणस्पर्शपुष्पोद्गमकार्यकारणभाव-प्रतिपादकागमवशात् तत्कारणतां तन्निर्वाहकतया शक्तिं चाङ्गीकुरु ।

**यदपि**— 'भस्मादिसंयोगसमानकालीनयावदस्पृश्यस्पर्शनादिप्रतियोगिकानादिसंसर्गाभावसहितः भस्मादिसंयोगध्वंसः एव शुद्धिपदार्थः' इति शुद्धिपदार्थनिर्वचनम् । तदपि न । 'भस्मना शुध्यते कांस्यं ताम्रमाम्लेन शुध्यति' इति शुद्धिं प्रति भस्मादीनां कारणताविधायकवाक्याप्रामाण्यापातात् ।

अत एव अभिमन्त्रितपयःपल्लवादौ अभिमन्त्रणध्वंसस्य व्यथाऽपनायकत्वाभिधानं अपास्तम् । अभिमन्त्रणादेः रोगापनायकत्वाभिधायकवाक्यविरोधात् ।

**यदपि**— 'कारणत्वं शक्तिपदार्थः' इति । तदपि न । शक्तौ वृद्धिह्रासदर्शनेन तस्याः तच्छून्यकारणतात्मकत्वाभिधानायोगात् । अत एव परमात्मनो जगत्कारणत्वं अभिधाय तदुपपत्तये 'विचित्रशक्तिः पुरुषः पुराणः' इति अचिन्त्यशक्त्यभिधानं युज्यते । अन्यथा तदनुपपन्नं स्यात् ।

यदपि 'स्वस्वव्याप्येतरसकलसम्पत्तौ कार्याभावव्यापकाभावप्रतियोगित्वं कारणत्वं' इति । तन्न । केवलान्वयिनि अव्याप्तेः । तस्य अभावप्रतियोगित्वाभावात् । कार्यप्रागभावाव्याप्तेश्च । तदभावस्य स्वस्वव्याप्येतरसकलसंपत्तिकालीनकार्याभावात्मककार्यध्वंसं प्रति अव्यापकत्वात् । दैशिकव्याप्तिग्रहणेन कथञ्चिद्व्यापकत्वोपपादनेऽपि तत्प्रतियोगित्वस्य कथमपि उपपादयितुमशक्यत्वात् ।

किञ्च चक्रादीनां कारणताग्रहे दण्डस्य स्वस्वव्याप्येतरसकलकारणकालीनकार्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानं; तज्ज्ञाने च चक्रस्योक्तरूपकारणताग्रहः इत्यन्योन्याश्रयः । स्वस्वव्याप्येतरसकलसंपत्तावित्यस्य सकलकारणसंपत्तावित्यर्थत्वात् । अन्यथाऽसंभवः । कारणाकारणसकलसंपत्तेः कदाप्यभावात् ।

**यदत्रोक्तं रुचिदत्तेन**— 'स्वस्वव्याप्येतरकार्यनियतपूर्ववर्तिसकलसंपत्तिकालीनकार्याभावव्यापकाभावप्रतियोगित्वं कारणत्वं इति विवक्षितं' इति । तदपि न । दण्डावयवाकाशसंयोगविशेषेऽतिव्याप्तेः । तस्यापि उक्तसकलसंपत्तिकालीनकार्याभावव्यापकाभावप्रतियोगित्वात् । दण्डावयवेऽतिव्याप्तेश्च ।

**यदपि** 'यस्य कार्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणं' इति । तदपि न । असंभवित्वात् । दण्डादिकारणानां कार्याभावव्याप्यत्वाभावेन उक्तलक्षणाभावात् । न हि यदा दण्डः

तदा कार्याभावः इति व्याप्तिरस्ति । येन तदभावव्याप्यता इतराभावेनावच्छिन्ना स्यात् । यदा दण्डः तदा घटाभावः इति व्याप्त्यभावेऽपि, यदा इतराभावावच्छिन्नो दण्डः तदा कार्याभावः इति व्याप्तिरस्त्येवेति चेत् । न । दण्डत्वे अतिव्याप्तेः । यदा इतराभावावच्छिन्नं दण्डत्वं तदा कार्याभावः इति व्याप्तिसद्भावात् ।

**अथ** — दैशिकी व्याप्तिः विवक्षिता । दण्डत्वनिष्ठव्याप्तौ दण्डत्वत्वस्यैवावच्छेदकत्वेन इतराभावस्य अवच्छेदकत्वाभावात् नातिव्याप्तिः इति चेत् । न । अदृष्टेऽव्याप्तेः । अदृष्टनिष्ठव्याप्तेः अदृष्टत्वेनैव अवच्छिन्नत्वेन इतराभावावच्छिन्नत्वाभावात् ।

किञ्च कार्याभावपदेन कार्यप्रागभावस्यैव विवक्षणीयत्वात्, यत्र इतराभावावच्छिन्नो दण्डः तत्र घटप्रागभावः इति व्याप्त्यभावेन दण्डादौ अव्याप्तेश्च (असंभवाच्च) । कार्याभावपदेन कार्यप्रागभावाविवक्षायां इतराभावावच्छिन्नत्वकथनं व्यर्थम् । प्रागभावेतरकार्याभावस्य इतराभावप्रयोज्यत्वाभावेन इतराभावस्य अवच्छेदकत्वाभावात् ।

**यदपि**— 'अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं कारणत्वं' इति । तदपि न । रासभादौ अतिव्याप्तेः । तस्याप्यनन्यथासिद्धनियतपूर्ववृत्तिदण्डनिष्ठद्रव्यत्वजातिमत्त्वेन उक्तलक्षणाक्रान्तत्वात् ।

अनन्यथासिद्धनियतपूर्ववर्तिनिष्ठासाधारणजातिमत्त्वं विवक्षितं इति चेत् । न । जातिशून्यप्रागभावादिरूपकारणेषु अव्याप्तेः । जातिपदं धर्ममात्रपरं इति चेत् । न । अरण्यस्थदण्डाव्याप्तेः । अनन्यथासिद्धनियतपूर्ववर्तिनिष्ठतद्दण्डत्वरूपासाधारणधर्मानाक्रान्तत्वात् । दण्डत्वावच्छेदेन कारणताग्रहात्पूर्वं दण्डत्वमादाय अतिप्रसङ्गेन लक्षणव्युत्पादनस्य कर्तुमशक्यत्वात् ।

अपि च यदपेक्षया अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं यस्य तस्य तं प्रति कारणत्वं उच्यते । उत तज्जातीयं प्रति । नाद्यः । वर्तमानपटापेक्षया पूर्ववर्तितन्तुजातीयस्य पश्चाद्भाविनः पूर्वभाविपटाकारणत्वेन बाधात् । न च तदपि तत्र कारणमेवेति वाच्यम् । तन्नाशे पटनाशप्रसङ्गात् । उपादाननाशस्य उपादेयनाशहेतुत्वात् । नापि द्वितीयः । यत्किञ्चित्तन्तुनाशे एतज्जातीयसर्वपटनाशप्रसङ्गात् ।

यत्तु— 'येन सहैव यस्य यं पूर्ववर्तित्वं अवगम्यते तदन्यथासिद्धं[त्वं]' इति । तदपि न । असमवायिकारणे तन्तुद्वयसंयोगेऽतिव्याप्तेः । तस्यापि तन्तुना सहैव पटपूर्ववर्तित्वग्रहनियमात् । न च पृथगन्वयव्यतिरेकवता येन सहैव पृथगन्वयव्यतिरेकशून्यस्य यस्य यं प्रति पूर्ववर्तित्वं गृह्यते तत् तं प्रति अन्यथासिद्धमिति विवक्षितम् । तन्तुद्वयसंयोगस्य च तन्तुसद्भावेऽपि संयोगव्यतिरेकप्रयुक्तकार्य-व्यतिरेकदर्शनात् पृथगन्वयव्यतिरेकौ स्तः इति न तत्रातिव्याप्तिरिति वाच्यम् । तन्तौ अतिव्या-(अव्या)प्तेः । तन्तुसंयोगव्यतिरेकेण तन्त्वन्वये कार्यादर्शनेन स्वतन्त्रान्वयव्यतिरेकाभावात् तन्तुसंयोगेन सहैव पटपूर्ववर्तित्वग्रहेण उक्तलक्षणस्य तत्र [तत्रा] सत्त्वात् ।

यदपि— 'अन्यं प्रति पूर्ववर्तित्वे ज्ञाते एव अन्यं प्रति पूर्ववर्तिता अवगम्यते तत्तं प्रत्य-न्यथासिद्धं' इति । तदपि न । संयोगविभागकारणे आकाशेऽति(अव्या)व्याप्तेः । आकाशत्वस्य शब्दसमवायिकारणत्वरूपत्वेन शब्दं प्रति पूर्ववर्तित्वं गृहीत्वैव संयोगं प्रति पूर्ववर्तित्वग्रहात् । न च आकाशत्वरूपेण अन्यथासिद्धत्वं इष्टमेव । द्रव्यत्वेन रूपेण संयोगं प्रति कारणत्वाङ्गीकारात् इति वाच्यम् । एकस्याः एव व्यक्तेः एकं प्रत्येव कारणत्वाकारणत्वयोः अयोगात् । ईश्वरे अतिव्या(अव्या)-प्तेश्च । क्षित्यादिहेतुत्वग्रहमन्तरा घटादिपूर्ववर्तित्वग्रहासंभवात् । क्षित्यादिकर्तृत्वेन ईश्वरसिद्ध्यङ्गी-कारात् ।

यत्तु— 'अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंसम्भवे तत्सहभूतत्वं अन्यथासिद्धत्वम्' इति । तदपि न । तत्सहभूतत्वमिति विशेष्यवैयर्थ्यात् । अन्यत्र क्लृप्तनियतपूर्ववर्तिनः कारणत्व-ग्रहमन्तरा कार्यसंभवज्ञानायोगेन कारणत्वग्रहे तत्सहभूतस्य अन्यथासिद्धिज्ञानं, तज्ज्ञाने च अन्यत्र क्लृप्तनियतपूर्ववर्तिनः कारणत्वग्रहः इत्यन्योन्याश्रयाच्च ॥

॥ इति कारणत्वस्य मण्युक्तशक्तिशब्दार्थत्वभङ्गः ॥

यदि न मण्युक्तं कारणत्वलक्षणं उपपन्नं किं तर्हि लक्षणं इति चेत् । उच्यते— कार्योत्प-त्त्युपयोगिशक्तिमत्त्वं कारणत्वम् । अत एव शक्तिं ज्ञात्वा कारणमिति व्यवहरन्ति । शक्तिग्रहश्च प्रेक्षावतां घटादिकार्योत्पत्तये दण्डाद्युपादानज्ञानात् भवति ॥

॥ इति स्वमते कारणतानिरूपणम् ॥

अनन्तगुणपूर्णतया परमेश्वरज्ञानस्य साक्षात्कारः फलम् । तस्य च अपवर्गः फलम् । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतेः ।

ननु परमेश्वरसाक्षात्कारस्य मोक्षः फलं इत्ययुक्तम् । मोक्षस्य सुखविधुरत्वेन अपुरुषार्थत्वात् । न च मोक्षेऽपि सुखं युक्तम् । सुखस्य दुःखव्याप्तत्वेन दुःखप्रसङ्गात् । सुखस्य धर्मकार्यत्वेन, मुक्तौ च धर्माभावेन सुखोत्पादासंभवाच्च । न च मुक्तावपि धर्माङ्गीकारो युक्तः । 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति पुण्यपापयोः विधूननोक्तेः । न च सुखवत् दुःखाभावस्यापि पुरुषार्थत्वात् सुखाभावेऽपि दुःखाभावसद्भावात् पुरुषार्थत्वं युक्तं इति वाच्यम् । अनिष्टहानमात्रेण पुरुषार्थत्वे इष्टहानसद्भावेन अपुरुषार्थत्वप्रसङ्गात् इति चेत् ।

अत्रोच्यते— न मोक्षस्य अपुरुषार्थत्वम् । निर्दुःखानन्दरूपत्वात् । न च मुक्तौ धर्माभावादानन्दासंभवः । स्वरूपानन्दाविर्भाव एव मुक्तौ; न तु सुखोत्पादः इत्यङ्गीकारात् ॥ न च मुक्तौ आनन्दसद्भावे मानाभावः–

'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामाः तत्र माममृतं कृधि ॥' इति श्रुतेः,

'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्ज्ञातिभिर्वाज्ञातिभिर्वा' इति श्रुतेः, तथा–

'सोऽनानन्दाद्विमुक्तः सन्नानन्दो भवति स्फुटम् ।
निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः ॥ १ ॥

परमानन्दमाप्नोति यत्र कामोऽवसीयते ।
न विष्णुसदृशं देवं न मोक्षसदृशं सुखम् ॥ २ ॥

न वेदसदृशं वाक्यं न वर्णोऽकारसम्मितः' ॥ ३ ॥

इत्यादिस्मृतेश्च तत्र मानत्वात् ।

'न च देहाभावात् तत्र सुखायोगः । सुखमात्रस्य देहजन्यत्वनियमात् । अस्तु वा सुखस्य नित्यत्वम् । तथापि देहः आवश्यकः । तद्व्यतिरेकेण सुखानुभवादर्शनात्' इति वाच्यम् । देहादेः तत्र सद्भावात् । न च तत्र प्रमाणाभावः–

'श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥ १ ॥

प्रवालवैडूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौलिमालिनाम् ।
भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम्' ॥ २ ॥

इत्यादिस्मृतीनां, 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिश्रुतीनां च तत्र मानत्वात् ।

न च 'देहमात्रस्य सुखमात्रस्य च अनित्यत्वात् तत्र तयोरनित्यत्वापत्तिः । तथा च तत्र दुःखप्रसक्तिः' इति वाच्यम् । 'निवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः' इति जरामरणरूपविक्रमाभावोक्त्या देहनित्यत्वावगमात् ।

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥'

इति ज्ञानसुखादीनां नित्यजीवस्वरूपत्वोक्त्या नित्यत्वावगमात् । अत एव धर्मादिकारणाभावात् न मुक्तौ सुखोत्पत्तिरिति परास्तम् । मुक्तिसुखस्य नित्यत्वात् । न च सुखे सति दुःखनियमात् दुःखप्रसङ्गः । 'दुःखेनात्यन्तं विमुक्तश्चरति' इति श्रुतिबलेन मुक्तौ दुःखाभावसिद्धेरुक्तनियमस्य संसारादिविषयत्वात् ।

## ॥ इति स्वमते अपवर्गनिरूपणम् ॥

**मणिकारस्तु**– 'परमप्रयोजनं तु अनुमानस्य अपवर्गः । स च समानाधिकरणदुःखप्रागभावासहवृत्ति [त्तिः] दुःखध्वंसः । 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः [साक्षात्कर्तव्यः] इति श्रुत्या मोक्षोद्देशेन श्रवणादिविधानात् । न च मोक्षस्य दुःखध्वंसरूपत्वं कुत इति वाच्यम् । 'दुःखेनात्यन्तं विमुक्तश्चरति' इति दुःखाभावरूपत्वाभिधानात् । न च नित्यसुखाभिव्यक्तिः मुक्तिः । अभिव्यक्तिर्हि न नित्या । मुक्तसंसारिणोः अविशेषप्रसङ्गात् । नोत्पाद्या । तद्धेतुशरीराद्यभावात् । ज्ञानमात्रे च सुखमात्रे च तद्धेतुत्वावधारणात् । न च संसारितादशायां तद्धेतुः । सामान्ये बाधकाभावात् । अत एव स्वर्गादौ शरीरकल्पना । न च नित्यसुखे मानमस्ति' इत्याह ॥

तन्न ।

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥

इति वचनात् स्वरूपानन्दाविर्भावस्यैव मोक्षत्वेन केवलदुःखध्वंसस्य तदात्मकत्वाभावात् । सुखार्थं दुःखस्यापि सह्यत्वदर्शनेन सुखासमानकालिकदुःखध्वंसस्य अपुरुषार्थत्वाच्च । दुःखरूपानिष्टनिवृत्त्या-

त्मकत्वेन तस्य पुरुषार्थत्वे सुखरूपेष्टनिवृत्तिरूपत्वेन अपुरुषार्थत्वं स्यात् । चरमदुःखसमानकालोत्पत्तिके उपान्त्यदुःखध्वंसे अतिव्याप्तेः लक्षणं चायुक्तम् ।

**यदपि**– 'न नित्यसुखाभिव्यक्तिः' इत्यादिना नित्यसुखस्याभिव्यक्तिखण्डनं; तदपि न । सुखाभिव्यक्तेः अपरोक्षज्ञानसाध्यत्वेन मुक्तिसंसारयोः साम्यापादनायोगात् । न च मुक्तौ देहाभावेन आनन्दाभिव्यक्त्ययोगः । तदाऽपि चिदानन्दात्मकदेहस्य उक्तत्वात् । न च आनन्दादेः जीवस्वरूपत्वे सदाऽनुभवप्रसङ्गः । संसारदशायां अनभिव्यक्तत्वेन अननुभवोपपत्तेः । अनभिव्यक्तिश्च आवरणसद्भावात् ।

न च जीवस्वरूपानन्दस्य अनभिव्यक्तत्वे जीवस्याप्यनभिव्यक्तिप्रसङ्गः । विशेषसद्भावेन, घटरूपयोः त्वचा ग्रहणाग्रहणवत्, जीवानन्दयोरपि अभिव्यक्त्यनभिव्यक्त्योरुपपत्तेः । अत एव नित्यसुखे मानाभावः इति परास्तम् ।

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥'

इति श्रुतेरेव तत्र मानत्वात् । अन्यथा 'उत्पद्यन्ते' इत्यवक्ष्यत् ॥

॥ इति मण्युक्तापवर्गस्वरूपभङ्गः ॥

**श्रीरामचन्द्राय नमः** ॥ ननु अनन्तगुणवत्तया परमेश्वरज्ञानस्य साक्षात्कारः; तस्य च मोक्षः फलं; इत्ययुक्तम् । कर्मण एव मोक्षसाधनत्वात् । 'कर्मणैव हि संसिद्धिं आस्थिताः जनकादयः' इति स्मृतेः ।

अथवा पुनरस्तु मोक्षसाधनं ब्रह्मज्ञानम् । तथापि ब्रह्मज्ञानमेव मोक्षसाधनं, नान्यत् इत्यवधारणं न युज्यते ।

'एवं कृष्णे भगवति मायामनुज ईश्वरे ।
वैरेण धूतपाप्मानः तमापुरनुचिन्तया ॥ १ ॥
कामात्स्नेहाद्भयाद्द्वेषाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ २ ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभोः ॥ ३ ॥

ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ॥ ४ ॥'

इत्यादिना भगवद्वैर-काम-स्नेह-भक्त्यादीनां साधनत्वावगमात् इति चेत् । अत्रोच्यते–

अपरोक्षज्ञानमेव मोक्षसाधनम् । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यते अयनाय', 'दृष्ट्वैव तं मुच्यते नापरेण ।'

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' इत्यादिश्रुतेः ।

न च कर्मादीनां मोक्षसाधनत्वप्रतिपादकस्मृतिविरोधः । तेषां ज्ञानद्वारा मोक्षहेतुत्वेन स्मृतीनां तद्विषयत्वात् । कामादीनां यद्यपि न मोक्षसाधनत्वम् । तथापि कामादिकं स्वभावतो भक्तानां तत्स्मरणद्वारा मुक्तेरुत्तम्भकं इति मोक्षसाधनत्वेनोक्तम् । तदुक्तं —

'गोप्यः कामयुताः भक्ताः कंसाविष्टः स्वयं भृगुः ।
ज्ञेयो भययुतो भक्तश्चैद्यादिस्था जयादयः ॥
विद्वेषसंयुता भक्ताः वृष्णयो बन्धुसंयुताः ।
बहुमानस्नेहसाम्यात् देवाः भक्ताः प्रकीर्तिताः ॥
स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः ।
बहुमानोऽपि देवानां ऋषिभ्योऽप्यधिको मतः ।
ब्रह्मवीन्द्रेन्द्रकामादेरितरेषां यथाक्रमम् ॥' इति ।

ननु ज्ञानेन मोक्षः इत्ययुक्तम् । अनन्तकर्मणां संसारहेतूनां सत्त्वात् । न च भोगेन कर्मणां क्षयानन्तरं मोक्षः । एककर्मभोगसमये अनन्तकर्मणां अनुष्ठानेन कर्मणां भोगेन क्षपणासंभवात्' इति चेत् । न । ज्ञानाग्निना सञ्चितानन्तकर्मणां भोगं विनैव क्षयः । आगामिनां तु असंश्लेषः, प्रारब्धानां भोगेनैव क्षयः, इत्यङ्गीकारात् ।

तदुक्तम्– 'यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥'

'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' इति च ।

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इति च ।

'आरब्धपुण्यपापस्य भोगेन क्षपणादनु ।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ॥' इति च ।

अत एव 'नाभुक्तं क्षीयते कर्म' इति वचनविरोधोऽपि परास्तः । एतद्वचनस्य प्रारब्धविषयत्वात् ॥

## ॥ मोक्षं प्रति ज्ञानस्य प्राधान्यसमर्थनम् ॥

**मणिकारस्तु**— 'ज्ञानं स्वस्वाश्रमविहितकर्मणा सह समप्राधान्येन मोक्षहेतुः । ज्ञानकर्मणोस्तुल्यत्वेन मुक्त्यर्थत्वविधानात् । तथा च भगवद्गीता—

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' इति ।

श्रीविष्णुपुराणे॥ 'तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते ॥' इति ।

हारीतः -- 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥' इति ।
'सत्येन लभ्यस्तपसा ह्येष आत्मा ।
सम्यग्ज्ञानेन ब्रह्मचर्येण चेति' इति ॥
'ज्ञानं प्रधानं न तु कर्महीनं कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्माद्द्वयोरेव भवेत्प्रसिद्धिः नह्येकपक्षो विहगः प्रयाति ॥' इति । इत्याह ॥

**तन्न** ॥ 'तमेवं विदित्वा अतिमृत्युमेति । नान्यः पन्था विद्यते अयनाय' इति निर्धारणेन ज्ञानस्यैव प्राधान्येन मोक्षहेतुत्वात् ।

किञ्च— 'इन्द्रोऽश्वमेधाञ्छतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः ॥
न कर्मभिर्न धनैर्न वाचाऽन्यैः पश्ये सुखं तेन तत्त्वं ब्रवीहि ॥'
तथा– 'नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ॥'

इत्यादिना मोक्षसाधनत्वं कर्मणो निषिध्यते ।

न च सर्वथा मोक्षसाधनत्वपरित्यागो युक्तः । 'कर्मणैव हि संसिद्धिं आस्थिता जनकादयः' इति वचनविरोधात् । अतः मोक्षसाधनमपि कर्म न ज्ञानसमकक्ष्यतया मोक्षसाधनमित्यभ्युपेयम् । अल्पस्वे निःस्वत्वव्यवहारवत् अप्रधानकारणे अकारणत्वव्यवहारसंभवात् । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इति भगवद्गीतावचनं, 'तस्मात् तत्प्राप्तये यत्नः' इति विष्णुपुराणवचनं च कर्मणोऽपि मोक्षसाधनत्वपरम् ॥ न तु ज्ञानसमकक्ष्यत्वपरम् । पूर्वोक्तकारणतानिषेधकवाक्यविरोधात् ।

'उभाभ्यामेव पक्षाभ्यां' । 'तस्माद् द्वयोरेव भवेत्प्रसिद्धिः' इत्यादिवाक्यानि तु 'ज्ञानाङ्गत्वादवश्यमनुष्ठेयानि कर्माणि' इत्येवंपराणि । न तु ज्ञानसमकक्ष्यतया मोक्षसाधनत्वपराणि ।

'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥ इति स्मृत्या,

ब्राह्मीं वाव त उपनिषदमब्रूमेति तस्यैतस्य शमो दमः कर्मेति प्रतिष्ठा, वेदाः सर्वाङ्गानि सत्यमायतनं, यो वा एतां उपनिषदं वेद' इति श्रुत्या,

'यस्य ज्ञानं तस्य मोक्षः इति नात्र विचारणा ॥
तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः ॥
अवश्यकरणीया स्यादन्यथाऽस्य फलं भवेत्'

इत्यादिस्मृत्या कर्मणां ज्ञानाङ्गत्वविधानात् ।

न च 'फलवत्तया श्रुतस्य न कर्मणो ज्ञानाङ्गत्वं युक्तम् । अफलस्यैवान्याङ्गत्वात्' इति वाच्यम् । स्वतन्त्रपुरुषार्थतया श्रुतस्य देवताप्रणामादिरूपमङ्गलस्य आरब्धकर्माङ्गत्ववदुपपत्तेः ॥

**॥ इति मण्युक्तज्ञानकर्मसमुच्चयभङ्गः ॥**

उपमानं तु यथायथं प्रत्यक्षादिषु अन्तर्भूतम् । न पृथक् प्रमाणम् ।

**अत्राह शबरः—** 'प्रत्यक्षात् शब्दात् वा गवये गोसादृश्यज्ञानात् गवयसदृशो गौरिति ज्ञानमुपमितिः । न चैतत् प्रत्यक्षम् । असन्निहितविशेष्यकत्वात् । नानुमानम् । लिङ्गाभावात् । न च गवयगतसादृश्यं लिङ्गम् । अपक्षधर्मत्वात् । अथ सदृशद्रव्यान्तरदर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः इति प्रत्यक्षेण व्याप्तिग्रहे सति 'गवयगतसादृश्यप्रतियोगित्वात् गौर्गवयसदृशः' इत्यनुमितिरिति चेत् । न । व्याप्तिग्रहं विनैव प्रथममपि प्रत्यक्षात् शब्दाद्वा गोसदृशं गवयं ज्ञात्वा गवि गवयसादृश्यज्ञानोदयात् ।

किञ्च गवि गवयसादृश्यं न साध्यम् । प्रथमतः तदप्रतीतेः । गवयगतसादृश्यप्रतियोगित्वं च गवि न प्रत्यक्षम् । विशेष्यासन्निकर्षात् । नानुमितिगम्यं तत् । लिङ्गस्यापि तद्गतत्वेन अप्रत्यक्षस्य लिङ्गान्तरगम्यत्वेऽनवस्थानात्' इति ॥

**अत्रोच्यते**— गामनुभूय वनं गतस्य गवयेन्द्रियसन्निकर्षे गोसदृशोऽयमिति यद् ज्ञानमुत्पद्यते तत् प्रत्यक्षफलमेव । परामर्शं विनैव जायमानत्वात् । गवि यद् गवयसादृश्यज्ञानं तदनुमानजन्यम् ।

न च लिङ्गाभावः । गवयनिष्ठगोसादृश्यस्यैव लिङ्गत्वात् । व्याप्तिप्रकारमपेक्ष्य समुचितसिद्धेरेव अनुमित्युपयोगित्वेन पक्षधर्मतायाः अनावश्यकत्वात् ।

न चात्र व्याप्त्यभावः । 'यो यत्सदृशः स तत्सदृशः यथा यमो यमान्तरेण' इति व्याप्तिसद्भावात् ।

यद्वा गोसदृशोऽयमिति गवयस्य गोसादृश्यज्ञाने गोर्गवयनिष्ठसादृश्यप्रतियोगित्वं भातमिति तदेव सादृश्यानुमितौ लिङ्गम् ।

न च गवि गवयनिष्ठसादृश्यप्रतियोगित्वमेव न भातं इति वाच्यम् । गोसदृशो गवय इत्यत्र गोसदृशपदयोरनन्वयापत्तेः ।

व्याप्तिज्ञानं विनैव जायमानत्वात् गवि सादृश्यज्ञानं नानुमितिरिति चेत् । न । व्याप्तिज्ञानाभावे गवयनिष्ठगोसादृश्यज्ञानस्य गोधर्मिकसादृश्यज्ञानं प्रति हेतुत्वं, न वह्निज्ञानं प्रतिः इत्यत्र नियामकाभावेन सादृश्यज्ञानहेतुत्वाभावापातात् । अन्यथा वह्निज्ञानं प्रत्यपि हेतुत्वं स्यात् । अविशेषात् ।

न चाप्रसिद्धविशेषणता । 'यो यत्सदृशः स तेन सदृशः' इति सामान्यग्रहापरिपन्थित्वेन तस्य अदोषत्वात् ।

। यथा गौः तथा गवयः इति वाक्यजन्यं सादृश्यज्ञानं आगमजन्यं इति प्रसिद्धमेवेत्यशेषमतिमङ्गलम् ।

**॥ इत्युपमानस्य प्रत्यक्षादिषु अन्तर्भावनिरूपणम् ॥**

श्रीगुरुवरहृदयाम्बरवरमन्दिरेन्दिरारमणचरणसरोजार्पणमस्तु ॥

**इति श्रीमत्सत्यनिधितीर्थश्रीचरणचरणाराधक–श्रीमत्सत्यनाथयतिविरचिते**
**अभिनवताण्डवे अनुमानखण्डः समाप्तः ॥**

**॥ श्रीरामार्पणमस्तु ॥**



## प्रकटितानां ग्रन्थानां सूची

| ग्रन्थ नाम | मूल्यम् |
|---|---|
| १) प्रमाणचन्द्रिका | 5=00 |
| २) युक्तिमल्लिका (गुणसौरभम्) | 30=00 |
| ३) वैष्णवसिद्धान्तार्जवम् | 2=00 |
| ४) वायुस्तुतिमण्डनम् | 1=00 |
| ५) भागवत प्रथमस्कंध (एन्. कृष्णमूर्ति) | 30=00 |
| ६) भागवत सप्तमस्कंध (एन्. कृष्णमूर्ति) | 30=00 |
| ७) तत्त्वसङ्ख्यानम् (षट्टिपणीसमेतम्) | 30=00 |
| ८) सिविल सूट् | 50=00 |
| ९) परिमळसहित न्यायसुधा | 300=00 |
| १०) माध्वभजनामृतमहार्णव | 40=00 |
| ११) व्याख्यानत्रयोपेत पुरुषसूक्त | 15=00 |

## शीघ्रमेव प्रकाश्यमाणाः ग्रन्थाः

१) भागवत नवमस्कंध

२) युक्तिमल्लिका (शुद्धिसौरभम्)

३) गीताप्रतिपदार्थचन्द्रिका


विलासः– सत्यध्यान कुटि,

16, उत्तरादिमठ मार्ग, बसवनगुडि, बेंगळूरु–4